संप्राप्य ते महात्मानो राघवस्य निवेशनम् ॥ विष्ठिताः प्रतिहारार्थं हुताशनसमप्रभाः ॥
वेदवेदाङ्गविदुषो नानाशास्त्रविशारदाः ॥ ६ ॥
द्वाःस्थं प्रोवाच धर्मात्मा ह्यगस्त्यो मुनिसत्तमः ॥ निवेद्यतां दाशरथेर्ऋषीनस्मान्समागतान् ॥ ७ ॥
प्रतीहारस्ततस्तूर्णमगस्त्यवचनाद्द्रुतम् ॥ समीपं राघवस्याशु प्रविवेश महात्मनः ॥ ८ ॥
नयेङ्गितज्ञः सद्वृत्तो दक्षो धैर्यसमन्वितः ॥ स रामं दृश्य सहसा पूर्णचन्द्रसमप्रभम् ॥
अगस्त्यं कथयामास संप्राप्तमृषिभिः सह ॥ ९ ॥
श्रुत्वा प्राप्तान्मुनींस्तांस्तु बालसूर्यसमप्रभान् ॥ प्रत्युवाच ततो द्वाःस्थं प्रवेशय यथासुखम् ॥ १० ॥
तान्संप्राप्तान्मुनीन्दृष्ट्वा प्रत्युत्थाय कृताञ्जलिः ॥ पाद्यार्घ्यादिभिरानर्च्य गां निवेद्य च सादरम् ॥
रामोभिवाद्य प्रयत आसनान्यादिदेश ह ॥ ११ ॥
तेषु काञ्चनचित्रेषु महत्सु च वरेषु च ॥ कुशान्तर्धानदत्तेषु मृगचर्मयुतेषु च ॥
यथार्हमुपविष्टास्ते आसनेष्वृषिपुङ्गवाः ॥ १२ ॥
रामेण कुशलं पृष्टाः सशिष्याः सपुरोगमाः ॥ महर्षयो वेदविदो रामं वचनमब्रुवन् ॥ १३ ॥
कुशलं नो महाबाहो सर्वत्र रघुनन्दन ॥ त्वां तु दिष्ट्या कुशलिनं पश्यामो हतशात्रवम् ॥ १४ ॥
दिष्ट्या त्वया हतो राजन्रावणो लोकरावणः ॥ न हि भारः स ते राम रावणः पुत्रपौत्रवान् ॥१५॥
सधनुस्त्वं हि लोकांस्त्रीन्विजयेथा न संशयः ॥ दिष्ट्या त्वया हतो राम रावणो राक्षसेश्वरः ॥ १६ ॥
दिष्ट्या विजयिनं त्वाऽद्य पश्यामः सह सीतया ॥ लक्ष्मणेन च धर्मात्मन्भ्रात्रा त्वद्धितकारिणा ॥१७॥
मातृभिर्भ्रातृसहितं पश्यामोऽद्य वयं नृप ॥ १८ ॥
दिष्ट्या प्रहस्तो विकटो विरूपाक्षो महोदरः ॥ अकम्पनश्च दुर्धर्षो निहतास्ते निशाचराः ॥ १९ ॥

वसिष्ठादयः सप्तेत्यर्थः । ननु वसिष्ठः अयोध्यायां पुरोहिततया नित्य वर्तमानः कथमिदानीमुदीच्या दिश' समागत इत्युच्यते । सत्यं । यथाऽगस्त्यो ज्योतिर्मण्डलस्थोपि भुवि तप'समार्जनाय शरीरान्तरे स्थित आगतस्तथा वसिष्ठोपि ज्योतिर्मण्डलस्थ' सप्तर्षिभिः समागत इति बोध्यम् । तदागमनदशायां नगरस्थो वसिष्ठो नायात अतएव न परिगणित । कौशिकः कुशिकवश्यो विश्वामित्रादन्य' ॥ ५ ॥ प्रतिहारो द्वाःस्थ' । "द्वारि द्वा'स्थे प्रतीहार'" इत्यमरः ॥ ६—१० ॥ अभिवाद्येति । समुदायं प्रतीति शेषः ॥ ११—१३ ॥ सर्वत्र पुरकोशादिषु । दिष्ट्या दैवात् । हतशात्रव हतशत्रु ॥ १४ ॥ रावणस्ते न हि भारः । तद्वधस्ते ईषत्कर्मेत्यर्थ. ॥ १५ ॥ तदेव दर्शयति—सधनुरित्यादि । विजयेथा इति "विपराभ्यां"

ति० प्रतिहारोद्वास्स्थ । तदर्थं तन्मुखेनरामायस्वागमननिवेदनार्थं । विष्ठिता द्वारिस्थिताइत्यर्थं ॥ ६ ॥ ति० तूर्णमितिमानसीत्वरा । द्रुतमितिकायिक्युक्ता । स० एतेमुनयोत्रावस्थानानर्हा बहुकालविलबेकिंभवतिवेत्येकभयं । तन्निबोधनेराम किंकरोतिवेत्यपरं । एतेमहात्मानोस्मत्स्वामिदर्शनार्थमागताइतिसभ्रमश्चेतित्वराहेतूनात्रयाणासत्त्वात्तूर्णद्रुतमाश्विितिबहुवारपर्यायोक्ति । तूर्णद्रुतमित्यस्यपूर्वश्लोकेवाऽन्वय । वयंतूर्णमागताइतिद्रुतनिवेद्यतामिति ॥ ति० आश्वित्यनेनराजावसरपरीक्षाभावोविवक्षित ॥ ८ ॥ ति० निवेद्य प्रत्येकमितिशेष ॥ ११ ॥ ति० वरेषु बहुमूल्येषु । कुशान्तर्धानदत्तेषु कुशैरन्तर्धानदत्तक्तंयेषु । कुशास्तृतेष्वित्यर्थ ॥ १२ ॥ ति० सपुरोगमा पुरोगमै प्रधानै सहिता ॥ १३ ॥ ति० हतशात्रवं हतशत्रुसमूहं ॥ १४ ॥ ति० लक्ष्मणेनचेति । अस्यार्धस्यदिष्ट्याराक्षसाहताइतिशेष । मातृभिरित्यस्यदिष्ट्येत्यादि । युक्तमितिशेष ॥ १८ ॥

[ पा० ] १ झ. सप्राप्यैते. २ क भगवानगस्त्यो ३ क. दाशरथेर्मुनीनस्मानुपागतान् ख दाशरथेर्मुनीनस्मानुपस्थितान् घ. दाशरथेर्मुनीनस्मानिहागतान् ङ—ट. दाशरथेर्ऋषयोवयमागता ४ ख घ वचनोदित ५ घ—ट चन्द्रसमद्युतिं. क. चन्द्रनिभाननं. ६ ङ. झ. ञ. ट. सप्राप्तमृषिसत्तमं. ७ ख. चित्रेषुस्वास्तीर्णेषुसुखेषुच. क. चित्रेषुस्वास्तीर्णेषुशुभेषुच.

यस्य प्रमाणाद्विपुलं प्रमाणं नेह विद्यते ॥ दिष्ट्या ते समरे राम कुम्भकर्णो निपातितः ॥ २० ॥
त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ॥ दिष्ट्या ते निहता राम महावीर्या निशाचराः ॥ २१ ॥
कुम्भश्चैव निकुम्भश्च राक्षसौ भीमदर्शनौ ॥ दिष्ट्या तौ निहतौ राम कुम्भकर्णसुतौ मृधे ॥ २२ ॥
युद्धोन्मत्तश्च मत्तश्च कालान्तकयमोपमौ ॥ यज्ञकोपश्च बलवान्धूम्राक्षो नाम राक्षसः ॥ २३ ॥
कुर्वन्तः कदनं घोरमेते शस्त्रास्त्रपारगाः ॥ अन्तकप्रतिमैर्बाणैर्दिष्ट्या विनिहतास्त्वया ॥ २४ ॥
दिष्ट्या त्वं राक्षसेन्द्रेण द्वन्द्वयुद्धमुपागतः ॥ देवतानामवध्येन विजयं प्राप्तवानसि ॥ २५ ॥
[ [1]संख्यमेतन्महाबाहो रावणस्य निबर्हणम् ॥ असह्यमेतत्संप्राप्तं रावणेर्यन्निबर्हणम् ॥ २६ ॥
दृश्यस्तस्य महाबाहो कालो येन हि धिक्कृतः ॥ ] संख्ये तस्य न किंचित्तु रावणस्य पराभवः ॥
द्वन्द्वयुद्धमनुप्राप्तो दिष्ट्या ते रावणिर्हतः ॥ २७ ॥
दिष्ट्या तस्य महाबाहो कालस्येवाभिधावतः ॥ मुक्तः सुररिपोर्वीर प्राप्तश्च विजयस्त्वया ॥ २८ ॥
अभिनन्दाम ते सर्वे संश्रुत्येन्द्रजितो वधम् ॥ सोऽवध्यः सर्वभूतानां महामायाधरो युधि ॥ २९ ॥
विस्मयस्त्वेष चास्माकं तच्छ्रुत्वेन्द्रजितं हतम् ॥ ३० ॥
एते चान्ये च बहवो राक्षसाः कामरूपिणः ॥ दिष्ट्या त्वया हता वीरा रघूणां कुलवर्धन ॥ ३१ ॥
दत्त्वा पुण्यामिमां वीर सौम्यामभयदक्षिणाम् ॥ दिष्ट्या वर्धसि काकुत्स्थ जयेनामित्रकर्शन ॥३२॥
श्रुत्वा तु तेषां वचनमृषीणां भावितात्मनाम् ॥ विस्मयं परमं गत्वा रामः प्राञ्जलिरब्रवीत् ॥३३॥
भगवन्तः कुम्भकर्णं रावणं च निशाचरम् ॥ अतिक्रम्य महावीर्यौ किं प्रशंसथ रावणिम् ॥ ३४ ॥
महोदरं प्रहस्तं च विरूपाक्षं च राक्षसम् ॥ मत्तोन्मत्तौ च दुर्धर्षौ देवान्तकनरान्तकौ ॥
अतिक्रम्य महावीर्यान्किं प्रशंसथ रावणिम् ॥ ३५ ॥
अतिकायं त्रिशिरसं धूम्राक्षं च निशाचरम् ॥ अतिक्रम्य महावीर्यान्किं प्रशंसथ रावणिम् ॥ ३६ ॥

---

इत्यात्मनेपदं ॥ १६—१९ ॥ प्रमाणात् शरीरपरिमाणात् ॥ २०—२४ ॥ द्वन्द्वयुद्धमुपागतः सन् विजयं प्राप्तवानसीत्यन्वयः ॥ २५—२७ ॥ मुक्तः । तस्य रावणेः शरबन्धादिति शेषः ॥ २८—३१ ॥ अभयदक्षिणां अभयदानं । देवर्षिभ्य इत्यर्थः । वर्धसि वर्धसे ॥ ३२ ॥ विस्मय गत्वा । रावणिवध-

**स०** सख्येयुद्धे । तस्य रावणस्य । पराभव परमत्यन्तं अभव असत्ता । मरणमितियावत् । तत् तन्मारण । तवनकिंचित् महत्त्वसपादक । महीयसस्तवपुरत कियानययातुवानइतिनचित्रमितिभाव । तर्हिकिंचित्रमित्यतस्तदुक्तीकुर्वन्ति । द्वन्द्वयुद्धमिति । ते दिष्ट्याआदिष्ट्याआज्ञयाद्वन्द्वयुद्धमनुप्राप्त रावणिरिन्द्रजित् । हत लक्ष्मणेनेतिशेष । ते त्वया । हत घातितइतिवा ॥ **ति०** दशरावणवधे नतवभार । तिरोहितरावणिवधएवतुदुष्करइत्याहु —**संख्यइति** । सख्येतस्यरावणस्यत्वत्कर्तृक पराभव. आक्रमणमितियत् तन्नकिंचित् । अपितु दिष्ट्या तिरोधानसाधनयानभङ्गेनद्वन्द्वयुद्धमनुप्राप्त । अतएवहतोरावणिरितियत् इदमेवबह्विति शेष ॥ २७ ॥ **स०** अभिधावत कालस्यमृत्योरिवतस्यसुररिपो· सामान्यत सुमानसद्विषोरावणे । असाधारण्यन्यायेनसुरइन्द्र तद्रिपो इन्द्रजित सकाशान्मुक्त·लक्ष्मणइतित्वयाविजय प्राप्तइति दिष्ट्या मंगलमित्यर्थ । अभिधावत कालस्यमृत्योरिवतस्यलक्ष्मणस्यसकाशात् सुररिपोर्मुक्त त्याजित । प्राणइतिशेष । इतित्वयाविजय प्राप्तइतिवा । सुररिपो रावणस्यप्राप्त अत्यन्तासः इन्द्रजिन्मुक्त । प्राणैरितिशेष ॥ मुक्त सर्वैरप्यसुसाधवधइतित्यक्त । वीरप्राप्त विगतईर प्राणोयेभ्यस्तेवीर। निष्प्राणा तान्प्राप्त । मृतस्वजनसघनिविष्टइतित्वयाविजय । अस्मदादीनामितिशेषइतिवा। त्वन्मुखेनपरपरिभावनेननएवायविजयइतिभाव ॥ इदपद्यपद्यामभिपद्याद्यपद्यस्थराघवमित्येतल्लक्ष्मणमित्यपिविचक्षणा केचिद्व्याचक्षते ॥ २८ ॥ **ति०** विस्मयहेतुरवध्यइति । यत सो वध्यत्वादिगुण अतएवचएषएवेन्द्रजिद्वधोस्माकंविस्मय विस्मयकरइत्यन्वय । तत्तस्मात् इन्द्रजितहतश्रुत्वावयंतुष्टाइतिशेष ॥ २९—३० ॥ **स०** हेभगवन्त पूज्या । अतिक्रम्य तत्स्तुतिमकृत्वा । कि किमर्थ ॥ ३४ ॥

**[ पा० ] १ इदमर्धत्रयं च. छ. पाठेषुदृश्यते.**

कीदृशो वै प्रभावोस्य किं बलं कः पराक्रमः ॥ केन वा कारणेनैष रावणादतिरिच्यते ॥ ३७ ॥
शक्यं यदि मया श्रोतुं न खल्वाज्ञापयामि वः ॥ यदि गुह्यं नचेद्वक्तुं श्रोतुमिच्छामि कथ्यताम् ॥३८॥
शक्रोपि विजितस्तेन कथं लब्धवरश्च सः ॥ कथं च बलवान्पुत्रो न पिता तस्य रावणः ॥ ३९ ॥
कथं पितुश्चाभ्यधिको महाहवे शक्रस्य जेता हि कथं स राक्षसः ॥
वराश्च लब्धाः कथयस्व मेऽद्य तत्पृच्छतश्चास्य मुनीन्द्र सर्वम् ॥ ४० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे प्रथमः सर्गः ॥ १ ॥

---

## द्वितीयः सर्गः ॥ २ ॥

रामेणेन्द्रजित्प्रतापातिशयंपृष्टेनागस्त्येन तदुपोद्घाततया रावणकुलमूलानुकीर्तनारभः ॥ १ ॥ पुलस्त्यविश्रवसोरुत्पत्ति. ॥ २ ॥

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ॥ कुम्भयोनिर्महातेजा राममेतदुवाच ह ॥ १ ॥
शृणु राम कथावृत्तं तस्य तेजोबलं महत् ॥ जघान शत्रून्येनासौ न च वध्यः स शत्रुभिः ॥ २ ॥
तावत्ते रावणस्येदं कुलं जन्म च राघव ॥ वरप्रदानं च तथा तस्मै दत्तं ब्रवीमि ते ॥ ३ ॥
पुरा कृतयुगे राम प्रजापतिसुतः प्रभुः ॥ पुलस्त्यो नाम ब्रह्मर्षिः साक्षादिव पितामहः ॥ ४ ॥
नानुकीर्त्या गुणास्तस्य धर्मतः शीलतस्तथा ॥ प्रजापतेः पुत्र इति वक्तुं शक्यं हि नामतः ॥ ५ ॥
प्रजापतिसुतत्वेन देवानां वल्लभो हि सः ॥ इष्टः सर्वस्य लोकस्य गुणैः शुभ्रैर्महामतिः ॥ ६ ॥
स तु धर्मप्रसङ्गेन मेरोः पार्श्वे महागिरेः ॥ तृणबिन्द्वाश्रमं गत्वा न्यवसन्मुनिपुङ्गवः ॥ ७ ॥
तपस्तेपे स धर्मात्मा स्वाध्यायनियतेन्द्रियः ॥ गत्वाऽऽश्रमपदं तस्य विघ्नं कुर्वन्ति कन्यकाः ॥ ८ ॥

---

विषयवाक्येनेति शेषः ॥ ३३—३७ ॥ यदि गुह्यं न भवति । यदि युष्माभिः वक्तु शक्यं । यदि मया च श्रोतुं । तदा कथ्यतां । अह तु श्रोतुमिच्छामि केवलं नतु वक्तुमित्याज्ञापयामि ॥ ३८ ॥ पिता रावणो न बलवान् पुत्रापेक्षयेति कथं ॥ ३९—४० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

---

असौ रावणिः न च शत्रुभिर्वध्यः । तत्कारण शृण्विति सबन्धः ॥ २ ॥ तावत् प्रथम । रावणस्यैव कुलादिकं यमहं ते ब्रवीमि । पश्चाद्रावणेश्चेति शेष ॥ ३ ॥ तत्र प्रथम कुलमाह—पुरेत्यादि । पुलस्त्यः दशप्रजापतिष्वेक । पितामह इव पितृतुल्य इत्यर्थ ॥ ४ ॥ तदेवाह—नानुकीर्त्या इति । धर्मतः शीलतश्चोत्पन्न इति शेष । ते गुणा नानुकीर्त्याः विविच्याशक्यवर्णना । किंतु प्रजापतिपुत्रनामत एव तत्संकीर्तनमात्र तत एतस्यैव वैभवं वक्तु शक्यं । प्रजापतिपुत्रत्वोक्त्यैव तस्य वैभवं वर्णितं भवतीत्यर्थः ॥ ५—६ ॥ धर्मप्रसङ्गेन तपःसंपादनेच्छयेत्यर्थः ।

---

ति० कीदृशोस्यप्रभावादि । यतोयुष्माभि प्रशस्यतइतिशेष । प्रभावस्तप.प्रभाव । बलं शारीरं । शि० अतिरिच्यते अधिक प्रतीयते ॥ ३७ ॥ इतिप्रथम सर्ग ॥ १ ॥

स० येनासौशत्रून्जघान सस्वयंशत्रुभिर्नवध्य तत्तेजोबलं तेजसा अवष्टंभशक्त्यासहितंबलंशारीरमस्त्रादिसभूतंच । यथा वृत्तं तदीयंकर्म तथावक्ष्यामीतिशेष. । शृणु । "कर्मणिवृत्तं" इतिविश्व ॥ २ ॥ स० वरप्रदान प्रदीयतइतिप्रदान । वररूपंयद्देयं यथातस्मैदत्तंतथातेब्रवीमि ॥ ३ ॥ ति० विघ्नकुर्वन्ति तृणाग्निन्यायेन नतुबुद्धिपूर्व ॥ ८ ॥

[ पा० ] १ ङ. च. छ झ. पाप्रच्छतश्चास्य. २ क ख घ.—ट वाक्यमेतदुवाचह. ३ झ. यथावृत्तं. ४ क. ख. घ. ज. जयंतेरावणस्याहं. ५ ख. घ. ज. तृणमेराश्रमं.

दे[1]वपन्नगकन्याश्च राजर्षितनयाश्च याः ॥ क्रीडन्त्योऽप्सरसश्चैव तं देशमुपपेदिरे ॥ ९ ॥
सर्वर्तुषूपभोग्यत्वाद्रम्यत्वात्काननस्य च ॥ नित्यशस्तास्तु तं देशं गत्वा क्रीडन्ति कन्यकाः ॥१०॥
देशस्य रमणीयत्वात्पुलस्त्योयत्र स द्विजः ॥ गायन्त्यो वादयन्त्यश्च लासयन्त्यस्तथैव च ॥
मुनेस्तपस्विनस्तस्य विघ्नं चक्रुरनिन्दिताः ॥ ११ ॥
अथ क्रुद्धो महातेजा व्याजहार महामुनिः ॥ या मे दर्शनमागच्छेत्सा गर्भं धारयिष्यति ॥ १२ ॥
तास्तु सर्वाः प्रतिश्रुत्य तस्य वाक्यं महात्मनः ॥ ब्रह्मशापभयाद्भीतास्तं देशं नोपचक्रमुः ॥ १३ ॥
तृणबिन्दोस्तु राजर्षेस्तनया न शृणोति तत् ॥ १४ ॥
गत्वाऽऽश्रमपदं तत्र विचचार सुनिर्भया ॥ न साऽपश्यत्स्थिता तत्र कांचिदभ्यागतां सखीम् ॥१५॥
तस्मिन्काले महातेजाः प्राजापत्यो महानृषिः ॥ स्वाध्यायमकरोत्तत्र तपसा भावितः स्वयम् ॥१६॥
सा तु वेदश्रुतिं श्रुत्वा दृष्ट्वा वै तपसो निधिम् ॥ अभवत्पाण्डुदेहा सा सुव्यञ्जितशरीरजा ॥ १७ ॥
बभूव च समुद्विग्ना दृष्ट्वा तद्दोषमात्मनः ॥ इदं मे किंत्विति ज्ञात्वा पितुर्गत्वाऽऽश्रमे स्थिता ॥१८॥
तां तु दृष्ट्वा तथाभूतां तृणबिन्दुरथाब्रवीत् ॥ किं त्वमेतत्त्वसदृशं धारयस्यात्मनो वपुः ॥ १९ ॥
सा तु कृत्वाऽञ्जलिं दीना कन्योवाच तपोधनम् ॥ न जाने कारणं तात येन मे रूपमीदृशम् ॥२०॥
किं तु पूर्वं गतास्म्येका महर्षेर्भावितात्मनः ॥ पुलस्त्यस्याश्रमं दिव्यमन्वेष्टुं स्वसखीजनम् ॥ २१ ॥
न च पश्याम्यहं तत्र कांचिदभ्यागतां सखीम् ॥ रूपस्य तु विपर्यासं दृष्ट्वा त्रासादिहागता ॥२२॥
तृणबिन्दुस्तु राजर्षिस्तपसा द्योतितप्रभः ॥ ध्यानं विवेश तच्चापि ह्यपश्यदृषिकर्मजम् ॥ २३ ॥
स तु विज्ञाय तं शापं महर्षेर्भावितात्मनः ॥ गृहीत्वा तनयां गत्वा पुलस्त्यमिदमब्रवीत् ॥ २४ ॥
भगवंस्तनयां मे त्वं गुणैः स्वैरेव भूषिताम् ॥ भिक्षां प्रतिगृहाणेमां महर्षे स्वयमुद्यताम् ॥ २५ ॥
तपश्चरणयुक्तस्य श्रम्यमाणेन्द्रियस्य ते ॥ शुश्रूषणपरा नित्यं भविष्यति न संशयः ॥ २६ ॥
तं ब्रुवाणं तु तद्वाक्यं राजर्षिं धार्मिकं तदा ॥ जिघृक्षुरब्रवीत्कन्यां बाढमित्येव स द्विजः ॥ २७ ॥
द[2]त्त्वा स तु यथान्यायं स्वमाश्रमपदं गतः ॥ साऽपि तत्रावसत्कन्या तोषयन्ती पतिं गुणैः ॥२८॥

तृणबिन्दुर्नाम ऋषिः ॥ ७—९ ॥ तं देशं आश्रमपदं ॥ १० ॥ लासयन्त्यः नृत्यन्त्यः ॥ ११—१५ ॥ स्वाध्यायमकरोत् । वेदमपठदित्यर्थः ॥१६॥ वेदश्रुतिं वेदध्वनिं श्रुत्वा कोऽधीत इति गत्वा दृष्ट्वा चेत्यर्थः । पाण्डुदेहा गर्भिणीत्वात् । सुव्यञ्जित. शरीरजो यस्याः सा तथा ॥ १७ ॥ इद मे किं एतत्किमिति ज्ञात्वा गर्भकारणमिदं किंत्विति ज्ञात्वेत्यर्थः ॥ १८—२३ ॥ तनयां गृहीत्वा पुलस्त्य गत्वेत्यन्वयः ॥ २४ ॥ इमां भिक्षां गृहाणेति भिक्षात्वेन स्वीकुरुष्वेति अब्रवीदिति पूर्वेणान्वयः । ननूर्ध्वरेतसा मया कथं ग्राह्या किं वा मेऽनया प्रयोजनमित्यत्राह—उद्यतामिति । "उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् । भोज्यां मेने प्रजानाथो ह्यपि दुष्कृतकर्मण." इत्युक्तेः स्वयमुद्यतेय ग्राह्यैवेत्यर्थ ॥ २५—२७ ॥ यथान्यायं

ति० वादयन्त्य वीणादिकमितिशेष. ॥ १० ॥ स० ब्रह्मशापभयात् तद्रूपभयसाधनात् ॥ १३ ॥ ति० तदिति । शापवाक्यमित्यर्थ । नश्रृणोति नशुश्राव ॥ १४ ॥ स० सासुव्यञ्जितशरीरजा सा लक्ष्मी शोभेतियावत् । तयासुव्यञ्जित सम्यग्व्यक्तः शरीरजोगर्भोयस्यास्सा । यद्वासुसमृद्ध नतथेत्यसु. असमृद्ध तादृश. । व्यञ्जित.केवलव्यक्त'शरीरजोगर्भस्तेनसहवर्ततइतितथा । 'सुपूजार्थेभृशार्थानुमतिकृत्स्नसमृद्धिषु' इतिविश्व । असुरपूज्य निन्द्यइतियावत् । तादृश. व्यञ्जितोयश्शरीरजस्तेनसहितेतिवा । अतोनसेत्यधिक ॥ १७ ॥ ति० तद्दोष गर्भसभवरूपदोषं ॥ १८ ॥ ति० असदृश कन्यात्वस्यायुक्त ॥ १९ ॥ पूर्वगता प्रथमं गता ॥ २१ ॥ ति० तच्चापिगर्भकारणमित्यर्थ ॥ २३ ॥ ति० तत्प्रतिग्रहफलमाह—शुश्रूषणपरेति ॥ २६ ॥

[ पा० ] १ ग. ङ. च. छ. झ. ञ. ट. ऋषिपन्नग. २ ङ. च. छ. झ. ञ. ट. दत्वातुतनयाराजा.

तस्यास्तु शीलवृत्ताभ्यां तुतोष मुनिपुङ्गवः ॥ प्रीतः स तु महातेजा वाक्यमेतदुवाच ह ॥ २९ ॥
परितुष्टोसि सुश्रोणि गुणानां संपदा भृशम् ॥ तस्माद्देवि ददाम्यद्य पुत्रमात्मसमं तव ॥
उभयोर्वंशकर्तारं पौलस्त्य इति विश्रुतम् ॥ ३० ॥
यस्मात्तु विश्रुतो वेदस्त्वयैषोऽध्ययतो मम ॥ तस्मात्स विश्रवा नाम भविष्यति न संशयः ॥ ३१ ॥
एवमुक्ता तु सा देवी प्रहृष्टेनान्तरात्मना ॥ अचिरेणैव कालेनासूत विश्रवसं सुतम् ॥
त्रिषु लोकेषु विख्यातं यशोधर्मसमन्वितम् ॥ ३२ ॥
श्रुतिमान्समदर्शी च व्रताचाररतस्तथा ॥ पितेव तपसा युक्तो ह्यभवद्विश्रवा मुनिः ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे द्वितीयः सर्गः ॥ २ ॥

---

## तृतीयः सर्गः ॥ ३ ॥

विश्रवसोमुनिवरात्कुबेरोत्पत्तिः ॥ १ ॥ कुबेरतपस्तुष्टेनपरमेष्ठिना तस्मै दिक्पतित्वधनपतित्ववरदानम् ॥ २ ॥ कुबेरेण स्वपितृनियोगेन राक्षसाधिष्ठितपूर्वलङ्कायां स्वजनैः सहनिवासः ॥ ३ ॥

अथ पुत्रः पुलस्त्यस्य विश्रवा मुनिपुङ्गवः ॥ अचिरेणैव कालेन पितेव तपसि स्थितः ॥ १ ॥
सत्यवाञ्छीलवाञ्छान्तः स्वाध्यायनिरतः शुचिः ॥ सर्वभोगेष्वसंसक्तो नित्यं धर्मपरायणः ॥ २ ॥
ज्ञात्वा तस्य तु तद्वृत्तं भरद्वाजो महामुनिः ॥ ददौ विश्रवसे भार्यां स्वसुतां देववर्णिनीम् ॥ ३ ॥
प्रतिगृह्य तु धर्मेण भरद्वाजसुतां तदा ॥ प्रजान्वेषिकया बुद्ध्या श्रेयो ह्यस्य विचिन्तयन् ॥ ४ ॥
मुदा परमया युक्तो विश्रवा मुनिपुङ्गवः ॥ स तस्यां वीर्यसंपन्नमपत्यं परमाद्भुतम् ॥
जनयामास धर्मज्ञः सर्वैर्ब्रह्मगुणैर्युतम् ॥ ५ ॥
तस्मिञ्जाते तु संहृष्टः संबभूव पितामहः ॥ ६ ॥

---

पाणिग्रहणपूर्वकमित्यर्थः ॥ २८—२९ ॥ उभयोरपि मातुः पितुश्चेत्यर्थः ॥ ३० ॥ अध्ययतः अधीयानस्येत्यर्थः । वेदो विश्रुतः गर्भहेतुरिति शेषः ॥३१—३३॥ इतिश्रीगोविन्दराजविरचितेश्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने द्वितीयःसर्गः॥२॥

तस्य तद्वृत्तं विश्रवसस्तादृशं चरितमित्यर्थः । देववर्णिनीं देवसमानरूपां ॥ ३ ॥ प्रतिगृह्येत्यादिश्लोकपञ्चकमेकं वाक्यं । सर्वैर्ब्रह्मगुणैः । शमदमादिभिरित्यर्थः । पितामहः वैश्रवणपितामहः । पुलस्त्य इत्यर्थः । प्रजामन्विच्छतीति प्रजान्वेषिका "प्रत्ययस्थात्" इतीत्वं । अस्य विश्रवसस्तस्मिन्पुत्रे जाते तुष्टो बभूव । श्रेयस्करी धनेशत्वरूपश्रेयःप्राप्तिहेतुभूतां । जन्मलग्नपर्यालोचनया कालान्तरे धनाध्यक्षनामको भविष्यतीति निश्चित्य तत्काले विश्रवसोपत्यत्वाद्वैश्रवण इति विश्रुतो भविष्यतीति नाम च चकार । "विश्रवसो विश्रवणं वा" इति विश्रवणादेशः

---

स० श्रुतिमान् सर्वशास्त्रश्रवणवान् ॥ ३३ ॥ इतिद्वितीय सर्ग ॥ २ ॥

स० सर्वभोगेषुसत्स्वपि असंसक्त निस्पृह । अनेनभाववैराग्यंसूच्यते । सर्वभोगेष्वसंसक्तइत्येकवापदं । सर्वभोगेषु तत्साधनेषु ए. मन्मथस्यइषवोबाणास्तैरसंसक्त असबद्धइतिवा । अस्यापत्यंइ । भगवत्पुत्रत्वेनइ काम । इयत्यासत्यांसपदि अकृतविवाहोमहामुनिरितिभाव ॥ २ ॥ ति० देववर्णिनी देवसमानरूपातन्नाम्नीच ॥ ३ ॥ ति० प्रजान्वीक्षिकया प्रजाना शुभाशुभवीक्षणरूपयाबुद्ध्याज्योतिश्शास्त्रसिद्धया । अस्यामुत्पादयिष्यमाणपुत्रस्यश्रेयोगुणंचिन्तयन् ॥ ४ ॥ ति० सर्वैर्ब्रह्मगुणै शमतपश्शौचादिगुणै युक्तमपत्यंजनयामास । पितामह वैश्रवणपितामह पुलस्त्यइत्यर्थ । अत्रस्थानेप्रजान्वेषिकयेत्यर्धमितिकतकस्वरस । प्रजामन्विच्छतिप्रजान्वेषिका । तद्गुणागुणपर्यालोचिकाज्योतिश्शास्त्रविषयाबुद्धि । तयास्यवैश्रवणस्यश्रेयोवि-

[ पा० ] १ ख. घ. च्छीलवान्वाग्मी. २ ङ.—ट. प्रजान्वीक्षिकया.

दृष्ट्वा श्रेयस्करीं बुद्धिं धनाध्यक्षो भविष्यति ॥ नाम तस्याकरोत्प्रीतः सार्धं देवर्षिभिस्तदा ॥ ७ ॥
यस्माद्विश्रवसोपत्यं सादृश्याद्विश्रवा इव ॥ तस्माद्वैश्रवणो नाम भविष्यत्येष विश्रुतः ॥ ८ ॥
स तु वैश्रवणस्तत्र तपोवनगतस्तदा ॥ अवर्धताहुतिहुतो महातेजा यथाऽनलः ॥ ९ ॥
तस्याश्रमपदस्थस्य बुद्धिर्जज्ञे महात्मनः ॥ चरिष्ये [1]परमं धर्मं धर्मो हि परमा गतिः ॥ १० ॥
स तु वर्षसहस्राणि तपस्तप्त्वा महावने ॥ यन्त्रितो नियमैरुग्रैश्चकार सुमहत्तपः ॥ ११ ॥
पूर्णे वर्षसहस्रान्ते [2]तं तं विधिमकल्पयत् ॥ जलाशी मारुताहारो निराहारस्तथैव च ॥
एवं वर्षसहस्राणि जग्मुस्तान्येकवर्षवत् ॥ १२ ॥
अथ प्रीतो महातेजाः सेन्द्रैः सुरगणैः सह ॥ गत्वा तस्याश्रमपदं ब्रह्मेदं वाक्यमब्रवीत् ॥ १३ ॥
परितुष्टोऽस्मि ते वत्स कर्मणाऽनेन सुव्रत ॥ वरं वृणीष्व भद्रं ते वरार्हस्त्वं महामते ॥ १४ ॥
अथाब्रवीद्वैश्रवणः पितामहमुपस्थितम् ॥ भगवँल्लोकपालत्वमिच्छेयं [3]वित्तरक्षणम् ॥ १५ ॥
अथाब्रवीद्वैश्रवणं परितुष्टेन चेतसा ॥ ब्रह्मा सुरगणैः सार्धं बाढमित्येव हृष्टवत् ॥ १६ ॥
अहं वै लोकपालानां चतुर्थं स्रष्टुमुद्यतः ॥ १७ ॥
यमेन्द्रवरुणानां च पदं यत्तव चेप्सितम् ॥ तद्गच्छ त्वं हि धर्मज्ञ निधीशत्वमवाप्नुहि ॥
शक्राम्बुपयमानां च चतुर्थस्त्वं भविष्यसि ॥ १८ ॥
एतच्च पुष्पकं नाम विमानं सूर्यसन्निभम् ॥ प्रतिगृह्णीष्व यानार्थं त्रिदशैः समतां व्रज ॥ १९ ॥
स्वस्ति तेऽस्तु गमिष्यामः सर्व एव यथागतम् ॥ कृतकृत्या वयं तात दत्त्वा तव वरद्वयम् ॥ २० ॥
इत्युक्त्वा स गतो ब्रह्मा स्वस्थानं त्रिदशैः सह ॥ २१ ॥
गतेषु ब्रह्मपूर्वेषु देवेष्वथ नभःस्थलम् ॥ [4]वैने स पितरं प्राह प्राञ्जलिः प्रयतात्मवान् ॥ २२ ॥
निवासनं न मे देवो विदधे स प्रजापतिः ॥ भगवँल्लब्धवानस्मि वरमिष्टं पितामहात् ॥ २३ ॥
तं पश्य भगवन्कंचिन्निवासं साधु मे प्रभो ॥ न च पीडा भवेद्यत्र प्राणिनो यस्य कस्यचित् ॥२४॥
एवमुक्तस्तु पुत्रेण विश्रवा मुनिपुङ्गवः ॥ वचनं प्राह धर्मज्ञः श्रूयतामिति सत्तमः ॥ २५ ॥
दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः ॥ तस्याग्रे तु विशाला सा महेन्द्रस्य पुरी यथा ॥
लङ्का नाम पुरी रम्या निर्मिता विश्वकर्मणा ॥ २६ ॥
राक्षसानां निवासार्थं यथेन्द्रस्यामरावती ॥ तत्र त्वं वस भद्रं ते लङ्कायां नात्र संशयः ॥ २७ ॥
हेमप्राकारपरिघा यन्त्रशस्त्रसमावृता ॥ रमणीया पुरी सा हि रुक्मवैडूर्यतोरणा ॥ २८ ॥

---

॥ ४—१० ॥ नियमैः यन्त्रितः सजातबन्धनः ॥ ११ ॥ त त विधिं । विधिमेवाह—जलाशीत्यादि ॥ १२—१४ ॥ वित्तरक्षण अशेषनिधिपतित्वं ॥ १५–१७ ॥ यदीप्सित तद्गच्छ निधीशत्वमवाप्नुहि ॥ १८ ॥ त्रिदशैः समतामिति । नतु ऋषिपुत्रवद्वर्त-स्वेत्यर्थः ॥ १९–२७ ॥ यन्त्ररूपै. शस्त्रै. समावृता

---

चिन्तयन्पुलस्त्य तस्मिन्विश्रवस पुत्रेजातेतुष्टोबभूवेतितेनव्याख्यानात् ॥ ५—६ ॥ **ति०** यतोविश्रवसोपत्यंरूपसादृश्याद्विश्रवा इवसइवेतिव्यवहारविषय तस्माद्वैश्रवणइतिविश्रुत प्रसिद्धो भविष्यतिनाम । अपत्यप्रत्ययसनियोगेनविश्रवसोविश्रवणादेश ॥ ८ ॥ **ति०** तपस्तप्त्वा आलोच्य ॥ **शि०** तपस्तप्त्वा स्वश्रेयस्करत्वेननिश्चित्य वर्षसहस्राणिसुमहत्तपश्चकार ॥ ११ ॥ **शि०** पूर्णे नियमपूर्त्यर्थं । वर्षसहस्रान्ते वर्षसहस्रमध्ये । अदन्तोप्यन्तशब्दोमध्यवाची ॥ १२ ॥ **ति०** वरद्वयं निधीशत्वपुष्पकदानरूपं ॥ २० ॥ **ति०** निवासनं निवासमित्यर्थं ॥ २३ ॥

**[ पा० ]** १ घ. ज. नियतंधर्मं. २ च छ तातावृत्तिमकल्पयत्. ३ झ लोकरक्षणं. ४ क. ख. घ. ङ. ज. झ. ञ. धनेश.पितरं.

राक्षसैः सा परित्यक्ता पुरा विष्णुभयार्दितैः ॥ शून्या रक्षोगणैः सर्वै रसातलतलं गतैः ॥ २९ ॥
शून्या संप्रति लङ्का सा प्रभुस्तस्या न विद्यते ॥ स त्वं तत्र निवासाय गच्छ पुत्र यथासुखम् ॥३०॥
निर्दोषस्तत्र ते वासो न बाधा तत्र कस्यचित् ॥ ३१ ॥
एतच्छ्रुत्वा स धर्मात्मा धर्मिष्ठं वचनं पितुः ॥ निवासयामास तदा लङ्कां पर्वतमूर्धनि ॥
नैर्ऋतानां सहस्रैस्तु हृष्टैः प्रमुदितैः सह ॥ ३२ ॥
अचिरेणैव कालेन संपूर्णा तस्य शासनात् ॥ ३३ ॥
स तु तत्रावसत्प्रीतो धर्मात्मा नैर्ऋतर्षभः ॥ समुद्रपरिघायां तु लङ्कायां विश्रवात्मजः ॥ ३४ ॥
काले काले तु धर्मात्मा पुष्पकेण धनेश्वरः ॥ अभ्यागच्छद्विनीतात्मा पितरं मातरं च हि ॥ ३५ ॥
स देवगन्धर्वगणैरभिष्टुतस्तथाऽप्सरोनृत्यविभूषितालयः ॥
गभस्तिभिः सूर्य इवावभासयन्पितुः समीपं प्रययौ स वित्तपः ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे तृतीयः सर्गः ॥ ३ ॥

---

## चतुर्थः सर्गः ॥ ४ ॥

अगस्त्यमुखाल्लङ्कायां कुबेरनिवासात्पूर्वमपि राक्षसस्थितिश्रवणविस्मितेनरामेण तंप्रति राक्षसमूलकथनप्रार्थना ॥ १ ॥ अगस्त्येनतंप्रति यक्षराक्षसशब्दप्रवृत्तिनिमित्तकथनपूर्वकं रक्षःकुलमूलभूतहेतिवंशकथनारंभः ॥ २ ॥ हेतिसुताद्विद्युत्केशात्सुकेशोत्पत्तिः ॥ ३ ॥ पार्वतीपरमेश्वराभ्यां तस्मैवरदानम् ॥ ४ ॥

श्रुत्वाऽगस्त्येरितं वाक्यं रामो विस्मयमागतः ॥ कथमासीत्तु लङ्कायां संभवो रक्षसां पुरा ॥ १ ॥
ततः शिरः कम्पयित्वा त्रेताग्निसमविग्रहम् ॥ तमगस्त्यं मुहुर्दृष्ट्वा स्मयमानोऽभ्यभाषत ॥ २ ॥
भगवन्पूर्वमप्येषा लङ्काऽऽसीत्पिशिताशिनाम् ॥ श्रुत्वेदं भगवद्वाक्यं जातो मे विस्मयः परः ॥ ३ ॥
पुलस्त्यवंशादुद्भूता राक्षसा इति नः श्रुतम् ॥ इदानीमन्यतश्चापि संभवः कीर्तितस्त्वया ॥ ४ ॥

---

॥ २८–३१ ॥ प्रमुदितैः सह निवासयामासेति योजना ॥ ३२ ॥ सपूर्णाधनधान्यादिसर्वैश्वर्यपूर्णेत्यर्थः ॥ ३३—३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥

---

लङ्कायां धनदाधिष्ठानात्पूर्वमपि रक्षसां संभवः अपःस्थानादिसंभवः इति यदुक्तं तच्छ्रुत्वा विस्मयमागत इत्यन्वयः ॥१॥ ततो मुहुः शिरः कम्पयित्वाविस्मयमागतः सन् अगस्त्यं दृष्ट्वाऽभ्यभाषत ॥२॥ पूर्वरावणकुबेरयोः पूर्वमपि लङ्कापिशिताशिनामासीदावास आसीदितीदानीमुक्तं श्रुत्वा मम विस्मयो जनित.॥३॥ कुतो विस्मय इत्याशङ्क्य विरुद्धश्रवणादित्याह—पुलस्त्येति । नः अस्माभिः । पूजायां बहुवचनं । श्रुतं कर्णा-

---

ति० निवासयामास निवासमकरोदित्यर्थ ॥ ३२ ॥ ति० शासनात् पालनात् ॥ ३३ ॥ ति० अवभासयन् शोभमान । अप्सरोनृत्तै विभूषितमालयंपुष्पकयस्यस ॥ ३६ ॥ इतितृतीय सर्ग ॥ ३ ॥

ति० लङ्कायां पूर्वमपिरक्षःस्थितिंश्रुत्वाविस्मितेनरामेणतेषामुत्पत्त्यादिप्रश्नेअगस्त्येनतत्प्रतिपादनंश्रुत्वेतिविस्मयमागतइत्युक्तं । तत्रकिंविषयकश्रवणाद्विस्मयप्राप्तिस्तत्राह—कथमिति ॥ १ ॥ स० शिर कंपनंविस्मयसूचक ॥ २ ॥ ति० अन्यतश्चापिसंभव

[ पा० ] १ घ. ज. निवासायरोचयस्वमहाबल क. ख. निवासायरोचयस्वमहायश . २ क ख. घ. ज एवमुक्तस्तुधर्मात्मापित्राधर्म्यमिदंवच ३ क. घ निवेशयामास. ४ क. ख. घ. ज. अभ्यागच्छत्सुसहृष्टःपितरं ५ क. ख. घ ज. रभिष्टुतस्तथैवसिद्धै सहचारणैरपि. ६ क. ख. घ. ज. इवौजसावृत.. ७ क. ख. ज. प्रययौश्रियावृतः. ८ क. ख. ज. लङ्कायारक्षसामितिसंभवः.

रावणात्कुम्भकर्णाच्च प्रहस्ताद्विकटादपि ॥ रावणस्य च पुत्रेभ्यः किं नु ते बलवत्तराः ॥ ५ ॥
क एषां पूर्वको ब्रह्मन्किंनामा च बलोत्कटः ॥ अपराधं च कं प्राप्य विष्णुना द्राविताः कथम् ॥६॥
एतद्विस्तरतः सर्वं कथयस्व ममानघ ॥ कौतूहलमिदं मह्यं नुद भानुर्यथा तमः ॥ ७ ॥
राघवस्य वचः श्रुत्वा संस्कारालंकृतं शुभम् ॥ ईषद्विस्मयमानस्तमगस्त्यः प्राह राघवम् ॥ ८ ॥
प्रजापतिः पुरा सृष्ट्वा ह्यपः सलिलसंभवः ॥ तासां गोपायने सत्त्वानसृजत्पद्मसंभवः ॥ ९ ॥
ते सत्त्वाः सत्त्वकर्तारं विनीतवदुपस्थिताः ॥ किं कुर्म इति भाषन्तः क्षुत्पिपासाभयार्दिताः ॥१०॥
प्रजापतिस्तु तान्याह सत्त्वानि प्रहसन्निव ॥ आभाष्य वाचा यत्नेन रक्षध्वमिति मानदः[1] ॥ ११ ॥
[ इत्युक्तास्ते[2] क्षुधाविष्टा अंभांस्यादातुमुद्यताः ॥ अंभांस्येतानि रक्षाम उक्तवन्तस्तथाऽपरे ॥ १२ ॥
ज्ञात्वा प्रजापतिस्तेषामाह धात्वर्थसंयुतम् ॥ यक्षेति जक्षणे धातुस्तथा रक्षस्तु पालने ॥
यक्षणाद्यक्ष इत्युक्तस्तथा रक्षस्तु पालनात् ॥ १३ ॥ ]
रक्षामेति च तत्रान्ये जक्षाम इति चापरे ॥ भुक्षिताभुक्षितैरुक्तस्ततस्तानाह भूतकृत् ॥ १४ ॥

कर्णिकयेति शेष' ॥४—७॥ सस्कारेति पदवाक्यार्थजसस्कारेति यावत् । ईषद्विस्मयमान इति । सर्वज्ञोऽप्यजानन्निव पृच्छतीतीति विस्मित ॥ ८ ॥ सलिलसभव' पद्मसभवः । सलिले पद्मसभव इत्यर्थ । प्रजापति ब्रह्मा । अहरन्ते अप. सृष्ट्वा भूमेरधः स्थिता. समुद्ररूपिणी' सृष्ट्वा रात्र्यवसाने तत्रैव सलिले विष्णुनाभिकमले वर्तमानः प्रजापतिः तासामपां गोपायने रक्षणनिमित्त । सत्त्वान् जन्तूनसृजत् । पुँल्लिङ्गत्वमार्ष ॥ ९ ॥ तइति तानि सत्त्वानि कि कुर्म कि करवामेति भाषन्तः क्षुत्पिपासाभयार्दिताः सन्त सत्त्वकर्तारं स्वस्रष्टार विनीतवदुपस्थिता' ॥ १० ॥ प्रहसन्निव भयार्दित स्वप्रजाविषयदयावशात् प्रहसन्नित्यर्थ' । मानद'बहुमानद. । भयनिवृत्तिमनुगृह्णन्नित्यर्थः । हे सत्त्वानीति वाचा आभाष्य सबोध्य । रक्षध्वं यत्नेन रक्षध्वमिमा अप इति ॥११—१३॥ तानि सत्त्वान्याह—रक्षामेति । तत्र तेषु सत्त्वेषु मध्ये । अन्यैः कैश्चित्सत्त्वै. । रक्षामेत्युक्तः । तथापरैर्जक्षामेत्युक्तः प्रजापतिः । उभयमपि लोडुत्तमबहुवचनं । "जक्ष, भक्ष–हसनयोः" । कैश्चिन्न वय रक्षाम किन्तु जक्षामेत्युक्त. । कैः रक्षामेत्युक्त कैर्वा जक्षामेत्युक्त तत्राह—भुक्षिताभुक्षितैरिति अभ्यासलोपश्छान्दसः । अबुभुक्षितैः रक्षामेत्युक्त बुभुक्षितैस्तु जक्षामेत्युक्तमिति

कीर्तित । लङ्का राक्षसानानिवासार्थनिर्मितेतिविश्रवोवाक्यानुवादेनेत्यर्थ ॥ ४॥ **ति०** बलवत्तरा किनु । यतोविष्णुनातद्विद्रावणेयतितमितिभाव ॥ ५ ॥ **ति०** सलिलसभव प्रजापतिरभूदित्यन्वय । "अपएवससर्जादौतासुवीर्यमवासृजत् । तदण्डमभवद्धैमसहस्रांशुसमप्रभम् । तस्मिञ्जज्ञेस्वयब्रह्मासर्वलोकपितामह ।" इतिमनूक्ते ॥ **शि०** अपो जलानिसृष्ट्वा आकाशादिक्रमेणोत्पाद्य । सलिलसभव सलिलात् सलिलपद्मात् प्रादुर्भूतोबभूवेतिशेष । रजोगुणग्रहणेनब्रह्माऽभवदितिशेष । पद्मसंभवो ब्रह्मातुतासापद्मद्वारास्वोत्पादनहेतूनामपा गोपायनेरक्षणार्थसत्त्वान् प्राणिविशेषानसृजत् ॥ ९ ॥ **ति०** विनीतवत् पितरिविनीता सन्त ॥ १० ॥ **स०** प्रहसन्निव । क्षुत्पिपासाऽसहनंदुश्शकमहोइतिप्रहास । मानवाइतिसृष्टसत्त्वसबोधनेनतेषामनुमतमानुषत्वंस्वस्येतिसूचयति । मानदइतिपाठेतु ब्रह्मविशेषण । वाचामानवाइत्याभाष्ययत्नेनापोरक्षध्वमित्याह ॥ **शि०** प्रजापतिर्ब्रह्मा हेमानवा मन्त्रशक्त्यासभूता इत्याभाष्य संबोध्य ॥ ११ ॥ **स०** "इत्युक्तास्तेक्षुधाविष्टाअभांस्यादातुमुद्यता" इत्यारभ्य सार्धश्लोकद्वयंक्वचित्पुस्तकसपुट्यावर्तते नवर्ततेचबहुषुपुस्तकेषु । तेनप्रक्षिप्तमितिभाति । तथापिव्याख्यायते । एतानि त्वत्सृष्टान्यंभासिरक्षामइत्युक्तवन्त । धात्वर्थसयुतं । रक्षधात्वर्थसयुतं । तथेतरत्र यक्षधात्वर्थसयुतमित्यर्थ । स्वयमेवधात्वर्थसयुतमित्युक्तंविवृणोति । यक्षेतीति । जक्षणे भक्षणे । तथारक्षोरक्षधातु पालनेइक्शितपोरन्यतरस्याप्यभावाच्छान्दसोनिर्देश । रक्ष उक्तमितिविपरिणतमन्वेति । यजयोरभेदस्यतान्त्रिकत्वाद्यक्षेतिजक्षणइत्युक्ति. । यथोक्तंतृतीयस्कन्धएकोनविंशाध्याये । 'क्षुत्तृड्भ्यामुपसृष्टास्तेतंजग्धुमभिदुद्रुवु । मारक्षतैनजक्षध्वमित्युचै क्षुत्तृडर्दिता । देवस्तानाहसविग्नोमामाजक्षतरक्षत । अहोमेयक्षरक्षासिप्रजायूयंभविष्यथ' इति ॥ १२—१३ ॥ **स०** तदुक्तास्तदुक्ते प्रतिपन्नार्थद्वयाअमुमूचुरित्याह—रक्षामइति । भुक्षिताभुक्षितै भुक्षिताभुक्षितैरितिपाठद्वयेअभ्यासलोपानुस्वारकेवलाभ्यासलोपाआर्षा । रक्षणं तयैवसतीनामपामितरानपायोपायं ।

[ पा० ] १ झ. मानवा . २ इत्युक्तास्तेक्षुधाविष्टाइत्यादय रक्षस्तुपालनादित्यन्ता श्लोका. च. छ. पाठयोरधिकादृश्यन्ते.

रक्षामेति च यैरुक्तं राक्षसास्ते भवन्तु वः ॥ जक्षाम इति यैरुक्तं यक्षा एव भवन्तु वः ॥ १५ ॥
तत्र हेतिः प्रहेतिश्च भ्रातरौ राक्षसाधिपौ ॥ मधुकैटभसंकाशौ बभूवतुररिन्दमौ ॥ १६ ॥
प्रहेतिर्धार्मिकस्तत्र तपोवनगतस्तदा ॥ हेतिर्दारक्रियार्थे तु परं यत्नमथाकरोत् ॥ १७ ॥
स कालभगिनीं कन्यां भयां नाम भयावहाम् ॥ उदावहदमेयात्मा स्वयमेव महामतिः ॥ १८ ॥
स तस्यां जनयामास हेती राक्षसपुङ्गवः ॥ पुत्रं पुत्रवतां श्रेष्ठो विद्युत्केश इति श्रुतम् ॥ १९ ॥
विद्युत्केशो हेतिपुत्रः स दीप्तार्कसमप्रभः ॥ व्यवर्धत महातेजास्तोयमध्य इवाम्बुदः ॥ २० ॥
स यदा यौवनं भद्रमनुप्राप्तो निशाचरः ॥ ततो दारक्रियां तस्य कर्तुं व्यवसितः पिता ॥ २१ ॥
सन्ध्यायास्तनयां सोथ सन्ध्यातुल्यां प्रभावतः ॥ वरयामास पुत्रार्थं हेती राक्षसपुङ्गवः ॥ २२ ॥
अवश्यमेव दातव्या परस्मै सेति सन्ध्यया ॥ चिन्तयित्वा सुता दत्ता विद्युत्केशाय राघव ॥ २३ ॥
संध्यायास्तनयां लब्ध्वा विद्युत्केशो निशाचरः ॥ रमते स तया सार्धं पौलोम्या मघवानिव ॥ २४ ॥
केनचित्त्वथ कालेन राम सालकटङ्कटा ॥ विद्युत्केशाद्गर्भमाप घनराजिरिवार्णवात् ॥ २५ ॥
ततः सा राक्षसी गर्भं घनगर्भसमप्रभम् ॥ प्रसूता मन्दरं गत्वा गङ्गा गर्भमिवाग्निजम् ॥ २६ ॥
तमुत्सृज्य तु सा गर्भं विद्युत्केशरतार्थिनी ॥ रेमे तु सार्धं पतिना विस्मृत्य सुतमात्मजम् ॥ २७ ॥
उत्सृष्टस्तु तदा गर्भो घनशब्दसमस्वनः ॥ तयोत्सृष्टः स तु शिशुः शरदर्कसमद्युतिः ॥
निधायास्ये स्वयं मुष्टिं रुरोद शनकैस्तदा ॥ २८ ॥
ततो वृषभमास्थाय पार्वत्या सहितः शिवः ॥ वायुमार्गेण गच्छन्वै शुश्राव रुदितस्वनम् ॥ २९ ॥
अपश्यदुमया सार्धं रुदन्तं राक्षसात्मजम् ॥ कारुण्यभावात्पार्वत्या भवस्त्रिपुरसूदनः ॥ ३० ॥
तं राक्षसात्मजं चक्रे मातुरेव वयःसमम् ॥ अमरं चैव तं कृत्वा महादेवोक्षरोव्ययः ॥ ३१ ॥
पुरमाकाशगं प्रादात्पार्वत्याः प्रियकाम्यया ॥ उमयाऽपि वरो दत्तो राक्षसानां नृपात्मज ॥ ३२ ॥

---

क्रमः ॥१४॥ व॰ युष्माकं मध्ये । यैः रक्षामेत्युक्त ते राक्षसा भवन्तु । यैर्जक्षामेत्युक्त ते यक्षा भवन्तु । वर्णव्यत्यय आर्ष.॥१५—१६॥ तत्र राक्षसेषु । तपोवनगत इति । विरक्तो भूत्वेति शेषः ॥१७॥ कालो यम. । स्वयमेवेति । प्रार्थनां गत्वेत्यर्थः । अस्यैव विवरण दारक्रियार्थं इत्यादि ॥१८—१९॥ तोय मध्ये यस्य स तोयमध्यः ॥२०॥ पिता हेतिः ॥२१—२५॥ प्रसूता प्रसूतवती । अग्निजं गर्भमिति । अग्निना विसृष्टं माहेश्वर गर्भमित्यर्थः । घनगर्भोऽशनिः ॥ २६—२९ ॥ कारुण्येन सहितः भावश्चित्त कारुण्यभावः । तस्मात् ॥ ३० ॥ अक्षरोव्यय इति षड्भावराहित्योपलक्षणं । पार्वत्या प्रेरित इति शेषः । इदमेव दर्शयति—वक्ष्य-

---

जक्षणवैवक्षिकंपूजनादिरूपकुर्मइत्युत्तरितवन्तइतिभाव । अनुप्रासेनरक्षामोयक्षामइतिद्वयेऽवदन्निति ध्वनि । **ति०** तत्रतेषुभगवन्नियुक्तभूतेषुमध्येभगवत्प्रयुक्तरक्षध्वमितिपदस्याविनाशेनावस्थापनमर्थंइतिकेचनप्रपन्ना । उत्तरोत्तराभिवर्धनरूपपूजनमर्थंइति परेप्रपन्ना । तत्राद्यारक्षामेतिप्रतिवचनदत्तवन्त । परैयक्षामेति । 'यक्ष पूजाया' । उभयमपिलोडुत्तमबहुवचन । बुभुक्षिताबुभुक्षितैरित्यस्यस्थानेभुङ्क्षिताभुङ्क्षितैरित्यार्ष । अबुभुक्षिता पिपासिता ॥ १४ ॥ **ति०** प्रभावत सन्ध्यातुल्यामितिसबन्ध । सन्ध्यादुहिता सालकटकटाख्या ॥ २२ ॥ **स०** राक्षसी । यद्यपिसन्ध्यायादेवतात्वं । तथापिरक्षणप्राधान्येनब्रह्मसृष्टत्वेनराक्षसीत्वात्तत्पुत्र्याअपिराक्षसीत्वबोध्य । अग्निजं अग्निविसृष्टषण्मुखरूपंगर्भंगङ्गेवप्रसूता । प्रकृष्टंसूतंसवनंयस्या सा । प्रसूतवतीत्यर्थः ॥ **ति०** घनगर्भसमप्रभ जलगर्भमेघसमकान्ति ॥ २६ ॥ **ति०** विद्युत्केशरतार्थिनी विद्युत्केशेनसहरतंक्रीडामर्थयतितादृशी । बभूवेतिशेष. ॥ २७ ॥ **स०** मातुर्वयसासम । माताप्रसवकालेकियद्वर्षोपेता कीदृशाकारवतीतादृशाकारकमित्यर्थ. ॥ ३१ ॥ **स०** बालेषु तत्रापिरक्षकरहितेषुप्रायेणस्त्रीणामनुक्रोशात्पार्वत्या प्रियकाम्ययेत्युक्तं ॥ ३२ ॥

[ पा० ] १ झ. ञ. ट. इवाम्बुजं. २ ङ. च. छ झ. ञ. ट. सन्ध्यादुहितरसोथ.

सद्योपलब्धिर्गर्भस्य प्रसूतिः सद्य एव च ॥ सद्य एव वयःप्राप्तिर्मातुरेव वयःसमम् ॥ ३३ ॥
ततः सुकेशो वरदानगर्वितः श्रियं प्रभोः प्राप्य हरस्य पार्श्वतः ॥
चचार सर्वत्र महान्महामतिः खगं पुरं प्राप्य पुरंदरो यथा ॥ ३४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ॥ ५ ॥

सुकेशान्माल्यवान्सुमालीमालीचेति त्रयाणारक्षसामुत्पत्ति ॥ १ ॥ स्वतपस्तुष्टपरमेष्ठिवरदृप्तैस्तै सुरासुरादिप्रबोधनपूर्वक लङ्कायांविश्वकर्मवचनान्निवास ॥ २ ॥ तैर्निजकलत्रेषु बहुरूक्षरक्षोपत्यसमुत्पादनम् ॥ ३ ॥

सुकेशं धार्मिकं दृष्ट्वा वरलब्धं च राक्षसम् ॥ ग्रामणीर्नाम गन्धर्वो विश्वावसुसमप्रभः ॥ १ ॥
तस्य देववती नाम द्वितीया श्रीरिवात्मजा ॥ त्रिषु लोकेषु विख्याता रूपयौवनशालिनी ॥
तां सुकेशाय धर्मेण ददौ रक्षःश्रियं यथा ॥ २ ॥
वरदानकृतैश्वर्यं सा तं प्राप्य पतिं प्रियम् ॥ आसीद्देववती तुष्टा धनं प्राप्येव निर्धनः ॥ ३ ॥
स तया सह संयुक्तो रराज रजनीचरः ॥ अञ्जनादभिनिष्क्रान्तः करेण्वेव महागजः ॥ ४ ॥
देववत्यां सुकेशस्तु जनयामास राघव ॥ ५ ॥
त्रीन्पुत्राञ्जनयामास त्रेताग्निसमविग्रहान् ॥ माल्यवन्तं सुमालिं च मालिं च बलिनां वरम् ॥
त्रींस्त्रिनेत्रसमान्पुत्रान्राक्षसान्राक्षसाधिपः ॥ ६ ॥
त्रयो लोका इवाव्यग्राः स्थितास्त्रय इवाग्नयः ॥ त्रयो मन्त्रा इवात्युग्रास्त्रयो घोरा इवामयाः ॥ ७ ॥
त्रयः सुकेशस्य सुतास्त्रेताग्निसमतेजसः ॥ विवृद्धिमगमंस्तत्र व्याधयोपेक्षिता इव ॥ ८ ॥
वरप्राप्तिं पितुस्ते तु ज्ञात्वेश्वरतपोबलात् ॥ तपस्तप्तुं गता मेरुं भ्रातरः कृतनिश्चयाः ॥ ९ ॥

माणप्रियकाम्ययेति ॥ ३१—३२ ॥ सद्योपलब्धिरित्यार्षः संधिः । मातुरेव वयःसमं वयःप्राप्तिरिति योजना ॥ ३३ ॥ सुकेश इत्यनुवादादेव तन्नामकरण सिद्धं । खगं आकाशगं ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

---

सुकेशमित्यादि सार्धद्वय । वरलब्धं लब्धवरं । गन्धर्व आसीत् स त सुकेश दृष्ट्वा तस्मै सुकेशाय ददावित्यन्वयः । रक्षःश्रियं राक्षसश्रियं ॥ १—३ ॥ अञ्जनादञ्जनाख्यगजात् अभिनिष्क्रान्तः उत्पन्न महागजः करेण्वेव रराज ॥ ४—६ ॥ त्रयो लोका इत्यादि श्लोकद्वय । त्रयो मन्त्राः उत्साहप्रभुमन्त्रशक्तयः । त्रयो वेदा वा । त्रय आमया. वातपित्तश्लेष्मरूपाः । त्रेताग्निसमवर्चस इति तेजोतिशय उक्तः । पूर्वसाहत्यप्रधानात् (?) । व्याधयोपेक्षिता इति संधिरार्षे ॥७—

स० सद्योपलब्धिरिति । अत्रसधिरार्ष । अथवा 'एधोदकमुपस्कुरुते' इत्यत्रैधश्शब्दसमानार्थकैधशब्दोप्यस्तीतिसमाधिवदत्रापिसद्यशब्दसमानार्थक सद्यश्शब्दोप्यस्ति । तेनसन्ध्युपपत्ति । अनेनरत्यर्थराक्षसीभिर्गर्भस्त्यज्यते । तस्यचनपोषणमित्येतज्ज्ञात्वातासासद्यएवगर्भप्राप्ति प्रसवश्चसद्यएव तस्यचविशिष्टयौवनमित्येवंदययादेव्यावरादत्ताइत्युक्तंभवति । मातुर्वयस. समंयद्वय तत्प्राप्तिंतत्तुल्यरूपप्राप्तिंप्रतिवरोदत्तइत्यन्वय ॥ ३३ ॥ इतिचतुर्थ सर्ग ॥ ४ ॥

शि० ग्रामणीर्नामगन्धर्व' प्रससादेतिशेष ॥ १ ॥ शि० प्रसादफलमाह—**तस्येति** । तस्य ग्रामण्य । देववतीनाम्न्या आत्मजा तासुकेशायददौ ॥२॥ स० वरदानकृतैश्वर्य वरदानरूपंकृतं कर्म । तेनैश्वर्ययस्यसतथातं ॥ ३ ॥ ति० अत्रोपमात्र-तुष्टयेस्थिरत्वतेजस्विलापरिमितसामर्थ्यहिंसकत्वानिसाधारणधर्मा ॥ ७ ॥ स० व्याधयोपेक्षिताइत्यत्रगुणआर्ष । व्याधय अपेक्षिताइतिवाच्छेदः । तत्रेक्षितमितिभावेक्त. । अपगतमीक्षितमीक्षणं । तत्परिहारप्रयत्नइतियावत् । येभ्यस्तेऽपेक्षिता. । उपेक्षिताइ-

[ पा० ] १ घ. दुर्गत.. २ घ. मालिंचैवबलान्वितं. ३ क. घ. समवर्चसः. ४ क. घ.—ज्ञ. ज्ञात्वैश्वर्यतपोबलात्.

प्रगृह्य नियमान्घोरान्राक्षसा नृपसत्तम ॥ विचेरुस्ते तपो घोरं सर्वभूतभयावहम् ॥ १० ॥
सत्यार्जवशमोपेतैस्तपोभिरतिदुष्करैः ॥ सन्तापयन्तस्त्रीँल्लोकान्सदेवासुरमानुषान् ॥ ११ ॥
ततो विभुश्चतुर्वक्रो विमानवरमास्थितः ॥ सुकेशपुत्रानामन्त्र्य वरदोस्मीत्यभाषत ॥ १२ ॥
ब्रह्माणं वरदं ज्ञात्वा सेन्द्रैर्देवगणैर्वृतम् ॥ ऊचुः प्राञ्जलयः सर्वे वेपमाना इव द्रुमाः ॥ १३ ॥
तपसाऽऽराधितो देव यदि नो दिशसे वरम् ॥ अजेयाः शत्रुहन्तारस्तथैव चिरजीविनः ॥
प्रभविष्णवो भवामेति परस्परमनुव्रताः ॥ १४ ॥
एवं भविष्यतीत्युक्त्वा सुकेशतनयान्विभुः ॥ स ययौ ब्रह्मलोकाय ब्रह्मा ब्राह्मणवत्सलः ॥ १५ ॥
वरं लब्ध्वा तु ते सर्वे राम रात्रिंचरास्तदा ॥ सुरासुरान्प्रबाधन्ते वरदानसुनिर्भयाः ॥ १६ ॥
[2]तैर्वध्यमानास्त्रिदशाः सर्षिसङ्घाः सचारणाः ॥ त्रातारं नाधिगच्छन्ति निरयस्था यथा नराः ॥१७॥
अथ ते विश्वकर्माणं शिल्पिनां वरमव्ययम् ॥ ऊचुः समेत्य संहृष्टा राक्षसा रघुसत्तम ॥ १८ ॥
ओजस्तेजोबलवतां महतामात्मतेजसा ॥ गृहकर्ता भवानेव देवानां हृदयेप्सितम् ॥ १९ ॥
अस्माकमपि तावत्त्वं गृहं कुरु महामते ॥ हिमवन्तमपाश्रित्य मेरुं मन्दरमेव वा ॥
महेश्वरगृहप्रख्यं गृहं नः क्रियतां महत् ॥ २० ॥
विश्वकर्मा ततस्तेषां राक्षसानां महाभुजः ॥ निवासं कथयामास शक्रस्येवामरावतीम् ॥ २१ ॥
दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः ॥ सुवेल इति चाप्यन्यो द्वितीयस्तत्र[3] सत्तमाः ॥ २२ ॥
शिखरे तस्य शैलस्य मध्यमेऽम्बुदसन्निभे ॥ शकुनैरपि दुष्प्रापे टङ्कच्छिन्नचतुर्दिशि ॥ २३ ॥
त्रिंशद्योजनविस्तीर्णा शतयोजनमायता ॥ स्वर्णप्राकारसंवीता हेमतोरणसंवृता ॥
मया लङ्केति नगरी शक्राज्ञप्तेन निर्मिता ॥ २४ ॥
तस्यां वसत दुर्धर्षा यूयं राक्षसपुङ्गवाः ॥ २५ ॥
अमरावतीं समासाद्य सेन्द्रा इव दिवौकसः ॥ लङ्कादुर्गं समासाद्य राक्षसैर्बहुभिर्वृताः ॥
भविष्यथ दुराधर्षाः शत्रूणां शत्रुसूदनाः ॥ २६ ॥
विश्वकर्मवचः श्रुत्वा ततस्ते राक्षसोत्तमाः ॥ सहस्रानुचरा भूत्वा गत्वा तामवसन्पुरीम् ॥ २७ ॥
दृढप्राकारपरिखां हैमैर्गृहशतैर्वृताम् ॥ लङ्कामवाप्य ते हृष्टा न्यवसन्रजनीचराः ॥ २८ ॥
एतस्मिन्नेव काले तु यथाकामं च राघव ॥ नर्मदा नाम गन्धर्वी बभूव रघुनन्दन ॥ २९ ॥

---

१३ ॥ प्रभविष्णवः यणार्षः । अनुव्रताः । अनुरक्ताश्च भवामेत्यनुकर्षः ॥१४॥ ब्रह्मलोकाय ब्रह्मलोकं गन्तुं । "तुमर्थ–"इत्यादिना चतुर्थी ॥१५—२१॥ दक्षिणस्येत्यादि सार्धत्रयं ॥ अम्बुदसन्निभे मेघसमानरूपे मध्यमे शिखरे । शकुनैरपि दुष्प्राप इत्यत्र हेतुः टङ्कच्छिन्नचतुर्दिशीति ॥ २२—२५ ॥ अमरावती समासाद्येति पदवशादक्षराधिक्यं ॥ २६ ॥ सहस्रमनेके अनुचरा येषां ते सहस्रानुचराः ॥२७—

---

तितात्पर्यम् ॥ ८ ॥ **स०** हेप्रभविष्णो जगदुत्पादक धात । इतिवरचतुष्टयदिशेतिययाचिरइतिशेष । नागोजिभट्टस्तुप्रभविष्णवइतिपठित्वा 'यणार्ष । प्रभवइतियावत्' इतिव्याचख्यौ ॥ पाठोपिनमूलकोशेषु । तथाचतुर्विशेषणीलभ्यार्थस्यतेनकथनादार्थिकीपुनरुक्तिश्चार्षयणादेशश्चतत्रेत्युपेक्ष्यंतत् ॥ १४ ॥ **स०** ब्रह्मलोकाय स्वलोक । तपआदिप्राप्यलोकमितिवा ॥ त्वरयोपगम्यवरदानहेतुर्ब्राह्मणवत्सलइति । एतद्वात्सल्यमपिमुखोद्भूतत्वाज्ज्येष्ठत्वाच्चेतिमन्तव्य ॥ १५ ॥ **ति०** ओजस्तेजोबलवता अतएवमहतादेवानाभवानेवात्मतेजसाआत्मसामर्थ्येनगृहकर्ता । सत्वमस्माकमपिहृदयेप्सितगृहंकुर्वितिसबन्ध ॥ १९—२० ॥ इतिपञ्चम सर्ग ॥ ५ ॥

[ **पा०** ] १ च. ज्ञात्वाहृष्टासमन्त्र्यराक्षसा. २ च झ तैर्बाध्यमाना ३ ड. च छ. झ. ञ. ट. द्वितीयोराक्षसेश्वराः. ४ क. ख. घ. ज. विहरन्तिनिशाचराः. ५ क. घ. ज. गन्धर्वीनानाधर्मसमेधिता

तस्याः कन्यात्रयं ह्यासीद्ध्रीश्रीकीर्तिसमद्युति ॥ ज्येष्ठक्रमेण सा तेषां राक्षसानामराक्षसी ॥ ३० ॥
कन्यास्ताः प्रददौ हृष्टा पूर्णचन्द्रनिभाननाः ॥ त्रयाणां राक्षसेन्द्राणां तिस्रो गन्धर्वकन्यकाः ॥३१॥
दत्ता मात्रा महाभागा नक्षत्रे भगदैवते ॥ कृतदारास्तु ते राम सुकेशतनयास्तदा ॥
चिक्रीडुः सह भार्याभिरप्सरोभिरिवामराः ॥ ३२ ॥
ततो माल्यवतो भार्या सुन्दरी नाम सुन्दरी ॥ स तस्यां जनयामास यदपत्यं निबोध तत् ॥ ३३॥
वज्रमुष्टिर्विरूपाक्षो दुर्मुखश्चैव राक्षसः ॥ सुप्तघ्नो यज्ञकोपश्च मत्तोन्मत्तौ तथैव च ॥
अनला चाभवत्कन्या सुन्दर्या राम सुन्दरी ॥ ३४ ॥
सुमालिनोपि भार्याऽऽसीत्पूर्णचन्द्रनिभानना ॥ नाम्ना केतुमती नाम प्राणेभ्योपि गरीयसी ॥३५॥
सुमाली जनयामास यदपत्यं निशाचरः ॥ केतुमत्यां महाराज तन्निबोधानुपूर्वशः ॥ ३६ ॥
प्रहस्तोऽकम्पनश्चैव विकटः कालकार्मुकः ॥ धूम्राक्षश्चैव दण्डश्च सुपार्श्वश्च महाबलः ॥ ३७ ॥
संह्रादिः प्रघसश्चैव भासकर्णश्च राक्षसः ॥ राका पुष्पोत्कटा चैव कैकसी च शुचिस्मिता ॥
कुम्भीनसी च इत्येते सुमालेः प्रसवाः स्मृताः ॥ ३८ ॥
मालेस्तु वसुधा नाम गन्धर्वी रूपशालिनी ॥ भार्याऽऽसीत्पद्मपत्राक्षी स्वक्षी यक्षीवरोपमा ॥३९॥
सुमालेरनुजस्तस्यां जनयामास यत्प्रभो ॥ अपत्यं कथ्यमानं तु मया त्वं शृणु राघव ॥ ४० ॥
अनिलश्चानलश्चैव हरः सम्पातिरेव च ॥ एते विभीषणामात्या मालेयास्तु निशाचराः ॥ ४१ ॥

ततस्तु ते राक्षसपुङ्गवास्त्रयो निशाचरैः पुत्रशतैश्च संवृताः ॥
सुरान्सहेन्द्रानृषिनागयक्षान्बबाधिरे तान्बहुवीर्यदर्पिताः ॥ ४२ ॥
जगद्भ्रमन्तोऽनिलवद्दुरासदा रणेषु मृत्युप्रतिमानतेजसः ॥
वरप्रदानादतिगर्विता भृशं क्रतुक्रियाणां प्रशमंकराः सदा ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः ॥ ६ ॥

माल्यवदादिराक्षसपीडितैः सुरादिभीरुद्रसमीपमेत्य रक्षःपीडानिवेदनपूर्वकं तद्वधप्रार्थने तेनतान्प्रतितेषांस्वावध्यत्वकथनपूर्वकं श्रीनारायणशरणीकरणचोदना ॥ १ ॥ सुरादिभिःसप्रणामप्रार्थितेनहरिणा तान्प्रति रक्षःक्षपणप्रतिज्ञानपूर्वकं तेषां स्वस्वालयान्प्रतिप्रेषणम् ॥ २ ॥ विदितनारायणप्रतिज्ञानेनमाल्यवता तत्प्रतिज्ञायादेवगणप्रार्थनामूलकत्वनिर्धारणेन भ्रातृभ्यारक्षोगणैश्चसह देवगणविध्वसनायदेवलोकगमनेनतैः सहसमरारम्भः ॥ ३ ॥ श्रीनारायणेन सुपर्णारोहणेनसुरलोकमेत्य रक्षोभिः सहयुद्धारम्भः ॥ ४ ॥

तैर्वध्यमाना देवाश्च ऋषयश्च तपोधनाः ॥ भयार्ताः शरणं जग्मुर्देवदेवं महेश्वरम् ॥ १ ॥

---

२९ ॥ अराक्षसी राक्षसजातिव्यतिरिक्ता ॥ ३०—३१ ॥ भगदैवतनक्षत्रमुत्तरफल्गुनी ॥ ३२—४० ॥ मालेया इति । "इतश्च" इति ढक् ॥ ४१—४२ ॥ प्रशमंकराइत्यार्षः खच् ॥ ४३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

---

[ पा० ] १ क. ख. घ—ट ह्यासीद्ध्रीश्री. २ क. ख. ज. तस्य. ३ च. छ. झ. ञ. ट. राम. ४ ङ. च. छ. झ. ञ. ट. कालिकामुख. ५ क. सुमध्यमा ६ च. छ. ज. यक्षसुतोपमा. ७ क. ख. घ. ज. बलवीर्य ८ क. ख. घ. ज. प्रतिमा समाहिता.

जगत्सृष्ट्यन्तकर्तारमजमव्यक्तरूपिणम् ॥ आधारं सर्वलोकानामाराध्यं परमं गुरुम् ॥ २ ॥
ते समेत्य तु कामारिं त्रिपुरारिं त्रिलोचनम् ॥ ऊचुः प्राञ्जलयो देवा भयगद्गदभाषिणः ॥ ३ ॥
सुकेशपुत्रैर्भगवन्पितामहवरोद्धतैः ॥ प्रजाध्यक्ष प्रजाः सर्वा बाध्यन्ते रिपुबाधनैः ॥ ४ ॥
शरण्यान्यशरण्यानि ह्याश्रमाणि कृतानि नः ॥ स्वर्गाच्च देवान्प्रच्याव्य स्वर्गे क्रीडन्ति देववत् ॥५॥
अहं विष्णुरहं रुद्रो ब्रह्माऽहं देवराडहम् ॥ अहं यमश्च वरुणश्चन्द्रोऽहं रविरप्यहम् ॥ ६ ॥
इति माली सुमाली च माल्यवांश्चैव राक्षसाः ॥ [ इति ते राक्षसा देवान्वरदानेन दर्पिताः ] ॥
बाधन्ते समरोद्धर्षा ये च तेषां पुरस्सराः ॥ ७ ॥
तन्नो देव भयार्तानामभयं दातुमर्हसि ॥ अशिवं वपुरास्थाय जहि वै देवकण्टकान् ॥ ८ ॥
इत्युक्तस्तु सुरैः सर्वैः कपर्दी नीललोहितः ॥ सुकेशं प्रति सापेक्षः प्राह देवगणान्प्रभुः ॥ ९ ॥
अहं तान्न हनिष्यामि मयाऽवध्या हि तेऽसुराः ॥ किंतु मन्त्रं प्रदास्यामि यो वै तान्निहनिष्यति ॥१०॥
एतमेव समुद्योगं पुरस्कृत्य महर्षयः ॥ गच्छध्वं शरणं विष्णुं हनिष्यति स तान्प्रभुः ॥ ११ ॥
ततस्तु जयशब्देन प्रतिनन्द्य महेश्वरम् ॥ विष्णोः समीपमाजग्मुर्निशाचरभयार्दिताः ॥ १२ ॥
शङ्खचक्रधरं देवं प्रणम्य बहुमान्य च ॥ ऊचुः संभ्रान्तवद्वाक्यं सुकेशतनयान्प्रति ॥ १३ ॥
सुकेशतनयैर्देव त्रिभिस्त्रेताग्निसन्निभैः ॥ आक्रम्य वरदानेन स्थानान्यपहृतानि नः ॥ १४ ॥
लङ्का नाम पुरी दुर्गा त्रिकूटशिखरे स्थिता ॥ तत्र स्थिताः प्रबाधन्ते सर्वान्नः क्षणदाचराः ॥ १५ ॥
स त्वमस्मद्धितार्थाय जहि तान्मधुसूदन ॥ शरणं त्वां वयं प्राप्ता गतिर्भव सुरेश्वर ॥ १६ ॥
चक्रकृत्तास्यकमलान्निवेदय यमाय वै ॥ भयेष्वभयदोस्माकं नान्योस्ति भवता विना ॥ १७ ॥
राक्षसान्समरे दुष्टान्सानुबन्धान्मदोद्धतान् ॥ नुद त्वं नो भयं देव नीहारमिव भास्करः ॥ १८ ॥
इत्येवं दैवतैरुक्तो देवदेवो जनार्दनः ॥ अभयं भयदोऽरीणां दत्त्वा देवानुवाच ह ॥ १९ ॥
सुकेशं राक्षसं जाने ईशानवरदर्पितम् ॥ तांश्चास्य तनयाञ्जाने येषां ज्येष्ठः स माल्यवान् ॥ २० ॥
तानहं समतिक्रान्तमर्यादान्राक्षसाधमान् ॥ निहनिष्यामि संक्रुद्धः सुरा भवत विज्वराः ॥ २१ ॥
इत्युक्तास्ते सुराः सर्वे विष्णुना प्रभविष्णुना ॥ यथावासं ययुर्हृष्टाः प्रशंसन्तो जनार्दनम् ॥ २२ ॥
विबुधानां समुद्योगं माल्यवांस्तु निशाचरः ॥ श्रुत्वा तौ भ्रातरौ वीराविदं वचनमब्रवीत् ॥ २३ ॥

---

शरण्यानि शरणार्हाणि देवपित्रतिथिपशुपक्ष्यादिरक्षणार्हाणि ॥ ५—६ ॥ समरे उद्धर्षो येषां ते समरोद्धर्षाः ॥ ७ ॥ अशिव असौम्यं क्रूरमित्यर्थः ॥ ८ ॥ सुकेशं प्रति सापेक्ष इति । सुकेशस्य स्वाश्रितत्वात्तत्पुत्रवधानौचित्य इत्याशङ्क्येत्यर्थः ॥ ९ ॥* प्रथमं रुद्रसमीपगमनं कृतोयमनर्थ इति द्योतयितुमाह—अहमिति ॥ मन्त्रमुपाय ॥ १० ॥ एतमेव समुद्योगमिति । नतु कालान्तरीयमित्यर्थः । प्रभुर्मामापि प्रभुः ॥ ११—१२ ॥ सभ्रान्तवत् संभ्रान्ताः सन्तः ॥१३—१७॥ सानुबन्धाः सानुचराः ॥१८—

---

स० तस्यापिप्रजापतित्वात्सृष्टिकर्तृत्वं । कालाग्निरुद्रतयासहारकर्तृत्वच । अज आत्भगवत जायतइति । 'यस्यप्रसादजो ब्रह्मारुद्रश्चक्रोधसंभव.' इत्यादे । अव्यक्तरूपिण स्वानुग्रहमन्तरेणकस्याप्यप्रत्यक्षं । सर्वलोकाना इन्द्रादीना । आधार । आराध्यपूज्यं । परमंगुरुंच हितोपदेष्टार च ॥ २ ॥ ति० समरे संग्रामे उद्धर्ष उत्साहोयेषाते ॥ ७ ॥ ति० मयाऽवध्या. उक्तहेतोर्वधानर्हा । मन्त्रं उपायं ॥ १० ॥ स० महर्षय हेज्ञानिनः । उपक्रमेदेवप्राधान्यकथनात् ॥ ११ ॥

[ पा० ] १ घ रिपुमर्दन. २ इदमर्ध क. ख. घ. च. छ. ज. पाठेषुदृश्यते. ३ क. शङ्खचक्रधरदेवंपीतवाससमच्युतं । प्रणम्यजगतानाथवाक्यमूचुर्दिवौकसः.

अमरा ऋषयश्चैव संगम्य किल शंकरम् ॥ अस्मद्वधं परीप्सन्त इदं वचनमब्रुवन् ॥ २४ ॥
सुकेशतनया देव वरदानबलोद्धताः ॥ बाधन्तेऽस्मान्समुद्दृप्ता घोररूपाः पदे पदे ॥ २५ ॥
राक्षसैरभिभूताः स्म न शक्ताः स्म प्रजापते ॥ स्वेषु सद्मसु संस्थातुं भयात्तेषां दुरात्मनाम् ॥ २६ ॥
तदस्माकं हितार्थाय जहि तांश्च त्रिलोचन ॥ राक्षसान्हुंकृतेनैव दह प्रदहतां वर ॥ २७ ॥
इत्येवं त्रिदशैरुक्तो निशम्यान्धकसूदनः ॥ शिरः करं च धुन्वान इदं वचनमब्रवीत् ॥ २८ ॥
अवध्या मम ते देवाः सुकेशतनया रणे ॥ मन्त्रं तु वः प्रदास्यामि यस्तान्वै निहनिष्यति ॥ २९ ॥
योसौ चक्रगदापाणिः पीतवासा जनार्दनः ॥ हरिर्नारायणः श्रीमाञ्शरणं तं प्रपद्यथ ॥ ३० ॥
हरादवाप्य ते मन्त्रं कामारिमभिवाद्य च ॥ नारायणालयं प्राप्य तस्मै सर्वं न्यवेदयन् ॥ ३१ ॥
ततो नारायणेनोक्ता देवा इन्द्रपुरोगमाः ॥ सुरारींस्तान्हनिष्यामि सुरा भवत विज्वराः ॥ ३२ ॥
देवानां भयभीतानां हरिणा राक्षसर्षभौ ॥ प्रतिज्ञातो वधोस्माकं चिन्त्यतां यदिह क्षमम् ॥ ३३ ॥
हिरण्यकशिपोर्मृत्युरन्येषां च सुरद्विषाम् ॥ नमुचिः कालनेमिश्च संह्रादो वीरसत्तमः ॥ ३४ ॥
राधेयो बहुमायी च लोकपालोथ धार्मिकः ॥ यमलार्जुनौ च हार्दिक्यः शुम्भश्चैव निशुम्भकः ॥ ३५ ॥
असुरा दानवाश्चैव सत्त्ववन्तो महाबलाः ॥ सर्वे समरमासाद्य न श्रूयन्तेऽपराजिताः ॥ ३६ ॥
सर्वैः क्रतुशतैरिष्टं सर्वे मायाविदस्तथा ॥ सर्वे सर्वास्त्रकुशलाः सर्वे शत्रुभयंकराः ॥ ३७ ॥
नारायणेन निहताः शतशोथ सहस्रशः ॥ एतज्ज्ञात्वा तु सर्वेषां क्षमं कर्तुमिहार्हथ ॥ ३८ ॥
[ दुःखं नारायणं जेतुं यो नो हन्तुमिहेच्छति ॥ ] ततः सुमाली माली च श्रुत्वा माल्यवतो वचः ॥
ऊचतुर्भ्रातरं ज्येष्ठं भगांशाविव वासवम् ॥ ३९ ॥
स्वधीतं दत्तमिष्टं चाप्यैश्वर्यं परिपालितम् ॥ आयुर्निरामयं प्राप्तं सुधर्मः प्रापितः पथि ॥ ४० ॥
देवसागरमक्षोभ्यं शस्त्रैः समवगाह्य च ॥ जिता द्विषो ह्यप्रतिमास्तन्नो मृत्युकृतं भयम् ॥ ४१ ॥
नारायणश्च रुद्रश्च शक्रश्चापि यमस्तथा ॥ अस्माकं प्रमुखे स्थातुं सर्वे बिभ्यति सर्वदा ॥ ४२ ॥
विष्णोर्द्वेषस्य नास्त्येव कारणं राक्षसेश्वर ॥ देवानामेव दोषेण विष्णोः प्रचलितं मनः ॥ ४३ ॥

२४ ॥ पदे पदे प्रतिक्षणमित्यर्थः ॥ २५—२७ ॥ शिरः करं च धुन्वान इति सुरोक्तस्यासह्यताद्योतनम् ॥ २८ ॥ अवध्यत्वे हेतुः सुकेशतनया इति ॥ २९— ३८ ॥ भगांशाविव । भगः पूर्वफल्गुनीनक्षत्रदेवता । तदंशः अर्यमा उत्तरफल्गुनीनक्षत्रदेवता ॥ ३९— ४२ ॥ विष्णोर्द्वेषस्य कारण नास्तीति । अस्माभिस्त-

स० शिरआदिधूननदेवसान्त्वनार्थं । 'विषवृक्षोपिसंवर्ध्यस्वयंछेत्तुमसाप्रतं' इतिन्यायेनस्वावध्यतासूचनार्थंच ॥ २८ ॥ स० अयंनमुचिरिन्द्रशत्रोरन्य ॥ ३४ ॥ स० राधेय राधानाम्नीकाचनासुरस्त्री । तत्पुत्र ॥ ३५ ॥ स० अश्विनाविवेतिनिदर्शनमुभयोर्मिलित्वाभाषणादेवज्ञेयं ॥ ३९ ॥ ति० निरामयं नीरोग । सुधर्मे शोभनोधर्मे । पथिस्थापितः । प्राक्सम्यगनुष्ठितैरध्ययनादिभिरितिशेष । यतोद्विषोदेवा जिता । तत् तस्मात् । अस्माकंमृत्युकृतभयंनास्तीत्यर्थ । कर्तव्यावशेषाभावान्मृत्यावपिनक्षतिरितिभाव ॥ ४०—४१ ॥ ति० 'विष्णोर्दोषश्चनास्त्यत्रकारणराक्षसेश्वर.' इतिपाठेविष्णोरस्मद्वधप्रतिज्ञाया य कारणं स्यात्तादृशोविष्णो सहजोदोषोनास्तीत्यर्थ । कथंतर्हीदानीमस्मासुद्वेषोविष्णोरतआह—देवानामिति । दोषेण उपजापेन ॥ ४३ ॥

[ पा० ] १ घ. ज अरीन्हनिष्यतिरणेशरणं. २ ख हरान्नावाप्यतेकामं ३ क.—घ. प्राप्तास्तचसर्व. ज. प्राप्तास्तेचसर्वः ४ क. ज. सुरारीन्सूदयिष्यामि. घ सुरारीन्सहरिष्यामिसर्वान्भवत. ५ ङ—ट निर्भया.. ६ इदमर्धं क ख ग च—ट. पाठेषुदृश्यते. ७ ङ च. झ ञ. ज्येष्ठमश्विनाविव. ८ ग ज.—ट. सुधर्मे स्थापित पथि. क. ख घ सुधर्मे स्थापितश्चन . च छ. धर्मश्चापिकुलोचित.. ९ ख शस्त्रौघै प्रविभाव्यच घ शस्त्रौघंप्रविगाह्यच क. ज शस्त्रोर्मिप्रविगाह्यच १० क ग. घ ज. जितादेवारणेनित्यंतन्नो ११ क. सयुगे १२ क. ख. घ. च. छ. ज. विष्णोर्दोषश्चनास्त्यत्र ङ झ. ञ. ट. विष्णोर्देवस्यनास्त्येव.

[1]तस्मादद्य समुद्युक्ताः सर्वसैन्यसमावृताः ॥ देवानेव जिघांसाम एभ्यो दोषः समुत्थितः ॥ ४४ ॥
[ [2]इति माली सुमाली च माल्यवानग्रजः प्रभुः ॥ ] एवं संमन्त्र्य बलिनः सर्वे सैन्यसमावृताः ॥४५॥
उद्योगं घोषयित्वा तु सर्वे नैर्ऋतपुङ्गवाः ॥ युद्धाय निर्ययुः क्रुद्धा [3]जृम्भवृत्रबला इव ॥ ४६ ॥
इति ते राम संमन्त्र्य सर्वोद्योगेन राक्षसाः ॥ युद्धाय निर्ययुः सर्वे महाकाया महाबलाः ॥ ४७ ॥
स्यन्दनैर्वारणैश्चैव हयैश्च [4]गिरिसंनिभैः ॥ खरैर्गोभी रथोष्ट्रैश्च शिंशुमारैर्भुजङ्गमैः ॥ ४८ ॥
मकरैः कच्छपैर्मीनैर्विहङ्गैर्गरुडोपमैः ॥ सिंहैर्व्याघ्रैर्वराहैश्च सृमरैश्चमरैरपि ॥ ४९ ॥
त्यक्त्वा लङ्कां गताः सर्वे राक्षसा बलगर्विताः ॥ प्रयाता देवलोकाय योद्धुं दैवतशत्रवः ॥ ५० ॥
लङ्काविपर्ययं दृष्ट्वा यानि लङ्कालयान्यथ ॥ भूतानि भयदर्शीनि विमनस्कानि सर्वशः ॥ ५१ ॥
रथोत्तमैरूह्यमानाः शतशोथ सहस्रशः ॥ प्रयाता राक्षसास्तूर्णं देवलोकं प्रयत्नतः ॥
रक्षसामेव मार्गेण दैवतान्यपचक्रमुः ॥ ५२ ॥
भूतानि भयदर्शीनि विषमस्थानि सर्वशः ॥ भौमाश्चैवान्तरिक्षाश्च कालाज्ञप्ता भयावहाः ॥
उत्पाता राक्षसेन्द्राणामभावाय समुत्थिताः ॥ ५३ ॥
अस्थीनि मेघा ववृषुरुष्णं शोणितमेव च ॥ वेलां समुद्राश्चोत्क्रान्ताश्चेलुश्चाप्यथ भूधराः ॥ ५४ ॥
अट्टहासान्विमुञ्चन्तो घननादसमस्वनाः ॥ वाश्यन्त्यश्च शिवास्तत्र दारुणं घोरदर्शनाः ॥ ५५ ॥
संपतन्त्यथ भूतानि दृश्यन्ते च यथाक्रमम् ॥ [ [5]भूम्यां परिपतन्ति स्म नृत्यमानाः सहस्रशः ॥ ]
गृध्रचक्रं महच्चात्र ज्वलनोद्गारिभिर्मुखैः ॥ ५६ ॥
[6]राक्षसानामुपरि खे भ्रमतेऽलातचक्रवत् ॥ कपोता रक्तपादाश्च शारिका विद्रुता ययुः ॥
काका वाश्यन्ति तत्रैव बिडाला वै द्विपादयः ॥ ५७ ॥
उत्पातांस्ताननादृत्य राक्षसा बलगर्विताः ॥ यान्त्येव न निवर्तन्ते मृत्युपाशावपाशिताः ॥ ५८ ॥
माल्यवांश्च सुमाली च माली च सुमहाबलाः ॥ आसन्पुरस्सरास्तेषां क्रतूनामिव पावकाः ॥ ५९ ॥
माल्यवन्तं च ते सर्वे माल्यवन्तमिवाचलम् ॥ निशाचरा ह्याश्रयन्ति धातारमिव देवताः[7] ॥ ६० ॥
तद्बलं राक्षसेन्द्राणां महाभ्रघननादितम् ॥ जयेप्सया देवलोकं ययौ मालिवशे स्थितम् ॥ ६१ ॥
राक्षसानां समुद्योगं तं तु नारायणः प्रभुः ॥ देवदूतादुपश्रुत्य चक्रे युद्धे तदा मनः ॥ ६२ ॥
स सज्जायुधतूणीरो [8]वैनतेयोपरि स्थितः ॥ आसज्य कवचं दिव्यं सहस्रार्कसमद्युति ॥ ६३ ॥

---

दपकाराकरणादिति भाव. ॥ ४३ ॥ जिघांसाम इति स्वार्थे सन्नार्षः ॥ ४४—४७ ॥ वाहनान्याह—स्यन्दनैरित्यादिना ॥ ४८ ॥ सृमरैः गवयैः ॥४९—५० ॥ लङ्काविपर्यय लङ्काविनाश । दृष्ट्वा यानि लङ्कानिलयानि भूतानि तत्रत्यानि दैवतानि विमनस्कान्यासन्निति शेषः ॥ ५१ ॥ रक्षसां मार्गेण तद्यात्रया सहैवापचक्रमुः ॥ ५२ ॥ कालाज्ञप्ताः कालप्रेरिताः ॥ ५३—५७ ॥ मृत्युपाशावपाशिताः सजातबन्धना. ॥ ५८—५९ ॥ माल्यवन्त पर्वतं ॥ ६०—

---

ति० सृमरोगवय । सृमरचमरयोर्नीलश्वेतपुच्छयोगाद्भेदइतितीर्थ ॥ ४९ ॥ ति० विमुञ्चन्तइत्यस्यजाताइतिशेष । एवं-वाशन्त्यइत्यस्यापि ॥ ५५ ॥ ति० माल्यवन्तमचलं माल्यवदाख्यकुलपर्वतं ॥ ६० ॥ ति० महाभ्रघननादितं महामेघसमूहवन्नादितंसजातनाद ॥ ६१ ॥

[ पा० ] १ च छ. झ. ञ. ट. तस्मादद्यैवसहिता सर्वेऽन्योन्यसमावृता २ इदमर्धं ख. घ. ज. पाठेषुदृश्यते. ३ ग. ङ च. छ. झ. ञ ट. जंभवृत्रादयोयथा ४ ख ग ङ च झ ञ. ट करिसनिभै ५ इदमर्धं क ख घ ज पाठेषुदृश्यते. ६ ङ.—ट. रक्षोगणस्योपरिष्टात्परिभ्रमतिकालवत् ७ क ग घ च. छ. ज देहिन ८ ग वैनतेयमथास्थित .

आबध्य शरसंपूर्णे इषुधी विमले तदा ॥ श्रोणिसूत्रं च खड्गं च विमलं कमलेक्षणः ॥
शङ्खचक्रगदाशार्ङ्गखड्गाख्यप्रवरायुधान् ॥ ६४ ॥
सुपर्णं गिरिसंकाशं वैनतेयमथास्थितः ॥ राक्षसानामभावाय ययौ तूर्णतरं प्रभुः ॥ ६५ ॥
सुपर्णपृष्ठे स बभौ श्यामः पीताम्बरो हरिः ॥ काञ्चनस्य गिरेः शृङ्गे सतडित्तोयदो यथा ॥ ६६ ॥
स सिद्धदेवर्षिमहोरगैश्च गन्धर्वयक्षैरुपगीयमानः ॥
समाससादासुरसैन्यशत्रूंश्चक्रासिशार्ङ्गायुधशङ्खपाणिः ॥ ६७ ॥
सुपर्णपक्षानिलनुन्नपक्षं भ्रमत्पताकं प्रविकीर्णशस्त्रम् ॥
चचाल तद्राक्षसराजसैन्यं चलोपलं नीलं इवाचलेन्द्रः ॥ ६८ ॥
ततः शरैः शोणितमांसरूषितैर्युगान्तवैश्वानरतुल्यविग्रहैः ॥
निशाचराः संपरिवार्य माधवं वरायुधैर्निर्बिभिदुः सहस्रशः ॥ ६९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ॥ ७ ॥

श्रीनारायणेन बहुराक्षससेनासंहरणपूर्वकं मालिवधः ॥ १ ॥

नारायणगिरिं ते तु गर्जन्तो राक्षसाम्बुदाः ॥ ववर्षुः शरवर्षेण वर्षेणेवाद्रिमम्बुदाः ॥ १ ॥
श्यामावदातस्तैर्विष्णुर्नीलैर्नक्तंचरोत्तमैः ॥ वृतोञ्जनगिरीवासीद्वर्षमाणैः पयोधरैः ॥ २ ॥
शलभा इव केदारं मशका इव पर्वतम् ॥ यथाऽमृतघटं दंशा मकरा इव चार्णवम् ॥ ३ ॥
तथा रक्षोधनुर्मुक्ता वज्रानिलमनोजवाः ॥ हरिं विशन्ति स्म शरा लोका इव विपर्यये ॥ ४ ॥
स्यन्दनैः स्यन्दनगता गजैश्च गजपृष्ठगाः ॥ अश्वारोहास्तथाऽश्वैश्च पादाताश्चाम्बरे स्थिताः ॥ ५ ॥
राक्षसेन्द्रा गिरिनिभाः शरैः शक्त्यृष्टितोमरैः ॥ निरुच्छ्वासं हरिं चक्रुः प्राणायामा इव द्विजम् ॥६॥

---

६७ ॥ नुन्नपक्षं क्षोभितबलं । चलोपलमिति बहुव्रीहिः ॥ ६८ ॥ विग्रहः आकारः ॥६९॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

---

श्यामः सन्नवदातः शुभ्रः श्यामावदातः निर्मल इत्यर्थः । अञ्जनगिरीवेति विभक्तिलोपश्छान्दसः ॥ २ ॥ अमृतघटं मधुघटं । दंशाः वनमक्षिकाः ॥ ३ ॥ वज्राः वज्रधारा इव स्थिताः अनिलमनोजवाश्च । विपर्यये संहारकाले । हरिं लोकाः प्रजा इव ॥ ४—५ ॥ हरिं निरुच्छ्वासं चक्रुः उच्छ्वासा-

---

ति० श्रोणिसूत्रं खड्गबन्धनभूतं ॥ ६४ ॥ स० पुनश्चक्रासिशार्ङ्गायुधशङ्खपाणिरितिवचनंस्वरूपास्वरूपैतद्वलभगवतइतिसप्रमेयसूचनार्थं । प्रेरणमात्रेणसुत्रामादि प्रभविष्यत्स्तेतन्निधनेइतिस्वयमागमनमेवाद्भुतं । तत्रापिचक्राद्यानयनमद्भुततरमित्येवंरूपाधिक्यद्योतनेवाधिक्येधिकमित्युक्तदिशैतदितिमन्तव्यं ॥ ६७ ॥ स० सुपर्णपक्षानिलनुन्नवस्त्रं नुन्नपर्यस्तं । नुन्नपक्षमितिपाठोनपाङ्क्नस्वरसार्थोऽनुप्रासरहितश्चेत्युपेक्ष्य ॥ ६८ ॥ इतिषष्ठ सर्ग ॥ ६ ॥

स० नारायणगिरिं नारायणाख्यपर्वतविशेषं अस्त्ररूपवर्षेणार्दयन्तोराक्षसलक्षणाम्बुदा अभिपेतुरितिशेषः । वर्षेणेवाद्रिमम्बुदाइतिसामान्यतोनिदर्शनं ॥ १ ॥ स० अम्बरे खचरत्वात् ॥ ५ ॥ स० द्विजं प्राणायामकर्तारं ॥ ६ ॥

[ पा० ] १ क ङ.—ट खड्गाश्चैववरायुधान् घ विमलासिवरायुधः. २ ग घ. गन्धर्वमुख्याप्सरसोपगीत . ३ घ. ज. श्चक्रासिसीरप्रवरास्त्रधारी ४ ङ. च छ. झ ञ. ट. नीलमिवाचलाग्रं ५ ङ छ—ट. शितैः . ६ ङ. झ अर्दयन्तोस्त्रवर्षेण. ७ ङ. ज.—ट. गिरीवायंवर्षमाणैः . ८ ङ. च. छ. झ. ञ. ट. पावकं ९ ङ. च. छ. झ ञ. ट. गजमूर्धगा..

निशाचरैस्ताड्यमाने मीनैरिव महोदधिः ॥ शार्ङ्गमायम्य दुर्धर्षो राक्षसेभ्योऽसृजच्छरान् ॥ ७ ॥
शरैः पूर्णायतोत्सृष्टैर्वज्रकल्पैर्मनोजवैः ॥ चिच्छेद विष्णुर्निशितैः शतशोऽथ सहस्रशः ॥ ८ ॥
विद्राव्य शरवर्षेण वर्षं वायुरिवोत्थितम् ॥ पाञ्चजन्यं महाशङ्खं प्रदध्मौ पुरुषोत्तमः ॥ ९ ॥
सोऽम्बुजो हरिणा ध्मातः सर्वप्राणेन शङ्खराट् ॥ ररास भीमनिर्ह्रादस्त्रैलोक्यं व्यथयन्निव ॥ १० ॥
शङ्खराजरवः सोऽथ त्रासयामास राक्षसान् ॥ मृगराज इवारण्ये समदानिव कुञ्जरान् ॥ ११ ॥
न शेकुरश्वाः संस्थातुं विमदाः कुञ्जराभवन् ॥ स्यन्दनेभ्यश्च्युता वीराः शङ्खरावितदुर्बलाः ॥ १२ ॥
शार्ङ्गचापविनिर्मुक्ता वज्रतुल्याननाः शराः ॥ विदार्य तानि रक्षांसि सुपुङ्खा विविशुः क्षितिम् ॥ १३ ॥
भिद्यमानाः शरैः संख्ये नारायणकरच्युतैः ॥ निपेतू राक्षसा भूमौ शैला वज्रहता इव ॥ १४ ॥
व्रणानि परगात्रेभ्यो विष्णुचक्रकृतानि वै ॥ असृक् क्षरन्ति धाराभिः स्वर्णधारा इवाचलाः ॥ १५ ॥
शङ्खराजरवश्चापि शार्ङ्गचापरवस्तथा ॥ राक्षसानां रवांश्चापि ग्रसते वैष्णवो रवः ॥ १६ ॥
तेषां शिरोधरान्धूताञ्छरध्वजधनूंषि च ॥ रथान्पताकास्तूणीरांश्चिच्छेद स हरिः शरैः ॥ १७ ॥
सूर्यादिव करा घोरा ऊर्मयः सागरादिव ॥ पर्वतादिव नागेन्द्रा धारौघा इव चाम्बुदात् ॥ १८ ॥
तथा शार्ङ्गविनिर्मुक्ताः शरा नारायणेरिताः ॥ निर्धावन्तीषवस्तूर्णं शतशोऽथ सहस्रशः ॥ १९ ॥
शरभेण यथा सिंहाः सिंहेन द्विरदा यथा ॥ द्विरदेन यथा व्याघ्रा व्याघ्रेण द्वीपिनो यथा ॥ २० ॥
द्वीपिनेव यथा श्वानः शुना मार्जारका यथा ॥ मार्जारेण यथा सर्पाः सर्पेण च यथाऽऽखवः ॥ २१ ॥
तथा ते राक्षसाः सर्वे विष्णुना प्रभविष्णुना ॥ द्रवन्ति द्राविताश्चान्ये शायिताश्च महीतले ॥ २२ ॥
राक्षसानां सहस्राणि निहत्य मधुसूदनः ॥ वारिजं पूरयामास तोयदं सुरराडिव ॥ २३ ॥
नारायणशरत्रस्तं शङ्खनादसुविह्वलम् ॥ ययौ लङ्कामभिमुखं प्रभग्नं राक्षसं बलम् ॥ २४ ॥
प्रभग्ने राक्षसबले नारायणशराहते ॥ सुमाली शरवर्षेण निववार रणे हरिम् ॥ २५ ॥
स तु तं छादयामास नीहार इव भास्करम् ॥ राक्षसाः सत्त्वसंपन्नाः पुनर्धैर्यं समादधुः ॥ २६ ॥

नवसरवन्तं कृतवन्तः ॥ ६—७ ॥ पूर्णायततया उत्सृष्टैः वज्रवक्त्रैः वज्रमिवाकुण्ठं वक्त्रं येषां तैः ॥ ८—९ ॥ अम्बुजः शङ्खः । सर्वप्राणेन सर्वबलेन । ध्मातः आध्मानितः ॥ १०—११ ॥ कुञ्जराभवन्नित्यार्षः सन्धिः । भवन्निति वा च्छेदः । शङ्खरावितेन शङ्खध्वनिना । स्वार्थे णिः । १२—१८ ॥ शार्ङ्गविनिर्मुक्ता इत्येतद्विवृणोति—निर्धावन्तीति ॥ १९ ॥ द्वीपिनः क्षुद्रव्याघ्राः ॥ २० ॥ आखवो मूषिकाः ॥ २१—२२ ॥ सुरराडिवेति इन्द्रस्य मेघनियन्तृत्वात्तथोक्तं ॥ २३ ॥ राक्षसं रक्षःसंबन्धि ॥ २४—

ति० वज्रकल्पैः वज्रवदकुण्ठैः ॥ ८ ॥ स० वर्षं प्रवर्षमाणमेघजातं । राक्षसजातंचदार्ष्टान्तिकेग्राह्यं । पाञ्चजन्यं तन्नामकं ॥ ९ ॥ ति० शङ्खराडितिविशेषणं ॥ स० अंबुजः सामुद्रः । शङ्खराट् ध्मातोवादितः ररास ध्वनिंचकार ॥ १० ॥ स० मृगराजइव सिंहध्वनिरिव ॥ ११ ॥ ति० स्वर्णधारा गैरिकधारा. । "गैरिकेपिसुवर्णस्यात्" ॥ १५ ॥ ति० रवांश्चापि । अपिनाप्राणाश्च । वैष्णवः विष्णूत्पादितः ॥ स० शार्ङ्गचापरवश्चेत्येववैष्णवोरवइतियोजना ॥ १६ ॥ ति० शिरोधरान् कण्ठान् ॥ १७ ॥ ति० विनिर्मुक्ताः विनिर्मोक्तुंप्रक्रान्ताः शराः आसन्नितिपृथग्योज्यं । नारायणेरितात् नारायणव्यापारतइषवोनिर्धावन्ति । सहस्रशः शतशः ॥ स० नारायणेरितादित्यस्यसामर्थ्याच्छार्ङ्गविशेषणत्वंबोध्यं ॥ तथाचैतादृशाच्छार्ङ्गाद्विनिर्मुक्ताः शराः ॥ १९ ॥ ति० महीतलेशायिताः अनुद्धत्येतिशेषः ॥ स० विष्णुनाद्रवन्ति । तैश्चभीतैरन्येपिद्राविताः । परस्परसमर्दनेनमहीतलेशायिताश्च ॥ २२ ॥ ति० निववार वारयामास ॥ २५ ॥ स तं विष्णुं । धैर्यंसमादधुः । तद्दृष्ट्वेतिशेषः ॥ २६ ॥

[ पा० ] १ झ. वज्रकल्पैः. २ क. घ. ज. नारायणधनुश्च्युतैः ३ ग. ज. निष्प्राणैः सव्रणैर्गात्रैरक्तधारामसुस्रवन्. राक्षसाः शरसंकृत्ता स्वर्णधारामिवाचलाः. ४ ङ. च. झ. ञ. ट. वार्योघाइवसागरात्. ख. घ. मीनौघाइवसागरात्. ५ च. छ. निष्पतन्तीषवः. ज. विधावन्तीषवः.

अथ सोऽभ्यपतद्रोषाद्राक्षसो बलदर्पितः ॥ महानादं प्रकुर्वाणो राक्षसाञ्जीवयन्निव ॥ २७ ॥
उत्क्षिप्य लम्बाभरणं धुन्वन्करमिव द्विपः ॥ ररास राक्षसो हर्षात्सतडित्तोयदो यथा ॥ २८ ॥
सुमालेर्नर्दतस्तस्य शिरो ज्वलितकुण्डलम् ॥ चिच्छेद यन्तुरश्वाश्च भ्रान्तास्तस्य तु रक्षसः ॥ २९ ॥
तैरश्वैर्भ्राम्यते भ्रान्तैः सुमाली राक्षसेश्वरः ॥ इन्द्रियाश्वैः परिभ्रान्तैर्धृतिहीनो यथा नरः ॥ ३० ॥
ततो विष्णुं महाबाहुं प्रपतन्तं रणाजिरे ॥ हृते सुमालेरश्वैश्च रथे विष्णुरथं प्रति ॥
माली चाभ्यद्रवद्युक्तः प्रगृह्य सशरं धनुः ॥ ३१ ॥
मालेर्धनुश्च्युता बाणाः कार्तस्वरविभूषिताः ॥ विविशुर्हरिमासाद्य क्रौञ्चं पत्ररथा इव ॥ ३२ ॥
अर्द्यमानः शरैः सोऽथ मालिमुक्तैः सहस्रशः ॥ चुक्षुभे न रणे विष्णुर्जितेन्द्रिय इवाधिभिः ॥ ३३ ॥
अथ मौर्वीस्वनं श्रुत्वा भगवान्भूतभावनः ॥ मालिनं प्रति बाणौघान्ससर्जारिनिषूदनः ॥ ३४ ॥
ते मालिदेहमासाद्य वज्रविद्युत्प्रभाः शराः ॥ पिबन्ति रुधिरं तस्य नागा इव सुधारसम् ॥ ३५ ॥
मालिनं विमुखं कृत्वा शङ्खचक्रगदाधरः ॥ मालिमौलिं ध्वजं चापं वाजिनश्चाप्यपातयत् ॥ ३६ ॥
विरथस्तु गदां गृह्य माली नक्तंचरोत्तमः ॥ आपुप्लुवे गदापाणिर्गिर्यग्रादिव केसरी ॥ ३७ ॥
गदया गरुडेशानमीशानमिव चान्तकः ॥ ललाटदेशेऽभ्यहनद्वज्रेणेन्द्रो यथाऽचलम् ॥ ३८ ॥
गदयाऽभिहतस्तेन मालिना गरुडो भृशम् ॥ रणात्पराङ्मुखं देवं कृतवान्वेदनातुरः ॥ ३९ ॥
पराङ्मुखे कृते देवे मालिना गरुडेन वै ॥ उदतिष्ठन्महाञ्छब्दो रक्षसामभिनर्दताम् ॥ ४० ॥
रक्षसां रवतां रावं श्रुत्वा हरिहयानुजः ॥ तिर्यगास्थाय संक्रुद्धः पक्षीशे भगवान्हरिः ॥ ४१ ॥
पराङ्मुखोऽप्युत्ससर्ज मालेश्चक्रं जिघांसया ॥ ४२ ॥
तत्सूर्यमण्डलाभासं स्वभासा भासयन्नभः ॥ कालचक्रनिभं चक्रं मालेः शीर्षमपातयत् ॥ ४३ ॥
तच्छिरो राक्षसेन्द्रस्य चक्रकृत्तं विभीषणम् ॥ पपात रुधिरोद्गारि पुरा राहुशिरो यथा ॥ ४४ ॥

---

२८ ॥ यन्तुः सारथेः । भ्रान्ताः नष्टसारथिकत्वाद्नवस्थितगतिका इत्यर्थः ॥ २९ ॥ इन्द्रियार्थैरश्वैः धृतिहीनो नरः यथा तथा सुमाली बभ्रामेत्यर्थ ॥ ३०—३३ ॥ मौर्वीस्वनं श्रुत्वेत्यनेन मालिशरस्याच्छिन्नगतिर्गम्यते ॥ ३४ ॥ नागाः सर्पाः । सुधारसं अमृतं गरुडानीत ॥ ३५ ॥ मालिमौलिं मालिमुकुटं ॥ ३६—३७ ॥ गरुडाः पक्षिणः तदीशान वैनतेय ॥ ३८—४० ॥ हरिहयानुज. इन्द्रानुजः ॥ ४१—

---

ति० लम्बाभरण लम्बमानमाभरणं । उत्क्षिप्य विमुच्य ॥ २८ ॥ ति० सुमालेरथे अश्वैर्हृते इतस्ततोपकृष्यमाणेसतिरथादवप्लुत्य विष्णुरथंप्रतिधनु प्रगृह्ययुक्तोभ्यद्रवत् ॥ ३१ ॥ ति० क्रौञ्च क्रौञ्चाद्रि । पत्ररथा पक्षिण ॥ ३२ ॥ स० केचिद्विद्युत्प्रभा' केचिद्वज्रप्रभा । क्वचित्क्वचिदितिवा । सुधारस क्षीररस ॥ ३५ ॥ स० ईशान रुद्रमिव । श्वेतारण्येमार्कण्डेयमुने कस्यचिद्राज्ञश्चावनार्थमीशानस्यान्तकस्यचान्योन्यंसमभवत्समर । तदान्तक शिवशिरसिप्रहृतवास्तथेतिकथापौराणिक्यनुसधेया । तात्कालिकपरावृत्त्यनुकूलं "वज्रेणेन्द्रोयथाचलं" इतिनिदर्शनं । प्राचीनत्वन्ततोगत्वागरुडाननुरूपमितिमन्तव्यं प्राचीनमन्वयनिदर्शनं द्वितीयं व्यतिरेकनिदर्शनमितिवाविवेक. ॥ ३८ ॥ ति० मालिनागरुडेन मालिताडनपराङ्मुखगरुडेन ॥४०॥ ति० तिर्यगिति । विमुखेपक्षीशेतिर्यक् वलितग्रीव आस्थाय स्थित्वा ॥ ४१ ॥ ति० मालेर्जिघासयाचक्रमुत्ससर्ज ॥ ४२ ॥ कालचक्रनिभंदिनमासादिरूपेणपरिवर्तमानकालचक्रसदृशं । तेनाप्रतिघात्यत्वमुक्तं ॥ स० सूर्यमण्डलाभास सूर्यमण्डलवदाभासतइतितत्तथा । यद्वा सूर्य-, मण्डलस्याभासायस्यतत् । हलन्तत्वाट्टाप् । ततोबहुव्रीहि । अथवासूर्यमण्डलाभासंस्वभासेत्येकपदं । सूर्यमण्डलस्याभाप्रकाश' । ततोपिसम् समीचीना या स्वभा तयानभोभासयदिति ॥ ४३ ॥

[ पा० ] १ क. ख. घ हेमाभरणं. २ ग. हरिरश्वाश्वशिरस्तस्यतुरक्षस . घ. ज. चतुरोश्वाश्च. ख. यन्तुस्तुरगाभ्रान्ता'. ३ क. ख. ङ.—ट. कृत्वा.

ततः सुरैः सुसंहृष्टैः सर्वप्राणसमीरितः ॥ सिंहनादरवोन्मुक्तः साधु देवेति वादिभिः ॥ ४५ ॥
मालिनं निहतं दृष्ट्वा सुमाली माल्यवानपि ॥ सबलौ शोकसंतप्तौ लङ्कामेव प्रधावितौ ॥ ४६ ॥
गरुडस्तु समाश्वस्तः सन्निवृत्य यथा पुरा ॥ राक्षसान्द्रावयामास पक्षवातेन कोपितः ॥ ४७ ॥
चक्रकृत्तास्यकमला गदासंचूर्णितोरसः ॥ लाङ्गलग्लपितग्रीवा मुसलैर्भिन्नमस्तकाः ॥ ४८ ॥
केचिच्चैवासिना च्छिन्नास्तथाऽन्ये शरपीडिताः ॥ निपेतुरम्बराच्चूर्णं राक्षसाः सागराम्भसि ॥ ४९ ॥

नारायणो बाणवराशनीभिर्विदारयामास धनुर्विमुक्तैः ॥
नक्तंचरान्मुक्तविधूतकेशान्यथाऽशनीभिः सतडिन्महाभ्राः ॥ ५० ॥
भिन्नातपत्रं पतमानमस्त्रं शरैरपध्वस्तविनीतवेषम् ॥
विनिस्सुतान्त्रं भयलोलनेत्रं बलं तदुन्मत्ततरं बभूव ॥ ५१ ॥
सिंहार्दितानामिव कुञ्जराणां निशाचराणां सहकुञ्जराणाम् ॥
रवाश्च वेगाश्च समं बभूवुः पुराणसिंहेन विमर्दितानाम् ॥ ५२ ॥
[1]ते वार्यमाणा हरिबाणजालैः सबाणजालानि समुत्सृजन्तः ॥
धावन्ति नक्तंचरकालमेघा वायुप्रभिन्ना इव कालमेघाः ॥ ५३ ॥
चक्रप्रहारैर्विनिकृत्तशीर्षाः संचूर्णिताङ्गाश्च गदाप्रहारैः ॥
असिप्रहारैर्द्विविधा विभिन्नाः पतन्ति शैला इव राक्षसेन्द्राः ॥ ५४ ॥
विलम्बमानैर्मणिहारकुण्डलैर्निशाचरैर्नीलबलाहकोपमैः ॥
निपात्यमानैर्ददृशे निरन्तरं निपात्यमानैरिव नीलपर्वतैः ॥ ५५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ॥ ८ ॥

श्रीनारायणेन युद्धे माल्यवत्सुमालिनो. पराजय. ॥ १ ॥ ततस्ताभ्यां विष्णुभयाल्लङ्कात्यागेन सकलस्वजनैःसह पाताले वास. ॥ २ ॥ ततोरक्षोजनशून्यायांलङ्काया कुबेरेणवास ॥ ३ ॥

हन्यमाने बले तस्मिन्पद्मनाभेन पृष्ठतः ॥ माल्यवान्सन्निवृत्तोथ वेलामेत्य इवार्णवः ॥ १ ॥
संरक्तनयनः कोपाच्चलन्मौलिर्निशाचरः ॥ पद्मनाभमिदं प्राह वचनं पुरुषोत्तमम् ॥ २ ॥
नारायण न जानीषे क्षात्रधर्मं पुरातनम् ॥ अयुद्धमनसो भीतानस्मान्हंसि यथेतरः ॥ ३ ॥
पराङ्मुखवधं पापं यः करोत्यसुरेतरः[2] ॥ स हन्ता न गतः स्वर्गं लभते पुण्यकर्मणाम् ॥ ४ ॥

---

४४ ॥ सर्वप्राणसमीरित. सर्वबलेन प्रवर्तितः ॥ ४५—४९ ॥ अशनीभिरित्यार्षो दीर्घः ॥ ५० ॥ उन्मत्ततरं अतिशयेन विस्मृतस्वपरविवेकं ॥ ५१ ॥ पुराणसिंहेन नरसिंहेन ॥ ५२ ॥ समुत्सृजन्तः त्यक्तवन्तः ॥ ५३ ॥ द्विविधया द्विप्रकारेण विभिन्ना' । खण्डिता इत्यर्थः ॥ ५४—५५ ॥ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने सप्तमः सर्गः ॥७॥

---

पृष्ठतः अनुद्रुत्येति शेष' ॥ १—२ ॥ यथेतरः

---

ति० लाङ्गलेनहलेनग्लपिताहताग्रीवायेषाते ॥ ४८ ॥ ति० शरैरपध्वस्तोदूरीकृतोविनीतवेष सौम्यवेषोयस्यतत् ॥ ५१ ॥ ति० भूमण्डलमितिशेष । तन्निरन्तरव्यासंददृशे ॥ ५५ ॥ इतिसप्तम सर्ग ॥ ७ ॥

ति० एत्यइवेत्यसंधिरार्षः ॥ १ ॥ ति० योस्मान्हंसिसत्वनजानीषेइत्यन्वय ॥ ३ ॥ ति० पराङ्मुखवधरूपंपाप । सहन्ता

[ पा० ] १ ख. घ. ज. सबाध्यमानाहरिबाण. २ ङ. च. झ. ट. करोतिसुरेश्वर.

युद्धश्रद्धाऽथवा तेऽस्ति शङ्खचक्रगदाधर ॥ अहं स्थितोस्मि पश्यामि बलं दर्शय यत्तव ॥ ५ ॥
माल्यवन्तं स्थितं दृष्ट्वा माल्यवन्तमिवाचलम् ॥ उवाच राक्षसेन्द्रं तं देवराजानुजो बली ॥ ६ ॥
युष्मत्तो भयभीतानां देवानां वै मयाऽभयम् ॥ राक्षसोत्सादनं दत्तं तदेतदनुपाल्यते ॥ ७ ॥
प्राणैरपि प्रियं कार्यं देवानां हि सदा मया ॥ सोहं वो निहनिष्यामि रसातलगतानपि ॥ ८ ॥
देवदेवं ब्रुवाणं तं रक्ताम्बुरुहलोचनम् ॥ शक्त्या बिभेद संक्रुद्धो राक्षसेन्द्रो भुजान्तरे ॥ ९ ॥
माल्यवद्भुजनिर्मुक्ता शक्तिर्घण्टाकृतस्वना ॥ हरेरुरसि बभ्राज मेघस्थेव शतह्रदा ॥ १० ॥
ततस्तामेव चोत्कृष्य शक्तिं शक्तिधरप्रियः ॥ माल्यवन्तं समुद्दिश्य चिक्षेपाम्बुरुहेक्षणः ॥ ११ ॥
स्कन्दोत्सृष्टेव सा शक्तिर्गोविन्दकरनिःसृता ॥ काङ्क्षन्ती राक्षसं प्रायान्माहेन्द्रीवाञ्जनाचलम् ॥१२॥
सा तस्योरसि विस्तीर्णे हारभासावभासिते ॥ अपतद्राक्षसेन्द्रस्य गिरिकूट इवाशनिः ॥ १३ ॥
तया भिन्नतनुत्राणः प्राविशद्विपुलं तमः ॥ माल्यवान्पुनराश्वस्तस्तस्थौ गिरिरिवाचलः ॥ १४ ॥
ततः कार्ष्णायसं शूलं कण्टकैर्बहुभिर्वृतम् ॥ प्रगृह्याभ्यहनद्देवं स्तनयोरन्तरे दृढम् ॥ १५ ॥
तथैव रणरक्तस्तु मुष्टिना वासवानुजम् ॥ ताडयित्वा धनुर्मात्रमपक्रान्तो निशाचरः ॥ १६ ॥
ततोऽम्बरे महान्शब्दः साधु साध्विति चोदितः ॥ आहत्य राक्षसो विष्णुं गरुडं चाप्यताडयत् ॥१७॥
वैनतेयस्ततः क्रुद्धः पक्षवातेन राक्षसम् ॥ व्यपोहद्बलवान्वायुः शुष्कपर्णचयं यथा ॥ १८ ॥
द्विजेन्द्रपक्षवातेन द्रावितं दृश्य पूर्वजम् ॥ सुमाली स्वबलैः सार्धं लङ्कामभिमुखो ययौ ॥ १९ ॥
पक्षवातबलोद्धूतो माल्यवानपि राक्षसः ॥ स्वबलेन समागम्य ययौ लङ्कां ह्रिया वृतः ॥ २० ॥
एवं ते राक्षसास्तेन हरिणा कमलेक्षण ॥ बहुशः संयुगे भग्ना हतप्रवरनायकाः ॥ २१ ॥
अशक्नुवन्तस्ते विष्णुं प्रतियोद्धुं भयार्दिताः ॥ त्यक्त्वा लङ्कां गता वस्तुं पातालं सहपत्नयः ॥२२॥
सुमालिनं समासाद्य राक्षसं रघुसत्तम ॥ स्थिताः प्रख्यातवीर्यास्ते वंशे सालकटङ्कटे ॥ २३ ॥
ये त्वया निहतास्ते तु पौलस्त्या नाम राक्षसाः ॥ सुमाली माल्यवान्माली ये च तेषां पुरस्सराः ॥
सर्वे तेभ्यो महाभाग रावणाद्बलवत्तराः ॥ २४ ॥
न चान्यो राक्षसान्हन्ता सुरारीन्देवकण्टकान् ॥ ऋते नारायणं देवं शङ्खचक्रगदाधरम् ॥ २५ ॥

---

क्षुद्रजन इव ॥३—५ ॥ पराङ्मुखवधोक्तदोषः स्वप्रतिज्ञापालनपरस्य नास्तीत्याह—माल्यवन्तमिति ॥ ६—१० ॥ तामेव स्ववक्षोलग्नामेव । शक्तिधरप्रियः सुब्रह्मण्यप्रिय. । माहेश्वरार्चन चिन्त्यं ॥ ११—१२॥ हारभासा मुक्ताहारकान्त्या । कूटं शृङ्ग ॥ १३ ॥ तमः मोहः ॥ १४—१५ ॥ रणेरक्त' रणप्रिय' । मुष्टिना च ताडयित्वा अपक्रान्तः । पृष्ठत इति शेष. ॥ १६—१७ ॥ वायु' शुष्कपर्ण यथा व्यपोहति तथा पक्षपातेन राक्षसं व्यपौहत् ॥ १८ ॥ दृश्य दृष्ट्वा ॥ १९—२१ ॥ सहपत्नय सस्त्रीका इत्यर्थः ॥ २२ ॥ सालकटङ्कटे सालकटङ्कटा माल्यवदादीनां पितामही विद्युत्केशपत्नी तस्या सबन्धी सालकटङ्कटः तस्मिन्वंशे प्रख्यातवीर्याः । वृद्धाच्छाभाव आर्षः ॥ २३ ॥ ये पौलस्त्या रावणादयो निहतास्तेभ्य' रावणाच्च माल्यवदादयो बलवत्तरा. ॥ २४ ॥ तर्हि किं मे प्राशस्त्यं भवद्भिरुच्यत इति शङ्कायां तत्प्राश-

---

इतोदेहाद्गत सन् स्वर्गनलभते। सहन्तानहतइतिपाठे हत दैवहतइत्यर्थ ॥४॥ **ति०** तत्तवबलमहं यथापश्यामि तथा दर्शयेत्यर्थ. ॥ ५ ॥ **स०** प्रियकार्यं देवराजावरजत्वात्सत्वाशत्वाच्च ॥ **शि०** येनमयादेवानाप्रियंप्राणैरपिकार्यं सोहंरसातलगतानपिवोयुष्मान्निहनिष्यामि ॥८॥ **ति०** हारभार हारसमूह तेनावभासिते ॥१३॥ **स०** अभ्यहनत् अभ्यहन् ॥ १५ ॥ **स०** द्विजेन्द्रोगरुड ॥ १९ ॥ **स०** बलार्दिता' विष्णुबलार्दिता । सहपत्नय सभार्या ॥ २२ ॥ राक्षसान्हन्ता । तृन् । "नलोक—"

**[ पा० ]** १ क. घ. ज. शक्तिंमुमोचसक्रुद्धोराक्षसेन्द्रोररासह. २ झ. भारावभासिते. ३ क—ट. राक्षसाराम. ४ ग—छ. झ. ञ. ट. सर्वेएतेमहाभाग. ज. सर्वेएतेमहावीर्य

भवान्नारायणो देवश्चतुर्बाहुः सनातनः ॥ राक्षसान्हन्तुमुत्पन्नो ह्यजेयः प्रभुरव्ययः ॥ २६ ॥
नष्टधर्म[1]व्यवस्थाता काले काले प्रजाकरः ॥ उत्पद्यते दस्युवधे शरणागतवत्सलः ॥ २७ ॥
एषा मया तव नराधिप राक्षसानामुत्पत्तिरद्य कथिता सकला यथावत् ॥
भूयो निबोध रघुसत्तम रावणस्य जन्मप्रभावमतुलं ससुतस्य सर्वम् ॥ २८ ॥
चिरात्सुमाली व्यचरद्रसातलं सराक्षसो विष्णुभयार्दितस्तदा ॥
पुत्रैश्च पौत्रैश्च समन्वितो बली ततस्तु लङ्कामवसद्धनेश्वरः ॥ २९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अष्टमः सर्गः ॥ ८ ॥

---

## नवमः सर्गः ॥ ९ ॥

कदाचन तनययासहरसातलाद्भूतलगतेनसुमालिनाराक्षसेन विश्रवसोदर्शनायपुष्पकविमानेनगच्छत कुबेरस्य दर्शनम् ॥ १ ॥ तत्तुल्यपौत्रकामेनतेन निजकन्याया कैकस्याविश्रवससमीपप्रति प्रेषणम् ॥ २ ॥ तप प्रभावेनकैकसीभावविदातेन तांप्रति प्रदोषसमयसमागमनाद्धेतो रूक्षराक्षसरूपापत्यजननोक्ति ॥ ३ ॥ ततस्तयाप्रार्थनाप्रसादितेनतेन पुनस्तांप्रति धर्मिष्ठकनिष्ठतनयजननविषयकवरदानम् ॥ ४ ॥ तत कैकस्यां कालक्रमेणविश्रवसस्काशाद्रावणकुंभकर्णशूर्पणखाविभीषणानांजननम् ॥ ५ ॥ रावणेन मातृप्रेरणयाकुंभकर्णविभीषणाभ्यांसह गोकर्णेतपश्चरणम् ॥ ६ ॥

के[2]स्य चित्त्वथ कालस्य सुमाली नाम राक्षसः ॥ रसातलान्मर्त्यलोकं सर्वं वै विचचार ह ॥ १ ॥
नीलजीमूतसंकाशस्तप्तकाञ्चनकुण्डलः ॥ कन्यां दुहितरं गृह्य विना पद्ममिव श्रियम् ॥ २ ॥
राक्षसेन्द्रः स तु तदा विचरन्वै महीतलम् ॥ तदाऽपश्यत्स गच्छन्तं पुष्पकेण धनेश्वरम् ॥ ३ ॥
गच्छन्तं पितरं द्रष्टुं पुलस्त्यतनयं विभुम् ॥ तं दृष्ट्वाऽमर[3]संकाशं स्वच्छन्दं तपनोपमम् ॥ ४ ॥
रसातलं प्रविष्टः सन्मर्त्यलोकात्सविस्मयः ॥ इत्येवं[4] चिन्तयामास राक्षसानां महामतिः ॥ ५ ॥
किंकृतं श्रेय इत्येवं वर्धेमहि कथं वयम् ॥ अथाब्रवीत्सुतां रक्षः कैकसीं नाम नामतः ॥ ६ ॥
पुत्रि प्रदानकालोऽयं यौवनं [5]तेतिवर्तते ॥ प्रत्याख्यानाच्च भीतैस्त्वं न वरैः प्रतिगृह्यसे ॥ ७ ॥

---

स्यमपि तवैवेत्याह—न चान्य इति ॥ राक्षसान्हन्तेति । स त्व ॥ २५—२९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने अष्टमः सर्गः ॥ ८ ॥

विना पद्मं पद्म त्यक्त्वा स्थितां ॥ २—५ ॥ राक्षसानां श्रेय· किंकृत स्यात् केनोपायेन कृतं स्यात् । कथं वय वर्धेमहीत्येव चिन्तयामासेति योजना ॥६॥ प्रत्याख्यानात् भीतैरस्माभिस्त्व वरैर्न प्रतिगृह्यसे ।

---

इतिषष्ठीनिषेध । देवकण्टकान् देवपीडाकरान् देवशत्रून् । यस्त्वहन्ता सनारायणमृते नारायणविना । अन्योन केवलमनुष्योन ॥२५॥ **ति०** उत्पन्न माययागृहीतदेह ॥ २६ ॥ **स०** तत सुमाल्यादिपरित्यागानन्तर । लङ्कालङ्कायां । अवसदितिवापूरणीयं ॥ २९ ॥ इत्यष्टम सर्ग ॥ ८ ॥

**ति०** रसातलादिति । निस्सत्त्येतिशेष. ॥ १ ॥ **स०** विनापद्मश्रियमिव । तेनैवविशेषस्तस्याएतस्याइतिभाव ॥ २ ॥ **स०** पुष्पकेणविमानेनसहगच्छन्त तदारूढमितियावत् ॥३॥ **स०** अमरसकाशं वरलब्धसुरत्वात्तत्सदृशं । गच्छन्तं सर्वमवगच्छन्तं । सुज्ञमितियावत् ॥ ४ ॥ **ति०** तंदृष्ट्वापुनारसातलप्रविष्टइत्यर्थ । "रसातलात्प्रविष्ट सन्मर्त्यलोकं"इतिपाठे उक्तानुवादएवाय । इत्येवंचिन्तयामासेत्यन्वय ॥५॥ **ति०** प्रत्याख्यानाद्भीतै प्रत्याख्यानशङ्काभीतै । नप्रतिगृह्यसे नयाच्यसे । **स०** प्रत्याख्यानात् नेतिवदेत्किमितिप्रत्याख्यानात् अपुरस्करणेतिरस्करणशङ्काया महाबलस्यसुमालिन । किलबालायाअबलात्वेनवरणे नशक्तिरस्मा-

[ पा० ] १ ङ च. छ झ. ञ ट. धर्मैव्यवस्थाना. २ क—घ च. ज. केनचित्त्वथकालेन. ३ ख—ट. सकाशंगच्छन्तं पाक्कोपमं. ४ क. च. ज. हितार्थचिन्तयामास. ५ ख. च. छ झ ञ. ट. व्यतिवर्तते.

त्वत्कृते च वयं सर्वे यन्त्रिता धर्मबुद्धयः ॥ त्वं हि सर्वगुणोपेता श्रीः साक्षादिव पुत्रिके ॥
कन्यापितृत्वं दुःखं हि सर्वेषां मानकाङ्क्षिणाम् ॥ ८ ॥
न ज्ञायते च कः कन्यां वरयेदिति कन्यके ॥ ९ ॥
मातुः कुलं पितृकुलं यत्र चैव प्रदीयते ॥ कुलत्रयं सदा कन्या संशये स्थाप्य तिष्ठति ॥ १० ॥
सा त्वं मुनिवरं श्रेष्ठं प्रजापतिकुलोद्भवम् ॥ भज विश्रवसं पुत्रि पौलस्त्यं वरय स्वयम् ॥ ११ ॥
ईदृशास्ते भविष्यन्ति पुत्राः पुत्रि न संशयः ॥ तेजसा भास्करसमो यादृशोऽयं धनेश्वरः ॥ १२ ॥
सा तु तद्वचनं श्रुत्वा कन्यका पितृगौरवात् ॥ तत्रोपागम्य सा तस्थौ विश्रवा यत्र तप्यते ॥१३॥
एतस्मिन्नन्तरे राम पुलस्त्यतनयो द्विजः ॥ अग्निहोत्रमुपातिष्ठच्चतुर्थ इव पावकः ॥ १४ ॥
अविचिन्त्य तु तां वेलां दारुणां पितृगौरवात् ॥ उपसृत्याग्रतस्तस्य चरणाधोमुखी स्थिता ॥
विलिखन्ती मुहुर्भूमिमङ्गुष्ठाग्रेण भामिनी ॥ १५ ॥
स तु तां प्रेक्ष्य सुश्रोणीं पूर्णचन्द्रनिभाननाम् ॥ अब्रवीत्परमोदारो दीप्यमानां स्वतेजसा ॥ १६ ॥
भद्रे कस्यासि दुहिता कुतो वा त्वमिहागता ॥ किं कार्यं कस्य वा हेतोस्तत्त्वतो ब्रूहि शोभने ॥१७॥
एवमुक्ता तु सा कन्या कृताञ्जलिरथाब्रवीत् ॥ आत्मप्रभावेन मुने ज्ञातुमर्हसि मे मतम् ॥ १८ ॥
किन्तु मां विद्धि ब्रह्मर्षे शासनात्पितुरागताम् ॥ कैकसी नाम नाम्नाऽहं शेषं त्वं ज्ञातुमर्हसि ॥१९॥
स तु गत्वा मुनिर्ध्यानं वाक्यमेतदुवाच ह ॥ विज्ञातं ते मया भद्रे कारणं यन्मनोगतम् ॥ २० ॥
सुताभिलाषो मत्तस्ते मत्तमातङ्गगामिनि ॥ दारुणायां तु वेलायां यस्मात्त्वं मामुपस्थिता ॥ २१ ॥
शृणु तस्मात्सुतान्भद्रे यादृशाञ्जनयिष्यसि ॥ दारुणान्दारुणाकारान्दारुणाभिजनप्रियान् ॥ २२ ॥

प्रतिग्रह न प्राप्नोषीत्यर्थः ॥ ७ ॥ यन्त्रिताः कृतप्रयासा' । धर्मबुद्धय विवाहधर्मनिमित्तचिन्तावन्त' ॥ ८ ॥ कन्यापितृत्वस्य दु'खत्वमेव प्रदर्शयति—न ज्ञायत इति ॥ ९ ॥ अथ वरणानन्तरमपि विशिष्य दु.खहेतुत्व कन्याया इत्याह—मातुरिति ॥ सशये स्थाप्य तिष्ठतीति । कथमस्याश्चारित्रभ्रंशो न भविष्यतीति कुलत्रयं चिन्ताकुलमेव सदा भवतीत्यर्थ ॥ १०—१३ ॥ उपातिष्ठत् प्रदोषे अग्निहोत्र कृतवानित्यर्थ. ॥ १४ ॥ पितृगौरवात् पितरि बहुमानात् । चरणाधोमुखी चरणसमीपाधोमुखी । विलिखन्तीति चिन्तानुभाव' ॥ १५—१६ ॥ कुतः कस्माद्देशात् । किं कार्यं मया कर्तव्य कस्य हेतोः कस्मै प्रयोजनाय ॥ १७ ॥ मे मत त्वद्भर्तृकत्वाभिलाषित्वं ॥ १८ ॥ तच्च वक्तु लज्जावशादनुचितमिति सूचयित्वा वक्तुमुचितमाह—किन्त्विति ॥ १९ ॥ कारण आगमनकारण ॥ २० ॥ तदेवाह—सुतेति ॥ २१ ॥ दारुणान् क्रूरस्वभावान् । दारुणाकारान् क्रूरवेषान् । दारुणाभिजनप्रियान् दारुणाभिजने

कमितिभीतैश्च वरै कन्याकामुकै । नपरिगृह्यसे नयाच्यसे ॥७॥ **ति०** त्वत्कृते तवविशिष्टवरलाभार्थं । यन्त्रिता कृतप्रयासा ॥ **स०** यन्त्रिता' यत्रवरास्तत्रगन्तव्यमितिनम्रीभूता दु खं दु खकर । **शि०** हि यतस्त्वंसर्वगुणोपेता अतएवश्रीरिवासि । एतेनत्वत्सदृश पतिर्दुर्लभइतिद्योतित ॥८॥ **ति०** भज सेवस्व । सेवनेनचभर्तृत्वेनवरय ॥ ११ ॥ **स०** भास्करसमइत्यादिकंसौभाग्यादेव नसौरूप्यानुरूप्यात् । "कुत्सायाक्तिशब्दोऽयं शरीरंबेरमुच्यते । कुबेर कुशरीरत्वान्नाम्नातेनैवसोङ्कित " इतिवायुपुराणोक्ते । भानुदीक्षितोपिकुत्सित बेरशरीरमस्य । कुष्ठित्वादित्युक्तवान् । अन्यत्रापि'स्वच्छस्वशैलेक्षितकुत्सबेर 'इतिच ॥१२॥ **स०** पितृगौरवात् पितृत्वगुरुत्वात सा स कोपोस्याअस्तीतिसा । पितास्वयवरवरणकृत्वानविवाहितवानितिमानसरोषवती । गौरवपदस्वारस्यात् । स भावप्रधान । साधकताऽस्याअस्तीतिसा । 'स कोपेसाधकेच' इतिविश्व ॥ १३ ॥ **ति०** दारुणातावेला प्रदोषकालमित्यर्थं । पितृगौरवादुपसृत्यमहाबलपराक्रमत्वेनख्यातस्य सुमालिन.पुत्र्यहं । अतोनप्राकृतेनर्षिणाऽनादरणीयेत्याशयेनेत्यर्थ । चरणमवलोकयदध प्रवर्तित मुखंयस्यास्सा चरणाधोमुखीस्थिता । **स०** चरणयोरव अव प्रदेश तत्रमुखंयस्याइतितया । **शि०** चरणाधोभागेमुखयस्या

[ पा० ] १ ख. ग. ज. सातुतादारुणावेलाविचिन्त्यपितृगौरवात्.

प्रसविष्यसि सुश्रोणि राक्षसान्क्रूरकर्मणः ॥ सा तु तद्वचनं श्रुत्वा प्रणिपत्याब्रवीद्वचः ॥ २३ ॥
भगवन्नीदृशान्पुत्रांस्त्वत्तोऽहं ब्रह्मवादिनः ॥ नेच्छामि सुदुराचारान्प्रसादं कर्तुमर्हसि[1] ॥ २४ ॥
कन्यया त्वेवमुक्तस्तु विश्रवा मुनिपुङ्गवः ॥ उवाच कैकसीं भूयः पूर्णेन्दुरिव रोहिणीम् ॥ २५ ॥
पश्चिमो यस्तव सुतो भविष्यति शुभानने ॥ मम वंशानुरूपः स धर्मात्मा च भविष्यति ॥ २६ ॥
एवमुक्ता तु सा कन्या राम कालेन केनचित् ॥ जनयामास बीभत्सं रक्षोरूपं सुदारुणम् ॥ २७ ॥
दशग्रीवं महादंष्ट्रं नीलाञ्जनचयोपमम् ॥ ताम्रोष्ठं विंशतिभुजं महास्यं दीप्तमूर्धजम् ॥ २८ ॥
तस्मिञ्जाते तु तत्काले सज्वालकबलाः शिवाः ॥ क्रव्यादाश्चापसव्यानि मण्डलानि प्रचक्रमुः॥२९॥
ववर्ष रुधिरं देवो मेघाश्च खरनिस्वनाः ॥ [2]प्रबभौ न च सूर्यो वै महोल्काश्चापतन्भुवि ॥ ३० ॥
चकम्पे जगती चैव ववुर्वाताः सुदारुणाः ॥ अक्षोभ्यः क्षुभितश्चैव समुद्रः सरितां पतिः ॥ ३१ ॥
अथ नामाकरोत्तस्य पितामहसमः पिता ॥ दशग्रीवः प्रसूतोयं दशग्रीवो भविष्यति ॥ ३२ ॥
तस्य त्वनन्तरं जातः कुम्भकर्णो महाबलः ॥ प्रमाणाद्यस्य विपुलं प्रमाणं नेह विद्यते ॥ ३३ ॥
ततः शूर्पणखा नाम संजज्ञे विकृतानना ॥ विभीषणश्च धर्मात्मा कैकस्याः पश्चिमः सुतः ॥ ३४ ॥
तस्मिञ्जाते महासत्त्वे पुष्पवर्षं पपात ह ॥ ३५ ॥
नभःस्थाने दुन्दुभयो देवानां प्राणदंस्तदा ॥ वाक्यं चैवान्तरिक्षे च साधु साध्विति तत्तथा ॥३६॥
तौ तु तत्र महारण्ये ववृधाते महौजसौ ॥ कुम्भकर्णदशग्रीवौ लोकोद्वेगकरौ तदा ॥ ३७ ॥
कुम्भकर्णः प्रमत्तस्तु महर्षीन्धर्मवत्सलान् ॥ त्रैलोक्यं भक्षयन्नित्यासंतुष्टो विचचार ह ॥ ३८ ॥
विभीषणस्तु धर्मात्मा नित्यं धर्मे व्यवस्थितः ॥ स्वाध्यायनियताहार उवास विजितेन्द्रियः ॥३९॥
अथ वैश्रवणो देवस्तत्र कालेन केनचित् ॥ आगतः पितरं द्रष्टुं पुष्पकेण धनेश्वरः ॥ ४० ॥
तं दृष्ट्वा कैकसी तत्र ज्वलन्तमिव तेजसा ॥ [3]आगम्य राक्षसी तत्र दशग्रीवमुवाच ह ॥ ४१ ॥
पुत्र वैश्रवणं पश्य भ्रातरं तेजसा वृतम् ॥ भ्रातृभावे समे चापि पश्यात्मानं त्वमीदृशम् ॥ ४२ ॥
दशग्रीव तथा यत्नं कुरुष्वामितविक्रम ॥ यथा त्वमसि मे पुत्र भव वैश्रवणोपमः ॥ ४३ ॥
मातुस्तद्वचनं श्रुत्वा दशग्रीवः प्रतापवान् ॥ अमर्षमतुलं लेभे प्रतिज्ञां चाकरोत्तदा ॥ ४४ ॥
सत्यं ते प्रतिजानामि भ्रातृतुल्योऽधिकोपि वा ॥ [4]भविष्याम्योजसा चैव संतापं त्यज हृद्गतम् ॥४५॥

---

क्रूरबन्धौ राक्षसरूपे प्रियं येषां तान् ॥ २२—२८॥ सज्वालकबलाः ज्वालारूपास्यान्तर्गतकबलाः। शिवाः वृद्धजम्बुकाः ॥ २९ ॥ देव. पर्जन्यदेवः ॥ ३०—३२ ॥ यस्य प्रमाणाद्विपुल प्रमाणं नेह विद्यते नैवास्ति । प्रमाणभूतेष्विति शेषः ॥ ३३—३६ ॥ तत्र महारण्ये पितुराश्रमारण्ये ॥ ३७—३८ ॥ स्वाध्याय नियत आहारः अहरहरिति स्वाध्यायनियताहारः ॥ ३९—४१ ॥ आत्मानं ईदृश कुबेरवद्दिव्यवैभव-

---

सा । ऋषिचरणमवलोकयन्तीत्यर्थ ॥ १५ ॥ **ति०** भगवन्ब्रह्मवादिनस्त्वत्त ईदृशान्पुत्रान्नेच्छामि । अतउत्तमपुत्रार्थप्रसादंकर्तुमर्हसीत्यन्वय ॥ २४ ॥ **ति०** पश्चिम कनिष्ठ ॥ २६ ॥ **ति०** दशग्रीवइति । कामरूपत्वाच्चान्त पुरादावेकवक्त्रत्वंद्विभुजत्वचास्येतिबोध्यं । **शि०** यतोऽयदशग्रीव प्रसूत अतोदशग्रीव. तन्नामाभविष्यतीतिनामाकरोत् ॥ ३२ ॥ **ति०** अन्तरिक्षे साधुसाध्वितिवाक्यं तदासीदितिशेष ॥ ३६ ॥ **ति०** नित्यासतुष्ट कियदपिभक्षणेनकदाचिदप्यसतुष्ट ॥ **स०** नित्यसतुष्टोनित्यसतुष्ट । महर्षीन्भक्षयन्नेवनित्यसतुष्ट सन्विचचार ॥ ३८ ॥ **ति०** स्वाध्यायनियताहार स्वाध्यायनियतोनियताहारश्चेत्यर्थ । **स०** स्वाध्यायायनियतोनियमित· आहारोयस्य ॥ ३९ ॥ **स०** वैश्रवणोपमोयथाभवे. तथायत्नकुरुष्व ॥ ४३ ॥

[ **पा०** ] १ क. ख. घ. ज. अथाब्रवीन्मुनिस्तत्रपश्चिमोयस्तवात्मजः. २ ख घ. ज. नप्रभातिचखेसूर्योमहोल्काश्चापतन्क्षितौ. ३ क—घ. ज. आस्थायराक्षसीबुद्धिं. च. आगता. ४ क. ख. घ ज. भविष्याम्यचिरान्मात.सताप.

ततस्तेनैव कोपेन दशग्रीवः सहानुजः ॥ चिकीर्षुर्दुष्करं कर्म तपसे धृतमानसः ॥ ४६ ॥
प्राप्स्यामि तपसा काममिति कृत्वाऽध्यवस्य च ॥ आगच्छदात्मसिद्ध्यर्थं गोकर्णस्याश्रमं शुभम् ॥४७॥
स राक्षसस्तत्र सहानुजस्तदा तपश्चकारातुलमुग्रविक्रमः ॥
अतोषयच्चापि पितामहं विभुं ददौ स तुष्टश्च वराञ्जयावहान् ॥ ४८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे नवमः सर्गः ॥ ९ ॥

---

## दशमः सर्गः ॥ १० ॥

रावणादितपस्तुष्टेनब्रह्मणारावणायतत्प्रार्थनानुसारेण मानुषान्यसर्वावध्यत्ववरदानपूर्वकं पुनःपरितोषाच्छेदेच्छेदेपुनर्नवनवशिरःप्ररोहादिविषयकवरान्तरदानम् ॥१॥ विभीषणाय तत्प्रार्थनानुरेधेनधार्मिकत्वादिवरदानपूर्वकं स्वयंचिरजीवित्ववरदानम् ॥ २ ॥ कुंभकर्णायवरदानप्रवृत्तेनब्रह्मणा देवगणप्रार्थनयासरस्वतींप्रति तज्जिह्वासंनिधानेनविपरीतवरवरणकरणप्रेरणा ॥ ३ ॥ ब्रह्मणा सरस्वतीविमोहितमनस्कतयाकुंभकर्णेनचिरस्वापयाचने तस्मैतद्दानपूर्वकंस्वलोकगमनम् ॥ ४ ॥

अथा[1]ब्रवीन्मुनिं रामः [2]कथं ते भ्रातरो वने ॥ कीदृशं तु तदा ब्रह्मंस्त[3]पस्तेपुर्महाबलाः ॥ १ ॥
अगस्त्यस्त्वब्रवीत्तत्र रामं सुप्रीतमानसम् ॥ तांस्तान्धर्मविधींस्तत्र भ्रातरस्ते समाविशन् ॥ २ ॥
कुम्भकर्णस्ततो यत्तो नित्यं धर्मपथे स्थितः ॥ तताप ग्री[4]ष्मकाले तु पञ्चाग्नीन्परितः स्थितः ॥ ३ ॥
मेघाम्बुसिक्तो वर्षासु वीरासनमसेवत ॥ नित्यं च शिशिरे काले जलमध्यप्रतिश्रयः ॥ ४ ॥
एवं वर्षसहस्राणि दश तस्यातिचक्रमुः ॥ धर्मे प्रयतमानस्य सत्पथे निष्ठितस्य च ॥ ५ ॥
विभीषणस्तु धर्मात्मा नित्यं धर्मपरः शुचिः ॥ पञ्च वर्षसहस्राणि पादेनैकेन तस्थिवान् ॥ ६ ॥
समाप्ते नियमे तस्य ननृतुश्चाप्सरोगणाः ॥ पपात पुष्पवर्षं च [5]क्षुभिताश्चापि देवताः ॥ ७ ॥
पञ्च वर्षसहस्राणि सूर्यं चैवान्ववर्तत ॥ तस्थौ चोर्ध्वशिरोबाहुः स्वाध्यायधृतमानसः ॥ ८ ॥
एवं विभीषणस्यापि स्वर्गस्थस्येव नन्दने ॥ दश वर्षसहस्राणि गतानि नि[6]यतात्मनः ॥ ९ ॥
दश वर्षसहस्राणि निराहारो दशाननः ॥ पूर्णे वर्षसहस्रे तु शिरश्चाग्नौ जुहाव सः ॥ १० ॥
एवं वर्षसहस्राणि नव तस्यातिचक्रमुः ॥ शिरांसि नव चाप्यस्य प्रविष्टानि हुताशनम् ॥ ११ ॥

---

रहितं । दरिद्रमित्यर्थः ॥ ४२—४८ ॥ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने नवमः सर्गः ॥९॥

---

वीरासनं नाम वामोरूपरि दक्षिणजङ्घां प्रतिष्ठाप्य स्थितिः ॥ ४—७ ॥ सूर्यं चैवेति चकारेण पूर्ववदेकपादस्थितिः समुच्चीयते ॥ ८ ॥ स्वर्गस्थस्य देवस्य नन्दन इवेत्यनेन तपःप्रवृत्तिसंतोष उक्तः ॥ ९—

---

ति० तपसे तपोर्थं । धृतमानसः निश्चितान्तःकरणः ॥ ४६ ॥ ति० इतिकृत्वा इतिबुद्धिंकृत्वा अध्यवस्य तथानिश्चित्यच । स० गोकर्णस्य तत्संबन्धि तत्रत्यमित्यर्थः ॥४७॥ स० पितामहं ब्रह्माणं । अयंश्लोकउत्तरकथाप्रसंगार्थः ॥४८॥ इतिनवमःसर्गः ॥९॥

ति० धर्मविधीन् धर्मानुष्ठानानि ॥ २ ॥ ति० संक्षेपेणोक्तंप्रपञ्चयति—कुंभकर्णइत्यादि । 'वह्निभिःसूर्यपञ्चमैः' इतिपाठे सूर्यःपञ्चमोयेषांतैर्वह्निभिरित्यर्थः । पञ्चाग्नीन्परितःस्थितइतिपाठेपि सूर्यसहिताएवपञ्चाग्नयः । स० पञ्चाग्नीन्परितःकृत्वास्थितः ॥३॥ स० धर्मात्मा भगवन्मनस्कः । धर्मपरः धर्मानुष्ठाता । तस्थिवान् यद्यपि 'छन्दसिलिटः क्वसुः' इत्युक्तिः तथापि "तंतस्थिवांसंनगरोपकण्ठे" इत्यादिप्रयोगात्क्वचिल्लोकेऽपि ॥ ६ ॥ शि० दशाननस्तुदशवर्षसहस्रंनिराहारोऽभवदितिशेषः ॥ १० ॥ शि० एवंप्रतिवर्षसहस्रंशिरोहवनप्रकारेणतस्यरावणस्यनववर्षसहस्राण्यतिचक्रमुः । अतएवनवशिरांसिहुताशनंप्रविष्टानि ॥ ११ ॥

[ पा० ] १ क—घ. ज. अथाब्रवीद्द्विजं. २ क. ख. घ. च. छ. कथांते. ३ ख. ज. तपश्चेरुर्महाव्रताः. ४ च. ग्रीष्मकालेतुवह्निभिःसूर्यपञ्चमः. क. ग्रैष्मकेकालेवीरःपञ्चाग्निमध्यगः. ५ ङ. झ. ञ. ट. तुष्टुवुश्चापिदेवताः. ६ च. विधूतात्मनः.

अथ वर्षसहस्रे तु दशमे दशमं शिरः ॥ छेत्तुकामे दशग्रीवे प्राप्तस्तत्र पितामहः ॥ १२ ॥
[1][ देवगन्धर्वसिद्धैश्च ऋषिभिः किंनरैः सह ॥ ] पितामहस्तु [2]सुप्रीतः सार्धं देवैरुपस्थितः ॥
[3]तव तावद्दशग्रीव प्रीतोसीत्यभ्यभाषत ॥ १३ ॥
शीघ्रं वरय धर्मज्ञ वरो यस्तेऽभिकाङ्क्षितः ॥ तं ते कामं करोम्यद्य न वृथा ते परिश्रमः ॥ १४ ॥
अथाब्रवीद्[4]दशग्रीवः प्रहृष्टेनान्तरात्मना ॥ प्रणम्य शिरसा देवं हर्षगद्गदया गिरा ॥ १५ ॥
भगवन्प्राणिनां नित्यं नान्यत्र मरणाद्भयम् ॥ नास्ति मृत्युसमः शत्रुरमरत्वमहं वृणे ॥ १६ ॥
एवमुक्तस्तदा ब्रह्मा दशग्रीवमुवाच ह ॥ नास्ति सर्वामरत्वं ते वरमन्यं वृणीष्व मे ॥ १७ ॥
एवमुक्ते तदा राम ब्रह्मणा लोककर्तृणा ॥ दशग्रीव उवाचेदं कृताञ्जलिरथाग्रतः ॥ १८ ॥
सुपर्णनागयक्षाणां दैत्यदानवरक्षसाम् ॥ [5]अवध्योहं प्रजाध्यक्ष देवतानां च शाश्वत ॥ १९ ॥
न हि चिन्ता ममान्येषु प्राणिष्वमरपूजित ॥ तृणभूता हि ते [6]मन्ये प्राणिनो मानुषादयः ॥ २० ॥
एवमुक्तस्तु धर्मात्मा दशग्रीवेण रक्षसा ॥ उवाच वचनं देवः सह देवैः पितामहः ॥
भविष्यत्येवमेतत्ते वचो राक्षसपुङ्गव ॥ २१ ॥
एवमुक्त्वा तु तं राम दशग्रीवं पितामहः ॥ शृणु चापि वरो भूयः प्रीतस्येह शुभो मम ॥ २२ ॥
हुतानि यानि शीर्षाणि पूर्वमग्नौ त्वयाऽनघ ॥ पुनस्तानि भविष्यन्ति तथैव तव राक्षस ॥ २३ ॥
वितरामीह ते सौम्य वरं चान्यं दुरासदम् ॥ २४ ॥
छन्दतस्तव रूपं च मनसा यद्यथेप्सितम् ॥ भविष्यति न संदेहो मद्वरात्तव राक्षस ॥ २५ ॥
एवं पितामहोक्तस्य दशग्रीवस्य रक्षसः ॥ अग्नौ हुतानि शीर्षाणि [7]पुनस्तान्युदितानि वै ॥ २६ ॥
एवमुक्त्वा तु तं राम दशग्रीवं पितामहः ॥ विभीषणमथोवाच वाक्यं लोकपितामहः ॥ २७ ॥
विभीषण त्वया वत्स धर्मसंहितबुद्धिना ॥ परितुष्टोसि धर्मात्मन्वरं वरय सुव्रत ॥ २८ ॥
[8]विभीषणस्तु [9]धर्मात्मा वचनं प्राह साञ्जलिः ॥ वृतः सर्वगुणैर्नित्यं चन्द्रमा रश्मिभिर्यथा ॥ २९ ॥

**स०** ते त्वया अभिकाङ्क्षित इच्छाविषयोयोवरस्तंवरय । तेपरिश्रम शिरउत्कर्तनादिकायक्लेश वृथानभवेत् । कंजन अकामं कामितानवाप्तिं । करोमि तवरय । वरस्यमोक्षवद्दलद्वयात्मकत्वादेवमुक्तिरितिमन्तव्य । तेपरि परित श्रमोयेनस रिपु ककम-पिकाम नाप्नुयादितिशेष. । तथा वृथाकरोमीतिवा । **शि०** मेपरिश्रमोवृथानेत्यभ्यभाषत ॥ १४ ॥ **शि०** मरणादन्यत्र अन्यत् प्राणिनाभयंन । अतोमृत्युसम शत्रुर्न । अतोऽमरत्वमहंवृणे ॥ १६ ॥ **ति०** मेमत्त ॥ १७ ॥ **स०** ब्रह्मणा नपुसकलिङ्गोऽय ब्रह्मशब्दश्चतुर्मुखवाची । "ब्रह्मणिजीवा सर्वेपि" इत्युक्ते । 'ध्यायंध्यायपरंब्रह्म''इतिमनोरमापद्यव्याख्यात्राकार्यब्रह्मव्यावर्तयितुं परमित्युक्तमितिपरपदकृत्यकथनाच्च 'तस्मादेतद्ब्रह्मनामरूपचजायते' इत्याथर्वणभाष्येएतद्ब्रह्मचतुर्मुखइतिव्याख्यानाच्च । "इकोचि-विभक्तौ" इतिनुमिलोककर्तृणेत्युपपन्न ॥ १८ ॥ **स०** सापवादोवरोदेयइतिचतुराननभावंविदित्वातथैवकैश्चिदवध्यत्वयाचते— **सुपर्णेति** । **शि०** अवध्योहभवेयमितिशेष. ॥ १९ ॥ **ति०** भूयोन्य.शुभोवरोदीयते तच्छृणु । **स०** भूय पुन । यथोपलक्ष-णंनामदशास्यइतिनभवेत्तथा शुभोवरोदीयते तश्शृणु ॥ २२ ॥ **स०** मनसाययथेप्सितरूप तवछन्दत ममतद्दानेच्छात भविष्य-तीतिशेष । तेन छन्दतइतिवामनसाययथेप्सितमितिवाऽधिकमितिनिरस्तं ॥ इदमेवरावणमारणबीजावपनमितिमन्तव्य ॥ २५ ॥ **शि०** पुनरुत्थितानिअभवन्नितिशेष ॥ २६ ॥ **शि०** परितुष्ट. परितोषितोस्मि ॥ **स०** धर्मसहितबुद्धिनात्वया परितुष्टोस्मी-त्यनेन तोषेबुद्धि समासेगुणीभूता कारणमितिसूचितमितिज्ञेयं ॥ २८ ॥ **स०** धारकत्वाद्धर्मोभगवान् । तत्रात्मामनोयस्यस. । हेधर्मात्मन्नितिब्रह्माणंसंबोध्यसाञ्जलिराह ॥ २९ ॥

**[ पा० ]** १ इदमर्धं क. घ. पाठयोर्दृश्यते २ ग. धर्मात्मासार्धं. ३ क. तातवत्सदशग्रीवसुप्रीतोस्मीत्यभाषत. ४ घ. दशग्रीव.पितामहमुपागतं. ५ क अवध्योहंभविष्यामि. ६ ख ग. घ. ज. तेसर्वे क. मेसर्वे ७ क. घ. ङ. च. ज. झ. ट. पुनस्तान्युत्थितानिवै. ख. ग. यानितान्युत्थितानिवै. ८ क. एवमुक्तस्तुधर्मात्माप्रत्युवाचविभीषण ९ घ. धर्मात्मा उवाचप्रणतोवच . ग. ज. धर्मात्माप्रोवाचप्रणतोवच .

भगवन्कृतकृत्योहं यन्मे लोकगुरुः स्वयम् ॥ प्रीतेन यदि दातव्यो वरो मे शृणु सुव्रत ॥ ३० ॥
परमापद्गतस्यापि धर्मे मम मतिर्भवेत् ॥ अशिक्षितं च ब्रह्मास्त्रं भगवन्प्रतिभातु मे ॥ ३१ ॥
या या मे जायते बुद्धिर्येषु येष्वाश्रमेषु च ॥ सा सा भवतु धर्मिष्ठा तं तु धर्मं च पालये ॥ ३२ ॥
एष मे परमोदार वरः परमको मतः ॥ न हि धर्माभिरक्तानां लोके किंचन दुर्लभम् ॥ ३३ ॥
पुनः प्रजापतिः प्रीतो विभीषणमुवाच ह ॥ धर्मिष्ठस्त्वं यथा वत्स तथा चैतद्भविष्यति ॥ ३४ ॥
यस्माद्राक्षसयोनौ ते जातस्यामित्रनाशन ॥ नाधर्मे जायते बुद्धिरमरत्वं ददामि ते ॥ ३५ ॥
[1]इत्युक्त्वा कुम्भकर्णाय वरं दातुमुपस्थितम् ॥ प्रजापतिं सुराः सर्वे वाक्यं प्राञ्जलयोऽब्रुवन् ॥ ३६ ॥
न तावत्कुम्भकर्णाय प्रदातव्यो वरस्त्वया ॥ जानीषे हि यथा लोकांस्त्रासयत्येष दुर्मतिः ॥ ३७ ॥
नन्दनेऽप्सरसः सप्त महेन्द्रानुचरा दश ॥ अनेन भक्षिता ब्रह्मन्नृषयो मानुषा[2]स्तथा ॥ ३८ ॥
अलब्धवरपूर्वेण यत्कृतं राक्षसेन तु ॥ [3]तदेष वरलब्धः स्याद्भक्षयेद्भुवनत्रयम् ॥ ३९ ॥
वरव्याजेन [4]मोहोस्मै दीयताममितप्रभ ॥ लोकानां स्वस्ति चैवं स्याद्भवेदस्य च संमतिः ॥ ४० ॥
एवमुक्तः सुरैर्ब्रह्माऽचिन्तयत्पद्मसंभवः ॥ [5]चिन्तिता चोपतस्थेऽस्य पार्श्वं देवी सरस्वती ॥ ४१ ॥
प्राञ्जलिः सा तु पार्श्वस्था प्राह वाक्यं सरस्वती ॥ इयमस्म्यागता देव किं कार्यं करवाण्यहम् ॥४२॥
प्रजापतिस्तु तां प्राप्तां प्राह वाक्यं सरस्वतीम् ॥ वाणि [6]त्वं राक्षसेन्द्रास्ये भव या देवतेप्सिता ॥४३॥
तथेत्युक्त्वा प्रविष्टा सा प्रजापतिरथाब्रवीत् ॥ कुम्भकर्ण महाबाहो वरं वरय यो मतः ॥ ४४ ॥
[7]कुम्भकर्णस्तु तद्वाक्यं श्रुत्वा वचनमब्रवीत् ॥ स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितम् ॥ ४५ ॥

३० ॥ परमेति श्लोकद्वयमेक वाक्यं ॥ ब्रह्मास्त्र ब्रह्मास्त्रमत्र । पालये पालयेय ॥ ३१—३८॥ अलब्धवरपूर्वेण पूर्वमलब्धवरेण कुम्भकर्णेन । यत् भक्षणात्मक कर्म कृतं तत् तस्मात् कारणात् । वरलब्धः लब्धवरः स्यात् स्याद्यदि भुवनत्रयमपि भक्षयेदित्यर्थः ॥३९॥ मोहः अज्ञान। एव मोहस्यैव प्रदाने अस्य च सन्नतिः शिक्षा भवेत् ॥ ४० ॥ अचिन्तयत् । देवीमिति शेष. ॥ ४१—४२ ॥ भव या देवतेप्सिता । यादृग्रूपा देवतैः काङ्क्षिता तादृशी भवेत्यर्थः ॥ ४३ ॥ प्रविष्टा सा देवतोक्तरूपा प्रविष्टेत्यर्थः

ति० हेभगवन् लोकगुरु उत्पत्तिज्ञप्तिदाताभगवान्यन्मह्यप्रीत । एतेनैवाहंकृतकृत्योस्मि । सर्वगुणै पुरुषार्थैर्वृतश्चास्मि । त्वत्प्रीतेरेवसर्वपुरुषार्थसाधनत्वात् ॥ शि० भवान्यत्स्वयमेसमीपमागतइतिशेष अतोहकृतकृत्य ॥ ३० ॥ ति० अथापियदिप्रसन्नेनत्वया वश्यंकश्चिद्वरोदातव्यस्तदातंवरंश्शृणु । परमापद्गतस्य सासारिकव्यवहारत परमामापदंप्राप्तस्यापिममधर्मेनारायणेमतिर्भवेत् । 'रामो विग्रहवान्धर्म' इत्युक्तेरत्र धर्मपदेननारायण । अन्यथासासाभवतुधार्मिष्ठेत्यनेनपौनरुक्त्यस्यात् ॥३१॥ शि० यायेति । येषुयेष्वाश्रमेषुब्रह्मचर्यादिषु यायामेबुद्धिर्जायते जायेत सासा धर्मिष्ठा तत्तदाश्रमोचितधर्मविशिष्टाभवतु । अतएव तंतंधर्ममहंपालये पालयेयं ॥ ३२ ॥ ति० ईदृशस्य वरस्यपरमकत्वस्वयमेवाह—नहीति ॥ ३३ ॥ शि० हेधर्मिष्ठयथात्वं तथैवएतत्तवप्रार्थनं । अतएतद्भविष्यत्येव ॥ ३४ ॥ स० अमरत्वं चिरजीविता । ति० राक्षसयोनौजातस्यापियतोऽधर्मेबुद्धिर्नजायते तत प्रीतोहममरत्वंतेददामि । एवमप्रार्थितममरत्वब्रह्मणस्सकाशाद्धर्मबलाल्लब्धविभीषणेनेतिनिष्कामतयादेवोपासनंसर्वार्थसाधनमितिबोध्यं ॥३५॥ शि० भक्षिता बहवइतिशेष ॥ ३८ ॥ स० अलब्धवरपूर्णेन पूर्णालब्धवरेण । वरलब्ध लब्धवर । शि० अलब्धवरपूर्णेन नलब्धोवर.पूर्ण पूर्णावस्थाचयेनतेनराक्षसेनकुंभकर्णेन यद्यस्मात्कृत बहूनाभक्षणमितिशेष । तस्माद्धेतो यद्येषपूर्णावस्थ वरलब्ध. स्यात्तर्हि भुवनत्रयभक्षयेत् ॥ ३९ ॥ ति० एवमोहदानेनैवलोकानास्वस्तिस्यात् अस्यसमति समाननंचस्यात् । अचिन्तयत् देवीमितिशेष ॥ ४०—४१॥ ति० अस्यास्येदेवतेप्सितादेवानामिष्टावाग्भव । यावत.कुंभकर्णस्यवदनाद्देवानुकूलानिस्सरेत्यर्थ । अथाब्रवीत् सरस्वतीप्रवेशानन्तरमित्यर्थ ॥४३॥ शि० प्रविष्टा कुभकर्णस्यमुखइतिशेष ॥ ४४ ॥ ति० तद्वाक्यं ब्रह्मवाक्यं ।

[ पा० ] १ ख. ग. घ. ज. कुंभकर्णायतुवरंप्रयच्छन्तमरिंदम. २ क मानुषादय.. ३ ङ. च. छ. झ. ञ. ट. यद्येष. ४ ग. घ ज. मोहोहिदीयतामस्यरक्षस". ५ क. सरस्वतीगिरादेवीसोपतस्थेप्रजापतिं. ६ क. त्वंकुंभकर्णस्यभववाग्देवतेप्सिता. ७ क. तस्यतद्वचनंश्रुत्वाकुंभकर्णस्तथाऽब्रवीत्.

एवमस्त्विति तं चोक्त्वा प्रायाद्ब्रह्मा सुरैः समम् ॥ देवी सरस्वती चैव राक्षसं तं जहौ पुनः ॥४६॥
ब्रह्मणा सह देवेषु गतेषु च नभःस्थलम् ॥ विमुक्तोऽसौ सरस्वत्या स्वां संज्ञां च ततो गतः ॥४७॥
कुम्भकर्णस्तु दुष्टात्मा चिन्तयामास दुःखितः ॥ ईदृशं किमिदं वाक्यं ममाद्य वदनाच्च्युतम् ॥४८॥
अहं व्यामोहितो देवैरिति मन्ये तदागतैः ॥ एवं लब्धवराः सर्वे भ्रातरो दीप्ततेजसः ॥
श्लेष्मातकवनं गत्वा तत्र ते न्यवसन्सुखम् ॥ ४९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे दशमः सर्गः ॥ १० ॥

---

## एकादशः सर्गः ॥ ११ ॥

रावणादीनांवरलाभहृष्टेनसुमालिना प्रहस्तादिभि सह रावणसमीपमेत्यतम्प्रति लङ्काया·पुरानिजालयत्वकथनपूर्वक कुबेरस्य तत प्रव्राजनचोदना ॥ १ ॥ रावणेन भ्रातृगौरवात्तद्वचनानादरणे तम्प्रतिप्रहस्तेन पुनस्समयान्तरे निपुणदुर्बोधनम् ॥ २ ॥ तदनुरोधिनारावणेन कुबेरप्रति लङ्कात्यागे दूत्येनप्रहस्तप्रेषणम् ॥ ३ ॥ कुबेरेण पितरिविश्रवसि रावणवचननिवेदनपूर्वकं तन्नियोगेन लङ्कात.पौरै सह कैलासगमनम् ॥ ४ ॥ ततोलङ्काप्रविष्टै सुमालिप्रभृतिभी रावणस्य लङ्काराज्येऽभिषेचनम् ॥ ५ ॥

सुमाली वरलब्धांस्तु ज्ञात्वा चैतान्निशाचरान् ॥ उदतिष्ठद्भयं त्यक्त्वा सानुगः स रसातलात् ॥१॥
मारीचश्च प्रहस्तश्च विरूपाक्षो महोदरः ॥ उदतिष्ठन्सुसंरब्धाः सचिवास्तस्य रक्षसः ॥ २ ॥
[1]सुमाली सचिवैः सार्धं वृतो राक्षसपुङ्गवैः ॥ अभिगम्य दशग्रीवं परिष्वज्येदमब्रवीत् ॥ ३ ॥
दिष्ट्या ते वत्स संप्राप्तश्चिन्तितोऽयं मनोरथः ॥ यस्त्वं त्रिभुवनश्रेष्ठाल्लब्धवान्वरमुत्तमम् ॥ ४ ॥
यत्कृते च वयं लङ्कां त्यक्त्वा याता रसातलम् ॥ तद्गतं नो महाबाहो महद्विष्णुकृतं भयम् ॥ ५ ॥
असकृत्तद्भयाद्भीताः परित्यज्य स्वमालयम् ॥ विद्रुताः सहिताः सर्वे प्रविष्टाः स्म रसातलम् ॥ ६ ॥
अस्मदीया च लङ्केयं नगरी राक्षसोचिता ॥ निवेशिता तव भ्रात्रा धनाध्यक्षेण धीमता ॥ ७ ॥
यदि नामात्र शक्यं स्यात्साम्ना दानेन वाऽनघ ॥ तरसा वा महाबाहो प्रत्यानेतुं कृतं भवेत् ॥८॥

---

॥ ४४—४८ ॥ श्लेष्मातकवन तत्प्रचुरं पितुस्तपोवनमित्यर्थः ॥ ४९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने दशम सर्गः ॥ १० ॥

महद्विष्णुकृत यद्भयं तन्निरस्तमित्यर्थः ॥ ५—७ ॥ सामादिना लङ्का प्रचालयितुं यदि नाम शक्यं स्यात्तदा नः कार्यं भवेदित्यर्थः ॥ ८—

---

**शि०** हेदेवदेव । अनेकानि एकभिन्नानि कपिञ्जलाधिकरणन्यायेनत्रीणीत्यर्थ । वर्षाणिस्वप्तुममेप्सितमस्तीतिवचनमब्रवीत् । एतेनवरान्तरयाचनाभावमात्रेणैवदेवानासन्तोषोजातइतिध्वनित । अतएवयुद्धकाण्डोक्त 'तस्मात्त्वमद्यप्रभृतिमृतकल्प शयिष्यसे' इतिपुनर्ब्रह्मशाप सगच्छते । अतएवरावणप्रार्थनानन्तरकालिक 'शयिताह्येषषण्मासमेकाऽहंजागरिष्यति'इतिब्रह्मप्रसादवचनसानुकूलं । एतेनात्रषण्मासादर्वाग्जागरणंनेतिनियम । तदधिकापिनिद्राभवत्येवेतिवरस्वरूपंबोध्यमितिभट्टोक्तिश्चिन्त्या । तस्यवरान्तरत्वात् । तत्रत्यवरबोधकश्लोकेनेदृशार्थालाभाच्चेतिदिक् ॥ ४५ ॥ **ति०** एवमित्यत्रषण्मासादर्वाग्जागरणंनेतिनियम । तदधिकनिद्रातुभवत्येवेतिवरस्वरूपंबोध्य । अतएवषण्मासान्स्वपितीतिपूर्वविभीषणोक्त्या वर्षाण्यनेकानीतिकुंभकर्णोक्त्यानपूर्वोक्तस्यविरोध । **स०** तंराक्षसजहौ जिह्वात्यक्त्वागतवती कृतप्रयोजना ॥ ४६ ॥ **ति०** स्वासज्ञा यथाप्राप्तस्वबुद्धिं । गत प्राप्तः **स०** स्वांसंज्ञा मोहविरहात् ॥ ४७ ॥ **ति०** श्लेष्मातकवनं तत्प्रचुरंपितुस्तपोवनम् ॥ ४९ ॥ इतिदशम सर्गः ॥ १० ॥

**स०** भयं न गतं तवसपादितेतराबध्यत्ववरत्वादितिभाव ॥ ५ ॥ **ति०** निवेशिता अधिष्ठिता ॥ ७ ॥ **शि०** तरसा शौर्येण ॥ ८ ॥

[ **पा०** ] १ ख. घ. ज. समाहितै . क. समागतै . २ क. सुमालीराक्षसश्रेष्ठ.सचिवैस्तै.समावृतः.

त्वं तु लङ्केश्वरस्तात भविष्यसि न संशयः ॥ त्वया राक्षसवंशोयं निमग्नोपि समुद्धृतः ॥
सर्वेषां नः प्रभुश्चैव भविष्यसि महाबल ॥ ९ ॥
अथाब्रवीद्दशग्रीवो मातामहमुपस्थितम् ॥ वित्तेशो गुरुरस्माकं नार्हसे वक्तुमीदृशम् ॥ १० ॥
साम्नाऽपि राक्षसेन्द्रेण प्रत्याख्यातो गरीयसा ॥ किंचिन्नाह तदा रक्षो ज्ञात्वा तस्य चिकीर्षितम् ११
कस्यचित्त्वथ कालस्य वसन्तं रावणं ततः ॥ उक्तवन्तं तथा वाक्यं दशग्रीवं निशाचरः ॥
प्रहस्तः प्रश्रितं वाक्यमिदमाह सकारणम् ॥ १२ ॥
दशग्रीव महाबाहो नार्हस्त्वं वक्तुमीदृशम् ॥ सौभ्रात्रं नास्ति शूराणां शृणु चेदं वचो मम ॥१३॥
अदितिश्च दितिश्चैव भगिन्यौ सहिते हिते ॥ भार्ये परमरूपिण्यौ कश्यपस्य प्रजापतेः ॥ १४ ॥
अदितिर्जनयामास देवांस्त्रिभुवनेश्वरान् ॥ दितिस्त्वजनयत्पुत्रान्कश्यपस्यात्मसंभवान् ॥ १५ ॥
दैत्यानां किल धर्मज्ञ पुरेयं सवनार्णवा ॥ सपर्वता मही वीर तेऽभवन्प्रभविष्णवः ॥ १६ ॥
निहत्य तांस्तु समरे विष्णुना प्रभविष्णुना ॥ देवानां वशमानीतं त्रैलोक्यमिदमव्ययम् ॥ १७ ॥
नैतदेको भवानेव करिष्यति विपर्ययम् ॥ सुरासुरैराचरितं तत्कुरुष्व वचो मम ॥ १८ ॥
एवमुक्तो दशग्रीवः प्रहृष्टेनान्तरात्मना ॥ चिन्तयित्वा मुहूर्तं वै बाढमित्येव सोऽब्रवीत् ॥ १९ ॥
स तु तेनैव हर्षेण तस्मिन्नहनि वीर्यवान् ॥ वनं गतो दशग्रीवः सह तैः क्षणदाचरैः ॥ २० ॥
त्रिकूटस्थः स तु तदा दशग्रीवो निशाचरः ॥ प्रेषयामास दूत्येन प्रहस्तं वाक्यकोविदम् ॥ २१ ॥
प्रहस्त शीघ्रं गच्छ त्वं ब्रूहि नैर्ऋतपुङ्गवम् ॥ वचसा मम वित्तेशं सामपूर्वमिदं वचः ॥ २२ ॥
इयं लङ्कापुरी राजन्राक्षसानां महात्मनाम् ॥ त्वया निवेशिता सौम्य नैतद्युक्तं तवानघ ॥ २३ ॥
तद्भवान्यदि नो ह्यद्य दद्यादतुलविक्रम ॥ कृता भवेन्मम प्रीतिर्धर्मश्चैवानुपालितः ॥ २४ ॥
स तु गत्वा पुरीं लङ्कां धनदेन सुरक्षिताम् ॥ अब्रवीत्परमोदारं वित्तपालमिदं वचः ॥ २५ ॥
प्रेषितोऽहं तव भ्रात्रा दशग्रीवेण सुव्रत ॥ त्वत्समीपं महाबाहो सर्वशस्त्रभृतां वर ॥ २६ ॥
तच्छ्रूयतां महाप्राज्ञ सर्वशास्त्रविशारद ॥ वचनं मम वित्तेश यद्ब्रवीति दशाननः ॥ २७ ॥
इयं किल पुरी रम्या सुमालिप्रमुखैः पुरा ॥ भुक्तपूर्वा विशालाक्ष राक्षसैर्भीमविक्रमैः ॥ २८ ॥
तेन विज्ञाप्यते सोयं सांप्रतं विश्रवात्मज ॥ तदेषा दीयतां तात याचतस्तस्य सामतः ॥ २९ ॥

---

१३ ॥ सहिते हिते अन्योन्यानुरक्ते ॥ १४—१७ ॥ विपर्ययं भ्रातृद्रोहरूपं । सुरासुरैराचरित मार्गं ॥ १८—१९ ॥ तस्मिन्नहनि प्रहस्तोपदेशाहनि । वन श्लेष्मातकवन ॥ २० ॥ त्रिकूटस्थो भूत्वा प्रहस्त दूत्येन प्रेषयामास ॥ २१ ॥ नैर्ऋतपुङ्गवं कुबेर । लङ्कायां पूर्वस्थितनैर्ऋताधिपत्यात् ॥ २२—

---

ति० नार्हसे ज्येष्ठनिरसनंवक्तुंनार्हसीत्यर्थ ॥ १० ॥ शि० कस्यचित्कालस्य अपगमेसतीतिशेष ॥ १२ ॥ शि० वक्तुनार्हसे सुमालिनंप्रतीतिशेष ॥ १३ ॥ शि० तत्रशिष्टाचारप्रमाणयति—अदितिरिति । अदितिर्दितिश्चकश्यपस्यभार्येबभूवुरितिशेष ॥ ति० अदितिदितीभिन्नोदरभगिन्यौ । तेसहितेहितेपरस्परानुरक्तेभूत्वाकश्यपस्यभार्येअभूतामितिशेष ॥१४॥ शि० पुरा इय मही दैत्यानामभवदितिशेष ॥ १६ ॥ एतत् परस्वामिकपुरादिस्वाधीनीकरण ॥ १८ ॥ शि० ब्रवीतिअब्रवीत् ॥ २७ ॥ शि० विज्ञाप्यते याच्यतइत्यर्थ ॥ २९ ॥

[ पा० ] १ क. ग. घ. ज. नित्यमेवमहाबल २ ग. ज. तस्यमनोगतं. ३ झ. ञ. ट नार्हसे ४ क ख. ग. ङ—ट. दितिस्त्वजनयद्दैत्यान्. ५ झ. ञ ट. पुरेयं. ६ क. ज. दैत्याहतास्तुसमरे ७ क. ग घ. ज सुरैराचरितंमार्गं. ८ क. ख ग. ज. प्रहस्तेनसकारणं. ९ घ. गत्वात्वंब्रूहिज्येष्ठममाज्ञया. १० ख. ग. घ. ज. वचनान्मम. ११ ख. ग. घ. ज. प्रहस्तोधनदंतदा. १२ क. ग. घ. ज. दूत्येनधनदेश्वर. १३ क. ग. ज. लङ्का. १४ घ. सान्त्वयादीयतामार्येयाचत .

प्रहस्तादभिसंश्रुत्य देवो वैश्रवणो वचः ॥ प्रत्युवाच प्रहस्तं तं वाक्यं वाक्यविशारदः ॥ ३० ॥
दत्ता ममेयं पित्रा तु लङ्का शून्या निशाचरैः ॥ निर्वासिते च मे यक्षैर्दानमानादिभिर्गुणैः ॥३१॥
ब्रूहि गच्छ दशग्रीवं पुरं राज्यं च यन्मम ॥ तवाप्येतन्महाबाहो भुङ्क्ष्व राज्यमकण्टकम् ॥
अविभक्तं त्वया सार्धं राज्यं यच्चापि मे वसु ॥ ३२ ॥
एवमुक्त्वा धनाध्यक्षो जगाम पितुरन्तिकम् ॥ अभिवाद्य गुरुं प्राह रावणस्य यदीप्सितम् ॥ ३३ ॥
एष तात दशग्रीवो दूतं प्रेषितवान्मम ॥ दीयतां नगरी लङ्का पूर्वं रक्षोगणोषिता ॥
मयाऽत्र यदनुष्ठेयं तन्ममाचक्ष्व सुव्रत ॥ ३४ ॥
ब्रह्मर्षिस्त्वेवमुक्तोसौ विश्रवा मुनिपुङ्गवः ॥ प्राञ्जलिं धनदं प्राह शृणु पुत्र वचो मम ॥ ३५ ॥
दशग्रीवो महाबाहुरुक्तवान्मम सन्निधौ ॥ मया निर्भर्त्सितश्चासीद्बहुशोक्तः सुदुर्मतिः ॥ ३६ ॥
स क्रोधेन मया चोक्तो ध्वंसते च पुनः पुनः ॥ श्रेयोभियुक्तं धर्म्यं च शृणु पुत्र वचो मम ॥३७॥
वरप्रदानात्संमूढो मान्यामान्यान्स दुर्मतिः ॥ न वेत्ति मम शापाच्च प्रकृतिं दारुणां गतः ॥ ३८ ॥
तस्माद्गच्छ महाबाहो कैलासं धरणीधरम् ॥ निवेशय निवासार्थं त्यक्त्वा लङ्कां सहानुगः ॥ ३९ ॥
तत्र मन्दाकिनी रम्या नदीनामुत्तमा नदी ॥ काञ्चनैः सूर्यसंकाशैः पङ्कजैः संवृतोदका ॥
कुमुदैरुत्पलैश्चैव तथाऽन्यैश्च सुगन्धिभिः ॥ ४० ॥
तत्र देवाः सगन्धर्वाः साप्सरोरगकिन्नराः ॥ विहारशीलाः सततं रमन्ते सर्वदाश्रिताः ॥ ४१ ॥
न हि क्षमं तवानेन वैरं धनद रक्षसा ॥ जानीषे हि यथाऽनेन लब्धः परमको वरः ॥ ४२ ॥
एवमुक्तो गृहीत्वाऽऽशु तद्वचः पितृगौरवात् ॥ सदारपुत्रः सामात्यः सवाहनधनो गतः ॥ ४३ ॥
[ शून्या सा नगरी लङ्का त्रिंशद्योजनमायता ॥ क्षिप्रमेवाभवद्राम निर्जना चापि निर्भया ] ॥४४॥
प्रहस्तोथ दशग्रीवं गत्वा वचनमब्रवीत् ॥ प्रहृष्टात्मा महात्मानं सहामात्यं सहानुजम् ॥ ४५ ॥
शून्या सा नगरी लङ्का त्यक्त्वैनां धनदो गतः ॥ प्रविश्य तां सहास्माभिः स्वधर्मं प्रतिपालय ॥४६॥
एवमुक्तो दशग्रीवः प्रहस्तेन महाबलः ॥ विवेश नगरीं लङ्कां भ्रातृभिः सबलानुगैः ॥ ४७ ॥
धनदेन परित्यक्तां सुविभक्तमहापथाम् ॥ आरुरोह स देवारिः स्वर्गं देवाधिपो यथा ॥ ४८ ॥
स चाभिषिक्तः क्षणदाचरैस्तदा निवेशयामास पुरीं दशाननः ॥
निकामपूर्णा च बभूव सा पुरी निशाचरैर्नीलबलाहकोपमैः ॥ ४९ ॥
धनेश्वरस्त्वथ पितृवाक्यगौरवान्न्यवेशयच्छशिविमले गिरौ पुरीम् ॥

३५ ॥ बहुशोक्त इति सधिः छान्दसः ॥३६॥ ध्वंसते ध्वस्तधर्मन्यायमर्यादो जायते ॥३७॥ मम शापात् । तन्मातृदर्शनकालकृतादिति शेषः ॥३८॥ निवासार्थं निवेशय निवेशनं पुरं कुरु ॥३९-४९॥ शशिविमले

ति० ममराज्यवसुचत्वयाविभक्तमस्त्वितिशेष । एवंत्वदीयमपिमयेति ॥ ३२ ॥ शि० मम समीपे ॥ ३४ ॥ शि० बहुशोक्तइत्यत्रसधिस्तुत्रिपाद्या क्वचिदसिद्धत्वाभावबोधनात् ॥ ३६ ॥ शि० ध्वंससे मर्यादामितिशेष ॥ ३७ ॥ ति० सूर्यसकाशैः सूर्यवदुज्ज्वलै ॥ ४० ॥ शि० गत कैलासमितिशेष ॥ ४३ ॥ ति० एवप्रहस्तवच श्रुत्वारावण प्रहृष्टात्मा अभवदितिशेष ॥ ४५ ॥ ति० निकामपूर्णा अत्यन्तपूर्णा ॥ ४९ ॥ ति० शशिविमलेगिरौ कैलासे । पुरदरस्येवतदामरावतीमितिपाठोऽयुक्तश्छन्दोभङ्गाभावाय ॥ स० कैलासे स्वरिव कैलासे अमरावतीयथा तथापुरी अलका । स्वर्गेअमरावतीनामकाचनेन्द्रपुरी । अतएव 'स्वरव्यय' मित्यादिस्व पर्यायमुक्त्वास्थानान्तरे 'नगरीत्वमरावती' इत्यमरोऽब्रवीत् ॥ ५० ॥ इत्येकादश सर्ग ॥ ११ ॥

[ पा० ] १ ङ. झ. ञ ट. निवेशिताचमेरक्षोदान. २ क. ङ. झ. ट. पुरीराज्यच. ३ च. बहुशोयं. ४ ट. ध्वंससे. ५ अयंश्लोक. क—घ. ज. पाठेषुदृश्यते. ६ क—ट. तत्रपालय. ७ ञ. भीमबलाहकोपमै..

स्वलंकृतैर्भवनवरैर्विभूषितां पुरन्दरस्येव तदाऽमरावतीम् ॥ ५० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकादशः सर्गः ॥ ११ ॥

---

## द्वादशः सर्गः ॥ १२ ॥

शूर्पणखाया कालकेयायविद्युज्जिह्वाय दानानन्तरं मृगयार्थमटवीं पर्यटता दशकण्ठेन तत्र मयस्यानुमत्या तत्तनयाया मन्दोदर्याः परिणयः ॥ १ ॥ तथा वैरोचनदौहित्र्याः वज्रज्वालाया शैलूषतनयायाः सरमायाश्च क्रमेण कुंभकर्णविभीषणाभ्यामुद्वाहनम् ॥ २ ॥ तथा मन्दोदर्यामिन्द्रजिदुत्पादनम् ॥ ३ ॥

राक्षसेन्द्रोऽभिषिक्तस्तु भ्रातृभ्यां सहितस्तदा ॥ ततः प्रदानं राक्षस्या भगिन्याः समचिन्तयत् ॥१॥
स्वसारं कालकेयाय दानवेन्द्राय राक्षसीम् ॥ ददौ शूर्पणखां नाम विद्युज्जिह्वाय नामतः ॥ २ ॥
अथ दत्त्वा स्वयं रक्षो मृगयामटते स्म तत् ॥ तत्रापश्यत्ततो राम मयं नाम दितेः सुतम् ॥ ३ ॥
कन्यासहायं तं दृष्ट्वा दशग्रीवो निशाचरः ॥ अपृच्छत्को भवानेको निर्मानुष्यमृगे वने ॥
अनया मृगशावाक्ष्या किमर्थं सह तिष्ठसि ॥ ४ ॥
मयस्त्वथाऽब्रवीद्राम पृच्छन्तं तं निशाचरम् ॥ श्रूयतां सर्वमाख्यास्ये यथावृत्तमिदं मम ॥ ५ ॥
हेमा नामाप्सरा तात श्रुतपूर्वा यदि त्वया ॥ दैवतैर्मम सा दत्ता पौलोमीव शतक्रतोः ॥ ६ ॥
तस्यां सक्तमनास्तात पञ्च वर्षशतान्यहम् ॥ सा च दैवतकार्येण त्रयोदश समा गताः ॥ ७ ॥
वर्षं चतुर्दशं चैव ततो हेममयं पुरम् ॥ वज्रवैडूर्यचित्रं च मायया निर्मितं मया ॥ ८ ॥
तत्राहमवसं दीनस्तया हीनः सुदुःखितः ॥ तस्मात्पुराद्दुहितरं गृहीत्वा वनमागतः ॥ ९ ॥
इयं ममात्मजा राजंस्तस्याः कुक्षौ विवर्धिता ॥ भर्तारमनया सार्धमस्याः प्राप्तोऽस्मि मार्गितुम् ॥१०॥
कन्यापितृत्वं दुःखं हि सर्वेषां मानकाङ्क्षिणाम् ॥ कन्या हि द्वे कुले नित्यं संशये स्थाप्य तिष्ठति ॥११॥

---

गिरौ कैलासे । पुरीं अलकां । अत्र छन्दोभङ्ग आर्षो ज्ञेयः ॥ ५० ॥ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

कालकेयाय कालकपुत्राय ॥ २—७ ॥ वर्षं चतुर्दशमिति । चतुर्दशसंख्याविशिष्टं वर्षं च गतमित्यर्थः हेममयं पुरं हेमपुरं । मायया विचित्रनिर्माणशक्त्या ॥ ८—९ ॥ तस्याः कुक्षौ । हेमाया गर्भे इत्यर्थः । अस्या भर्तारं मार्गितुं अनया प्राप्तोऽस्मि

---

स० कालकेयाय तद्गणगणिताय विद्युज्जिह्वनामकाय कस्मैचिद्दानवेन्द्राय । स्वसा आकारान्तोपि स्वसाशब्दोऽवर्तत इत्येवमुक्तं । भगिनीं ॥ २ ॥ स० तत्र मृगयार्थं गते स्थले । मयं दैत्यवर्धकिं ॥ ३ ॥ शि० निर्गता मनुष्यमृगा यस्मात् अतिभयङ्करमित्यर्थं । किंच निर्मनुष्या मनुष्यरहिता मृगा यस्मिन् । मृगमात्रसेवितमित्यर्थं । तस्मिन् । एक पुरुषान्तररहित ॥ ४ ॥ शि० सा हेमा । दैवतकार्येणहेतुना स्वर्गंगतेतिशेष । ततआरभ्यत्रयोदशसमा वर्षाणि गता । चतुर्दशचवर्षंगत । ततोऽनन्तर हेममयंपुरंमया माययानिर्मितं । तत्रपुरेतयाहीनोऽहमवस । श्लोकद्वयमेकान्वयि । स० त्रयोदशसमा त्रयोदशवर्षमभिव्याप्य । दैवतकार्येण देवतोद्देश्यककार्यविशेषेणगता । चतुर्दशवर्षे तस्मिन् ॥ ७—८ ॥ ति० मार्गितुंप्राप्तोऽस्मि ॥ १० ॥ मानकाङ्क्षिणा अभिमानेच्छुना । दु खं अभिमाननिवर्तकत्वात् ॥ स० दु ख दु खयतीतिदु खं ॥ ११ ॥

[ पा० ] १ ङ. छ. झ. ञ. ट. पुरन्दर स्वरिवयथामरावतीं. २ क. ख. ग. ङ—ट. भ्रातृभि सहितस्तदा. घ. राक्षसैर्भ्रातृभिस्तदा. ३ झ. ट. ठ. ददौताकालकेन्द्रायदानवेन्द्रायराक्षसीम् । स्वसाशूर्पणखानामविद्युज्जिह्वायराक्षस. ४ ग. अथदत्वास्वसारंसमृगयापर्यटन्नृप ५ ङ. छ. झ. ञ. ट. नामाप्सरास्तत्र. ६ ङ. झ. ञ. ट. सक्तमनाह्यासदशवर्षशतान्यहं. ७ क. घ. कार्येणमयाविरहितागता. च. छ. कार्येणमयाविरहिताकृता. ८ क. तत्राहमरतिंभुञ्जंस्तया.

पुत्रद्वयं[1] समाप्यस्यां भार्यायां संबभूव ह ।। मायावी प्रथमस्तात दुन्दुभिस्तदनन्तरः ।। १२ ।।
एवं ते सर्वमाख्यातं यथातत्त्वेन पृच्छतः ।। त्वामिदानीं कथं तात जानीयां को भवानिति ।।१३।।
एवमुक्तं तु तद्रक्षो विनीतमिदमब्रवीत् ।। अहं पौलस्त्यतनयो दशग्रीवश्च नामतः ।।
मुनेर्विश्रवसो यस्तु तृतीयो ब्रह्मणोऽभवत् ।। १४ ।।
एवमुक्तस्तदा राम राक्षसेन्द्रेण दानवः ।। महर्षेस्तनयं ज्ञात्वा मयो[2] हर्षमुपागतः ।।
दातुं दुहितरं तस्मै रोचयामास तत्र[3] वै ।। १५ ।।
करेण तु करं तस्या ग्राहयित्वा मयस्तदा ।। प्रहसन्प्राह दैत्येन्द्रो राक्षसेन्द्रमिदं वचः ।। १६ ।।
इयं ममात्मजा राजन्हेमयाऽप्सरसा धृता ।। कन्या मन्दोदरी नाम पत्न्यर्थं प्रतिगृह्यताम् ।। १७ ।।
बाढमित्येव तं राम दशग्रीवोऽभ्यभाषत ।। प्रज्वाल्य तत्र चैवाग्निमकरोत्पाणिसंग्रहम् ।। १८ ।।
स हि तस्य मयो राम शापाभिज्ञस्तपोधनात् ।। विदित्वा तेन सा दत्ता तस्य पैतामहं कुलम् ।।१९।।
अमोघां तस्य शक्तिं च प्रददौ परमाद्भुताम् ।। परेण तपसा लब्धां जघ्निवाँल्लक्ष्मणं यया ।। २० ।।
एवं स्वीकृतदारो वै लङ्काया ईश्वरः प्रभुः ।। गत्वा तु नगरीं भार्ये भ्रातृभ्यां समुपाहरत् ।। २१ ।।
वैरोचनस्य दौहित्रीं वज्रज्वालेति नामतः ।। तां भार्यां कुम्भकर्णस्य रावणः [4]समकल्पयत् ।। २२ ।।
गन्धर्वराजस्य सुतां शैलूषस्य महात्मनः ।। सरमां नाम धर्मज्ञां लेभे भार्यां विभीषणः ।। २३ ।।
तीरे तु सरसो वै तु संजज्ञे मानसस्य हि ।। सरस्तदा मानसं तु ववृधे जलदागमे ।। २४ ।।
मात्रा तु तस्याः कन्यायाः स्नेहेनाक्रन्दितं वचः ।। सरो मा[5] वर्धयस्वेति ततः सा सरमाऽभवत् ।।२५।।
एवं ते कृतदारा वै रेमिरे तत्र राक्षसाः ।। स्वां स्वां भार्यामुपागम्य गन्धर्वा इव नन्दने ।। २६ ।।
ततो मन्दोदरी पुत्रं मेघनादमजीजनत् ।। स एष इन्द्रजिन्नाम युष्माभिरभिधीयते ।। २७ ।।
जातमात्रेण हि पुरा तेन रावणसूनुना ।। रुदता सुमहान्मुक्तो नादो जलधरोपमः ।। २८ ।।

---

१०—११ ।। मायावीति । मायावी च वालिना पलायितोत्रैव प्रविष्टो नाशित इति ज्ञेयं ।। १२—१६ ।। धृतागर्भप्रसूतेत्यर्थ. ।।१७—१८।। शापाभिज्ञ इति । दारुणप्रकृतिर्भविष्यतीति श्रुतशापवृत्तान्त इति भाव । पुलस्त्यशापश्चेत्केवल कुलमेव बहु-मन्यतेत्यर्थः ।। १९—२३ ।। सरमाशब्दं निर्वक्ति—तीरेत्यादि ।। सरो मा वर्धयस्वेत्युक्त्या सरमेति नामासीत् । पृषोदरादित्वात्साधु. ।। २४—

---

ति० अस्या हेमाया । मायावी तन्नामक ।।१२।। स० सचपौलस्त्य कइत्यतस्तमाह—मुनेरिति । कीदृशस्यविश्रवम योविश्रवा ब्रह्मणस्तृतीय ब्रह्मा पुलस्त्य विश्रवाइतितृतीयइत्यर्थ ।। ति० पौलस्त्यतनयइत्युक्तमेवार्थस्पष्टमाह—मुनेरिति । योमुनिर्विश्रवा ब्रह्मणस्तृतीयापत्य । तस्यभगवतोविश्रवसोऽहतनयइत्यर्थ ।। १४ ।। ति० तत्रवै महाकुलप्रसूतत्वज्ञानकाले ।। १५ ।। स० ननुमन्दोदरीमहापतिव्रतेतितत्रश्रूयते । तादृशीकन्यामयोग्यायरावणायमय कथदत्तवानित्यतोवक्ति—सहीति । स मय । तस्य रावणस्य तप्रति । तपोधनात् विश्रवस । दारुणप्रकृतिर्भविष्यतीतिय शाप तदभिज्ञ सन् तस्यपैतामहंकुल पुलस्त्यवशविदित्वा सादत्ता । अयभाव । विजनेरावणपश्यन्मय अयपित्रादत्तशाप क्रूरप्रकृतिरिमापरमसुन्दरीकन्यामेकान्तेदृष्टवान्नपरित्यजति । बलादपहरत्येव । बलवाश्चासौ पुलस्त्यगोत्रोत्पन्नश्च । देयाचकन्येतिसर्वमालोच्य ता ददाविति ।। १९ ।। स० प्रभु समर्थ भ्रातृभ्या कुंभकर्णविभीषणयोरर्थे । भार्ये द्वेकन्ये । समुपाहरत् ।। उदवाहयदितिपाठेविवाहयामासेत्यर्थ ।। २१ ।। स० ववृधे अवर्धत । कन्यावस्थानप्रदेशपर्यन्तमितिशेष ।। ति० तदा अस्यामानससरस्तीरेउत्पत्तिकाले । मानससर जलदागमनिमित्तत-स्तच्छिशुपर्यन्तंववृधे । ततोभीताया कन्यायाआक्रन्दितश्रुत्वातस्यामात्राकन्यास्नेहेनसरोमावर्धतेत्युक्तं । तत साकन्यासरमाऽभवत् । पृषोदरादित्वात्साधु ।। २४—२५ ।। ति० जलधरोपम जलधरनादोपम ।। २८ ।। इतिद्वादश सर्ग ।। १२ ।।

[ पा० ] १ क—घ. द्वौसुतौतुममलस्याभार्यायासबभूवतु . २ ङ—ट. मयोदानवपुङ्गव . ३ झ. तत्रवै. ४ घ. ज. समुदावहत्. ५ क. ग. ङ. च. छ. झ. ञ. ट. मावर्धतेत्युक्तं.

जडीकृता च सा लङ्का तस्य नादेन राघव ॥ पिता तस्याकरोन्नाम मेघनाद इति स्वयम् ॥ २९ ॥
सोवर्धत तदा राम रावणान्तःपुरे शुभे ॥ रक्ष्यमाणो वरस्त्रीभिश्छन्नः काष्ठैरिवानलः ॥
मातापित्रोर्महाहर्षं जनयन्रावणात्मजः ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे द्वादशः सर्गः ॥ १२ ॥

---

## त्रयोदशः सर्गः ॥ १३ ॥

ब्रह्मोत्सृष्टनिद्रानिपीडितेनकुंभकर्णेन स्ववचनाद्रावणनिर्मापितगृहवरे चिरस्वापारभ ॥ १ ॥ रावणेन देवर्ष्यादिविहिंसने तदसहमानेनकुबेरेण तन्निवर्तनायरावणंप्रति दूतप्रेषणम् ॥ २ ॥ कुबेरनिदेशश्रवणरुष्टेनरावणेन दूतशिरश्छेदनम् ॥ ३ ॥

अथ लोकेश्वरोत्सृष्टा तत्र कालेन केनचित् ॥ निद्रा समभवत्तीव्रा कुम्भकर्णस्य रूपिणी ॥ १ ॥
ततो भ्रातरमासीनं कुम्भकर्णोऽब्रवीद्वचः ॥ निद्रा मां बाधते राजन्कारयस्व ममालयम् ॥ २ ॥
विनियुक्तास्ततो राज्ञा शिल्पिनो विश्वकर्मवत् ॥ [ अकुर्वन्कुम्भकर्णस्य कैलाससममालयम् ] ॥३॥
विस्तीर्णं योजनं शुभ्रं ततो द्विगुणमायतम् ॥ दर्शनीयं निराबाधं कुम्भकर्णस्य चक्रिरे ॥ ४ ॥
स्फाटिकैः काञ्चनैश्चित्रैः स्तम्भैः सर्वत्र शोभितम् ॥ वैडूर्यकृतसोपानं किङ्किणीजालकं तथा ॥ ५ ॥
दान्ततोरणविन्यस्तं वज्रस्फटिकवेदिकम् ॥ मनोहरं सर्वसुखं कारयामास राक्षसः ॥
सर्वत्र सुखदं नित्यं मेरोः पुण्यां गुहामिव ॥ ६ ॥
तत्र निद्रासमाविष्टः कुम्भकर्णो महाबलः ॥ बहून्यब्दसहस्राणि शयानो न प्रबुध्यते ॥ ७ ॥
निद्राभिभूते तु तदा कुम्भकर्णे दशाननः ॥ देवर्षियक्षगन्धर्वान्संजघ्ने हि निरङ्कुशः ॥ ८ ॥
उद्यानानि च चित्राणि नन्दनादीनि यानि च ॥ तानि गत्वा सुसंक्रुद्धो भिनत्ति स दशाननः ॥९॥
नदीं गज इव क्रीडन्वृक्षान्वायुरिव क्षिपन् ॥ नगान्वज्र इवोत्सृष्टो विध्वंसयति राक्षसः ॥ १० ॥
तथावृत्तं तु विज्ञाय दशग्रीवं धनेश्वरः ॥ कुलानुरूपं धर्मज्ञो वृत्तं संस्मृत्य चात्मनः ॥ ११ ॥
सौभ्रात्रदर्शनार्थं तु दूतं वैश्रवणस्तदा ॥ लङ्कां संप्रेषयामास दशग्रीवस्य वै हितम् ॥ १२ ॥
स गत्वा नगरीं लङ्कामाससाद विभीषणम् ॥ मानितस्तेन धर्मेण पृष्टश्चागमनं प्रति ॥ १३ ॥

---

३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥

लोकेश्वरेण ब्रह्मणोत्सृष्टा प्रेषिता । रूपिणी मूर्ता ॥ १—३ ॥ विस्तीर्णं योजनमिति । तिर्यङ्मानेनेति शेषः । ततो द्विगुणमायतं । युद्धकाण्डे योजनायतमित्युक्त द्विगुणयोजनायतपरं ॥ ४ ॥ किङ्किणीजालकं प्रान्तेषु किङ्किणीजालयुक्तं ॥ ५ ॥ दान्तो दन्तविकार. ॥ ६—१० ॥ कुलानुरूप वृत्तमिति । असक्तमिति शेषः ॥ ११ ॥ हितं हितपरं ॥ १२ ॥ आगमनप्रतीति कार्यमिति शेषः ॥ १३ ॥

---

स० निद्रा तद्देवता रूपिणी स्वव्याप्यजृंभणादिलिङ्गवतीसती । समभवत् ॥ १ ॥ स० ममालय निद्रागारं ॥ २ ॥ स० विश्वकर्मवद्विद्यमानाःशिल्पिन ॥ ३ ॥ स० योजनं तिर्यङ्मानेन । तत तिर्यङ्मानात् । योजनायतेतियुद्धकाण्डोक्तेस्तुयोजनाभ्यामायतायोजनायतेतिद्विगुणपरतयार्थोबोध्यः । स० निराबाधं मध्येशयनस्थलेव्यवधायकस्तंभादिरहित ॥ ४ ॥ स० सर्वत्र भित्तिसमीपे । अन्यथाइयत्परिमाणवत कुंभकर्णस्यशयनंनस्यादितिबोध्य ॥५॥ ति० दान्ततोरणं दन्तविकारतोरण तस्यविन्यस्तं विन्यासोयत्रतत् ॥ ६ ॥ स० नचबुध्यते नाबुध्यत । अत्रयद्वक्तव्यं तत्प्रागेवोक्तं ॥ ७ ॥ ति० आत्मन कुलानुरूपंवृत्तं संस्मृत्येति बोधनीयत्वेनेतिशेष ॥ ११ ॥ ति० हितमिति वक्तुमितिशेष ॥ १२ ॥

[ पा० ] १ इदमर्धं क—घ. छ. ज. पाठेषुदृश्यते. २ घ. स्फटिकशोभितं. ३ झ. ञ. ट. नचबुध्यते.

पृष्ट्वा च कुशलं राज्ञो ज्ञातीनां च विभीषणः ॥ सभायां दर्शयामास तमासीनं दशाननम् ॥ १४ ॥
स दृष्ट्वा तत्र राजानं दीप्यमानं स्वतेजसा ॥ जयेति वाचा संपूज्य तूष्णीं समभिवर्तत ॥ १५ ॥
तं तत्रोत्तमपर्यङ्के वरास्तरणशोभिते ॥ उपविष्टं दशग्रीवं दूतो वाक्यमथाब्रवीत् ॥ १६ ॥
राजन्वदामि ते सर्वं भ्राता तव यदब्रवीत् ॥ उभयोः सदृशं वीर वृत्तस्य च कुलस्य च ॥ १७ ॥
साधु पर्याप्तमेतावत्कृतश्चारित्रसंग्रहः ॥ साधुधर्मे व्यवस्थानं क्रियतां यदि शक्यते ॥ १८ ॥
दृष्टं मे नन्दनं भग्नमृषयो निहताः श्रुताः ॥ देवतानां समुद्योगस्त्वत्तो राजन्मम श्रुतः ॥ १९ ॥
निराकृतश्च बहुशस्त्वयाऽहं राक्षसाधिप ॥ अपराद्धा हि बाल्याच्च रमणीयाः स्वबान्धवाः ॥ २० ॥
अहं तु हिमवत्पृष्ठं गतो धर्ममुपासितुम् ॥ रौद्रं व्रतं समास्थाय नियतो नियतेन्द्रियः ॥ २१ ॥
तत्र देवो मया दृष्टः सह देव्या मया प्रभुः ॥ सव्यं चक्षुर्मया दैवात्तत्र देव्यां निपातितम् ॥२२॥
का न्वियं स्यादिति शुभा न खल्वन्येन हेतुना ॥ रूपं ह्यनुपमं कृत्वा रुद्राणी तत्र तिष्ठति ॥२३॥
देव्या दिव्यप्रभावेन दग्धं सव्यं ममेक्षणम् ॥ रेणुध्वस्तमिव ज्योतिः पिङ्गलत्वमुपागतम् ॥ २४ ॥
ततोऽहमन्यद्विस्तीर्णं गत्वा तस्य गिरेस्तटम् ॥ तूष्णीं वर्षशतान्यष्टौ समाधारं महाव्रतम् ॥ २५ ॥
समाप्ते नियमे तस्मिंस्तत्र देवो महेश्वरः ॥ प्रीतः प्रीतेन मनसा प्राह वाक्यमिदं प्रभुः ॥ २६ ॥
पैङ्गल्यं यदवाप्तं हि देव्या रूपनिरीक्षणात् ॥ प्रीतोस्मि तव धर्मज्ञ तपसा तेन सुव्रत ॥ २७ ॥
मया चैतद्व्रतं चीर्णं त्वया चैव धनाधिप ॥ तृतीयः पुरुषो नास्ति यश्चरेद्व्रतमीदृशम् ॥
व्रतं सुनिश्चयं ह्येतन्मया ह्युत्पादितं पुरा ॥ २८ ॥
तत्सखित्वं मया सौम्य रोचयस्व धनेश्वर ॥ तपसा निर्जितश्चैव सखा मम भवानघ ॥ २९ ॥
देव्या दग्धं प्रभावेन यच्च सव्यं तवेक्षणम् ॥ [ पैङ्गल्यं यदवाप्तं हि देव्या रूपनिरीक्षणात् ॥ ]

राज्ञः कुबेरस्य । त दूतं ॥१४—१६॥ उभयोरिति । उभयोर्मातापित्रोः । कुलस्याभिजनस्य तयोर्वृत्तस्य च सदृश यथा तथा ॥ १७ ॥ साधु सम्यक् । चारित्रसंग्रहः कृतश्चेदेतावदेव पर्याप्तं । उक्तमर्थं विवृणोति—साध्वित्यादि । व्यवस्थान व्यवस्थिति. । यदि शक्यत इत्युक्त्या ज्येष्ठतया नियोगबुद्धिर्व्यावर्तते ॥ १८ ॥ तस्य क्रूरत्वान्मायाचारित्रव्यवस्थानेन विना किं कृतमित्यत्राह—दृष्टमित्यादिना ॥ त्वत्तः त्वया । मम मया । समुद्योग इति । प्रतिक्रियाकरणायेतिशेषः ॥ १९ ॥ रमणीयाः तोषणीयाः । स्वबान्धवाः बाल्यादज्ञानादपराद्धाः त्वया कृतापराधा आसन्नित्यर्थः ॥ २० ॥ रौद्रं रुद्रप्रसादकव्रत । इदं तु केदारव्रतमित्याहु. ॥२१—२८॥ रोचयस्व स्वरुचितं कुरु

ति० तूष्णीसमभिवर्तत क्षणमात्रमितिशेष । स० तूष्णीसमभिवर्तत झटितिनचोचितवचनमितितूष्णीभावइतिभाव ॥ १५ ॥ ति० उभयो मातापित्रो । कुलस्य तयोर्वृत्तस्यचसदृशम् । स० उभयो वकुलस्यतवश्रोतुश्चेत्युभयो । नकेवलमेतावत् किंतुकुलस्य पौलस्त्यकुलस्य वृत्तस्यच चरित्रस्यचसदृशं ॥ कुलस्यवृत्तस्यचेत्युभयोर्वा ॥ १७ ॥ ति० एतावत्पर्याप्त एतावदेवपापमलं । इत परन्चारित्रसग्रह कृत्य. कार्य. । तदेवदार्ढ्यायपुनराह—साध्विति । व्यवस्थान व्यवस्थिति । यदिशक्यतइत्यनेन क्रूरत्वान्नियोगबुद्धिर्व्यावर्त्यते । कतकस्तु—कृतश्चारित्रसग्रहइतिपठित्वा साधु सम्यक् चारित्रसग्रह आचारसग्रह । कृत सपादितश्चेदेतावदेवपर्याप्तमिहामुत्राभ्युदयाय । अस्यैवविवरणसाध्वित्याह ॥ १८ ॥ ति० उपदेशप्रयोजकमसद्वृत्तं दृश्यतेश्रूयतेचेत्याह—दृष्टमिति । मे मया । त्वत्त त्वन्निमित्त । देवतानासमुद्योग प्रतिक्रियासपादनविषयइतिशेष ॥ १९ ॥ ति० दग्धं नष्टं । सव्येतरत्तु रेणुध्वस्तं रेणुस्पर्शकलुषीकृत । ज्योतिषा तेजसापिङ्गल । तस्यभावस्तत्वं । यद्वा कलुषितज्योतिरिवपिङ्गलप्राप्तमित्यर्थ ॥ २४ ॥ ति० समधार समधारय ॥ २५ ॥

[ पा० ] १ क—घ ज. समभवत्तदा २ झ. सापराधोपिबालोहिरक्षितव्य स्वबान्धवै.. च. छ. अपराद्धोपिबालोहि. ३ ङ. च. झ. ञ. ट. व्रत. ४ घ. रुद्राणीक्रीडतेस्वयं. ग. रुद्राणीक्रीडतेतदा. ५ क. ख. ग. ङ. च. छ. झ. ट. सुदुश्चर. ६ क. ङ—ट. पाठेष्विदमर्धंदृश्यते.

एकाक्षिपिङ्गलेत्येवं नाम स्थास्यति शाश्वतम् ॥ ३० ॥
एवं तेन सखित्वं च प्राप्यानुज्ञां च शंकरात् ॥ आगत्य च श्रुतोऽयं मे तव पापविनिश्चयः ॥३१॥
तदधर्मिष्ठसंयोगान्निवर्त कुलदूषणात् ॥ चिन्त्यते हि वधोपायः सर्षिसङ्घैः सुरैस्तव ॥ ३२ ॥
एवमुक्तो दशग्रीवः क्रुद्धः संरक्तलोचनः ॥ हस्तौ दन्तांश्च संपीड्य वाक्यमेतदुवाच ह ॥ ३३ ॥
विज्ञातं ते मया दूत वाक्यं यैस्य प्रभाषसे ॥ नैतत्त्वमसि नैवासौ भ्रात्रा येनासि चोदितः ॥ ३४ ॥
हितं नैष ममैतद्धि ब्रवीति धनरक्षकः ॥ महेश्वरसखित्वं तु मूढ श्रावयसे किल ॥ ३५ ॥
न चेदं क्षमणीयं मे यदेतद्भाषितं त्वया ॥ यदेतावन्मया कालं दूत तस्य तु मर्षितम् ॥ ३६ ॥
न हन्तव्यो गुरुर्ज्येष्ठो ममायमिति मन्यते ॥ तस्य त्विदानीं श्रुत्वा मे वाक्यमेषा कृता मतिः ॥
त्रीँल्लोकानपि जेष्यामि बाहुवीर्यमुपाश्रितः ॥ ३७ ॥
एतन्मुहूर्तमेवाहं तस्यैकस्य तु वै कृते ॥ चतुरो लोकपालांस्तान्नयिष्यामि यमक्षयम् ॥ ३८ ॥
एवमुक्त्वा तु लङ्केशो दूतं खड्गेन जघ्निवान् ॥ ददौ भक्षयितुं ह्येनं राक्षसानां दुरात्मनाम् ॥३९॥
एवं कृतस्वस्त्ययनो रथमारुह्य रावणः ॥ त्रैलोक्यविजयाकाङ्क्षी ययौ यत्र धनेश्वरः ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

---

## चतुर्दशः सर्गः ॥ १४ ॥

त्रैलोक्यविजयप्रतिज्ञानपूर्वकं प्रहस्तादिसचिवैःसेनयाचसहनिर्गतेनरावणेन प्रथमंकुबेरजयाय कैलासंप्रतिगमनम् ॥ १ ॥ कुबेरसेनाभिःसहयुध्यतारावणेन सूर्यभानुनामकयक्षवधे यक्षसेनाभी रावणभयात्पलायनम् ॥ २ ॥

ततस्तु सचिवैः सार्धं षड्भिर्नित्यं बलोद्धतैः ॥ महोदरप्रहस्ताभ्यां मारीचशुकसारणैः ॥ १ ॥
धूम्राक्षेण च वीरेण नित्यं समरगृध्नुना ॥ संवृतः प्रययौ श्रीमान्क्रोधाल्लोकान्दहन्निव ॥ २ ॥

---

॥ २९—३० ॥ आगत्य स्वगृहमागत्य । मे स्थितेन मया । अधर्मः तव पापविनिश्चयः श्रुतः ॥ ३१ ॥ तदधर्मत्वाद्धेतो । कुलदूषणादधर्मिष्ठसंसर्गान्निवर्त निवर्तस्व ॥ ३२—३३ ॥ वाक्यं विज्ञातमिति वाक्यतात्पर्यार्थो विज्ञातइत्यर्थः ॥ ३४ ॥ धनरक्षको मे हितमिति ब्रवीति । एतद्धि मे न हितं न सममनुचितं चेत्यर्थः । हे मूढ महेश्वरसखित्व तद्रूपबलसंपत्ति । श्रावयसे किल ॥३५॥ इदं न मर्षणीयं यत्त्वयाभिहितं भाषितं तदपि न मर्षणीयमित्यर्थः ॥ ३६ ॥ मम हृदयं गुरुः न हन्तव्य इति पूर्वमेवमन्यते स्म । तथापि एषा मतिर्जायेत । कृतशब्दार्थमाह—त्रीनिति ॥ ३७ ॥ तस्यैकस्य कृते वधप्रसङ्ग इति शेषः ॥३८॥ एन खड्गच्छिन्नमित्यर्थः ॥३९—४० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

---

ति० निवर्त निवर्तस्व ॥ ३२ ॥ ति० एतन्मुहूर्तं अस्मिन्मुहूर्ते ॥ ३८ ॥ ति० एवंखड्गच्छिन्नंदूतं भक्षयितु आज्ञाकृतवानितिशेषः ॥ ३९ ॥ स० यत्रधनेश्वरः तस्यैवमुख्योद्देश्यत्वादितिभाव. ॥ ४० ॥ इतित्रयोदश सर्ग ॥ १३ ॥

ति० समन्त्रिणं महोदरादिषण्मन्त्रिसहितं ॥ ४ ॥

[ पा० ] १ ङ. च ज—ट. आगतेनमयाचैवंश्रुतस्तेपाप. क ग. घ. आगम्यच. २ ङ. च झ ज ट. हस्तान्दन्तांश्च सुपिष्य. ३ ङ. झ. ञ. ट. यत्त्वंप्रभाषसे. ४ क—ङ. ज—ट. नैवेदं. ५ च. यदिदानींमयाकामंतद्वचस्तस्यमर्षितं. ६ ग. च. ञ. तत कृत.

पुराणि स नदीः शैलान्वनान्युपवनानि च ॥ अतिक्रम्य मुहूर्तेन कैलासं गिरिमागमत् ॥ ३ ॥
सन्निविष्टं गिरौ तस्मिन्राक्षसेन्द्रं निशम्य तु ॥ युद्धेऽत्यर्थकृतोत्साहं दुरात्मानं समन्त्रिणम् ॥ ४ ॥
यक्षा न शेकुः संस्थातुं प्रमुखे तस्य रक्षसः ॥ राज्ञो भ्रातेति विज्ञाय गता यत्र धनेश्वरः ॥ ५ ॥
ते गत्वा सर्वमाचख्युर्भ्रातुस्तस्य चिकीर्षितम् ॥ अनुज्ञाता ययुर्हृष्टा युद्धाय धनदेन ते ॥ ६ ॥
ततो बलानां संक्षोभो व्यवर्धत महोदधेः ॥ तस्य नैर्ऋतराजस्य शैलं संचालयन्निव ॥ ७ ॥
ततो युद्धं समभवद्यक्षराक्षससंकुलम् ॥ व्यथिताश्चाभवंस्तत्र सचिवा राक्षसस्य ते ॥ ८ ॥
स दृष्ट्वा तादृशं सैन्यं दशग्रीवो निशाचरः ॥ हर्षनादान्बहून्कृत्वा स क्रोधादभ्यधावत ॥ ९ ॥
ये तु ते राक्षसेन्द्रस्य सचिवा घोरविक्रमाः ॥ तेषां सहस्रमेकैकं यक्षाणां समयोधयन् ॥ १० ॥
ततो गदाभिर्मुसलैरसिभिः शक्तितोमरैः ॥ हन्यमानो दशग्रीवस्तत्सैन्यं समगाहत ॥ ११ ॥
स निरुच्छ्वासवत्तत्र वध्यमानो दशाननः ॥ वर्षद्भिरिव जीमूतैर्धाराभिरवरुध्यत ॥ १२ ॥
न चकार व्यथां चैव यक्षशस्त्रैः समाहतः ॥ महीधर इवाम्भोदैर्धाराशतसमुक्षितः ॥ १३ ॥
स दुरात्मा समुद्यम्य कालदण्डोपमां गदाम् ॥ प्रविवेश ततः सैन्यं नयन्यक्षान्यमक्षयम् ॥ १४ ॥
स कक्षमिव विस्तीर्णं शुष्केन्धनमिवाकुलम् ॥ वातेनाग्निरिवायत्तो यक्षसैन्यं ददाह तत् ॥ १५ ॥
तैस्तु तत्र महामात्यैर्महोदरशुकादिभिः ॥ अल्पावशेषास्ते यक्षाः कृता वातैरिवाम्बुदाः ॥ १६ ॥
केचित्समाहता भग्नाः पतिताः समरक्षितौ ॥ ओष्ठांश्च दशनैस्तीक्ष्णैरदशन्कुपिता रणे ॥ १७ ॥
श्रान्ताश्चान्योन्यमालिङ्ग्य भ्रष्टशस्त्रा रणाजिरे ॥ सीदन्ति च तदा यक्षाः कूला इव जलेन ह ॥१८॥
हतानां गच्छतां स्वर्गं युध्यतां पृथिवीतले ॥ प्रेक्षतामृषिसङ्घानां न बभूवान्तरं दिवि ॥ १९ ॥
भग्नांस्तु तान्समालक्ष्य यक्षेन्द्रांस्तु महाबलान् ॥ धनाध्यक्षो महाबाहुः प्रेषयामास यक्षकान् ॥२०॥
एतस्मिन्नन्तरे राम विस्तीर्णबलवाहनः ॥ प्रेषितो न्यपतद्यक्षो नाम्ना संयोधकण्टकः ॥ २१ ॥
तेन चक्रेण मारीचो विष्णुनेव रणे हतः ॥ पतितो भूतले शैलात्क्षीणपुण्य इव ग्रहः ॥ २२ ॥
ससंज्ञस्तु मुहूर्तेन स विश्रम्य निशाचरः ॥ तं यक्षं योधयामास स च भग्नः प्रदुद्रुवे ॥ २३ ॥

---

न शेकुरित्यत्र हेतुमाह—राज्ञो भ्रातेति ॥५—८॥ हर्षनादं सिंहनादं ॥ ९ ॥ सहस्राणां यक्षाणामेकैकं सहस्रं प्रत्येकमयोधयन् ॥ १०—१८ ॥ पृथिवीतले युध्यतां हतानामत एव स्वर्गस्थानां तथा व्योम्नि स्थित्वा युद्धं प्रेक्षतां प्रेक्षमाणानामृषिसघानां च । दिवि आकाशे । अन्तरमवस्थातुमवकाशः न बभूव ।

---

**ति०** राज्ञोभ्रातेति कुबेरस्यभ्रातेत्यर्थ ॥ **स०** नकेवलमसामर्थ्यं प्रमुखानवस्थानेनिमित्त । किंतु राज्ञोभ्रातेतिविज्ञायापिगता. ॥ ५ ॥ **शि०** उदधे सक्षोभइवनैर्ऋतराजस्यबलानासक्षोभ । शैलं कैलास। संचालयन्निवव्यवर्धत ॥७॥ **ति०** येरावणसचिवा तेषामेकैक तेषा सहस्रसंख्यानायक्षाणासहस्रमयोधयत् ॥ १० ॥ **शि०** वर्षद्भिर्जीमूतैरिव यक्षैरितिशेष ॥ अवरुध्यत अवारुध्यत ॥ **स०** धाराभि शस्त्रधाराभि । अवरुध्यत निरुद्धोभूत् ॥ १२ ॥ **ति०** धाराशतसमुक्षित शस्त्रक्षतजन्यरुधिरधाराशतसमुक्षित ॥ १३ ॥ **ति०** कक्ष तृण तद्वद्विस्तीर्ण । शुष्केन्धनमिवाकुलं । शुष्केन्धनेआकुलत्वंचझटितिवह्निव्याप्यत्वं । यक्षसैन्यं वातेनादीप्तोऽग्निरिवरावणोददाह ॥ १५ ॥ **स०** तैस्तु तैरपि ॥ १६ ॥ **ति०** भग्ना भग्नगात्राः ॥ १७ ॥ **ति०** कूलाइतिलिङ्गव्यत्यय ॥ १८ ॥ **ति०** सयोधाना समक्षयोद्धृणा कण्टक सहर्तेति सयोधकण्टक ॥ २१ ॥ **स०** चक्रायुधसाम्याद्विष्णुदृष्टान्त । पतनेदृष्टान्त. क्षीणपुण्यइवेति ॥ २२ ॥ **ति०** सच यक्षश्च ॥ २३ ॥

**[ पा० ]** १ ङ. च. झ ञ. ट. युद्धेप्सुंतंकृतोत्साहं २ क. ग. घ. तेसहस्रंसहस्राणामेकैकं झ तेषासहस्रमेकैको. ३ क.—घ. ज. तैर्निरुच्छ्वासवत्तत्र. ४ च. छ. ञ. रिवादीप्तो. ग. रिवाध्मातो. क ख. घ ज. रिवायत्तोऽदहत्सैन्यंसुदारुणं. ५ घ. ङ. च. झ. ञ. ट. युध्यतामथधावतां. ६ ग. तेनयक्षेण. ७ च. पातित·पृथिवीपृष्ठेक्षीण. क.—घ. ज. पतित पृथिवी भेजेक्षीणपुण्यइवांबरात्.

ततः काञ्चनचित्राङ्गं वैडूर्यरजसोक्षितम् ॥ मर्यादां प्रतिहाराणां तोरणान्तरमाविशत् ॥ २४ ॥
[1]तं तु राजन्दशग्रीवं प्रविशन्तं निशाचरम् ॥ सूर्यभानुरिति ख्यातो द्वारपालो न्यवारयत् ॥ २५ ॥
स वार्यमाणो यक्षेण प्रविवेश निशाचरः ॥ यदा तु वारितो राम न व्यतिष्ठत्स राक्षसः ॥ २६ ॥
ततस्तोरणमुत्पाट्य तेन यक्षेण ताडितः ॥ रुधिरं प्रस्रवन्भाति शैलो धातुस्रवैरिव ॥ २७ ॥
स[2] शैलशिखराभेण तोरणेन समाहतः ॥ जगाम न क्षतिं वीरो वरदानात्स्वयंभुवः ॥ २८ ॥
तेनैव तोरणेनाथ यक्षस्तेनाभिताडितः ॥ नादृश्यत तदा यक्षो भस्मीकृततनुस्तदा ॥ २९ ॥
ततः प्रदुद्रुवुः सर्वे दृष्ट्वा रक्षःपराक्रमम् ॥ ततो नदीर्गुहाश्चैव विविशुर्भयपीडिताः ॥
त्यक्तप्रहरणाः श्रान्ता विवर्णवदनास्तदा ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

---

## पञ्चदशः सर्गः ॥ १५ ॥

रावणेन कुबेरप्रेषितमाणिभद्रनामकयक्षेन्द्रपराजयः ॥ १ ॥ तत कुबेरेण रावणंप्रतिगर्हणपूर्वकं मारीचादिविद्रावणम् ॥ २ ॥ रावणेन मायायुद्धेनकुबेरपराभवनपूर्वक तदीयपुष्पकापहरणेन कैलासादवतरणम् ॥ ३ ॥

ततस्ताँल्लक्ष्य वित्रस्तान्यक्षेन्द्रांश्च सहस्रशः ॥ धनाध्यक्षो महायक्षं माणिचारमथाब्रवीत् ॥ १ ॥
रावणं जहि यक्षेन्द्र दुर्वृत्तं पापचेतसम् ॥ शरणं भव वीराणां यक्षाणां युद्धशालिनाम् ॥ २ ॥
एवमुक्तो महाबाहुर्माणिभद्रः सुदुर्जयः ॥ वृतो यक्षसहस्रैस्तु चतुर्भिः समयोधयत् ॥ ३ ॥
ते गदामुसलप्रासैः शक्तितोमरमुद्गरैः ॥ अभिघ्नन्तस्तदा यक्षा राक्षसान्समुपाद्रवन् ॥ ४ ॥
कुर्वन्तस्तुमुलं युद्धं चरन्तः श्येनवल्लघु ॥ बाढं प्रयच्छ नेच्छामि दीयतामिति भाषिणः ॥ ५ ॥
ततो देवाः सगन्धर्वा ऋषयो ब्रह्मवादिनः ॥ दृष्ट्वा तत्तुमुलं युद्धं परं विस्मयमागमन् ॥ ६ ॥
यक्षाणां तु प्रहस्तेन सहस्रं निहतं रणे ॥ महोदरेण चानिन्द्यं सहस्रमपरं हतम् ॥ ७ ॥
क्रुद्धेन च तदा राजन्मारीचेन युयुत्सुना ॥ निमेषान्तरमात्रेण द्वे सहस्रे निपातिते ॥ ८ ॥
क्व च यक्षार्जवं युद्धं क्व च मायाबलाश्रयम् ॥ रक्षसां पुरुषव्याघ्र तेन तेऽभ्यधिका युधि ॥ ९ ॥

---

व्योम्नि निबिडमभूदित्यर्थः ॥ १९—२८ ॥ भस्मीकृततनुरिति । रावणकृततोरणदण्डसमाहननेन चूर्णित इत्यर्थः ॥ २९—३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

---

स० मर्यादा अपरिचितपुरुषप्रवेशपरिहारायावधिभूता । तोरणस्यान्तर मध्यस्थानमाविशत् । प्रतिहाराणा द्वारपाना । आविशत् रावणइतिशेष ॥ २४ ॥ ति० तोरणेन तोरणस्थदण्डेन ॥ २८ ॥ स० सर्वे यक्षा ॥ ३० ॥ इतिचतुर्दश सर्ग ॥१४॥

ति० लक्ष्य लक्षयित्वा ॥ १ ॥ स० रावणमिति । तस्यानुपदमेव शिवेनदीयमानंनाम सार्वज्ञादनेनोदाहृतं । शरणमाश्रयो रक्षकोवा ॥ २ ॥ स० केचिदेवंभाषिण समुपाद्रवन् । कश्चिद्ददतियुद्धंप्रयच्छेति । अपरस्तु बाढंओमितिवदति । अन्यस्तु त्वयासहयुद्धंनेच्छामि । प्रतिभटस्तु कुतोनेच्छसियुद्धंदीयतामित्येवंभाषिणइत्यन्वय ॥ ५ ॥ स० यक्षार्जवं यक्षाणामार्जवं ऋतुत्वं यस्मिंस्तद्युद्धंक । क्वचरक्षसामायाबलाश्रयं मायाबलमाश्रयो यस्यतत्तथा । पुरुषव्याघ्र राम । तेननिमित्तेन तेराक्षसा युधि युद्धे

[ पा० ] १ क. ख. ग. च. ज. ततोरामदशग्रीवं. २ क.—घ. ज. राक्षसोयक्षसृष्टेनतोरणेनसमाहतः । नक्षतिंप्रययौ रामवरात्सलिलजन्मनः.

धूम्राक्षेण समागम्य माणिभद्रो महारणे ॥ मुसलेनोरसि क्रोधात्ताडितो न च कम्पितः ॥ १० ॥
ततो गदां समाविध्य माणिभद्रेण राक्षसः ॥ धूम्राक्षस्ताडितो मूर्ध्नि विह्वलः स पपात ह ॥ ११ ॥
धूम्राक्षं ताडितं दृष्ट्वा पतितं शोणितोक्षितम् ॥ अभ्यधावत संग्रामे माणिभद्रं दशाननः ॥ १२ ॥
तं क्रुद्धमभिधावन्तं माणिभद्रो दशाननम् ॥ शक्तिभिस्ताडयामास तिसृभिर्यक्षपुङ्गवः ॥ १३ ॥
ताडितो माणिभद्रस्य मुकुटे प्राहरद्रणे ॥ तस्य तेन प्रहारेण मुकुटं पार्श्वमागतम् ॥ १४ ॥
ततः संयुध्यमानेन विष्टब्धो न व्यकम्पत ॥ तदाप्रभृति यक्षोसौ पार्श्वमौलिरिति स्मृतः ॥ १५ ॥
तस्मिंस्तु विमुखे यक्षे माणिभद्रे महात्मनि ॥ संनादः सुमहान्राजंस्तस्मिञ्शैलेऽभ्यवर्तत ॥ १६ ॥
ततो दूरात्प्रददृशे धनाध्यक्षो गदाधरः ॥ शुक्रप्रोष्ठपदाभ्यां च पद्मशङ्खसमावृतः ॥ १७ ॥
स दृष्ट्वा भ्रातरं संख्ये शापाद्विभ्रष्टगौरवम् ॥ उवाच वचनं धीमान्युक्तं पैतामहे कुले ॥ १८ ॥
यन्मया वार्यमाणस्त्वं नावगच्छसि दुर्मते ॥ पश्चादस्य फलं प्राप्य ज्ञास्यसे निरयं गतः ॥ १९ ॥
यो हि मोहाद्विषं पीत्वा नावगच्छति दुर्मतिः ॥ स तस्य परिणामान्ते जानीते कर्मणः फलम् ॥२०॥
देवता नाभिनन्दन्ति धर्मयुक्तेन केनचित् ॥ येन त्वमीदृशं भावं नीतः सन्नावबुध्यसे ॥ २१ ॥
मातरं पितरं यो हि आचार्यं चावमन्यते ॥ स पश्यति फलं तस्य प्रेतराजवशं गतः ॥ २२ ॥
अध्रुवे हि शरीरे यो न करोति तपोर्जनम् ॥ स पश्चात्तप्यते मूढो मृतो दृष्ट्वाऽऽत्मनो गतिम् ॥२३॥
धर्माद्राज्यं धनं सौख्यमधर्माद्दुःखमेव च ॥ तस्माद्धर्मं सुखार्थाय कुर्यात्पापं विसर्जयेत् ॥ २४ ॥

माणिचारः माणिभद्रः ॥ १—१३ ॥ ताडितः शक्तिताडितः । रावणः माणिभद्रं गदया मुकुटे प्राहरत् । तच्च मुकुटं प्रहारात्पार्श्वमागत ॥ १४ ॥ संयुध्यमानेन माणिभद्रेण विष्टब्धो निरुद्धः न व्यकम्पत ॥ १५—१६ ॥ शङ्खपद्मसमावृतः शङ्खपद्मनिध्यभिमानिदेवैः संवृतः । शुक्रप्रोष्ठपदाभ्यां च सह प्रददृशे । शुक्रप्रोष्ठपदौ मन्त्रिणौ ॥ १७ ॥ शापात् पितृकृतदारुणत्वशापात् । विभ्रष्टगौरवः वन्दनादिप्रयोजकज्येष्ठगौरवरहितः । युक्तमिति । पैतामहे कुले उत्पत्तेरिति शेषः ॥ १८ ॥ यदिति ॥ अस्य फलं कुलाचारस्य फल परिपाकं प्राप्य ॥ १९—२० ॥ धर्मयुक्तेन तव केनचिद्व्यापारेण त्वामिदानीं नाभिनन्दन्ति । धर्माभावात्त्वयि विमुखा भवन्तीत्यर्थः । येन देवतावैमुख्येन । त्वमीदृशं क्रूरं भाव नीतः सन्नावबुध्यसे ॥ २१—२२ ॥ तपस अर्जनं संपादनं ॥ २३—

अभ्यधिका यक्षतोपिदक्षाइतिभाव ॥ ९ ॥ **ति०** तिसृभि शक्तिभिस्ताडितोराक्षसेन्द्र. गदया माणिभद्रस्यमुकुटे मुकुटस्थले । प्राहरत् । तच्चमुकुटस्थलं तेनप्रहारेण पार्श्वं एकपार्श्वं । आगतं प्राप्तं ॥ १४ ॥ **ति०** सनादोरक्षसा ॥१६॥ **ति०** शुक्रप्रोष्ठपदाभ्यानिधिरक्षकमन्त्रिभ्यासह धनाध्यक्ष प्रददृशे । भ्रातरमितिसबन्ध ॥ १७ ॥ **ति०** वार्यमाण असद्वृत्तादितिशेषः । नावगच्छसि । अस्य मद्वचनाकरणस्य पूज्यपूजाव्यतिक्रमादिदोषस्यच । फल परिपाक । प्राप्य तद्वशान्निरयगतोज्ञास्यसे । अहंसाधुनकृतवान् । कितुपापमेवेतिपरितप्यसइत्यर्थ ॥ १९ ॥ **ति०** तत्कालानवगतदु खसाधनस्यकालान्तरेफलपाकतोज्ञानेदृष्टान्त — **योहीति** । **स०** मोहात् अन्नाभावप्रयुक्तवैचित्यात् । यद्विषत्वेनयोनावगच्छति नज्ञातवान् । तत्पीत्वा तस्यविषस्यपरिणामान्ते तद्विकारेणान्ते रसप्रसरणकाले । कर्मण स्वानुष्ठितस्य । फलंजानीते । तथा त्वमपीतिभाव ॥२०॥ **ति०** दैवतानि ब्रह्मरुद्रादय । धर्मयुक्तेन केनचित्प्राकृतेनव्यापारेण त्वामिदानीं नाभिनन्दन्ति । त्वयिविमुखाभवति । सप्रतित्वयिधर्माभावात् येनदेवतानभिनन्दनेन त्वमीदृशभावंक्रूरनीत प्रापित सन्नावबुध्यसे । **स०** दैवतानि वृन्दारका । ननन्दन्तित्वादृष्ट्वा । कुतस्तदनभिनन्दनमित्यतआह—धर्मयुक्तेनेति । केनचिद्धर्मयुक्तेन महतादैवेनकर्तृणा येन त्वदुष्कर्मरूपकरणेन ईदृशंभावं क्रूरत्वंनीत । अतोदेवतानभिनन्दनमितिनावबुध्यसे । तद्दैवंनावबुध्यसइतिवा । भगवतैवैवंविधानाद्विबुधास्त्वद्विमुखाइतिभाव ॥ २१ ॥ **ति०** तस्य मात्रा-

**[ पा० ]** १ ङ. झ. ञ. ट सक्रुद्ध. २ ङ. झ. ट. पार्श्वमौलिरभूत्किल. ३ ङ.—ट. विमुखीभूते. ४ ख. छ. झ. ञ. ट. शैलेव्यवर्धत. ५ क. ख. घ. ज. मानव . ६ ङ. झ. ञ. ट. दैवतानिननन्दन्ति. ७ ङ. च छ. झ. ञ. ट. मातरंपितरंविप्रमाचार्यं. क. ग. घ. योहिमातृपितृभ्रातॄनाचार्य. ८ ङ. च. छ. झ. ञ. ट. गत्वात्मनोगतिं. ९ धर्माद्राज्यंधनमिति. पापस्यहि फलमितिचश्लोकद्वय. झ. पाठेनदृश्यते.

पापस्य हि फलं दुःखं तद्भोक्तव्यमिहात्मना ॥ तस्मादात्मापघातार्थं मूढः पापं करिष्यति ॥२५॥
कस्यचिन्न हि दुर्बुद्धेश्छन्दतो जायते मतिः ॥ [ दैवं[1] चेष्टयते सर्वं हतो दैवेन हन्यति ॥ ]
यादृशं कुरुते कर्म तादृशं फलमश्नुते ॥ २६ ॥
बुद्धिरूपं[2] फलं पुत्राञ्छौर्यं धीरत्वमेव च ॥ प्राप्नुवन्ति नरा[3] लोके निर्जितं पुण्यकर्मभिः ॥ २७ ॥
एवं निरयगामी त्वं यस्य ते मतिरीदृशी ॥ न त्वां समभिभाषिष्ये सद्वृत्तेष्वेष[4] निर्णयः ॥ २८ ॥
एवमुक्तास्ततस्तेन तस्यामात्याः समाहताः[5] ॥ [ दृष्ट्वा[6]ऽथ धनदं राम राक्षसाः सुमहाबलाः ] ॥
मारीचप्रमुखाः सर्वे विमुखा विप्रदुद्रुवुः ॥ २९ ॥
ततस्तेन दशग्रीवो यक्षेन्द्रेण महात्मना ॥ गदयाऽभिहतो मूर्ध्नि न च स्थानात्प्रकम्पितः ॥ ३० ॥
ततस्तौ राम निघ्नन्तौ तदाऽन्योन्यं महामृधे ॥ न विह्वलौ न च श्रान्तौ[7] बभूवतुरमर्षणौ ॥ ३१ ॥
आग्नेयमस्त्रं तस्मै स मुमोच धनदस्तदा ॥ राक्षसेन्द्रो वारुणेन तदस्त्रं प्रत्यवारयत् ॥ ३२ ॥
ततो मायां प्रविष्टोसौ राक्षसीं राक्षसेश्वरः ॥ रूपाणां शतसाहस्रं विनाशाय चकार च ॥ ३३ ॥
व्याघ्रो वराहो जीमूतः पर्वतः सागरो द्रुमः ॥ यक्षो दैत्यस्वरूपी च सोऽदृश्यत दशाननः ॥ ३४ ॥
बहूनि च करोति स्म दृश्यन्ते न त्वसौ ततः ॥ ३५ ॥
प्रतिगृह्य ततो राम महदस्त्रं दशाननः ॥ जघान मूर्ध्नि धनदं व्याविध्य महतीं गदाम् ॥ ३६ ॥
एवं स तेनाभिहतो विह्वलः शोणितोक्षितः ॥ कृत्तमूल इवाशोको निपपात धनाधिपः ॥ ३७ ॥
ततः पद्मादिभिस्तत्र निधिभिः स[8] तदावृतः ॥ धनदोच्छ्वासितस्तैस्तु वनमानीय नन्दनम् ॥ ३८ ॥
निर्जित्य राक्षसेन्द्रस्तं धनदं हृष्टमानसः ॥ पुष्पकं तस्य जग्राह विमानं जयलक्षणम् ॥ ३९ ॥
काञ्चनस्तम्भसंवीतं वैडूर्यमणितोरणम् ॥ मुक्ताजालप्रतिच्छन्नं सर्वकामफलप्रदम्[10] ॥ ४० ॥
मनोजवं कामगमं कामरूपं विहङ्गमम् ॥ मणिकाञ्चनसोपानं तप्तकाञ्चनवेदिकम् ॥ ४१ ॥
देवोपवाह्यमक्षय्यं सदा दृष्टिमनःसुखम् ॥ बह्वाश्चर्यं भक्तिचित्रं ब्रह्मणा परिनिर्मितम् ॥ ४२ ॥

२५॥ दुर्बुद्धेर्बुद्धिरहितस्य कस्यापि पुरुषस्य । छन्दत' पितृमात्रादिसेवा विना स्वेच्छामात्रेण ।धीर्मति. शुभमतिर्न हि जायते ॥ २६—२७ ॥ एवं क्रूरकर्मा त्वं निरयगामी भविष्यसि । यस्य ते ईदृशी मति तादृशं त्वां न समभिभाषिष्ये । दुर्वृत्तस्य विषये एष एव हि निर्णय इत्यर्थः ॥ २८ ॥ रावणवधूयमप्यसभाष्या इत्युक्ता इत्यर्थः । समाहता. धनदेन ताडिताः ॥ २९—३२ ॥ माया प्रविष्ट अदृश्यत्व प्राप्त इत्यर्थः । निधिभिर्देवताभि । धनदोच्छ्वासित इति सधिरार्षः ॥ ३३—३८ ॥ जयलक्षण जयचिह्न । ख्यापयमानस्य । अत्रमात्रादिपदपूज्योपलक्षण ॥२२॥ ति० आत्मनोगतिं आत्मन कर्मसपादितागति ॥२३॥ स० मति सद्बुद्धि । दुर्बुद्धेरित्युक्त्या मतिशब्द सन्मतिपर ॥ २६ ॥ ति० विनाशाय धनदनाशाय ॥ ३३ ॥ ति० बहूनि शस्त्रवर्षाणिकरोतिस्म । तान्येवदृश्यन्ते नत्वसौ । तथामायाप्रयुक्तव्याघ्रादयएवदृश्यन्तेनत्वसौ ॥ ३५ ॥ शि० अशोक तन्नामकोवृक्षइवनिपपात ॥३७॥ स० उच्छ्वासित' सविरार्ष । आप्यायित ॥ ३८ ॥ स० कामगमं स्वामीच्छानुसारेणगतिमत् । विहङ्गमं आकाशगतिमत् । विहायसोविहादेश । गमश्चेतिखजन्त ॥ ४१ ॥ ति० ब्रह्मणा विश्वकर्मणा । स० भक्तिमार्ग । ताभिश्चित्र । ब्रह्मणा प्रयोजककर्त्रा विश्वकर्मणानिर्मित ॥ ४२ ॥

[ पा० ] १ इदमर्धं च. छ पाठयोर्दृश्यते २ ङ. च छ. झ ञ ट. ऋद्धिंरूपंबलपुत्रान्वित्तंशूरत्वमेवच क. ख घ— ज. बुद्धिंरूपंबलंवित्तंपुत्रान्माहात्म्यमेवच ३ क. ख. घ. ज नरा सर्वैस्वकृतैं पूर्वकर्मभि.. ४ क—घ. ज दुर्वृत्तस्यैषनिर्णय . ५ क—घ. ज. समाहिता एतदुत्तर. सकृद्धाराक्षसान्क्रूरान्निजघ्नु सयुगेतदा. इत्यर्धमधिकंदृश्यते. ६ इदमर्धं च छ. पाठयोर्दृश्यते. ७ ङ. च. छ. झ. ञ. ट श्रान्तौतावुभौयक्षराक्षसौ. ८ च. छ. चकारश्चननादच. ९ ग सनृपस्तदा. १० ग. झ. सर्वकालफलद्रुमं. ख. ङ.—ज. ट. सर्वकामफलद्रुम.

निर्मितं सर्वकामैस्तु मनोहरमनुत्तमम् ॥ न तु शीतं न चोष्णं च सर्वर्तुसुखदं शुभम् ॥ ४३ ॥
स तं राजा समारुह्य कामगं वीर्यनिर्जितम् ॥ जितं त्रिभुवनं मेने दर्पोत्सेकात्सुदुर्मतिः ॥ ४४ ॥
जित्वा वैश्रवणं देवं कैलासात्समवातरत् ॥ ४५ ॥

स्वतेजसा विपुलमवाप्य तं जयं प्रतापवान्विमलकिरीटहारवान् ॥
रराज वै परमविमानमास्थितो निशाचरः सदसि गतो यथाऽनलः ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

---

## षोडशः सर्गः ॥ १६ ॥

कैलासादवतीर्यमध्येस्कन्दवनंगतेरावणे रुद्राज्ञयारुद्धसंचारेसतिपुष्पके तत्कारणंबहुधातर्कयतिसति तंप्रतिनन्दिकेश्वरेण तस्यशंकरक्रीडास्थानत्वोक्त्या गमनप्रतिरोधनम् ॥ १ ॥ तत्ररावणे नन्दिकेश्वरप्रति वानरमुखइतिसावज्ञमपहसतिसति तंप्रतिनन्दिना वानरैः पराभवसंभवकारकशापदानम् ॥ २ ॥ रावणेन विमानस्तंभनजरोषान्निजभुजानामध प्रसारणेन कैलासचालनम् ॥ ३ ॥ हरेणपादाङ्गुष्ठेनशैलावष्टंभे अधस्सक्तबाहुनादशाननेन वर्षसहस्रमहारावमाक्रोशनम् ॥ ४ ॥ मन्त्रिबोधनाद्रावणेन स्तुत्याप्रसादितेनरुद्रेण तस्यैरावणनामदानपूर्वकं तदीप्सितवरप्रदानम् ॥ ५ ॥

स जित्वा धनदं राम भ्रातरं राक्षसाधिपः ॥ महासेनप्रसूतिं तद्ययौ शरवणं महत् ॥ १ ॥
अथापश्यद्दशग्रीवो रौक्मं शरवणं महत् ॥ गभस्तिजालसंवीतं द्वितीयमिव भास्करम् ॥ २ ॥
स पर्वतं समारुह्य कंचिद्रम्यवनान्तरम् ॥ [1]अपश्यत्पुष्पकं तत्र राम विष्टम्भितं तदा ॥ ३ ॥
[3]विष्टब्धं पुष्पकं दृष्ट्वा ह्यगमं कामगं कृतम् ॥ अचिन्तयद्राक्षसेन्द्रः सचिवैस्तैः समावृतः ॥ ४ ॥
किन्निमित्तं चेच्छया मे नेदं गच्छति पुष्पकम् ॥ पर्वतस्योपरिष्ठस्य कर्मेदं कस्यचिद्भवेत् ॥ ५ ॥
ततोऽब्रवीत्तदा राम मारीचो बुद्धिकोविदः ॥ नेदं निष्कारणं राजन्पुष्पकं यन्न गच्छति ॥ ६ ॥
[ शिखरस्थं गिरिस्थस्य कर्म कस्येदमद्भुतम् ॥ निश्चितं राजराजेन पुष्पकं विनिवारितम् ] ॥ ७ ॥
अथवा पुष्पकमिदं धनदान्नान्यवाहनम् ॥ अतो निष्पन्दमभवद्धनाध्यक्षविनाकृतम् ॥ ८ ॥
इति वाक्यान्तरे तस्य करालः कृष्णपिङ्गलः ॥ वामनो विकटो मुण्डी नन्दी [5]ह्रस्वभुजो बली ॥ ९ ॥

---

यन्तीति शेषः ॥ ३९—४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥

महासेनप्रसूतिं स्कन्दप्रसूतिस्थानं । अपश्यदित्यादि पूर्वसर्गान्तोक्तसंक्षेपप्रपञ्चनं ॥ १—२ ॥ विष्टम्भितं रुद्राज्ञयारुद्धसचारं । कामगं पुष्पकं अगममिति राक्षसश्चिन्तयामासेत्यन्वयः ॥ ३—४ ॥ कस्य कस्य

---

स० स्वतेजसा स्ववरसामर्थ्येन । सदसि यज्ञसदस्स्थाने । ति० कतकस्तुत्रयस्त्रिंशच्छ्लोकसंख्यामत्रसर्गेलिलेख ॥ ४६ ॥ इतिपञ्चदश सर्ग ॥ १५ ॥

स० धनदान्नान्यवाहनमित्यत्र सामर्थ्याद्धनदादन्योयस्तद्वाहनंनभवतीतिलभ्यते । अथवा अन्यवाहनंनभवतीति नान्यवाहनं । धनदेनाततिगच्छतीतिधनदात् । धनदाश्चतन्नान्यवाहनचेति । धनदेनेत्यस्याकर्तृकरणत्वेपिबाहुलकाददतेक्विप् । यद्वा धनदमातयतीत्यन्तर्णीतण्यर्थाददतेर्धनदपदेनगम्यादिसमास ॥ ८ ॥ स० नन्दआनन्दोस्यास्तीतिनन्दी । सईश्वरोयस्येति । तेननन्दीतिनाधिकं ॥ ९ ॥

[ पा० ] १ ङ.—ट. प्रेक्षतेपुष्पकं. २ क. ग. घ. ज. दिवि ३ ङ—ट. विष्टब्धंकिमिदकस्मान्नागमत्कामगंकृतं. ४ इदमर्धद्वयं ख. छ. पाठयोर्दृश्यते. ५ ङ.—ट. ह्रस्वभुजो.

ततः पार्श्वमुपागम्य भवस्यानुचरोऽब्रवीत् ॥ नन्दीश्वरो वचश्चेदं राक्षसेन्द्रमशङ्कितः ॥ १० ॥
निवर्तस्व दशग्रीव शैले क्रीडति शंकरः ॥ ११ ॥
सुपर्णनागयक्षाणां देव[1]गन्धर्वरक्षसाम् ॥ सर्वेषामेव भूतानामगम्यः पर्वतः कृतः ॥
तन्निवर्तस्व दुर्बुद्धे मा विनाशमवाप्स्यसि ॥ १२ ॥
इति नन्दिवचः श्रुत्वा क्रोधात्कम्पितकुण्डलः ॥ रोषात्तु ताम्रनयनः पुष्पकादवरुह्य सः ॥
कोऽयं शंकर इत्युक्त्वा शैलमूलमुपागतः ॥ १३ ॥
सो[2]ऽपश्यन्नन्दिनं तत्र देवस्यादूरतः स्थितम् ॥ दीप्तं शूलमवष्टभ्य द्वितीयमिव शंकरम् ॥ १४ ॥
तं दृष्ट्वा वानरमुखमवज्ञाय स राक्षसः ॥ प्रहासं मुमुचे [3]तत्र सतोय इव तोयदः ॥ १५ ॥
तं क्रुद्धो भगवान्नन्दी शंकरस्यापरा तनुः ॥ अब्रवीत्तत्र तद्रक्षो दशाननमुपस्थितम् ॥ १६ ॥
[ [4]यस्माद्वानरमूर्तिं मां दृष्ट्वा राक्षस दुर्मते ॥ मौर्ख्यात्त्वमवजानीषे परिहासं च मुञ्चसि ॥ १७ ॥ ]
यस्माद्वानररूपं मामवज्ञाय दशानन ॥ अशनीपातसंकाश[5]मुपहासं प्रमुक्तवान् ॥ १८ ॥
तस्मान्मद्रूपसंपन्ना मद्वीर्यसमतेजसः ॥ उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानराः ॥ १९ ॥
नखदंष्ट्रायुधाः क्रूरा मनःसंपातरंहसः ॥ युद्धोन्मत्ता बलोद्रिक्ताः शैला इव विसर्पिणः ॥ २० ॥
ते तव प्रबलं दर्पमुत्सेधं च पृथग्विधम् ॥ व्यपनेष्यन्ति संभूय सहामात्यसुतस्य च ॥ २१ ॥
किंत्विदानीं मया [6]शक्यं हन्तुं त्वां हे निशाचर[7] ॥ न हन्तव्यो हतस्त्वं हि पूर्वमेव स्वकर्मभिः ॥२२॥
इत्युदीरितवाक्ये तु देवे तस्मिन्महात्मनि ॥ देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्युता ॥ २३ ॥
अचिन्तयित्वा स तदा नन्दिवाक्यं [8]महाबलः ॥ पर्वतं तु समासाद्य वाक्यमाह दशाननः ॥२४॥
पुष्पकस्य गतिश्छिन्ना यत्कृते मम गच्छतः ॥ तमिमं शैलमुन्मूलं करोमि तव गोपते ॥ २५ ॥
केन प्रभावेन [9]भवो नित्यं क्रीडति राजवत् ॥ विज्ञातव्यं न जानीते भयस्थानमुपस्थितम् ॥ २६ ॥
एवमुक्त्वा ततो राम भुजान्विक्षिप्य पर्वते ॥ तोल[10]यामास [11]तं शैलं स शैलः समकम्पत ॥ २७ ॥
चालनात्पर्वतस्यैव गणा देवस्य कम्पिताः ॥ चचाल पार्वती चापि तदाश्लिष्टा महेश्वरम् ॥ २८ ॥
ततो राम [12]महादेवो देवानां प्रवरो हरः ॥ पादाङ्गुष्ठेन तं शैलं पीडयामास लीलया ॥ २९ ॥
पीडितास्तु ततस्तस्य शै[13]लस्याधोगता भुजाः ॥ विस्मिताश्चाभवंस्तत्र सचिवास्तस्य रक्षसः ॥ ३० ॥

---

पुरुषस्य । इदं कर्म भवेत् ॥ ५—२४ ॥ गोपते | हे वृषभपते रुद्र ॥ २५—२९ ॥ अधोगताः पर्वत-

---

**ति०** पार्श्वं रावणस्येतिशेषः । अशङ्कितउपागम्याब्रवीदित्यन्वयः ॥ १० ॥ **ति०** कृतः ईश्वरेच्छयेतिशेषः ॥ १२ ॥ **ति०** प्रहासमुमुचे कृतवानित्यर्थः ॥ १५ ॥ **स०** शङ्करस्यापरातनुः तद्वद्विद्यमानः । उपस्थितंदशाननं तद्रक्षः पुष्पकादवरुह्यागतं । तं चोरसदृशं रावणंप्रत्यब्रवीत् । 'तकारः कीर्तितश्चोरे' इतिविश्वः ॥ १६ ॥ **ति०** दर्पः आन्तरः । उत्सेधः शारीरः ॥ २१ ॥ **स०** तवनसामर्थ्यंकिल व्यर्थंकिंकृत्यंसइत्यतः कथयति—**किंत्विति** । किंच यद्यपिमयानहन्तव्यः । सत्यसंकल्पभगवत्संकल्पात् 'मयैववध्यौभवतत्रिजन्मसु'इत्येवंरूपात् । हतः तत्प्रायः ॥ २२ ॥ **ति०** तद्वाक्यसमनन्तरंदेवदुन्दुभ्यादिप्रवृत्तिस्तुतच्छापेनरावणवधनिश्चयजसंतोषात् ॥ २३ ॥ **ति०** पर्वते पर्वताधस्तात् ॥ २७ ॥ **ति०** आश्लिष्टा आश्लिष्टवती । कर्तरिक्तः ॥ २८ ॥

[ पा० ] १ क.—घ. ज. दैत्यदानवरक्षसां. २ क.—घ. ज. नन्दीश्वरमथापश्यदविदूरस्थितंविभुं. ३ क.—घ. मौर्ख्यात्सतोयइवतोयदः. ४ क.—घ. ज. पाठेष्वयंश्लोकोदृश्यते. ५ च. छ. झ. ञ. ट. मपहासं. ६ च. छ. शक्यंकर्तुंयन्नावबुध्यते. ७ क.—घ. ज. निशाचर. ८ क.—घ. ज. वाक्यमेतदुवाचह. ९ क. ख. ग. भवान्नित्यं. १० क. चालयामास. ११ ङ. च. छ. झ. ञ. ट. तंशीघ्रं क.—घ. ज. तंशैलंसमृगव्यालपादपं. १२ क.—घ. ज. महादेव.प्रहसन्वीक्ष्यतत्कृतं. १३ ङ. च. छ. झ. ञ. ट. शैलस्तंभोपमाभुजाः.

रक्षसा तेन रोषाच्च भुजानां पीडनात्तदा ॥ मुक्तो विरावः सहसा त्रैलोक्यं येन कम्पितम् ॥३१॥
[मानुषाः शब्दवित्रस्ता मेनिरे लोकसंक्षयम् ॥ देवताश्चापि संक्षुब्धाश्चलिताः स्वेषु वर्त्मसु ॥ ३२ ॥
विस्फोटिताश्च गिरयो नागा गर्जन्ति चासकृत् ॥ निश्चेष्टाः सत्ववन्तोपि नदन्ति बहुशस्तदा ॥३३॥
समुद्राश्चुक्षुभुस्तत्र प्रचकंपे वसुंधरा ॥ राम नागाः सगन्धर्वाः स्तब्धाक्षास्तत्र तत्रसुः ॥ ३४ ॥ ]
मेनिरे वज्रनिष्पेषं तस्यामात्या युगक्षये ॥ तदा वर्त्मस्थचलिता देवा इन्द्रपुरोगमाः ॥ ३५ ॥
समुद्राश्चापि संक्षुब्धाश्चलिताश्चापि पर्वताः ॥ यक्षा विद्याधराः सिद्धाः किमेतदिति चाब्रुवन् ॥३६॥
अथ ते मन्त्रिणस्तस्य विक्रोशन्तमथाब्रुवन् ॥ तोषयस्व महादेवं नीलकण्ठमुमापतिम् ॥ ३७ ॥
तमृते शरणं नान्यं पश्यामोत्र दशानन ॥ स्तुतिभिः प्रणतो भूत्वा तमेव शरणं व्रज ॥
कृपालुः शंकरस्तुष्टः प्रसादं ते विधास्यति ॥ ३८ ॥
एवमुक्तस्तदाऽमात्यैस्तुष्टाव वृषभध्वजम् ॥ सामभिर्विविधैः स्तोत्रैः प्रणम्य स दशाननः ॥ ३९ ॥
[ कालो महान्नरश्रेष्ठ रुवतो रक्षसो गतः ॥ ] संवत्सरसहस्रं तु रुदतो रक्षसो गतम् ॥ ४० ॥
ततः प्रीतो महादेवः शैलाग्रे विष्ठितः प्रभुः ॥ मुक्त्वा चास्य भुजान्राम प्राह वाक्यं दशाननम् ॥४१॥
प्रीतोसि तव वीर्यस्य शौण्डीर्याच्च दशानन ॥ शैलाक्रान्तेन यो मुक्तस्त्वया रावः सुदारुणः ॥४२॥
यस्माल्लोकत्रयं चैतद्रावितं भयमागतम् ॥ तस्मात्त्वं रावणो नाम नाम्ना राजन्भविष्यसि ॥ ४३ ॥
देवता मानुषा यक्षा ये चान्ये जगतीतले ॥ एवं त्वामभिधास्यन्ति रावणं लोकरावणम् ॥ ४४ ॥
गच्छ पौलस्त्य विस्रब्धं पथा येन त्वमिच्छसि ॥ मया चैवाभ्यनुज्ञातो राक्षसाधिप गम्यताम् ॥४५॥
एवमुक्तस्तु लङ्केशः शंभुना स्वयमब्रवीत् ॥ प्रीतो यदि महादेव वरं मे देहि याचतः ॥ ४६ ॥
अवध्यत्वं मया प्राप्तं देवगन्धर्वदानवैः ॥ राक्षसैर्गुह्यकैर्नागैर्ये चान्ये बलवत्तराः ॥ ४७ ॥
मानुषान्न गणे देव स्वल्पास्ते मम संमताः ॥ दीर्घमायुश्च मे प्राप्तं ब्रह्मणस्त्रिपुरान्तक ॥
वाञ्छितं चायुषः शेषं शस्त्रं त्वं च प्रयच्छ मे ॥ ४८ ॥

---

स्याधोभागगताः। भुजाः पीडिता आसन् ॥३०—४४॥ मया त्वमभ्यनुज्ञातः । पुष्पकेण गमनायेति शेषः ॥४५—४७॥ न गणे न गणयामि । ब्रह्मदत्तदीर्घायुष्याद्यो भागोगतस्तस्माच्छेषमवशिष्टं वाञ्छितं इदा-

---

ति० तस्यामात्यास्तदीयंशब्द युगक्षयेजायमान वज्रनिष्पेषमेनिरे । तदा तच्छब्दश्रवणकाले । वर्त्मसुस्थिता देवा वर्त्मभ्य. प्रचलिताइत्यर्थ । स० 'तदासनात्प्रचलितादेवा' इतिसरल.पाठ । तदावर्त्मसुचलिताइतिपठित्वा चलीतिवर्णद्वयेभवितव्य-गुरुत्वमनादृत्य वर्त्मसुस्थितादेवा वर्त्मभ्य प्रचलिताइतिशेषकरणेचनागोजिभट्टेननिमित्तंतत्पुस्तकस्यविनायककरलेखनतोन्यन्नेक्षामहे ॥ ३५ ॥ ति० शौटीर्यात् । चात्स्तुते ॥ ४२ ॥ ति० रावितं शब्दित ॥ ४३ ॥ ति० यदिप्रीतोयदिचवर ददासि तदा याचतोमेदेहीत्यर्थ ॥ ४६ ॥ ति० नगणे नगणयामीत्यर्थ । तत्रहेतु —स्वल्पाइति । स्वल्पबलवीर्याइत्यर्थ. ॥ वाञ्छितंचायुश्शेष भगवद्दत्तदीर्घायुष्याद्योभागोगतः तस्माच्छेषमवशिष्टमायुर्वाञ्छितं तदेतैर्दुष्कर्मभिर्यथाऽविनष्टभवतितथाप्रयच्छ । तस्मिंश्चायुषि सर्वजयायशस्त्रचदिव्यप्रयच्छ ॥ स० स्वल्पा स्वल्पबलाइति नगणे नगणयामि ॥ विधिदत्तायुषोमध्ये इयताकालेनगतयदायुस्तस्यशेषं गतपूरणोपयुक्तं वाञ्छितमपेक्षितं ॥ प्रयच्छ दिश । तथाशस्त्रचमेप्रयच्छ । अनेनचतुराननवरोऽमरणविषय सावधिकदीर्घकालविषयोज्ञायते ॥ ४८ ॥

—[ पा० ] १ क.—घ. ज तेनरक्षोधिपेनात्रवेदनार्तभुजेनवै. २ क —घ. ज. विराव सुमहान् ३ क —घ ज येनपूरितं. ४ मानुषा शब्दवित्रस्ताइत्यादयस्तत्रतत्रसुरित्यन्ता श्लोका क.—घ. ज पाठेषुदृश्यन्ते ५ झ. ट. वर्त्मसुचलिता ६ इदमर्धं क ख. पाठ्योर्दृश्यते. ७ क. सवत्सरतुसपूर्णरुवतो ८ च. छ. ट. विस्मित प्रभु:. ९ झ. शौटीर्याच्च. १० क —घ. ज. मुक्त:स्वर.परमदारुण. ११ क —घ तेनभविष्यसि. १२ क.—घ. ज. गच्छगच्छसुविस्रब्धस्तथायेनलं. १३ क.—घ. तिर्यङ्मनुष्यान्नगणेदुर्बलाइतिचिन्तयन्.

एवमुक्तस्ततस्तेन रावणेन स शंकरः ॥ ददौ खड्गं महादीप्तं चन्द्रहासमिति श्रुतम् ॥
आयुषश्चावशेषं च स्थित्वा भूतपतिस्तदा ॥ ४९ ॥
दत्त्वोवाच ततः शंभुर्नावज्ञेयमिदं त्वया ॥ अवज्ञातं यदि हि ते मामेवैष्यत्यसंशयः ॥ ५० ॥
एवं महेश्वरेणैव कृतनामा स रावणः ॥ अभिवाद्य महादेवमारुरोहाथ पुष्पकम् ॥ ५१ ॥
ततो महीतले राम परिचक्राम रावणः ॥ क्षत्रियान्सुमहावीर्यान्बाधमान इतस्ततः ॥ ५२ ॥
केचित्तेजस्विनः शूराः क्षत्रिया युद्धदुर्मदाः ॥ तच्छासनमकुर्वन्तो विनेशुः सपरिच्छदाः ॥ ५३ ॥
अपरे दुर्जयं रक्षो जानन्तः प्राज्ञसंमताः ॥ जिताः स्म इत्यभाषन्त राक्षसं बलदर्पितम् ॥ ५४ ॥
[ एवं दर्पबलोत्सिक्तो रावणो लोकरावणः ॥ प्रतापावनतीं कुर्वन्राष्ट्राणि विचचारह ॥ ५५ ॥ ]

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे षोडशः सर्गः ॥ १६ ॥

---

## सप्तदशः सर्गः ॥ १७ ॥

कदाचनहिमवत्सानौ तपस्यन्तीवेदवतींनामकांचनकाञ्चनप्रभांकन्यामवलोकितवतारावणेन तांप्रति तस्यास्तपःप्रयोजनादिप्रश्न ॥ १ ॥ तया स्वस्यश्रीनारायणभार्याभावस्य स्वतप.प्रयोजनत्वाभिधानम् ॥ २ ॥ रावणेन स्वभार्यात्वस्वीकरणं याचितया तया तदनङ्गीकरणे रावणेन बलात्तत्केशपाशपरामर्शनम् ॥ ३ ॥ तया स्वतपोमहिम्नाऽसीभूतेनस्वहस्तेन रावणकरपरामृष्टस्वकेशपाशच्छेदनपूर्वक तंप्रति जन्मान्तरेस्वस्यतद्वधहेतूभवनप्रतिज्ञानपूर्वकमग्नौप्रवेशनम् ॥ ४ ॥ अगस्त्येनरामप्रति तस्याएव पुनःसीतात्वेनप्रादुर्भावाभिधानम् ॥ ५ ॥

अथ राजन्महाबाहुर्विचरन्स महीतले ॥ हिमवत्सानुमासाद्य परिचक्राम रावणः ॥ १ ॥
तत्रापश्यत्स वै कन्यां कृष्णाजिनजटाधराम् ॥ आर्षेण विधिना चैनां दीप्यन्तीं देवतामिव ॥ २ ॥
स दृष्ट्वा रूपसंपन्नां कन्यां तां सुमहाव्रताम् ॥ काममोहपरीतात्मा पप्रच्छ प्रहसन्निव ॥ ३ ॥
किमिदं वर्तसे भद्रे विरुद्धं यौवनस्य ते ॥ न हि युक्ता तवैतस्य रूपस्य तपसः क्रिया ॥ ४ ॥
रूपं तेऽनुपमं भीरु कामोन्मादकरं नृणाम् ॥ न युक्तं तपसि स्थातुं निर्गतो ह्येष निर्णयः ॥ ५ ॥

---

नीमेव दुष्कर्मणा केनाप्यविनष्ट सम्प्रयच्छ ॥ ४८ ॥ आयुषश्चेति । ब्रह्मा दीर्घायुष्यंतावद्दत्तवान् तत्रास्यापमृत्यवो देवतादिभ्यः प्राप्ताः परिहृता भवन्तु । रामेण वध इति स्थित्वा मत्वेत्यर्थः ॥ ४९ ॥ इदं खड्गरूपास्त्रं नावज्ञेय । एकस्मिन्नपि दिने पूजौदासीन्यं न कर्तव्यमित्यर्थः । अवज्ञात यदि ॥५०—५५॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

---

आर्षेण विधिना तपोनुष्ठानेन ॥ २ ॥ प्रहसन्निति । दुर्लभकन्यालाभात्प्रहासः ॥ ३ ॥ इद प्रतिक्रिया ।

---

ति० आयुषश्चावशेषंददौ । शापाद्यनाश्यत्वेनददावित्यर्थ ॥ स० "खड्गस्तुनिस्त्रिंशचन्द्रहासासिरिष्टय" इत्यमरोक्तखड्गपर्यायादयमन्यश्चन्द्रहासशब्द.शिवनिस्त्रिंशवाचीतिसानिध्येविद्यमानं नाम्नाचन्द्रहासश्रुतंप्रसिद्धंखड्गददावित्यन्वय । अन्यथेतिशब्दस्यचन्द्रहासपदयोगेप्रथमात्वप्राप्ते । 'इतिस्वरूपेसानिध्ये' इतिविश्व ॥ ४९ ॥ ति० इदं नावज्ञेयं । शस्त्रस्यास्यपूजौदासीन्यं नकार्यमित्यर्थ. ॥ ५० ॥ इतिषोडश सर्ग ॥ १६ ॥

स० राजानंमायाचन्तंनचेतिनवदेत् प्रायोमादृशप्राप्त्यैतपोनिष्ठेयमित्यभिप्रायेणवा हासोरावणस्येतिज्ञेयं ॥ ३ ॥ ति० निर्गत. प्रसिद्धएषनिर्णय । वृद्धानामितिशेष ॥ स० नृणा पुंसां कामोन्मादकरं कामकारणकउन्मादश्चित्तभ्रशस्तंकुर्वत् । एतादृशि एतादृशेवयसितपसिस्थातुंनयुक्तं । एवमवस्थाननयुक्तमित्यर्थ । कुतइत्यतउक्त हियस्मात् निर्णयोनिर्गत शास्त्रतइति । प्रसिद्धइतियावत् ॥

[ पा० ] १ क. ग. घ. साक्षान्महेश्वरेणैव. २ अयंश्लोक च छ. पाठयोर्दृश्यते. ३ ख.—ट. हिमवद्वनमासाद्य. ४ क. च.—ट. विधिनायुक्ता. ५ क.—घ. च. छ. तपन्तीं. ६ घ.—छ. रूपस्यैवप्रतिक्रिया. ७ ग. तपसाभद्रेविफलोह्येष.

[1]कस्यासि किमिदं भद्रे कश्च भर्ता वरानने ॥ [2]येन संभुज्यसे भीरु स नरः पुण्यभाग्भुवि ॥
पृच्छतः शंस मे सर्वं कस्य हेतोः [3]परिश्रमः ॥ ६ ॥
एवमुक्ता तु सा कन्या रावणेन यशस्विनी ॥ अब्रवीद्विधिवत्कृत्वा तस्यातिथ्यं तपोधना ॥ ७ ॥
कुशध्वजो मम पिता ब्रह्मर्षिरमितप्रभः ॥ बृहस्पतिसुतः श्रीमान्बुद्ध्या तुल्यो बृहस्पतेः ॥ ८ ॥
तस्याहं कुर्वतो नित्यं वेदाभ्यासं महात्मनः ॥ [4]संभूय वाङ्मयी कन्या नाम्ना वेदवती स्मृता ॥ ९ ॥
ततो देवाः सगन्धर्वा यक्षराक्षसपन्नगाः ॥ तेऽपि गत्वा हि पितरं वरणं रोचयन्ति मे ॥ १० ॥
न च मां स पिता तेभ्यो दत्तवान्राक्षसर्षभ ॥ कारणं तद्वदिष्यामि निशाचर निशामय ॥ ११ ॥
पितुस्तु मम जामाता विष्णुः किल सुरेश्वरः ॥ अभिप्रेतस्त्रिलोकेशस्तस्मान्नान्यस्य मे पिता ॥ १२ ॥
दातुमिच्छति तस्मै तु तच्छ्रुत्वा बलदर्पितः ॥ [5]दम्भुर्नाम ततो राजा दैत्यानां कुपितोऽभवत् ॥१३॥
तेन रात्रौ शयानो मे पिता पापेन हिंसितः ॥ १४ ॥
ततो मे जननी दीना तच्छरीरं पितुर्मम ॥ परिष्वज्य महाभागा प्रविष्टा हव्यवाहनम् ॥ १५ ॥
ततो मनोरथं सत्यं पितुर्नारायणं प्रति ॥ [6]करोमीति तमेवाहं हृदयेन समुद्वहे ॥ १६ ॥
[ [7]मृतं च पितरं दृष्ट्वा वृथा कामं महाव्रतम् ॥ तस्य प्रेतगतस्यापि कुर्वन्ती काङ्क्षितं पितुः ॥१७॥ ]
इति प्रतिज्ञामारुह्य चरामि विपुलं तपः ॥ एतत्ते सर्वमाख्यातं मया राक्षसपुङ्गव ॥ १८ ॥
नारायणो मम पतिर्न त्वन्यः पुरुषोत्तमात् ॥ [8]आश्रये नियमं घोरं नारायणपरीप्सया ॥ १९ ॥
विज्ञातस्त्वं हि मे राजन्गच्छ पौलस्त्यनन्दन ॥ जानामि तपसा सर्वं त्रैलोक्ये यद्धि वर्तते ॥२०॥
सोऽब्रवीद्रावणो भूयस्तां कन्यां सुमहाव्रताम् ॥ अवरुह्य विमानाग्रात्कन्दर्पशरपीडितः ॥ २१ ॥
अवलिप्तासि सुश्रोणि यस्यास्ते मतिरीदृशी ॥ वृद्धानां मृगशावाक्षि भ्राजते [9]पुण्यसंचयः ॥ २२ ॥
त्वं सर्वगुणसंपन्ना नार्हसे वक्तुमीदृशम् ॥ त्रैलोक्यसुन्दरी भीरु यौवनं ते[10] निवर्तते ॥ २३ ॥
अहं लङ्कापतिर्भद्रे दशग्रीव इति श्रुतः ॥ तस्य मे भव भार्या त्वं भुङ्क्ष्व [11]भोगान्यथासुखम् ॥२४॥
कश्च तावदसौ यं त्वं विष्णुरित्यभिभाषसे ॥ वीर्येण तपसा चैव भोगेन च बलेन च ॥
न मया स समो भद्रे यं त्वं कामयसेऽङ्गने ॥ २५ ॥

इदं यौवनप्रतिकूलक्रिया ॥ ४—२१ ॥ वृद्धानामिति । | पुण्यसंचयः पुण्यसग्रहण वृद्धानामेव भ्राजते नतु

शि० एषनिर्णय निर्गत अस्माभिर्ज्ञात ॥ ५ ॥ स० कस्यासि पुत्रीतिशेष । इदकि तपश्चरणकिमर्थ । तवभर्ताकश्च । सनर त्वद्भोगवान् । परिश्रम कायक्लेश । ति० कस्यहेतो किफलनिमित्त ॥ ६ ॥ ति० वेदाभ्यासकुर्वतोमहात्मनस्तस्यसकाशात् वाङ्मयी वाङ्मयवेदमूर्ति· कन्याहसभूता । अतएवाहंपित्रानाम्नावेदवतीतिस्मृता । भगवत शक्तिर्लक्ष्मीरेव रावणवधायरावणं शप्तुमत्रावतीर्णा । अस्यावाङ्मयीत्वसार्वात्म्यात् । अतएववक्ष्यतिपितुर्मेविष्णुर्जामाताभिप्रेतइति ॥ ९ ॥ ति० तेदेवादयोवरणं रोचयन्ति । रुचि क्रियासामान्ये । वरणकुर्वन्तिस्मेत्यर्थं ॥ १० ॥ ति० अन्यस्य अन्यस्मै ॥ १२ ॥ ति० नारायण नारस्य जीवसमूहस्यायन नाराआपोऽयनंयस्येतिवा । तंप्रतिगतंपितुर्मनोरथसत्यंकरोमीतीच्छयातंनारायणमेवहृदयेनोद्वहे ॥ १६ ॥ ति० इतिप्रतिज्ञा प्रागुक्तेच्छाविषयविषया । आरुह्य कृत्वा ॥१८॥ ति० कथंविज्ञातस्तत्राह—जानामीति ॥२०॥ ति० कश्चेति । मदपेक्षयात्यल्पवीर्यादियुक्त । स० यंत्वविष्णुरित्यभिभाषसे यंचत्वंकामयसे समयानसमइत्यन्वयान्नपौनरुक्त्यं ॥ २५ ॥

[ पा० ] १ क—घ. दुहिताभद्रेकोवाभर्तानरस्तव. २ क—घ. ज. केन. ३ क—घ. ज. श्रमस्तव ४ क. ख. ग. ङ.—ट. सभूता ५ क. ख घ. झ. ञ ट. शंभुर्नाम ६ क. ख. ग. ज. करोमीतिममेच्छाचहृदयेसाधुविष्ठिता. ७ अयं श्लोकः च. छ. पाठयोर्दृश्यते. ८ क—घ. ज. आश्रिताविद्धिमाधर्मनारायणपतीच्छया. ९ क. ख. च. छ. धर्मसग्रह. ग. घ. ज. धर्मसचय. १० क.—ट. तेऽतिवर्तते. ११ क.—घ. ज. भोगान्यथेप्सितान्

इत्युक्तवति तस्मिंस्तु वेदवत्यथ साऽब्रवीत् ॥ मामैवमिति सा कन्या तमुवाच निशाचरम् ॥ २६ ॥
त्रैलोक्याधिपतिं विष्णुं सर्वलोकनमस्कृतम् ॥ त्वदृते राक्षसेन्द्रान्यः कोऽवमन्येत बुद्धिमान् ॥२७॥
एवमुक्तस्तया तत्र वेदवत्या निशाचरः ॥ मूर्धजेषु तदा कन्यां कराग्रेण परामृशत् ॥ २८ ॥
ततो वेदवती क्रुद्धा केशान्हस्तेन साऽच्छिनत् ॥ असिर्भूत्वा करस्तस्याः केशांश्छिन्नांस्तदाऽकरोत् २९
सा ज्वलन्तीव रोषेण दहन्तीव निशाचरम् ॥ उवाचाग्निं समाधाय मरणाय कृतत्वरा ॥ ३० ॥
धर्षितायास्त्वयाऽनार्य न मे जीवितमिष्यते ॥ रक्षस्तस्मात्प्रवेक्ष्यामि पश्यतस्ते हुताशनम् ॥ ३१ ॥
यस्मात्तु धर्षिता[1] चाहं त्वया पापात्मना वने ॥ तस्मात्तव वधार्थं हि समुत्पत्स्ये[2] ह्यहं पुनः ॥ ३२ ॥
न हि शक्यं स्त्रिया हन्तुं पुरुषः पापनिश्चयः ॥ शापे त्वयि मयोत्सृष्टे तपसश्च व्ययो भवेत् ॥३३॥
यदि त्वस्ति मया किंचित्कृतं दत्तं हुतं तथा ॥ तस्मात्त्वयोनिजा[3] साध्वी भवेयं धर्मिणः सुता ॥३४॥
एवमुक्त्वा प्रविष्टा सा ज्वलितं जातवेदसम् ॥ पपात च दिवो दिव्या पुष्पवृष्टिः समन्ततः ॥३५॥
पुनरेव समुद्भूता पद्मे पद्मसमप्रभा ॥ तस्मादपि पुनः प्राप्ता पूर्ववत्तेन रक्षसा ॥ ३६ ॥
कन्यां कमलगर्भाभां प्रगृह्य स्वगृहं ययौ ॥ प्रगृह्य रावणस्त्वेतां दर्शयामास मन्त्रिणे ॥ ३७ ॥
लक्षणज्ञो निरीक्ष्यैव रावणं चैवमब्रवीत् ॥ गृहस्थैषा हि सुश्रोणी त्वद्वधायैव दृश्यते ॥ ३८ ॥
एतच्छ्रुत्वाऽर्णवे राम तां प्रचिक्षेप रावणः ॥ सा चैव क्षितिमासाद्य यज्ञायतनमध्यगा ॥
राज्ञो हलमुखोत्कृष्टा पुनरप्युत्थिता सती ॥ ३९ ॥
सैषा जनकराजस्य प्रसूता तनया प्रभो ॥ तव भार्या महाबाहो विष्णुस्त्वं हि सनातनः ॥ ४० ॥
पूर्वं क्रोधाहितः[4] शत्रुर्ययाऽसौ निहतस्तथा ॥ उपाश्रयित्वा शैलाभस्तव वीर्यममानुषम् ॥ ४१ ॥
एवमेषा महाभागा मर्त्येषूत्पत्स्यते पुनः ॥ क्षेत्रे हलमुखोत्कृष्टे[5] वेद्यामग्निशिखोपमा ॥ ४२ ॥
एषा वेदवती नाम पूर्वमासीत्कृते युगे ॥ त्रेतायुगमनुप्राप्य वधार्थं तस्य रक्षसः ॥ ४३ ॥

बालयूनोः ॥ २२—४० ॥ वेदवत्या यः शत्रुः क्रोधाहितः सोसौ शैलाभः शत्रू रावणः पुनस्तथैव यथाप्रतिज्ञ पति च प्राप्तया पतिभूतस्य तव मानुषं वीर्यमुपाश्रयित्वा अद्य निहतः ॥ ४१ ॥ उत्पत्स्येयम् ।

स० केशान् रावणगृहीतस्वकेशान् । हस्तेनकेशच्छेदनमसभावितमित्यतोवक्ति असिरिति । योगसामर्थ्यादितिभाव ॥ २९ ॥ स० त्वयाधर्षितायाः केशग्रहणेनबलात्कृतायाः । नेष्यते नापेक्ष्यते । हेरक्ष ॥ ३१ ॥ ति० पुन समुत्पत्स्यति समुत्पत्स्येइत्यर्थः ॥ ३२ ॥ ति० व्यय ब्रह्मवरदानादिदानीतवमरणाभावेनवृथाव्ययइत्यर्थ ॥ स० किंजन्मान्तरानुधावनेनात्रैवमालंजहीत्यत आह—नहीति । हन्तुं युद्धेन ॥ तर्हिशापेनहन्यतामित्यतआह—शापइति ॥ शि० स्त्रियाहन्तुनशक्य स्पर्शशङ्कया ॥ एतेनोपायतस्त्वाघातयिष्यामीतिसूचित ॥ ३३ ॥ स० हुत उत्तमस्त्रीत्वायुक्त ॥ ३४ ॥ ति० अत्रापिपुष्पवर्ष रावणनाशनिश्चयजसतोषात् ॥ ३५ ॥ ति० सैषा कृतरावणवधप्रतिज्ञा वेदवत्येवेत्यर्थ । विष्णुस्त्वमिति । अनेनसीतायालक्ष्मीत्वस्फुटमेवोक्तं । तदुक्तपराशरेण—'राघवत्वेऽभवत्सीतारुक्मिणीकृष्णजन्मनि' इति ॥ ४० ॥ ति० यथावेदवत्या पूर्वतदवतारेक्रोधहतोय शत्रु सोसौशैलाभ पुनस्तथैवयथाप्रतिज्ञत्वापतिप्राप्य पतिभूतस्यतवामानुषवीर्य उपाश्रयित्वा उपाश्रित्य । निहत । अनेन सीतैवरावणवधेमुख्यकारण । रामेतुहन्तृत्वमारोपितमितिसूचित ॥ ४१ ॥ ति० भाविकल्पेष्वप्येवमेवावतारादिकल्पेनकल्पोव्याख्येयइति न्यायादित्याह—एवमिति । एषामहाभागा एवमेव मर्त्येषुभाविषु । हलमुखोत्कृष्टेक्षेत्रे पुन पुनरुत्पत्स्यते । उक्तप्रयोजनायेति शेष । उत्पत्तिरत्राविर्भाव । एतेनभगवतोपितथाऽवतार सूचितएव ॥ ४२ ॥ ति० सीताविर्भावोवैशाखेशुक्लनवम्यामितिमहासुन्दरीतन्त्रेउक्त । 'वैशाखेशुक्लनवम्यामुत्पन्नासाऽवनीसुता । सीतामुखात्सासजातापालिताजनकेनच । रामपत्नीमहाभागासीतानामेतिविश्रुता । तस्मिन्दिनेरामभक्ता श्रद्धाभक्तिसमन्विता । महोत्सवपरा सर्ववित्तशाठ्यविवर्जिता । गीतवादित्रनृत्ताद्यैरामभक्तिपरायणा । वैशाखसितनवम्यापुराणपठनंतथा । लक्ष्मीसूक्तपठंस्तत्रयातिरामंसनातनं । सौभाग्यधनधान्यंचपुत्रसततिवि-

[ पा० ] १ क.—घ. ज चाहमपापाचाप्यनाथवत् २ ङ समुत्पत्स्यत्यहंपुन . ३ क.—घ. ज. तस्मादयोनिजाभूत्वा भवेयं. ४ क. ग.—ज. ञ. ट. पूर्वक्रोधहत ५ क.—घ. हलमुखग्रस्ते.

उत्पन्ना मैथिलकुले जनकस्य महात्मनः ॥ सीतोत्पन्ना तु सीतेति मानुषैः पुनरुच्यते ॥ ४४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे सप्तदशः सर्गः ॥ १७ ॥

## अष्टादशः सर्गः ॥ १८ ॥

कदाचिदिन्द्रादिदेवगणमण्डितंमरुत्तराजयज्ञवाटप्रविष्टेरावणे तद्भयादिन्द्रादिदेवैर्मयूरवायसादिरूपपरिग्रह. ॥ १ ॥ रावणेनयुद्धायसमाहूतेमरुत्ते युद्धसनद्धे सवर्तनाम्नापुरोधसा दीक्षितस्ययुद्धानौचित्योक्त्या तत्प्रतिनिवर्तनम् ॥ २ ॥ निवृत्तेतस्मिन्रावणेन जयघोषणपूर्वक निर्गमनम् ॥ ३ ॥ ततोनिजनिजरूपधारिभिरिन्द्रादिभि परितोषान्मयूरादीनां नानावरप्रदानम् ॥ ४ ॥

प्रविष्टायां हुताशं तु वेदवत्यां स रावणः ॥ पुष्पकं तु समारुह्य परिचक्राम मेदिनीम् ॥ १ ॥
ततो मरुत्तं नृपतिं यजन्तं सह दैवतैः ॥ उशीरबीजमासाद्य ददर्श स तु रावणः ॥ २ ॥
संवर्तो नाम ब्रह्मर्षिः साक्षाद्भ्राता बृहस्पतेः ॥ याजयामास धर्मज्ञः सर्वैर्देवगणैर्वृतः ॥ ३ ॥
दृष्ट्वा देवास्तु तद्रक्षो वरदानेन दुर्जयम् ॥ तिर्यग्योनिं समाविष्टास्तस्य दर्शनभीरवः ॥ ४ ॥
इन्द्रो मयूरः संवृत्तो धर्मराजस्तु वायसः ॥ कृकलासो धनाध्यक्षो हंसश्च वरुणोऽभवत् ॥ ५ ॥
अन्येष्वपि गतेष्वेवं देवेष्वरिनिषूदन ॥ रावणः प्राविशद्यज्ञं सारमेय इवाशुचिः ॥ ६ ॥
तं च राजा समासाद्य रावणो राक्षसाधिपः ॥ प्राह युद्धं प्रयच्छेति निर्जितोस्मीति वा वद ॥ ७ ॥
ततो मरुत्तो नृपतिः को भवानित्युवाच तम् ॥ अपहासं ततो मुक्त्वा रावणो वाक्यमब्रवीत् ॥ ८ ॥
अकुतूहलभावेन प्रीतोस्मि तव पार्थिव ॥ धनदस्यानुजं यो मां नावगच्छसि रावणम् ॥ ९ ॥
त्रिषु लोकेषु कोऽन्योस्ति यो न जानाति मे बलम् ॥ भ्रातरं येन निर्जित्य विमानमिदमाहृतम् ॥
ततो मरुत्तः स नृपस्तं रावणमथाब्रवीत् ॥ १० ॥
धन्यः खलु भवान्येन ज्येष्ठो भ्राता रणे जितः ॥ न त्वया सदृशः श्लाघ्यस्त्रिषु लोकेषु विद्यते ॥११॥
नाधर्मसहितं श्लाघ्यं तल्लोकं प्रतिसंहितम् ॥ कर्म दौरात्म्यकं कृत्वा श्लाघ्यसे भ्रातृनिर्जयात् ॥१२॥
कं त्वं प्राक्केवलं धर्मं चरित्वा लब्धवान्वरम् ॥ श्रुतपूर्वं हि न मया भाषसे यादृशं स्वयम् ॥ १३ ॥

---

व्यत्यय आर्षः ॥ ४२—४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

उशीरबीजमिति देशनाम ॥२—८॥ अकुतूहलभावेनमां दृष्ट्वाऽप्यविस्मयनिर्भयानादरभावेनेत्यर्थः । यो नावगच्छसि तस्य तवेत्यन्वयः ॥ ९—१२ ॥ प्राक् पूर्वं । त्वं केवल धर्मं दोषहीनं धर्मं चरित्वा किमपि वरं

---

स्तृतम् । रामप्रसादाल्लभतेमुच्यतेसर्वपातकात् । इति । उपसहरतिएषेति । आसीत्कृतेयुगेइत्यनन्तरत्रेतायुगमिति । जनकस्योत्पन्ना । न्यायत पुत्रीत्वेनोत्पन्नेत्यर्थ ॥ ४३ ॥ इतिसप्तदश सर्ग ॥ १७ ॥

**स०** मरुत्त "मरुत परिवेष्टारोमरुत्तस्यावसन्गृहे" इतिश्रुतिप्रसिद्ध ॥ २ ॥ **ति०** देवगणैर्वृत अपरोक्षतयाहविर्भागार्थमवस्थितैरितिशेष ॥ ३ ॥ **ति०** अन्येष्वपिदेवेष्वेवंगतेषु तिर्यग्योनिस्वरूपंगतेष्वित्यर्थ ॥ **स०** न श्यामशबलादिवदयमित्याह—अशुचिरिति ॥ ६ ॥ **ति०** मुक्त्वा कृत्वा ॥ ७ ॥ **ति०** कोन्योस्ति नकोपि । सर्वेपिजानन्तीत्यर्थ. ॥ १० ॥ **ति०** अथमरुत्तोव्याजस्तुत्याह—धन्यइति । **स०** ज्येष्ठो भ्रातायेनरणेजित पराजित. । अतस्त्वंधन्यइत्युपजहासमरुत्त. ॥ ११ ॥ **ति०** लोकेषुविद्यतेइत्यनन्तरं 'नाधर्मसहितश्लाघ्य' इत्येक श्लोक प्रक्षिप्त. । उक्तार्थत्वादितिकतक ॥ १२ ॥

[ पा० ] १ क.—घ ज. तातायोनिंसमापन्नास्तस्यधर्षणभीरव. २ ख. ग. घ देवेष्वसुरसूदन. क. ज. रावण.सुरसूदन.. ३ क.—ट. राजानमासाद्य. ४ ग. ङ. झ. ञ. ट. अवहास. ५ घ. नलोभप्रतिसहितं.

तिष्ठेदानीं न मे जीवन्प्रतियास्यसि दुर्मते ॥ अद्य त्वां निशितैर्बाणैः प्रेषयामि यमक्षयम् ॥ १४ ॥
ततः शरासनं गृह्य सायकांश्च नराधिपः ॥ रणाय निर्ययौ क्रुद्धः संवर्तो मार्गमावृणोत् ॥ १५ ॥
सोऽब्रवीत्स्नेहसंयुक्तं मरुत्तं तं महानृषिः ॥ श्रोतव्यं यदि मद्वाक्यं संप्रहारो न ते क्षमः ॥ १६ ॥
माहेश्वरमिदं सत्रमसमाप्तं कुलं दहेत् ॥ १७ ॥
दीक्षितस्य कुतो युद्धं क्रोधित्वं दीक्षिते कुतः ॥ संशयश्च जये नित्यं राक्षसश्च सुदुर्जयः ॥ १८ ॥
स निवृत्तो गुरोर्वाक्यान्मरुत्तः पृथिवीपतिः ॥ विसृज्य सशरं चापं स्वस्थो मखमुखोऽभवत् ॥१९॥
ततस्तं निर्जितं मत्वा घोषयामास वै शुकः ॥ रावणो जयतीत्युच्चैर्हर्षान्नादं विमुक्तवान् ॥ २० ॥
तान्भक्षयित्वा तत्रस्थान्महर्षीन्यज्ञमागतान् ॥ वितृप्तो रुधिरैस्तेषां पुनः संप्रययौ महीम् ॥ २१ ॥
रावणे तु गते देवाः सेन्द्राश्चैव दिवौकसः ॥ ततः स्वां योनिमासाद्य तानि सत्त्वानि चाब्रुवन् ॥२२॥
हर्षात्तदाऽब्रवीदिन्द्रो मयूरं नीलबर्हिणम् ॥ प्रीतोस्मि तव धर्मज्ञ[1] भुजङ्गाद्धि न ते भयम् ॥ २३ ॥
इदं नेत्रसहस्रं[2] तु यत्त्वद्बर्हे भविष्यति ॥ वर्षमाणे मयि मुदं प्राप्स्यसे प्रीतिलक्षणाम् ॥
एवमिन्द्रो वरं प्रादान्मयूरस्य सुरेश्वरः ॥ २४ ॥
नीलाः किल पुरा बर्हा मयूराणां नराधिप ॥ सुराधिपाद्वरं प्राप्य गताः सर्वेऽपि[3] बर्हिणः ॥ २५ ॥
धर्मराजोऽब्रवीद्राम प्राग्वंशे वायसं स्थितम् ॥ पक्षिस्तवास्मि सुप्रीतः प्रीतस्य वचनं शृणु ॥ २६ ॥
यथाऽन्यैर्विविधै रोगैः पीड्यन्ते प्राणिनो मया ॥ ते न ते प्रभविष्यन्ति मयि प्रीते न संशयः ॥२७॥
मृत्युतस्ते भयं नास्ति वरान्मम विहंगम ॥ यावत्त्वां न वधिष्यन्ति नरास्तावद्भविष्यसि ॥ २८ ॥
एते मद्विषयस्था वै मानवाः क्षुद्भयार्दिताः ॥ त्वयि भुक्ते तु तृप्तास्ते भविष्यन्ति सबान्धवाः ॥२९॥
वरुणस्त्वब्रवीद्धंसं गङ्गातोयविहारिणम् ॥ श्रूयतां प्रीतिसंयुक्तं वचः पत्ररथेश्वर ॥ ३० ॥
वर्णो मनोहरः सौम्य चन्द्रमण्डलसन्निभः ॥ भविष्यति तवोदग्रः शुद्धफेनसमप्रभः ॥ ३१ ॥
मच्छरीरं[4] समासाद्य कान्तो नित्यं भविष्यसि ॥ प्राप्स्यसे चातुलां प्रीतिमेतन्मे प्रीतिलक्षणम् ॥३२॥

---

लब्धवानिति श्रुतपूर्वं । इदानी यादृशं भ्रातृविजयरूपमधर्मं भाषसे तत्र श्रुतपूर्वमित्यर्थः ॥ १३—१४ ॥ मार्गमावृणोत्। निर्यातस्येति शेष॰ ॥ १५ ॥ महानृषि.। तत्पुरोहित इत्यर्थः ॥ १६—२१ ॥ स्वां योनि स्वस्वप्रकृतिमासाद्य । तानि सत्त्वानि । प्राकार्यवशगृहीतमूर्तिसजातीयप्राणिनइत्यर्थः ॥ २२—२३ ॥ प्रीतिलक्षणां मत्प्रीतिचिह्नभूतां ॥ २४ ॥ नीलाः किलेति । नेत्ररहिता इत्यर्थः ॥ २५ ॥ प्राग्वंशे यज्ञशालादारुणि ॥ २६ ॥ ते तव । ते रोगाः । न प्रभविष्यन्ति । प्रीते इति च्छेदः ॥ २७ ॥ "जातस्य हि ध्रुवो मृत्यु" इत्यशक्यपरिहारत्वादाह—यावत्त्वामित्यादि ॥ २८ ॥ मद्विषयस्थाः यमलोकस्थाः ॥ २९—३१ ॥ मच्छरीरं

---

**ति॰** केवल पूज्यपूजारहितं । कधर्मप्राकचरित्वा वरंलब्धवानसि । तथाविधोपिकश्चिद्धर्मइतिचेन्नश्रुतपूर्वइत्याह—श्रुतेति । यादृशभाषसेज्येष्ठपीडारूपंसमाचारं ॥ १३ ॥ **ति॰** मार्गमावृणोत् रणायागतस्यरावणस्य ॥ १५ ॥ **ति॰** महानृषि सवर्त ॥ १६ ॥ **ति॰** माहेश्वरं तद्दैवत्य सत्रं याग ॥ १७ ॥ **ति॰** मखमुख मखसमाध्युन्मुख ॥ १९ ॥ **ति॰** वितृप्त विशेषेणतृप्त ॥ २१ ॥ **शि॰** इदंमदीययन्नेत्रसहस्रं तत्ते बर्हेभविष्यति ॥ २४ ॥ **स॰** मयूराणाबर्हा.पूर्व केवलंनीला निर्नेत्राकारा । वर प्राप्यनयनसहस्राकारगता॰ प्राप्ता । सर्वेपि तज्जातीया ॥ **शि॰** मयूराणाबर्हा पुरानीलएव नेत्ररहिताइत्यर्थ । सुराधिपाद्वर प्राप्यतुसर्वेमयूरा बर्हिण प्रशस्तबर्हविशिष्टा नेत्रयुक्तपक्षवन्तोबभूवुरित्यर्थ ॥२५॥ **ति॰** प्राग्वशे प्राग्घविगहे ॥ **स॰** प्राग्वशे तन्नामकयज्ञशालाभागे ॥ २६ ॥ **स॰** मृत्युत तन्नामकमद्दूतात् । भविष्यसि जीविष्यसि ॥ २८ ॥ **स॰** मद्विषयस्था प्रेत्य

[ **पा॰** ] १ क.—घ. धर्मज्ञउपकाराद्विहंगम २ क—घ. ममनेत्र. ३ क—घ सर्वेविचित्रता. ४ च. छ यत्प्रभावं. समासाद्य.

हंसानां हि पुरा राम नीलवर्णः सपाण्डुरः ॥ पक्षा नीलाग्रसंवीताः क्रोडाः शष्पाग्रनिर्मलाः ॥३३॥
अथाब्रवीद्वैश्रवणः कृकलासं गिरौ स्थितम् ॥ हैरण्यं संप्रयच्छामि वर्णं प्रीतस्तवाप्यहम् ॥ ३४ ॥
सद्रव्यं च शिरो नित्यं भविष्यति तवाक्षयम् ॥ एष काञ्चनको वर्णो मत्प्रीत्या ते भविष्यति ॥३५॥
एवं दत्त्वा वरांस्तेभ्यस्तस्मिन्यज्ञोत्सवे सुराः ॥ निवृत्ताः सह राज्ञा ते पुनः स्वभवनं गताः ॥३६॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अष्टादशः सर्गः ॥ १८ ॥

---

## एकोनविंशः सर्गः ॥ १९ ॥

नानादेशगराजपराजयपूर्वकं क्रमेणायोध्यांगतेनरावणेनानरण्यनाम्नोराज्ञोयुद्धाय समाह्वानम् ॥ १ ॥ प्रहस्तप्रमुखराक्षसेन्द्रविद्रावणपूर्वकमात्मनासहयुध्यन्तमनरण्य निजकरतलाभिघातेनमुमूर्षुतां नीयतारावणेन तप्रतीक्ष्वाकवमाननपूर्वकमुपहसनम् ॥ २ ॥ तदसहिष्णुनाऽनरण्येन तप्रति स्ववंश्येनरामेण वधसंभवविषयकशापदानेन त्रिविष्टपगमनम् ॥ ३ ॥

अथ जित्वा मरुत्तं स प्रययौ राक्षसाधिपः ॥ नगराणि नरेन्द्राणां युद्धकाङ्क्षी दशाननः ॥ १ ॥
समासाद्य तु राजेन्द्रान्महेन्द्रवरुणोपमान् ॥ अब्रवीद्राक्षसेन्द्रस्तु युद्धं मे दीयतामिति ॥ २ ॥
निर्जिताः स्मेति वा ब्रूत एष मे हि सुनिश्चयः ॥ अन्यथा कुर्वतामेवं मोक्षो नैवोपपद्यते ॥ ३ ॥
ततस्त्वभीरवः प्राज्ञाः पार्थिवा धर्मनिश्चयाः ॥ मन्त्रयित्वा ततोऽन्योन्यं राजानः सुमहाबलाः ॥
निर्जिताः स्मेत्यभाषन्त ज्ञात्वा वरबलं रिपोः ॥ ४ ॥
दुष्यन्तः सुरथो गाधिर्गयो राजा पुरूरवाः ॥ एते सर्वेऽब्रुवंस्तात निर्जिताः स्मेति पार्थिवाः ॥ ५ ॥
अथायोध्यां समासाद्य रावणो राक्षसाधिपः ॥ सुगुप्तामनरण्येन शक्रेणेवामरावतीम् ॥ ६ ॥
स तं पुरुषशार्दूलं पुरन्दरसमं बले ॥ प्राह राजानमासाद्य युद्धं देहीति रावणः ॥
निर्जितोस्मीति वा ब्रूहि त्वमेवं मम शासनम् ॥ ७ ॥
अयोध्याधिपतिस्तस्य श्रुत्वा पापात्मनो वचः ॥ अनरण्यस्तु संक्रुद्धो राक्षसेन्द्रमथाब्रवीत् ॥ ८ ॥
दीयते द्वन्द्वयुद्धं ते राक्षसाधिपते मया ॥ संतिष्ठ क्षिप्रमायत्तो भव चैवं भवाम्यहम् ॥ ९ ॥

---

जलमूर्ति ॥ ३२ ॥ क्रोडः भुजान्तरं । शष्पाग्रनिर्मलाः बालतृणाग्रवन्निर्मलाः । कोमलश्यामवर्णा इत्यर्थः ॥ ३३—३४ ॥ सद्रव्यमिति ॥ एतदेवाह—एष काञ्चनक इति ॥ ३५ ॥ स्वभवनमिति । मरुत्तेन सह स्वर्गमित्यर्थः ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने अष्टादशः सर्ग.॥ १८ ॥

संतिष्ठ। एवमहं भवामीति । आयत्तो भवामीत्यर्थः

---

मत्स्थानंगता । तदुद्देशेनदत्तपिण्डं त्वयिभुक्ते भुक्तवतिसति ॥ २९ ॥ ति० नीलेन नीलवर्णेन अग्रे अग्रदेशे संवीता. प्राप्ता ॥ ३३ ॥ ति० शिरोनित्यं सद्रव्य स्वर्णवर्णमित्यर्थ । तदेवाह—एषकाञ्चनकइति । पूर्वंकृकलासाअञ्जनवर्णाइत्याहु ॥ स० सद्रव्य सुवर्णवर्णसाम्नालक्षणद्रव्यसहितं ॥ ३५ ॥ स० राज्ञामरुत्तेनसहस्वभवनंगताः । मरुत्तेनसहस्वर्गमित्यर्थः ॥ निवृत्तेरावणे इतिशेषः ॥ ३६ ॥ इत्यष्टादश सर्ग ॥ १८ ॥

स० अन्यथाकुर्वता युद्धासन्नद्धाना वर्जितनिर्जितशब्दाना । मोक्ष मत्तोमोचन ॥ ३ ॥ स० यद्यप्यभीरव अन्यस्मादन्यदाभयरहिता । वरबलज्ञात्वानिर्जिता स्मेत्यभाषन्त । जीवन्नरन्यायेनेतिभाव ॥ ४ ॥ स० दुष्यन्तइति । एतेषाभिन्नकालवर्तित्वेनयुगपद्वचनासंभवेपिरावणस्यचिरकालवर्तित्वेनस्वस्वकालेतेतथाऽवदन्नित्यर्थ ॥ ५ ॥ शि० समासाद्य अतिष्ठदितिशेष ॥६॥

[ पा० ] १ घ. च —झ. ट. नवर्ण सर्वपाण्डुर . २ ख. ग. घ. ततोऽन्योन्यंयुद्धेसतप्यभीरव . ३ ख. परबल. ४ क. गाधिर्भोजराजःपुरूरवाः. ५ ञ. ट. तागुप्ता. ६ क. घ. ज. चावमतंवचः.

अथ पूर्वं श्रुतार्थेन निर्जितं सुमहद्बलम् ॥ निष्क्रामत्तन्नरेन्द्रस्य बलं रक्षोवधोद्यतम् ॥ १० ॥
नागानां दशसाहस्रं वाजिनां नियुतं तथा ॥ रथानां बहुसाहस्रं पत्तीनां च नरोत्तम ॥
महीं संछाद्य निष्क्रान्तं सपदातिरथं रणे ॥ ११ ॥
ततः प्रवृत्तं सुमहद्युद्धं युद्धविशारद ॥ अनरण्यस्य नृपते राक्षसेन्द्रस्य चाद्भुतम् ॥ १२ ॥
तद्रावणबलं प्राप्य बलं तस्य महीपतेः ॥ प्राणश्यत तदा सर्वं हव्यं हुतमिवानले ॥ १३ ॥
युद्ध्वा च सुचिरं कालं कृत्वा विक्रममुत्तमम् ॥ [ [1]समासाद्य रणोत्साहं शिक्षाबलसमन्वितम् ॥ ]
प्रज्वलन्तं समासाद्य क्षिप्रमेवावशेषितम् ॥ १४ ॥
प्राविशत्संकुलं तत्र शलभा इव पावकम् ॥ नश्यति स्म बलं तत्र हव्यं हुतमिवानले ॥ १५ ॥
सोपश्यत्तन्नरेन्द्रस्तु नश्यमानं महाबलम् ॥ महार्णवं समासाद्य [2]वनापगशतं यथा ॥ १६ ॥
ततः शक्रधनुःप्रख्यं धनुर्विस्फारयन्स्वयम् ॥ आससाद नरेन्द्रस्तं रावणं क्रोधमूर्च्छितः ॥ १७ ॥
अनरण्येन तेऽमात्या मारीचशुकसारणाः ॥ प्रहस्तसहिता भग्ना व्यद्रवन्त मृगा इव ॥ १८ ॥
ततो बाणशतान्यष्टौ पातयामास मूर्धनि ॥ तस्य राक्षसराजस्य इक्ष्वाकुकुलनन्दनः ॥ १९ ॥
तस्य बाणाः पतन्तस्ते चक्रिरे न क्षतिं क्वचित् ॥ वारिधारा इवाभ्रेभ्यः पतन्त्यो गिरिमूर्धनि ॥ २० ॥
ततो राक्षसराजेन क्रुद्धेन नृपतिस्तदा ॥ तलेनाभिहतो मूर्ध्नि स रथान्निपपात ह ॥ २१ ॥
स राजा पतितो भूमौ विह्वलाङ्गः प्रवेपितः ॥ वज्रदग्ध इवारण्ये सालो [3]निपतितो यथा ॥ २२ ॥
तं प्रहस्याब्रवीद्रक्ष इक्ष्वाकुं पृथिवीपतिम् ॥ किमिदानीं फलं प्राप्तं त्वया मां प्रतियुध्यता ॥ २३ ॥
त्रैलोक्ये नास्ति यो द्वन्द्वं मम दद्यान्नराधिप ॥ शङ्के प्रसक्तो भोगेषु न शृणोषि बलं मम ॥ २४ ॥
तस्यैवं ब्रुवतो राजा मन्दासुर्वाक्यमब्रवीत् ॥ किं शक्यमिह कर्तुं वै कालो हि दुरतिक्रमः ॥ २५ ॥
न ह्यहं निर्जितो रक्षस्त्वया चात्मप्रशंसिना ॥ कालेनैव विपन्नोऽहं हेतुभूतस्तु मे भवान् ॥ २६ ॥
किं त्विदानीं मया शक्यं कर्तुं प्राणपरिक्षये ॥ न ह्यहं विमुखो रक्षो युध्यमानस्त्वया हतः ॥२७॥
इक्ष्वाकुपरिभावित्वाद्वचो वक्ष्यामि राक्षस ॥ यदि दत्तं यदि हुतं यदि मे सुकृतं तपः ॥

---

॥ ९ ॥ पूर्वं रावणगमनात्पूर्वं । श्रुतार्थेन श्रुतरावणवृत्तान्तेन । तन्नरेन्द्रस्य बल । निष्क्रामत् निरक्रामत् ॥ १०—१३ ॥ समासाद्येति । त रावणमासाद्य क्षिप्रमेवावशेषितं अल्पावशिष्टमभवदित्यर्थः ॥ १४ ॥ तत्र रणे शलभाः पावकमिव सकुलं समूहनाशनं । प्राविशत् प्रापत् ॥ १५—२२ ॥ इक्ष्वाकुं इक्ष्वाकुवंश्य । कि फल प्राप्तं । निर्जितोस्मीति वचनमनुक्त्वेति शेष ॥ २३—२५ ॥ त्वया ननिर्जित इति । अपि तु प्राप्तेनैव कालेन विपन्न इत्यर्थ. ॥ २६—२७ ॥ इक्ष्वाकुपरिभावित्वात् तत्कुलपरिभावित्वादित्यर्थः

---

**ति०** पूर्वश्रुतार्थेन श्रुतरावणवृत्तान्तेन । निर्जितं भावेक्त । निर्जयप्रतियत्सुमहद्बलनियुक्त तन्नरेन्द्रस्यबलंरक्षोवधोद्यत । निष्क्रामत् निरक्रामत् ॥ **स०** पूर्वनिर्जित परपराप्राप्तं । स्वर्जितइत्यादिनिदर्शयित्वाछान्दोग्यभाष्येजि प्राप्त्यर्थकइतिव्याख्यातत्वात् । निर्जित कैरप्यपराजित । सुमहद्बलमितिपदमेकवा सुमहताबलयस्यतत् ॥ १० ॥ **स०** अपासमूहआपं । तेनसहगच्छन्तीति अपगच्छन्तीतिवाआपगा अपगावा । उभयत्राप्यन्येभ्योपीतिड । 'विद्यादगारमागारमापगामपगामपि' इतिद्विरूपकोश ॥ आपगा सन्तियेषातान्यापगानि । वनानिकान्ताराणिचतानि आपगानिच । तेषाशतं बहुनदीसहितवनानाशतंअर्णवं समासाद्य प्राप्ययथानश्यति तथानश्यमानमपश्यत् ॥ नागोजिभट्टस्तु 'वनापगशतं वनंजलं । तत्पूर्णनदीशतं । आर्षोह्रस्वइतिव्याचख्यौ । तत्रापगशब्दोरूढएवेत्यङ्गीकरणास्वारस्य ह्रस्वतायाआर्षत्वकल्पनचेतिकुटिलताटीकनीया ॥ १६ ॥ **ति०** वज्रदग्ध अशनिहत ॥ २२ ॥ **शि०** योद्वन्द्वयुद्धंदद्यात् सत्रैलोक्येनास्ति इत्यह शङ्के मन्ये । त्वंतुभोगेषुप्रसक्तस्सन् ममबलनश्रृणोषि नाश्रृणो ॥ २४ ॥ **ति०** इक्ष्वाकुपरिभावित्वात् त्वदुक्तावमाननवाक्यस्येक्ष्वाकुकुलपरिभवरूपत्वादित्यर्थ । वच' शापरूपं ॥ २८ ॥

[ **पा०** ] १ इदमर्ध ख. ग. घ ज. पाठेषुदृश्यते. २ क. ग. च. ज. आपगानाशत. ३ ख. ग. घ. निपतितोमहान्.

यदि गुप्ताः प्रजाः सम्यक्तदा सत्यं वचोस्तु मे ॥ २८ ॥
उत्पत्स्यते कुले ह्यस्मिन्निक्ष्वाकूणां महात्मनाम् ॥ रामो दाशरथिर्नाम यस्ते प्राणान्हरिष्यति ॥२९॥
ततो जलधरोदग्रस्ताडितो देवदुन्दुभिः ॥ तस्मिन्नुदाहृते शापे पुष्पवृष्टिश्च खाच्युता ॥ ३० ॥
ततः स राजा राजेन्द्र गतः स्थानं त्रिविष्टपम् ॥ स्वर्गते च नृपे तस्मिन्राक्षसः सोपसर्पत ॥ ३१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

---

## विंशः सर्गः ॥ २० ॥

पृथिवीस्थपृथ्वीपतिपराजयपूर्वकंनिर्गतेनरावणेन गगनेमेघमण्डलवर्तिनोनारदस्यावलोकनेन तम्प्रति साभिवादनमागमनप्रयोजनप्रश्न ॥ १ ॥ नारदेनाद्भुतयुद्धदर्शनस्यस्वागमनप्रयोजनत्वोक्त्या मर्त्यानादुर्बलतयातज्जयस्यकीर्त्यप्रयोजकत्वोक्त्याच यमस्यसर्वसहर्तृत्वेनबलिष्ठवरिष्ठत्वोक्त्याच तज्जयचोदना ॥ २ ॥ तथा यमजयाय तल्लोकप्रस्थितेरावणे अद्भुतरणदिदृक्षया स्वेनापितत्रगमनम् ॥ ३ ॥

ततो वित्रासयन्मर्त्यान्पृथिव्यां राक्षसाधिपः ॥ आससाद घने तस्मिन्नारदं मुनिपुङ्गवम् ॥ १ ॥
तस्याभिवादनं कृत्वा दशग्रीवो निशाचरः ॥ अब्रवीत्कुशलं दृष्ट्वा हेतुमागमनस्य च ॥ २ ॥
नारदस्तु महातेजा देवर्षिरमितप्रभः ॥ अब्रवीन्मेघपृष्ठस्थो रावणं पुष्पके स्थितम् ॥ ३ ॥
राक्षसाधिपते सौम्य तिष्ठ विश्रवसः सुत ॥ प्रीतोस्म्यभिजनोपेतविक्रमैरूर्जितैस्तव ॥ ४ ॥
विष्णुना दैत्यघातैश्च गन्धर्वोरगधर्षणैः ॥ त्वया समं विमर्दैश्च भृशं हि परितोषितः ॥ ५ ॥
किंचिद्वक्ष्यामि तावत्ते श्रोतव्यं श्रोष्यसे यदि ॥ श्रुत्वा चानन्तरं कार्यं त्वया राक्षससत्तम ॥
तन्मे निगदतस्तात समाधिं श्रवणे कुरु ॥ ६ ॥
किमयं वध्यते तात त्वयाऽवध्येन दैवतैः ॥ हत एव ह्ययं लोको यदा मृत्युवशं गतः ॥ ७ ॥
देवदानवदैत्यानां यक्षगन्धर्वरक्षसाम् ॥ अवध्येन त्वया लोकः क्लेष्टुं युक्तो न मानुषः ॥ ८ ॥
नित्यं श्रेयसि संमूढं महद्भिर्व्यसनैर्वृतम् ॥ हन्यात्कस्तादृशं लोकं जराव्याधिशतैर्युतम् ॥ ९ ॥

---

॥ २८—३० ॥ अपसर्पत अपासर्पत्। अपगतवानित्यर्थः ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

आससाद घने तस्मिन्निति । तस्मिन्काले घने घनपृष्ठे स्थित नारदमित्यर्थः ॥१॥ हेतुमागमनस्य चेत्यत्रापि पृष्ट्वेत्यन्वयः ॥ २—३ ॥ तिष्ठेति । मद्वचन श्रोतुमिति शेषः । विष्णुदैत्यघातादिर्दृष्टान्तार्थः ॥४—५॥ समाधि ऐकाग्र्य ॥६॥ अय लोकः । त्वया अवध्येनेति च्छे-

---

नि० पुष्पवृष्टिरत्रापिप्राग्वत् ॥ शि० शापे रावणविघातबोधकवचने ॥ स० जलधरोदग्र अब्दशब्दतउत्कृष्ट । ताडित सइव । "देववाद्यान्यवाद्यन्तस्वयमन्यैरनाहतौ" इतिहरिवंशेतत्स्वभावावेदनादत्रापितथैवार्थोज्ञेय ॥ ३० ॥ इत्येकोनविंश सर्ग ॥ १९ ॥

ति० कुशलंपृष्ट्वा आगमनस्यहेतुमब्रवीत् पप्रच्छेत्यर्थ ॥ २ ॥ ति० तिष्ठ मद्वच श्रोतुमितिशेष ॥ ४ ॥ ति० विष्णुनादैत्यघातादिभिरहंतोषित । त्वयासमंगन्धर्वोरगधर्षणैर्विमर्दैर्भाविभि परितोभविष्यामीत्यर्थ ॥ स० विष्णुनाकर्त्रादैत्यघातै परितोषित । कलहप्रियत्वान्ममेतिभाव । त्वया असमंयथाभवतितथाकदापिकैरपिपूर्वमनाचरितत्वादनौपम्यं । गन्धर्वोरगधर्षणै विमर्दै एतद्रूपै करिष्यमाणैः परितोषित अतिसतुष्टोभविष्यामि । विनामहद्दंहोनहतिरेतस्यभवतीतितदर्थभवन्नयंयत्नोदेवसेवारूपइतिनारदस्यनप्रत्यवायइत्यभिप्राय ॥ ५ ॥ ति० अयंलोकोमर्त्यलोक । दैवतैरवध्येनेत्यनेन मर्त्येभ्योभयराहित्यमुक्तं ॥ स० हतएवकिंवध्यते । स्वतएवमरिष्यन्मारणंरावण तवनयुक्तमितिभाव ॥ ७ ॥ ति० श्रेयसिसमूढं श्रेयआचरणेबुद्धिहीनं

[ पा० ] १ क. ख. ग. ज. तार्क्ष्यस्योरगधर्षणै'.

तैस्तैरनिष्टोपगमैरजस्रं यत्रकुत्र कः ॥ मतिमान्मानुषे लोके युद्धेन प्रणयी भवेत् ॥ १० ॥
क्षीयमाणं दैवहतं क्षुत्पिपासाजरादिभिः ॥ विषादशोकसंमूढं लोकं त्वं क्षपयस्व मा ॥ ११ ॥
पश्य तावन्महाबाहो राक्षसेश्वर मानुषम् ॥ मूढमेवं विचित्रार्थं यस्य न ज्ञायते गतिः ॥ १२ ॥
क्वचिद्वादित्रनृत्यादि सेव्यते मुदितैर्जनैः ॥ रुद्यते चापरैरार्तैर्धाराश्रुनयनाननैः ॥ १३ ॥
मातापितृसुतस्नेहैर्भार्याबन्धुमनोरमैः ॥ मोहितोऽयं जनो ध्वस्तः क्लेशं स्वं नावबुध्यते ॥ १४ ॥
अलमेनं परिक्लिश्य लोकं मोहनिराकृतम् ॥ जित एव त्वया सौम्य मर्त्यलोको न संशयः ॥ १५॥
अवश्यमेभिः सर्वैश्च गन्तव्यं यमसादनम् ॥ तन्निगृह्णीष्व पौलस्त्य यमं परपुरंजय ॥ १६ ॥
तस्मिञ्जिते जितं सर्वं भवत्येव न संशयः ॥ एवमुक्तस्तु लङ्केशो दीप्यमानं स्वतेजसा ॥
अब्रवीन्नारदं तत्र संप्रहस्याभिवाद्य च ॥ १७ ॥
महर्षे देवगन्धर्वविहार समरप्रिय ॥ अहं समुद्यतो गन्तुं विजयार्थं रसातलम् ॥ १८ ॥
ततो लोकत्रयं जित्वा स्थाप्य नागान्सुरान्वशे ॥ समुद्रममृतार्थं च मथिष्यामि रसालयम् ॥ १९॥
अथाब्रवीद्दशग्रीवं नारदो भगवानृषिः ॥ क खल्विदानीं मार्गेण त्वया ह्यन्येन गम्यते ॥ २० ॥
अयं खलु सुदुर्गम्यः प्रेतराजपुरं प्रति ॥ मार्गो गच्छति दुर्धर्षो यमस्यामित्रकर्शन ॥ २१ ॥
स तु शारदमेघाभं हासं मुक्त्वा दशाननः ॥ उवाच कृतमित्येव वचनं चेदमब्रवीत् ॥ २२ ॥
तस्मादेवमहं ब्रह्मन्वैवस्वतवधोद्यतः ॥ गच्छामि दक्षिणामाशां यत्र सूर्यात्मजो नृपः ॥ २३ ॥
मया हि भगवन्क्रोधात्प्रतिज्ञातं रणार्थिना ॥ अवजेष्यामि चतुरो लोकपालानिति प्रभो ॥ २४ ॥
तदिह प्रस्थितोऽहं वै प्रेतराजपुरं प्रति ॥ प्राणिसंक्लेशकर्तारं योजयिष्यामि मृत्युना ॥ २५ ॥
एवमुक्त्वा दशग्रीवो मुनिं तमभिवाद्य च ॥ प्रययौ दक्षिणामाशां प्रहृष्टः सह मन्त्रिभिः ॥ २६ ॥

---

दः ॥७—९॥ युद्धेनेति । मतिमान् कदा तस्मिन्मर्त्यलोके युद्धेन वधप्रणयी भवेत् न कोपीत्यर्थः ॥१०॥ किंच मृतमारणवद्युद्धेन तेषां वधो व्यर्थ इत्याह—क्षीयमाणमिति ॥ ११—१२ ॥ धाराश्रुनयनाननैःधाराभूताश्रुनयनयुक्तमुखैः ॥१३॥ भार्याबन्धुमनोरमैः भार्याबन्धुषु मनोरमो मनोरमणं प्रीतिर्येषां तैः । क्लेशं पारलौकिकदुःख ॥ १४ ॥ मोहनिराकृतः अज्ञानेन प्रच्यावितार्थः ॥ १५—१७ ॥ देवगन्धर्वविहार देवगन्धर्वैर्गानपरैर्विहारपर । समरप्रिय समरदर्शनप्रिय ॥ १८ ॥ रसालयं अमृतरसालयं ॥ १९ ॥ इदानी रसातलजिगमिषुणा त्वया अन्येन मार्गेण रसातलमार्गव्यतिरिक्तमार्गेण क गम्यते ॥ २० ॥ कस्य तर्ह्ययमार्ग इत्यपेक्षायामाह—अयं खल्वित्यादि ॥ सुदुर्गम्य. सुदुर्गमः । यदार्षः ॥ २१ ॥ हासंमुक्त्वेति । कृत्वेति यावत् । शारदमेघाभ नारदप्रति कृतमित्येवावोचत् । तन्मार्गेणैव गमनं तज्जयश्च मम सिद्ध एवेत्युवाचेत्यर्थः ॥ २२ ॥ तस्मादिति ॥ यस्मान्मार्ग उपदिष्टः यतश्च मया चतुर्दिक्पालजयः प्रतिज्ञातस्तस्मा-

---

॥ ९ ॥ **ति०** विषादोव्याध्यादिजदु खं । शोकोबन्धुवियोगादिजदु ख ॥ **स०** विषादशोकसमूढ विषादवत् विषभक्षकवत्शोकसमूढं । तस्ययथाशोकस्तथाशोकयुतमितिभाव. ॥ मा माऽयं । माक्षपयस्व नसहर ॥ ११ ॥ **ति०** यस्य मनुष्यलोकस्य गति दुःखादिभोगकाल । नज्ञायते । तेनलोकेनेतिशेष ॥ एवंज्ञानराहित्येनमूढमपिविचित्रार्थं नानाविधक्षुद्रपुरुषार्थसक्तमानुषंलोक पश्य ॥ **स०** यस्यमानुषस्य दु खादिसमवायसमय नज्ञायते तेनैवनविदिताभवति तंपश्य ॥ **शि०** विचित्रार्थं अनेकविधाधिव्याधिविशिष्टं । पश्य जानीहि ॥ १२ ॥ **स०** मोहनिराकृत मोहेनस्वजनसगरूपेण निराकृतंक्लेशितं । मर्त्यलोकं एवंहननादिरूपेणपरिक्लिश्य क्लेशयित्वा । किं किं प्रयोजनं । पिष्टपेषणरूपत्वादितिभाव ॥ जित जितप्राय. ॥ १५ ॥ **ति०** तत रसातलजयानन्तर ॥ १९ ॥ **ति०** यमस्य यमपुरस्य ॥ २१ ॥ **ति०** हेमहाब्रह्म ‘कुमहद्भ्यामन्यतरस्या’ इत्यच् ॥ २३ ॥ **ति०** प्रययौ नारदसमीपदेशात् ॥ २६ ॥

[ **पा०** ] १ क. ख. ग. ज. लोकमेनंविचित्रार्थं. २ ख च. छ. ट. रुद्ध. ३ ख. घ —ट. तत्किमेवंपरिक्लिश्य. ४ झ. तस्मादेवमहाब्रह्मवैवस्वत ५ ङ. च. झ. ञ. ट. प्रविष्ट सह.

नारदस्तु महातेजा मुहूर्तं ध्यानमास्थितः ॥ चिन्तयामास विप्रेन्द्रो विधूम इव पावकः ॥ २७ ॥
येन लोकास्त्रयः सेन्द्राः क्लिश्यन्ते सचराचराः ॥ क्षीणे चायुषि धर्मेण स कालो जेष्यते कथम् ॥२८
स्वदत्तकृतसाक्षी यो द्वितीय इव पावकः ॥ लब्धसंज्ञा विजेष्यन्ते लोका यस्य महात्मनः ॥ २९ ॥
यस्य नित्यं त्रयो लोका विद्रवन्ति भयार्दिताः ॥ तं कथं राक्षसेन्द्रोसौ स्वयमेव गमिष्यति ॥३०॥
यो विधाता च धाता च सुकृतं दुष्कृतं तथा ॥ त्रैलोक्यं विजितं येन तं कथं विजयिष्यते ॥३१॥
अपरं किंतु कृत्वाऽयं विधानं संविधास्यति ॥ कौतूहलसमुत्पन्नो यास्यामि यमसादनम् ॥
विमर्दं द्रष्टुमनयोर्यमराक्षसयोः स्वयम् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे विंशः सर्गः ॥ २० ॥

---

## एकविंशः सर्गः ॥ २१ ॥

यमेन स्वभवनमागतनारदप्रत्यभिवादनपूर्वकमागमनप्रयोजनप्रश्न ॥ १ ॥ नारदेन तम्प्रति रणायरावणागमननिवेदनेन सज्जीभवनचोदना ॥ २ ॥ अत्रान्तरेसयमनींप्रविष्टेनरावणेन यमभटपीड्यमाननानानारकिजनविमोचनम् ॥ ३ ॥ ततोरुष्टैर्यमभटै सप्रतिरोधमायोधने रावणेन पाशुपतास्त्रप्रयोगेणयमसेनाविध्वसनपूर्वकमुच्चैर्गर्जनम् ॥ ४ ॥

एवं संचिन्त्य विप्रेन्द्रो जगाम लघुविक्रमः ॥ आख्यातुं तद्यथावृत्तं यमस्य सदनं प्रति ॥ १ ॥
अपश्यत्स यमं तत्र देवमग्निपुरस्कृतम् ॥ विधानमुपतिष्ठन्तं प्राणिनो यस्य यादृशम् ॥ २ ॥
स तु दृष्ट्वा यमः प्राप्तं महर्षिं तत्र नारदम् ॥ अब्रवीत्सुखमासीनमर्घ्यमावेद्य धर्मतः ॥ ३ ॥
कच्चित्क्षेमं तु देवर्षे कच्चिद्धर्मो न नश्यति ॥ किमागमनकृत्यं ते देवगन्धर्वसेवित ॥ ४ ॥
अब्रवीत्तु तदा वाक्यं नारदो भगवानृषिः ॥ श्रूयतामभिधास्यामि विधानं च विधीयताम् ॥ ५ ॥
एष नाम्ना दशग्रीवः पितृराज निशाचरः ॥ उपयाति वशं नेतुं विक्रमैस्त्वां सुदुर्जयम् ॥ ६ ॥
एतेन कारणेनाहं त्वरितो ह्यागतः प्रभो ॥ दण्डप्रहरणस्याद्य तव किंनु भविष्यति ॥ ७ ॥

---

दित्यर्थः ॥२३—२८॥ स्वदत्त स्वकृतं च । स्वदत्तस्वकृतशब्देन कायक्लेशरूपं तपः महात्मनः अनुग्रहादिति शेषः ॥२९—३०॥ धाता विधाता सामान्यतो विशेषतश्च कर्ता ॥३१॥ अपरमिति । काल एव सर्वसाधनं । अय तु कालातिरिक्तमपर कि विधानं साधनसपादनं कृत्वा कालजय सविधास्यतीत्येव कौतूहलसमुत्पन्नोहं यमस्य सदन द्रष्टु यास्यामि ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥

अग्निः पुरस्कृत' साक्षितया येनासौ अग्निपुरस्कृतः त । प्राणिनो विधान निग्रहानुग्रहकृत्य । उपतिष्ठन्त अनुतिष्ठन्त ॥ २—४ ॥ विधान मत्तः श्रुतापदः प्रतिक्रियामित्यर्थ. ॥ ५—६ ॥ दण्डः कालदण्डः

---

**ति०** आयुषिक्षीणेसति धर्मेण धर्ममार्गेण । त्रयोलोकायेनक्लिश्यन्ते दण्ड्यन्ते । सकाल, कथमनेनजेष्यते ॥ २८ ॥ **ति०** यश्चकाल प्राणिना स्वदत्तंचस्वकृतंचस्वदत्तकृते तयो साक्षी । दत्तं ज्ञानं । इदविहितयागादेरप्युपलक्षण । कृतशब्देनकायक्लेशरूप तप । सकथजेष्यतइतिसबन्ध ॥ यस्यलब्धसज्ञा यतोलब्धसज्ञाविचेष्टन्ते व्यवहरन्तीत्यर्थ । यद्वा यस्यमहात्मन. । अनुग्रहादितिशेष ॥ २९ ॥ **ति०** विजयिष्यते विजेष्यते ॥ ३१ ॥ **स०** कौतूहलसमुत्पन्न उत्पन्नकौतूहल ॥ यमसादनं यमलोकं ॥ ३२ ॥ इतिविंश सर्ग ॥ २० ॥

**स०** लघुविक्रम रावणतोपितीव्रगमन ॥ १ ॥ **ति०** यस्यप्राणिनोयादृशविधानं पुण्यपापरूपंकर्म । तादृशमनुतिष्ठन्तं । तत्तदनुगुणफलंप्रयच्छन्त । यद्वा यस्ययादृशंकर्म तादृशंविधान निग्रहानुग्रहरूपंकृत्यमनुतिष्ठन्तमित्यर्थ ॥ २ ॥ **ति०** कच्चित्क्षेम-

[ पा० ] १ ख —छ. हिस्यतेकथं. २ ख. ग. घ. च ज. यश्चदत्तेकृतेसाक्षी. ३ क. ख. घ ङ. च ज. ञ. ट. विचेष्टन्ते. ४ क. ख. घ. च. छ. ज. सुकृतेदुष्कृते. ५ घ. यमराजस्तुदृष्ट्वैवविधान.

एतस्मिन्नन्तरे दूरादंशुमन्तमिवोदितम् ॥ ददर्श दीप्तमायान्तं विमानं तस्य रक्षसः ॥ ८ ॥
तं देशं प्रभया तस्य पुष्पकस्य महाबलः ॥ कृत्वा वितिमिरं सर्वं समीपं सोभ्यवर्तत ॥ ९ ॥
सोपश्यत्सुमहाबाहुर्दशग्रीवस्ततस्ततः ॥ प्राणिनः सुकृतं कर्म भुञ्जानांश्चैव दुष्कृतम् ॥ १० ॥
अपश्यत्सैनिकांश्चास्य यमस्यानुचरैः सह ॥ यमस्य पुरुषैरुग्रैर्घोररूपैर्भयानकैः ॥ ११ ॥
ददर्श वध्यमानांश्च क्लिश्यमानांश्च देहिनः ॥ क्रोशतश्च महानादं तीव्रनिष्टनतत्परान् ॥
कृमिभिर्भक्ष्यमाणांश्च सारमेयैश्च दारुणैः ॥ १२ ॥
श्रोत्रायासकरा वाचो वदतश्च भयावहाः ॥ संतार्यमाणान्वैतरणीं बहुशः शोणितोदकाम् ॥ १३ ॥
वालुकासु च तप्तासु तप्यमानान्मुहुर्मुहुः ॥ असिपत्रवने चैव भिद्यमानानधार्मिकान् ॥ १४ ॥
रौरवे क्षारनद्यां च क्षुरधारासु चैव हि ॥ पानीयं याचमानांश्च तृषितान्क्षुधितानपि ॥ १५ ॥
शवभूतान्कृशान्दीनान्विवर्णान्मुक्तमूर्धजान् ॥ मलपङ्कधरान्दीनान्रूक्षांश्च परिधावतः ॥
ददर्श रावणो मार्गे शतशोथ सहस्रशः ॥ १६ ॥
कांश्चिच्च गृहमुख्येषु गीतवादित्रनिस्वनैः ॥ प्रमोदमानानद्राक्षीद्रावणः सुकृतैः स्वकैः ॥ १७ ॥
गोरसं गोप्रदातारो ह्यन्नं चैवान्नदायिनः ॥ गृहांश्च गृहदातारः स्वकर्मफलमश्नतः ॥
सुवर्णमणिमुक्ताभिः प्रमदाभिरलंकृतान् ॥ १८ ॥
धार्मिकानपरांस्तत्र दीप्यमानान्स्वतेजसा ॥ ददर्श सुमहाबाहू रावणो राक्षसाधिपः ॥ १९ ॥
ततस्तान्भिद्यमानांश्च कर्मभिर्दुष्कृतैः स्वकैः ॥ रावणो मोचयामास विक्रमेण बलाद्बली ॥ २० ॥
प्राणिनो मोचितास्तेन दशग्रीवेण रक्षसा ॥ सुखमापुर्मुहूर्तं ते ह्यतर्कितमचिन्तितम् ॥ २१ ॥
प्रेतेषु मुच्यमानेषु राक्षसेन महीयसा ॥ प्रेतगोपाः सुसंक्रुद्धा राक्षसेन्द्रमभिद्रवन् ॥ २२ ॥
ततो हलहलाशब्दः सर्वदिग्भ्यः समुत्थितः ॥ धर्मराजस्य योधानां शूराणां संप्रधावताम् ॥ २३ ॥
ते प्रासैः परिघैः शूलैर्मुसलैः शक्तितोमरैः ॥ पुष्पकं समवर्षन्त शूराः शतसहस्रशः ॥ २४ ॥
तस्यासनानि प्रासादान्वेदिकास्तोरणानि च ॥ पुष्पकस्य बभञ्जुस्ते शीघ्रं मधुकरा इव ॥ २५ ॥
देवनिष्ठानभूतं तद्विमानं पुष्पकं मृधे ॥ भज्यमानं तथैवासीदक्षयं ब्रह्मतेजसा ॥ २६ ॥
असंख्या सुमहत्यासीत्तस्य सेना महात्मनः ॥ शूराणामुग्रयातॄणां सहस्राणि शतानि च ॥ २७ ॥
ततो वृक्षैश्च शैलैश्च प्रासादानां शतैस्तथा ॥ ततस्ते सचिवास्तस्य यथाकामं यथाबलम् ॥
अयुध्यन्त महावीराः स च राजा दशाननः ॥ २८ ॥

---

प्रहरणमायुध यस्य तस्य तव किनु भविष्यतीति । जयोऽपजयो वेत्यर्थ ॥ ७—११ ॥ तीव्रो निष्टन' क्रूरशब्द. ॥ १२ ॥ सतार्यमाणान्वैतरणीमिति सज्ञापदवशात्पादाक्षराधिक्य ॥ १३—

---

मित्यादि । लोकेइतिशेष ॥ ४ ॥ **स०** यद्यपिप्राणिन सुकृनदुष्कृतमितिनिर्देशक्रमानुगुण्यायपूर्वगृहमुख्येष्वित्यादितत्फलमभिलपनीय । तथापिव्युत्क्रमोदुष्कृतिनाबाहुल्यात्कृत । तत्रमहाफलत्वेनाभ्यर्हितत्वात्पूर्वसुकृतकृतग्रहणमितिविवेक ॥ १७ ॥ **ति०** गृहदातार गृहदातॄन् । अश्नत उपभुञ्जानान् ॥ १८ ॥ **ति०** भिद्यमानान् पीड्यमानान् । वध्यमानानितिपाठान्तरं ॥ **स०** विक्रमेण यमाज्ञाद्यतिक्रमेण । तत्रहेतुर्बलीति । बलात् यमदूतसेनात ॥ २० ॥ **ति०** अचिन्तितमिति अतर्कितमित्यस्यैवविवरण ॥ **स०** अचिन्तितमितिसुखविशेषण । अतर्कित स्वतर्कणाविषयत्वविनायथाभवतितथा मुच्यमानेषुप्रेतेष्वित्यन्वय ॥ २१ ॥ प्रेतगोपा प्रेतरक्षका ॥ २२ ॥ **ति०** देवनिष्ठानभूत देवाधिष्ठानभूतं । भज्यमानमपितथैवासीत् अभग्नमासीत् ॥ २६ ॥ **शि०** शूराणांशतानिसहस्राणि अभवन्निितिशेष । तस्य यमस्य । सेनासुमहती । अतएव असख्या सख्यातुमशक्याऽऽसीत् ॥ २७ ॥

[ पा० ] १ क. ग घ ज समीपसमवतत झ. ञ. ट समीपमभ्यवर्तत. २ क. ख घ. रावणोमर्त्यान्शतशोथ. ३ क —छ. ञ देवाधिष्ठानभूतं. ज देवतास्थानभूत

ते तु शोणितदिग्धाङ्गाः सर्वशस्त्रसमाहताः ॥ अमात्या राक्षसेन्द्रस्य चक्रुरायोधनं महत् ॥ २९ ॥
अन्योन्यं ते महाभागा जघ्नुः प्रहरणैर्भृशम् ॥ यमस्य च महाबाहो रावणस्य च मन्त्रिणः ॥ ३० ॥
अमात्यांस्तांस्तु संत्यज्य यमयोधा महाबलाः ॥ तमेव चाभ्यधावन्त शूलवर्षैर्दशाननम् ॥ ३१ ॥
ततः शोणितदिग्धाङ्गः प्रहारैर्जर्जरीकृतः ॥ फुल्लाशोक इवाभाति पुष्पके राक्षसाधिपः ॥ ३२ ॥
स तु शूलगदाप्रासाञ्छक्तितोमरसायकान् ॥ मुसलानि शिला वृक्षान्मुमोचास्त्रबलाद्बली ॥ ३३ ॥
तरूणां च शिलानां च शस्त्राणां चातिदारुणम् ॥ यमसैन्येषु तद्वर्षं पपात धरणीतले ॥ ३४ ॥
तांस्तु सर्वान्विनिर्भिद्य तदस्त्रमपहत्य च ॥ जघ्नुस्ते राक्षसं घोरमेकं शतसहस्रशः ॥ ३५ ॥
परिवार्य च तं सर्वे शैलं मेघोत्करा इव ॥ भिन्दिपालैश्च शूलैश्च निरुच्छ्वासमपोथयन् ॥ ३६ ॥
विमुक्तकवचः क्रुद्धः सिक्तः शोणितविस्रवैः ॥ ततः स पुष्पकं त्यक्त्वा पृथिव्यामवतिष्ठत ॥३७॥
ततः स कार्मुकी बाणी समरे चाभिवर्तत ॥ लब्धसंज्ञो मुहूर्तेन क्रुद्धस्तस्थौ यथाऽन्तकः ॥ ३८ ॥
ततः पाशुपतं दिव्यमस्त्रं संधाय कार्मुके ॥ तिष्ठ तिष्ठेति तानुक्त्वा तच्चापं विचकर्ष सः ॥ ३९ ॥
आकर्णात्स विकृष्याथ चापमिन्द्रारिराहवे ॥ मुमोच तं शरं क्रुद्धस्त्रिपुरे शंकरो यथा ॥ ४० ॥
तस्य रूपं शरस्यासीद्विधूमज्वालमण्डलम् ॥ वनं दहिष्यतो घर्मे दावाग्नेरिव मूर्च्छतः ॥ ४१ ॥
ज्वालामाली स तु शरः क्रव्यादानुगतो रणे ॥ मुक्तो गुल्मान्द्रुमांश्चापि भस्म कृत्वा प्रधावति ॥४२॥
ते तस्य तेजसा दग्धाः सैन्या वैवस्वतस्य तु ॥ रणे तस्मिन्निपतिता दावदग्धा नगा इव ॥ ४३ ॥
ततस्तु सचिवैः सार्धं राक्षसो भीमविक्रमः ॥ ननाद सुमहानादं कम्पयन्निव मेदिनीम् ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकविंशः सर्गः ॥ २१ ॥

---

## द्वाविंशः सर्गः ॥ २२ ॥

रावणकृतनिजसेनासंक्षयक्षुभितेनयमेन मृत्युप्रभृतिभि सह साटोपंरावणेनसहमहारणप्रवर्तनम् ॥ १ ॥ मृत्युना प्रबलीभवतोरावणस्यमारणाय स्वनियोजनमर्थितेनयमेन तत्प्रतिषेधपूर्वकरावणसजिहीर्षया निजचण्डदण्डोद्यमने सत्वरमाविर्भूतेनब्रह्मणा तंप्रति दण्डरावणयोरुभयोरपिस्वदत्तवरतयाऽन्यतरपराभवे स्वस्यानृतवचनत्वोक्त्या रावणेदण्डपातनप्रतिषेधनम् ॥२॥ यमे तद्वचनगौरवेणरथादिभि· सहान्तर्धानंगते रावणेन जयघोषणपूर्वकंपुष्पकारोहणेननिर्गमनम् ॥ ३ ॥

स तस्य तु महानादं श्रुत्वा वैवस्वतः प्रभुः ॥ शत्रुं विजयिनं मेने स्वबलस्य च संक्षयम् ॥ १ ॥

---

३४ ॥ तदस्त्रं रावणप्रयुक्त प्रागुक्तशस्त्रवर्षसाधकं । अपहत्य निरस्य ॥ ३५—४१ ॥ क्रव्यादैः स्वसृष्टैरनुगतस्तथा ॥ ४२—४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकविंशःसर्गः ॥ २१ ॥

---

ति० आयोधनं युद्धं ॥ २९ ॥ ति० सरावणोस्त्रबलात् अस्त्रसामर्थ्यात् । शूलादीन्मुमोच ॥ शि० स रावण शूलादीन्मुमोच शिलावृक्षाश्चमुमोच ॥ ३३ ॥ ति० तद्वर्ष रावणविसृष्टशस्त्रवर्षं । यमसैन्येषुपतित्वा धरणीतलेपपात ॥ ३४ ॥ ति० तान् शूलगदाप्रासादीन् । विनिर्भिद्य भङ्क्त्वा ॥ ३५ ॥ ति० निरुच्छ्वासयथाभवतितथा रावणशरैरपोथयन् ॥ ३६ ॥ शि० अभिवर्धत अभ्यवर्धत । उत्साहवानभवदित्यर्थः ॥ अतएवतस्थौ ॥३८॥ स० मूर्च्छत उच्छ्रायंगतस्य ॥४१॥ स० नादस्यसुमहत्त्वं जयत ॥ ४५ ॥ इत्येकविंश सर्ग ॥ २१ ॥

[ पा० ] १ ङ. झ. ञ. ट. मुमोचचशिलावृक्षान्. २ क.—घ. ज. पपातातिभयंकर. ३ ट चाभिवर्धत. ४ ङ. च. छ. झ. ट. बलेतस्मिन् ५ ङ. च. छ झ. ञ. ट. पतितामाहेन्द्राइवकेतव . ६ क. ख. घ. ज. वैवस्वतोयम .

स हि योधान्हतान्मत्वा क्रोध[१]संरक्तलोचनः ॥ अब्रवीत्त्वरितं[२] सूतं रथोऽयमुपनीयताम् ॥ २ ॥
तस्य सूतस्तदा[३] दिव्यमुपस्थाप्य महा[४]रथम् ॥ स्थितः स च महातेजा ह्यध्यारोहत[५] तं रथम् ॥
पाशमुद्गरहस्तश्च मृत्युस्तस्याग्रतः स्थितः ॥ ३ ॥
येन संक्षिप्यते सर्वं त्रैलोक्यमिदमव्ययम् ॥ कालदण्डस्तु पार्श्वस्थो मूर्तिमान[६]स्य चाभवत् ॥
यमप्रहरणं दिव्यं[७] तेजसा ज्वलदग्निमत् ॥ ४ ॥
तस्य पार्श्वेषु निश्छिद्राः कालपाशाः प्रतिष्ठिताः ॥ पावकस्पर्शसंकाशः स्थितो मूर्तश्च मुद्गरः ॥५॥
ततो लोकत्रयं क्षुब्धमकम्पन्त दिवौकसः ॥ कालं दृष्ट्वा[८] तथा क्रुद्धं सर्वलोकभयावहम् ॥ ६ ॥
ततः प्रचोदयन्सूतस्तानश्वान्रुधिरप्रभान् ॥ प्रययौ भीमसन्नादो यत्र रक्षःपतिः स्थितः ॥ ७ ॥
मुहूर्तेन यमं ते तु हया हरिहयोपमाः ॥ प्रापयन्मनसस्तुल्या यत्र तत्प्रस्तुतं रणम् ॥ ८ ॥
दृष्ट्वा तथैव विकृतं रथं मृत्युसमन्वितम् ॥ सचिवा राक्षसेन्द्रस्य[९] सहसा विप्रदुद्रुवुः ॥ ९ ॥
[ [१०]अभ्यधावन्त संक्रुद्धा बलिनोतिभयंकराः ॥ ] लघुसत्त्वतया ते हि नष्टसंज्ञा भयार्दिताः ॥
[११]नेह योद्धुं समर्थाः स्म इत्युक्त्वा प्रययुर्दिशः ॥ १० ॥
स तु तं तादृशं दृष्ट्वा रथं लोकभयावहम् ॥ नाक्षुभ्यत दशग्रीवो न चापि भयमाविशत् ॥ ११ ॥
स तु रावणमासाद्य व्यसृजच्छक्तितोमरान् ॥ यमो मर्माणि संक्रुद्धो रावणस्योपकृन्तत ॥ १२ ॥
[ [१२]मर्मसु च्छिद्यमानेषु रावणो राक्षसेश्वरः ॥ सहंस्तस्थौ रुजं घोरां भिद्यमान इवाचलः ॥ १३ ॥]
रावणस्तु ततः स्वस्थः शरवर्षं मुमोच ह ॥ तस्मिन्वैवस्वतरथे तोयवर्षमिवाम्बुदः ॥ १४ ॥
[ [१३]शरास्ते वज्रसंकाशाश्छादयन्ति रणे यमम् ॥ यथाऽचलं महाघोरा नानावर्णा वलाहकाः ॥१५॥
तान्निहत्य शरांस्तूर्णं रावणस्य यमः स्वयम् ॥ ततः प्रहरणं घोरं मुमोचारिनिषूदनः ॥ १६ ॥ ]
ततो महाशक्तिशरैः पात्यमानो महोरसि ॥ नाशक्नोत्प्रतिकर्तुं स राक्षसः शल्य[१४]पीडितः ॥ १७ ॥
एवं नानाप्रहरणैर्यमेनामित्रकर्शिना ॥ सप्तरात्रं कृतः सङ्ख्ये विसंज्ञो विमुखो रिपुः ॥ १८ ॥
तदासीत्तुमुलं युद्धं यमराक्षसयोर्द्वयोः ॥ जयमाकाङ्क्षतोर्वीर समरेष्वनिवर्तिनोः ॥ १९ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ प्रजापतिं पुरस्कृत्य समेतास्तद्रणाजिरम् ॥ २० ॥
संवर्त इव लोकानां[१५] क्रुध्यतोरभवत्तदा ॥ राक्षसानां च मुख्यस्य प्रेतानामीश्वरस्य च ॥ २१ ॥

उपनीयतामित्यब्रवीदित्यन्वयः ॥ २—३ ॥ येन मृत्युना । युगान्ते सर्वं सकृदेव संह्रियत इत्यर्थः । अव्यय प्रवाहनित्यं ॥ ४ ॥ निश्छिद्रा. निरन्तराः ॥ ५—६ ॥ ततः प्रचोदयन्सूतस्तान्हयान्रुधिरप्रभा-नित्यत्र चो इति गायत्री ॥ ७॥ मनस्तुल्याः मनस्तु-ल्यवेगा इत्यर्थः ॥ ८ ॥ विकृतं घोरसन्नाहरूपविका-रवन्त ॥ ९ ॥ लघुसत्त्वतया अल्पवीर्यतया ॥१०—

ति० उपनीयतामित्यब्रवीदित्यन्वय ॥ २ ॥ स० यमंविनाऽव्ययमितिवा ॥ ४ ॥ ति० प्रस्तुत प्रारब्ध ॥ ७ ॥ ति० सप्तरात्र युद्धकृत्लेतिशेष ॥ शि० सप्तरात्रविसंज्ञोविमुखश्चाभवत् ॥ १८ ॥ ति० समेता प्राप्ता ॥ शि० समेता. बभूवुरिति शेष ॥ २० ॥ स० सवर्त प्रलय ॥ २१ ॥

[ पा० ] १ क ख. ज क्रोधयाकुलेक्षण. २ ङ झ. ञ ट. त्वरित सूतरथोमेउपनीयता च. छ. त्वरित सूतंरथोमेयु-ज्यतामिति. क ख ज त्वरित सूतं रथ समुपनीयता. ३ क ख. घ. ज सूतोरथंदिव्यं. ४ क ख घ महास्वनं. ५ क. ख. घ. आरुरोहमहारथं ६ क ख. घ ज. मूर्तिमान्स्यन्दनोत्तमे. ७ क. दिव्यप्रहसन्निवतेजसा ख. दिव्यंप्रतपन्स्वेनतेजसा. घ दिव्यंप्रदहन्निवतेजसा. ८ क. तेदृष्ट्वापाशसयुक्तरथं. ९ क. घ. राक्षसेन्द्रस्यसर्वलोकभयावहं १० इदमर्धं घ पाठेदृश्यते. ११ क. घ नात्र. १२ अयंश्लोक क. ख घ. ज. पाठेषुदृश्यते. १३ इदंश्लोकद्वय क ख घ ज. पाठेषुदृश्यते. १४ च. शरपीडितः. १५ च.—ट. लोकानायुध्यतोरभवत्तदा. क. ख. घ. लोकानामभवद्युध्यतोस्तयो.

राक्षसेन्द्रोपि विस्फार्य चापमिन्द्राशनिप्रभम् ॥ निरन्तरमिवाकाशं कुर्वन्बाणांस्ततोसृजत् ॥ २२ ॥
मृत्युं चतुर्भिर्विशिखैः सूतं सप्तभिरर्दयत् ॥ यमं शतसहस्रेण शीघ्रं मर्मस्वताडयत् ॥ २३ ॥
ततः क्रुद्धस्य वदनाद्यमस्य समजायत ॥ ज्वालामाली सनिश्वासः सधूमः कोपपावकः ॥ २४ ॥
तदाश्चर्यमथो दृष्ट्वा देवदानवसन्निधौ ॥ प्रहर्षितौ सुसंरब्धौ मृत्युकालौ बभूवतुः ॥ २५ ॥
ततो मृत्युः क्रुद्धतरो वैवस्वतमभाषत ॥ मुञ्च मां समरे यावद्धन्मीमं पापराक्षसम् ॥
नैषा रक्षोभवेदद्य मर्यादा हि निसर्गतः ॥ २६ ॥
हिरण्यकशिपुः श्रीमान्नमुचिः शम्बरस्तथा ॥ विसंधिर्धूमकेतुश्च बलिर्वैरोचनोपि च ॥
दम्भुर्दैत्यमहाराजो वृत्रो बाणस्तथैव च ॥ २७ ॥
राजर्षयः शास्त्रविदो गन्धर्वाः समहोरगाः ॥ ऋषयः पन्नगा दैत्या यक्षाश्चाप्यप्सरोगणाः ॥ २८ ॥
युगान्तपरिवर्ते च पृथिवी समहार्णवा ॥ क्षयं नीता महाराज सपर्वतसरिद्द्रुमा ॥ २९ ॥
एते चान्ये च बहवो बलवन्तो दुरासदाः ॥ विनिपन्ना मया दृष्टाः किमुतायं निशाचरः ॥ ३० ॥
मुञ्च मां साधु धर्मज्ञ यावदेनं निहन्म्यहम् ॥ न हि कश्चिन्मया दृष्टो बलवानपि जीवति ॥ ३१ ॥
बलं मम न खल्वेतन्मर्यादैषा निसर्गतः ॥ स दृष्टो न मया कालं मुहूर्तमपि जीवति ॥ ३२ ॥
तस्यैवं वचनं श्रुत्वा धर्मराजः प्रतापवान् ॥ अब्रवीत्तत्र तं मृत्युं त्वं तिष्ठैनं निहन्म्यहम् ॥ ३३ ॥
ततः संरक्तनयनः क्रुद्धो वैवस्वतः प्रभुः ॥ कालदण्डममोघं तु तोलयामास पाणिना ॥ ३४ ॥
यस्य पार्श्वेषु निखिलाः कालपाशाः प्रतिष्ठिताः ॥ पावकाशनिसंकाशो मुद्गरो मूर्तिमान्स्थितः ॥३५॥
दर्शनादेव यः प्राणान्प्राणिनामपकर्षति ॥ किं पुनः स्पृश्यमानस्य पात्यमानस्य वा पुनः ॥ ३६ ॥
स ज्वालापरिवारस्तु निर्दहन्निव राक्षसम् ॥ तेन स्पृष्टो बलवता महाप्रहरणोऽस्फुरत् ॥ ३७ ॥
ततो विदुद्रुवुः सर्वे तस्मात्त्रस्ता रणाजिरे ॥ सुराश्च क्षुभिताः सर्वे दृष्ट्वा दण्डोद्यतं यमम् ॥ ३८ ॥
तस्मिन्प्रहर्तुकामे तु यमे दण्डेन रावणम् ॥ यमं पितामहः साक्षाद्दर्शयित्वेदमब्रवीत् ॥ ३९ ॥
वैवस्वत महाबाहो न खल्वमितविक्रम ॥ न हन्तव्यस्त्वया तेन दण्डेनैव निशाचरः ॥ ४० ॥

---

२६॥दम्भुर्नाम कश्चिदसुर ॥२७—२९॥ विनिपन्ना' विनाश प्राप्ता । दृष्टा' दृष्टमात्रा' ॥ ३० ॥ यावन्निहन्मि निहनिष्यामीत्यर्थ । यावद्योगे भविष्यदर्थे लट् ॥ ३१ ॥ मया दृष्टो मुहूर्तमपि न जीवतीत्येतत् मद्वचन बलं न खलु बलप्रकाशन न भवति । किंतु निसर्गत' स्वभावत' सिद्धा मर्यादा एषा । अनादिसृष्टिरेवविधेत्यर्थ' । उक्तमर्थमुपसहरति—स दृष्ट इति ॥ ३२ ॥ अयमेन निहन्म्यहं अहमेनमयं निह-

ति० तत क्रुद्धस्येत्यनेनैतावत्पर्यन्तंभगवान्यम ब्रह्मवरदानंस्मृत्वामारणबुद्धिंविहाय युद्धमात्रकृतवानितिसूचितं ॥ २५ ॥ ति० प्रहर्षितौ युद्धायेतिशेष ॥ सुसरब्धौ अतिक्रुद्धौ ॥ २५ ॥ मुञ्च आज्ञापयेत्यर्थ ॥ २६ ॥ ति० निसर्गत स्वभावसिद्धाह्येषादृष्टा । मयाएतद्रक्षोनभवेत् नजीवेत् । इत्येवरूपामर्यादाममेत्यर्थ । तदेवाह—हिरण्येति । शम्भु कुशध्वजब्रह्मर्षिहन्तादैत्य ॥ २७ ॥ ति० विनिपन्ना विनिपातविनाशप्राप्ता । दृष्टा दृष्टमात्राएव ॥ ३० ॥ ति० ममवचन बल बलप्रकाशनमात्रपरनखलु । यतो निसर्गत अनादिसृष्टिस्वभावेन । एषाममदृष्टिरेवप्राणिनाजीवितस्यमर्यादा । यदेवमत सदृष्टइति सहारचक्षुषादृष्टइत्यर्थ ॥ ३२ ॥ ति० मूर्तिमान्स्थित । यस्यपार्श्वइत्यनुषङ्ग' ॥ ३५ ॥ ति० महाप्रहरण महान्त्यवान्तराणिप्रहरणानियस्यसकालदण्ड । एवचेत् ' आयुधंतुप्रहरणं ' इत्यमरोनुकूलितोभवति ॥ ३७ ॥ ति० दण्डोद्यतं उद्यतदण्ड ॥ ३८ ॥ स० दर्शयित्वा आत्मान ॥ ३९ ॥ ति० नत्वद्दृयेननहन्तव्योनहन्तव्यइत्यावृत्ति ॥ ४० ॥

[ पा० ] १ क. ख घ ज. राक्षसेन्द्रस्तत.क्रुद्धश्चापमायम्यसयुगे २ झ शम्भुर्दैत्य. ३ च छ न्मयास्पृष्टोबलवानपि. ४ ग ड. च छ झ. ञ ट. निहिता ५ क. ख. घ ज. किंपुनस्ताडनात्स्पर्शात्पीडनाद्वापिदेहिन' ६ क. ख. घ. ञ. ज. करस्पृष्टोबलवतादण्ड.क्रुद्ध सुदारुणः. ७ क. घ. ज. सत्वास्तस्माद्रणाजिरात् ८ क. ख. घ. ज. प्रहर्तव्यस्त्वया.

वरः खलु मयैतस्मै दत्तस्त्रिदशपुङ्गव ॥ स त्वया नानृतः कार्यो यन्मया व्याहृतं वचः ॥ ४१ ॥
यो हि मामनृतं कुर्याद्देवो वा मानुषोपि वा ॥ त्रैलोक्यमनृतं तेन कृतं स्यान्नात्र संशयः ॥ ४२ ॥
क्रुद्धेन विप्रमुक्तोयं निर्विशेषं प्रियाप्रिये ॥ प्रजाः संहरते रौद्रो लोकत्रयभयावहः ॥ ४३ ॥
अमोघो ह्येष सर्वेषां प्राणिनाममितप्रभः ॥ कालदण्डो मया सृष्टः पूर्वं मृत्युपुरस्कृतः[1] ॥ ४४ ॥
तन्न खल्वेष ते सौम्य पात्यो रावणमूर्धनि ॥ न ह्यस्मिन्पतिते कश्चिन्मुहूर्तमपि जीवति ॥ ४५ ॥
यदि ह्यस्मिन्निपतिते न म्रियेतैष राक्षसः ॥ म्रियते वा दशग्रीवस्तदा ह्युभयतोनृतम् ॥ ४६ ॥
तन्निवर्तय लङ्केशं दण्डमेतं समुद्यतम् ॥ सत्यं च मां कुरुष्वाद्य लोकांस्त्वं यद्यवेक्षसे ॥ ४७ ॥
एवमुक्तस्तु धर्मात्मा प्रत्युवाच यमस्तदा ॥ एष व्यावर्तितो दण्डः प्रभविष्णुर्हि नो भवान् ॥ ४८ ॥
किं[2] त्विदानीं मया शक्यं कर्तुं रणगतेन हि ॥ न मया यद्ययं शक्यो हन्तुं वरपुरस्कृतः ॥ ४९ ॥
एष तस्मात्[3]प्रणश्यामि दर्शनादस्य रक्षसः ॥ इत्युक्त्वा सरथः साश्वस्तत्रैवान्तरधीयत ॥ ५० ॥
दशग्रीवस्तु तं जित्वा नाम विश्राव्य चात्मनः ॥ आरुह्य पुष्पकं भूयो निष्क्रान्तो यमसादनात् ॥५१॥
स तु वैवस्वतो देवैः सह ब्रह्मपुरोगमैः ॥ जगाम त्रिदिवं हृष्टो नारदश्च महामुनिः ॥ ५२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

न्मि । अविलम्बेन हन्मीत्यर्थः ॥ ३३—४१ ॥ अनृतं असत्यवादिनं कुर्यात् । मृत्युपुरस्कृतः मृत्युना पुरस्कृतः । बहुव्रीहिश्च ॥ ४२—४५ ॥ उभयतोनृतं मया कालदण्डस्य मोघत्वसपादने दण्डस्यानृतत्व रक्षोमरणोपेक्षणे वरवचनस्यानृतत्वमिति ॥ ४६—४७ ॥ प्रभविष्णुः स्वामी ॥४८॥ यद्यस्मान्मया न हन्तव्यस्तस्मादिदानी मया किनु शक्यं कर्तुमिति । संचिन्त्येति शेषः ॥ ४९ ॥ अस्य रक्षसो दर्शनात् दर्शनपथात् । एष इति । प्रणश्यामि " णश अदर्शने " अन्तर्हितो भविष्यामीत्यर्थः । इत्युक्त्वेति । ब्रह्माणमिति शेषः ॥ ५०—५१ ॥ वैवस्वतः ब्रह्मपुरोगमैर्देवैः हृष्टः अभूदिति शेष' ॥ ५२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने द्वाविंश. सर्गः ॥ २२ ॥

---

ति० वर. देवगणावध्यत्वरूपः ॥ ४१ ॥ अनृतं अनृतवचनं । कुर्यात् । मदाज्ञामुल्लङ्घ्येतिशेष' । त्रैलोक्यमिति । सर्वसमष्टित्वान्ममेतिभाव ॥ ४२ ॥ ति० ननुत्वद्दत्तवरतयातवप्रियोयदिरावणस्तर्हिमुक्तोपिकालदण्ड किकुर्यात्तत्राह—क्रुद्धेनेति । प्रियाप्रिये समाहारद्वन्द्व' । मत्प्रियाप्रियप्राणिविषये क्रुद्धेनत्वयाऽयंविप्रमुक्त स्वविषयभूताः ता सर्वा प्रजा निर्विशेषंयथाभवतितथा सहरतएव ॥ शि० सहरते सहरिष्यति ॥ स० लोकान्तकरावणमारणंभवतुवामावा जगल्लयस्तुस्यादित्याह—क्रुद्धेनेति ॥ ४३ ॥ स० सर्वमृत्युपुरस्कृत सर्वेमृत्यवोमारकास्तेषु पुरस्कृत. अग्रेसर । कालदण्डस्येवरावणस्यमयैवामोघीकरणान्नान्यत रव्याहृति सपाद्येतिभाव ॥ ४४ ॥ ति० तंजित्वा भगवत्कृपयेतिशेष ॥ स० जित्वा जित्वेव ॥ ५१ ॥ ति० ब्रह्मण सत्यपरिपालनसवृत्तमितियमादीनाहर्ष ॥ स० हृष्टः ब्रह्मपुरस्करणेनरणेक्षेमीराक्षसोनममाक्षमतयेतिहृष्ट. ॥ ५२ ॥ इति द्वाविंश. सर्ग ॥ २२ ॥

[ पा० ] १ च. छ. सर्वमृत्युपुरस्सर . २ क. ख. घ.—ट. किंत्विदानी. ३ छ. तस्मात्पलायिष्ये.

# त्रयोविंशः सर्गः ॥ २३ ॥

रावणेन मारीचप्रभृतिभिःसहरसातलेभोगवतीमेत्य वासुकिप्रमुखनागराजवशीकरणपूर्वकं निवातकवचानांपुरमेत्य तै.सहमहासमरप्रवर्तनम् ॥ १ ॥ तत्रान्यतरपराभवाभावेसत्वरमागतेनब्रह्मणा निवातकवचान्प्रत्युभयो स्ववरमहिम्नाऽजय्यत्वकथनेन तेषांरावणेनसहाग्निसाक्षिकसख्यकरणम् ॥ २ ॥ ततोश्मनगरगतेनरावणेन कालकेयै.सहयुद्धे प्रमादाच्छूर्पणखाभर्तुर्विद्युज्जिह्वस्य हननम् ॥ ३ ॥ ततोवरुणलोकगतेनरावणेन रणसमाहूतेषुवरुणसुतेषु वरदत्तेनतेनरणधरण्यापातितेषु सारथिभिस्तेषांगृहप्रापणम् ॥ ४ ॥ रावणेन रणायवरुणाह्वाने तन्मन्त्रिणाप्रहसेन वरुणब्रह्मलोकेस्थितिनिवेदने रावणेन जयघोषणपूर्वकं सह्प्रहस्तादिभिर्लङ्काप्रतिप्रस्थानम् ॥ ५ ॥

ततो जित्वा दशग्रीवो यमं त्रिदशपुङ्गवम् ॥ रावणस्तु रणश्लाघी स्वसहायान्ददर्श ह ॥ १ ॥
ततो रुधिरसिक्ताङ्गं प्रहारैर्जर्जरीकृतम् ॥ रावणं राक्षसा दृष्ट्वा [1]हृष्टवत्समुपागमन् ॥ २ ॥
जयेन वर्धयित्वा च मारीचप्रमुखास्ततः ॥ पुष्पकं भेजिरे सर्वे सान्त्विता रावणेन तु ॥ ३ ॥
ततो रसातलं गच्छन्प्रविष्टः पयसां निधिम् ॥ दैत्योरगगणाध्युष्टं वरुणेन सुरक्षितम् ॥ ४ ॥
स तु भोगवतीं गत्वा पुरीं वासुकिपालिताम् ॥ कृत्वा नागान्वशे हृष्टो ययौ मणिमयीं पुरीम् ॥५॥
निवातकवचास्[2]तत्र दैत्या लब्धवरा वसन् ॥ राक्षसांस्तान्समागम्य युद्धाय समुपाह्वयत् ॥ ६ ॥
ते तु सर्वे सुविक्रान्ता दैतेया बलशालिनः ॥ नानाप्रहरणास्तत्र प्रहृष्टा युद्धदुर्मदाः ॥ ७ ॥
शूलैस्त्रिशूलैः कुलिशैः पट्टिशासिपरश्वधैः ॥ अन्योन्यं बिभिदुः क्रुद्धा राक्षसा दानवास्तथा ॥ ८ ॥
तेषां तु युध्यमानानां साग्रः संवत्सरो गतः ॥ न [3]चान्यतरयोस्तत्र विजयो वा क्षयोपि वा ॥ ९ ॥
ततः पितामहस्तत्र त्रैलोक्यगतिरव्ययः ॥ आजगाम द्रुतं देवो विमानवरमास्थितः ॥ १० ॥
निवातकवचानां तु निवार्य रणकर्म तत् ॥ वृद्धः पितामहो वाक्यमुवाच विदितार्थवत् ॥ ११ ॥
न ह्ययं रावणो युद्धे शक्यो जेतुं सुरासुरैः ॥ न भवन्तः क्षयं नेतुमपि सामरदानवैः ॥ १२ ॥
राक्षसस्य सखित्वं च भवद्भिः सह रोचते ॥ [4]अविभक्ताश्च सर्वार्थाः सुहृदां नात्र संशयः ॥ १३ ॥
ततोग्निसाक्षिकं सख्यं कृतवांस्तत्र रावणः ॥ निवातकवचैः सार्धं प्रीतिमानभवत्तदा ॥ १४ ॥
अर्थतस्तैर्यथान्यायं संवत्सरमथोषितः ॥ स्वपुरान्निर्विशेषं च [5]प्रियं प्राप्तो दशाननः ॥ १५ ॥

---

हृष्टवत् यमादपि कथंचिन्मुक्ता इति हृष्टाः सन्तः ॥ २—३ ॥ रसातलं गच्छन् पयसां निधिं प्रविष्टः। मार्गवशादिति शेषः ॥ ४ ॥ भोगवती नाम समुद्राधःपाताललोकवर्तिनी नागपुरी । तत्र नागान् स्ववशे कृत्वा स्वीयत्वेन स्थापयित्वा ॥ ५ ॥ वसन् अवसन् । लब्धवराः । ब्रह्मणइतिशेषः ॥ ६—१० ॥ वृद्धः सर्वदेवासुरकूटस्थः । विदितार्थवत् वाक्यमित्यन्वयः ॥ ११—१२ ॥ रोचते । कर्तव्यत्वेन ममेति शेषः । सख्यप्रयोजन दर्शयति—अविभक्ता इति॥१३—१५॥

---

स० स्वसहायान् स्वेनसहागतान् ॥ १ ॥ ति० विस्मयमिति यमादपिमुक्तइतिविस्मय ॥ २ ॥ स० सान्त्विता तेपितद्वत्सद्भूतजर्झरीकृताः ॥ ३ ॥ ति० रसातलंजिगमिषु पयसांनिधिंप्रविष्ट । मार्गवशादितिशेष । अध्युष्टं अध्युषित ॥ ४ ॥ ति० लब्धवरा ब्रह्मण सकाशादितिभाव । अतएवाग्रेभगवतातै सहरावणस्यसख्यकरण ॥ ६ ॥ स० शूलै एकदलै । त्रिशूलै त्रिशिरस्कैः ॥ ८ ॥ स० अन्यतरत राक्षसेभ्योदैत्याना दैतेयेभ्योरक्षसा ॥ ९ ॥ स० विमानवर हंसोढं ॥ १० ॥ ति० विदितार्थवत् सुस्पष्टावगताभिधेयं ॥ ११ ॥ स० रोचते कर्तव्यत्वेनमह्यमितिशेष. ॥ ति० सख्यफलमाह—अविभक्ताश्चेति । सर्वार्थाः धनधान्यादिसमस्तभोगोपकरणपदार्थाः जयाजयाद्यभिमानाश्चसुहृदामविभक्ता साधारणभूता ॥ १३ ॥ ति० तत.

[ पा० ] १ झ. विस्मयंसमुपागमन्. २ क. ख. स्तत्रप्रययुर्युद्धदुर्मदा . ३ झ. चान्यतरतस्तत्र. ४ च. छ. अविभागेन सर्वार्था.. ५ क. ख. घ. ज. पूजाप्राप्तो.

ततोपधार्य मायानां शतमेकं समाप्तवान् ॥ सलिलेन्द्रपुरान्वेषी भ्रमति स रसातलम् ॥ १६ ॥
ततोश्मनगरं नाम कालकेयैरधिष्ठितम् ॥ गत्वा तु कालकेयांश्च हत्वा तत्र बलोत्कटान् ॥ १७ ॥
शूर्पणख्याश्च भर्तारमसिना प्राच्छिनत्तदा ॥ श्यालं च बलवन्तं च विद्युज्जिह्वं बलोत्कटम् ॥
जिह्वया संलिहन्तं च राक्षसं समरे तथा ॥ १८ ॥
तं विजित्य मुहूर्तेन जघ्ने दैत्यांश्चतुःशतम् ॥ १९ ॥
ततः पाण्डुरमेघाभं कैलासमिव भास्वरम् ॥ वरुणस्यालयं दिव्यमपश्यद्राक्षसाधिपः ॥ २० ॥
क्षरन्तीं च पयस्तत्र सुरभिं गामवस्थिताम् ॥ यस्याः पयोभिनिष्यन्दात्क्षीरोदो नाम सागरः ॥२१॥
ददर्श रावणस्तत्र गोवृषेन्द्रवरारणिम् ॥ यस्माच्चन्द्रः प्रभवति शीतरश्मिर्निशाकरः ॥ २२ ॥
यं समाश्रित्य जीवन्ति फेनपाः परमर्षयः ॥ अमृतं यत्र चोत्पन्नं स्वधा च स्वधभोजिनाम् ॥ २३ ॥
यां ब्रुवन्ति नरा लोके सुरभिं नाम नामतः ॥ प्रदक्षिणं तु तां कृत्वा रावणः परमाद्भुताम् ॥
प्रविवेश महाघोरं गुप्तं बहुविधैर्बलैः ॥ २४ ॥
ततोधाराशताकीर्णं शारदाभ्रनिभं तदा ॥ नित्यप्रहृष्टं ददृशे वरुणस्य गृहोत्तमम् ॥ २५ ॥
ततो हत्वा बलाध्यक्षान्समरे तैश्च ताडितः ॥ अब्रवीच्च ततो योधान्राजा शीघ्रं निवेद्यताम् ॥ २६ ॥
युद्धार्थी रावणः प्राप्तस्तस्य युद्धं प्रदीयताम् ॥ वद वा न भयं तेऽस्ति निर्जितोस्मीति साञ्जलिः ॥२७॥
एतस्मिन्नन्तरे क्रुद्धा वरुणस्य महात्मनः ॥ पुत्राः पौत्राश्च निष्क्रामन्गौश्च पुष्कर एव च ॥ २८ ॥
ते तु वीर्यगुणोपेता बलैः परिवृताः स्वकैः ॥ युक्त्वा रथान्कामगमानुद्यद्भास्करवर्चसः ॥ २९ ॥
ततो युद्धं समभवद्दारुणं रोमहर्षणम् ॥ सलिलेन्द्रस्य पुत्राणां रावणस्य च धीमतः ॥ ३० ॥
अमात्यैश्च महावीर्यैर्दशग्रीवस्य रक्षसः ॥ वारुणं तद्बलं कृत्स्नं क्षणेन विनिपातितम् ॥ ३१ ॥
समीक्ष्य स्वबलं सङ्ख्ये वरुणस्य सुतास्तदा ॥ अर्दिताः शरजालेन निवृत्ता रणकर्मणः ॥ ३२ ॥

उपधार्य अनुसृत्य । मायानां असुरमायायोगविद्यानां ॥ १६ ॥ तत इत्यादि श्लोकचतुष्कमेकं वाक्यं॥१७॥ श्यालस्य च्छेदे निमित्तमाह । राक्षसान् स्वकीयान् जिह्वया संलिहन्तं आस्वादयन्तं भक्षयन्तमिति यावत् ॥ १८--२० ॥ सुरभिमित्यत्रापि अपश्यदित्यनुकर्ष.। सागर इति। समभवदिति शेषः ॥ २१ ॥ गोवृषेन्द्रस्य रुद्रवृषभस्य वरारणिं साक्षान्मातरं। यस्माच्चन्द्र इति। इन्दूत्पादकः क्षीरसमुद्र इत्यर्थः । एवमुत्तरत्रापि यच्छब्दा व्याख्येयाः ॥ २२ ॥ स्वधभोजिनामिति । ह्रस्व आर्ष. । स्वधाभोजिनां पितॄणां । स्वधा पितृभक्ष्यं कव्य ॥ २३--२४ ॥ धाराशताकीर्णं जलधाराशतैराकीर्णं ॥ २५--२६ ॥ निर्जितोस्मीति वद । एवं चेत्ते भयं नास्तीत्यब्रवीदिति निवेद्यतामित्यन्वयः ॥ २७ ॥ गौश्च पुष्करश्चेति पुत्राणां पौत्राणां च बला-

भगवद्वचनानन्तरं ॥ १४ ॥ स० उपधार्य अन्यैरन्येभ्य प्रवचनकालेस्वयंश्रुत्वा । समाप्तवान् प्राप्तवान् । सखित्वेनानुसृत्येति नागोजिभट्टव्याख्यानंरावणमानितानुगुणमित्युपेक्ष्य ॥ १६ ॥ ति० श्यालत्वादिगुणकमपिविद्युज्जिह्वमच्छिनत्। श्यालोत्रभगिनीपति । नृशंसत्वाद्रावणीयान्राक्षसान्जिह्वयासलिहन्तं । आस्वादयन्तं भक्षयन्तमितियावत्। स० विद्युज्जिह्वं नाम्ना । प्रमादेनेतिशेष' ॥ १८ ॥ ति० प्रहृष्टं प्रहृष्टजनं ॥ २५ ॥ ति० हत्वा अभिताड्य ॥ २६ ॥ ति० गौश्चपुष्करश्च पुत्राणा पौत्राणा चबलाध्यक्षौ ॥ स० पुत्रा. साधारणा । गौर्बलनायक । पुष्करोहिज्येष्ठापत्यं । यथोक्तमुद्योगपर्वणिमातलिवरान्वेषणे—'एषोस्यपुत्रोऽभिमत पुष्कर पुष्करेक्षण । रूपवान्दर्शनीयश्चसोमपुत्र्यावृत पति । ज्योत्स्नाकालीतियाप्राहुर्द्वितीयारूपत श्रियम्' इति ॥

[ पा० ] १ क. ख. च. छ. ज. तत्रसधार्य. २ क. भर्तारंस्वयमेवासिनाऽच्छिनत्. ३ क. ख. ज. शीतरश्मि प्रजाहित.. ४ च. छ. सुधाचसुरजीवनं. ५ च. छ. ततोबलगुणाकीर्णं. ६ छ. भवतोनभयतस्मनिर्जितो. ७ च. छ. पैतृगुणोपेता.. ग. ङ. च. छ. झ. ट. तत्रगुणोपेता.. ८ क. रावणस्यचमन्त्रिणा.

महीतलगतास्ते तु रावणं दृश्य पुष्पके ॥ आकाशमाशु विविशुः स्यन्दनैः शीघ्रगामिभिः ॥ ३३ ॥
महदासीत्ततस्तेषां [1]तुल्यस्थानमवाप्य तत् ॥ आकाशयुद्धं तुमुलं देवदानवयोरिव ॥ ३४ ॥
ततस्ते रावणं युद्धे शरैः पावकसन्निभैः ॥ विमुखीकृत्य संतुष्टा विनेदुर्विविधान्रवान् ॥ ३५ ॥
ततो महोदरः क्रुद्धो राजानं दृश्य धर्षितम् ॥ त्यक्त्वा मृत्युभयं [2]वीरो युद्धकाङ्क्षी व्यलोकयत् ॥३६॥
[3]तेन ते दारुणा युद्धे कामगाः पवनोपमाः ॥ महोदरेण गदया हता वै प्रययुः क्षितिम् ॥ ३७ ॥
तेषां वरुणपुत्राणां हत्वा योधान्हयाञ्छतान् ॥ मुमोचाशु महानादं विरथान्प्रेक्ष्य तान्स्थितान् ॥३८॥
ते तु तेषां रथाः साश्वाः सह सारथिभिर्हतैः ॥ महोदरेण निहताः [4]पतिताः पृथिवीतले ॥ ३९ ॥
ते तु त्यक्त्वा रथान्पुत्रा वरुणस्य महात्मनः ॥ आकाशे विष्ठिताः शूराः स्वप्रभावान्न विव्यथुः ॥४०॥
धनूंषि कृत्वा सज्जानि विनिर्भिद्य महोदरम् ॥ रावणं समरे क्रुद्धाः सहिताः [5]समभिद्रवन् ॥ ४१ ॥
सायकैश्चापविभ्रष्टैर्वज्रकल्पैः सुदारुणैः ॥ दारयन्ति स्म संक्रुद्धा मेघा इव महागिरिम् ॥ ४२ ॥
ततः क्रुद्धो दशग्रीवः कालाग्निरिव [6]निर्गतः ॥ शरवर्षैर्महाघोरैस्तेषां मर्मस्वताडयत् ॥ ४३ ॥
ततस्तेनैव सहसा सीदन्ति स्म पदातयः ॥ मुसलानि विचित्राणि ततो भल्लशतानि च ॥ ४४ ॥
पट्टिशांश्चैव शक्तीश्च शतघ्नीस्तोमरांस्तथा ॥ पातयामास दुर्धर्षस्तेषामुपरि विष्ठितः ॥ ४५ ॥
अपविद्धास्तु ते वीरा विनिष्पेतुः पदातयः ॥ महापङ्कमिवासाद्य कुञ्जराः षष्टिहायनाः ॥ ४६ ॥
सीदमानान्सुतान्दृष्ट्वा विह्वलान्सु[7]महौजसः ॥ ननाद रावणो हर्षान्महानम्बुधरो यथा ॥ ४७ ॥
ततो रक्षो महानादान्मुक्त्वा हन्ति स्म वारुणान् ॥ नानाप्रहरणोपेतैर्धारापातैरिवाम्बुदः ॥ ४८ ॥
ततस्ते विमुखाः सर्वे पतिता धरणीतले ॥ रणात्स्वपुरुषैः शीघ्रं गृहाण्येव प्रवेशिताः ॥ ४९ ॥
तानब्रवीत्ततो रक्षो वरुणाय निवेद्यताम् ॥ ५० ॥
रावणं त्वब्रवीन्मन्त्री प्रहसो नाम वारुणः ॥ गतः खलु महाराजो [8]ब्रह्मलोकं जलेश्वरः ॥
गान्धर्वं वरुणः श्रोतुं यं त्वमाह्वयसे युधि ॥ ५१ ॥
तत्किं तव वृथा वीर परिश्रम्य गते नृपे ॥ ये तु सन्निहिता वीराः कुमारास्ते पराजिताः ॥ ५२ ॥
राक्षसेन्द्रस्तु तच्छ्रुत्वा नाम विश्राव्य चात्मनः ॥ हर्षान्नादं विमुञ्चन्वै निष्क्रान्तो वरुणालयात् ॥५३॥

ध्यक्षौ ॥ २८—३३ ॥ स्थानं आकाशरूप । आकाशे युद्धं आकाशयुद्धं ॥ ३४—३९ ॥ स्वप्रभावात् देवतात्वप्रभावात् ॥ ४०—४५ ॥ षष्टिहायनं परिमाणं येषां ते षष्टिहायनाः ॥ ४६—४९ ॥ वरुणस्यायं

सेनानायकावुभावित्युभौनागोजिभट्टतीर्थौ ॥ २८ ॥ ति० वरुणस्यसुता प्रथममहीतलगताएवरावणेनयुद्धमकुर्वन् । तत्ररावणामात्यैराकाशस्थैर्निपातितंस्वबलंदृष्ट्वा तादृशयुद्धस्यानन्रूपताविचार्य युद्धान्निवृत्तामहींत्यक्त्वास्वयमप्याकाशमेवगताइत्यर्थ. ॥ ३३ ॥ स० पदैरतितुशीलमेषामस्तीतितथा । णिनि । अतोतनमेषामस्तीतीनिर्वा । षष्टिहायना. तत्सख्याकवर्षा. युवानइतियावत् ॥ ४६ ॥ ति० सुतान् वरुणस्य ॥ ४७ ॥ ति० वारुणान् वरुणपुत्रान् ॥ ४८ ॥ ति० वारुण वरुणस्यायं ॥ ५१ ॥ स० गान्धर्वं गीतं । श्रोतु स्वयविस्वराअपिसुस्वराकर्णनरुचयोजनाभवन्ति । वरुणवैस्वर्यंच ‘ अपध्मातंवरुणस्य ’ ‘ वरुणस्यतुविस्वर ’ इतिच्छान्दोग्योपनिषद्भाष्याभ्याप्रतिपादित । यदाकदाचिदधिकोदकग्रहणे उपद्रवोलोकस्यगलघुर्घुरताप्रापकोभवति । सदा तदासीनस्यकारुथावैस्वर्येइतियुक्तियुक्तत्वाच्चज्ञेयं ॥ ५२ ॥

[ पा० ] १ च छ. घोरंयुद्धमवाप्य. २ च. छ. झ. ट. क्रुद्धोयुद्धकाङ्क्षी ३ च. झ ञ. ट. तेनतेवारुणा . क. घ. ज. तेनतेषाहयायेतेकामगाः. ४ ख घ.—ज ट. पातिताः. ५ च छ. ञ ट. समवारयन् ६ ख. च.—ट. मूर्च्छित.. घ. विष्ठित क दुस्सह . ७ ङ च. छ. झ ञ. ट. विह्वलान्समहाबल . ८ च छ. ब्रह्मलोकंगतेनृपे. ख. रुद्रलोकंगतेनृपे.

आगतस्तु पथा येन तेनैव विनिवृत्य सः ॥ लङ्कामभिमुखो रक्षो नभस्स्थलगतो ययौ ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे त्रयोविंशस्सर्गः ॥ २३ ॥

# ॥ अथात्राधिकपाठश्लोकप्रारम्भः ॥

## प्रक्षिप्तेषु प्रथमः सर्गः ॥ १ ॥

रावणेन वरुणलोकान्निवृत्य पुनरश्मनगरप्रवेश ॥ १ ॥ तत्रमणिमयंमहाबलिभवनंदृष्टवतारावणेन तत्पतिजिज्ञासयातत्र प्रहस्तप्रेषणम् ॥ २ ॥ तद्द्वारिज्वालामालामध्यवर्तिपुरुषदर्शनाद्भीतपरावृत्तेनप्रहस्तेन रावणप्रति तन्निवेदनम् ॥ ३ ॥ स्वयमेवतद्भवनप्रविष्टेन प्रहस्तदृष्टपुरुषदर्शनमात्रेणचकितकपितेनरावणेन कथचिद्धैर्यावलबनेन पुरुषप्रति तद्गृहपतिनामादिप्रश्नपूर्वक तेनसहस्वस्ययुयुत्सानिवेदनम् ॥ ४ ॥ तद्भवनपतेर्महाबलित्वनिवेदनपूर्वकतदनुज्ञयाऽन्त प्रविष्टेनरावणेन महाबलिविलोकनम् ॥ ५ ॥ तेनस्वागमनकारणपृष्टेनरावणेन तत्प्रति तबद्धवताविष्णुनासहस्वस्ययुयुत्सानिवेदने बलिनातप्रति विष्णुमहिमानुवर्णनपूर्वकंस्वगृहद्वारस्थपुरुषस्यैवविष्णुत्वनिवेदन ॥ ६ ॥ ततो रोषाद्युद्धायसमापततिरावणेविष्णुनातत्काले तस्यहननानिच्छयातिरोधान ॥ ७ ॥

हर्षान्नादांस्तु विसृजन्निष्क्रान्तो वरुणालयात् ॥ महोदरेण संयुक्तो हर्षगद्गदभाषिणा ॥ १ ॥
ततोऽश्मनगरं भूयो विचेरुर्युद्धदुर्मदाः ॥ यत्रापश्यद्दशग्रीवो गृहं परमभास्वरम् ॥
वैडूर्यतोरणाकीर्णं मुक्ताजालविभूषितम् ॥ २ ॥
सुवर्णस्तम्भगहनं वेदिकाभिः समन्ततः ॥ वज्रस्फटिकसोपानं किङ्किणीजालसंयुतम् ॥ ३ ॥
बह्वासनयुतं रम्यं महेन्द्रभवनोपमम् ॥ दृष्ट्वा गृहवरं रम्यं दशग्रीवः प्रतापवान् ॥ ४ ॥
कस्येदं भवनं सौम्यं मेरुमन्दरसन्निभम् ॥ गच्छ प्रहस्त शीघ्रं त्वं जानीष्व भवनोत्तमम् ॥ ५ ॥
एवमुक्तः प्रहस्तस्तु प्रविवेश गृहोत्तमम् ॥ ६ ॥
स शून्यं प्रेक्ष्य तद्द्वारं पुनः कक्ष्यान्तरं ययौ ॥ सप्तकक्ष्यान्तरं गत्वा ततो ज्वालामपश्यत ॥ ७ ॥
ततो दृष्टः पुमांस्तत्र हृष्टो हासं मुमोच सः ॥ स तु श्रुत्वा महाहासमूर्ध्वरोमाऽभवत्तदा ॥ ८ ॥
ज्वालामध्ये स्थितस्तत्र हेममाली विमोहितः ॥ आदित्य इव दुष्प्रेक्ष्यः साक्षाद्यम इव स्थितः ॥९॥
तथा दृष्ट्वा तु वृत्तान्तं त्वरमाणो विनिर्गतः ॥ विनिर्गम्याब्रवीत्सर्वं रावणाय निशाचरः ॥ १० ॥
अथ राम दशग्रीवः पुष्पकादवरुह्य सः ॥ प्रवेष्टुमिच्छन्वेश्माथ भिन्नाञ्जनचयोपमः ॥ ११ ॥
चन्द्रमौलिर्वपुष्मांश्च पुरुषोऽस्याग्रतः स्थितः ॥ द्वारमावृत्य सहसा ज्वालासक्तो भयानकः ॥ १२ ॥
रक्ताक्षः श्वेतवदनो बिम्बोष्ठश्चोर्ध्वरोमवान् ॥ महाभीषणनासश्च कम्बुग्रीवो महाहनुः ॥ १३ ॥

वारुणः ॥ ५०—५४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे उत्तरकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

स० येनपथागतस्तेनैवविनिवृत्य । अनेनाध्वनस्तोयप्रायत्वादध्वान्तरविरहोवागमनप्रयोजनाभावाद्वृथागतिरितिवासूच्यते । रक्षोनभस्स्थलगतइतिपदमखण्डं । रक्षोभि सहितोनभस्स्थलगतश्चतथा । आगतइत्यादीनापुंलिङ्गान्तविशेषणानामेवमेवचेत्सामञ्जस्यं भविष्यति ॥ ५४ ॥ इतित्रयोविंश सर्ग ॥ २३ ॥

अथप्रक्षिप्तसर्गपञ्चकव्याख्यानं सत्यधर्मतीर्थीयमात्रं ॥ यत्रपरमभास्वरगृहमपश्यत् तदश्मनगरंप्राप्यविचेरु ॥ २ ॥ स० निश्शून्यं निश्शेषतोजनरहितं ॥ ७ ॥ स० ऊर्ध्वरोमा भयेन ॥ ८ ॥ विमोहित. विशेषेणमोहिनाइतरेयेनस ॥ ९ ॥ विनिर्गत प्रहस्त ॥ १० ॥ चन्द्रमौलिवपुष्मान् रौद्राकार' ॥ १२ ॥

[ पा० ] १ ठ. निश्शून्यं.

गूढश्मश्रुर्निगूढास्थि दंष्ट्राभा रोमहर्षणः ॥ एतादृशं वै पुरुषं ददर्श स तु रावणः ॥
गृहीत्वा लोहमुसलं द्वारं विष्टभ्य सुस्थितम् ॥ १४ ॥
अथ संदर्शनात्तस्य ऊर्ध्वरोमा बभूव सः ॥ अस्पन्दतास्य हृदयं वेपथुश्चाप्यजायत ॥ १५ ॥
निमित्तान्यमनोज्ञानि दृष्ट्वा राम व्यचिन्तयत् ॥ अथ चिन्तयतस्तस्य स एव पुरुषोऽब्रवीत् ॥१६॥
किं त्वं चिन्तयसे रक्षो ब्रूहि विस्रब्धमानसः ॥ युद्धातिथ्यमहं वीर करिष्ये रजनीचर ॥ १७ ॥
एवमुक्त्वा स तद्रक्षः पुनर्वचनमब्रवीत् ॥ योत्स्यसे बलिना सार्धं मया वा तद्विधीयताम् ॥ १८ ॥
रावणोऽभिहितो भूय ऊर्ध्वरोमा व्यजायत ॥ अथ धैर्यं समालम्ब्य रावणो वाक्यमब्रवीत् ॥ १९ ॥
गृहेऽत्र तिष्ठते को वा तं ब्रूहि वदतांवर ॥ तेनैव सार्धं योत्स्यामि यथा वा मन्यते भवान् ॥ २० ॥
स एनं पुनरप्याह दानवेन्द्रोत्र तिष्ठति ॥ २१ ॥
एष वै परमोदारः शूरः सत्यपराक्रमः ॥ वीरो बहुगुणोपेतः पाशहस्त इवान्तकः ॥ २२ ॥
बालार्क इव तेजस्वी समरेष्वनिवर्तकः ॥ अमर्षी दुर्जयो जेता बलिर्हि गुणसागरः ॥ २३ ॥
प्रियंवदः संविभागी गुरुविप्रप्रियः सदा ॥ [1]कालकाङ्क्षी महासत्त्वः सत्यवाक्सौम्यदर्शनः ॥ २४ ॥
स च सर्वगुणोपेतः शूरः स्वाध्यायतत्परः ॥ एष गर्जति वात्येष ज्वलते तपते सदा ॥ २५ ॥
देवैश्च भूतसंघैश्च पन्नगैश्च महर्षिभिः ॥ भयं यो नाभिजानाति तेन किं योद्धुमिच्छसि ॥ २६ ॥
बलिना यदि ते योद्धुं रोचते राक्षसेश्वर ॥ प्रविश त्वं महासत्त्व संग्रामं कुरु मा चिरम् ॥ २७ ॥
एवमुक्तो दशग्रीवः प्रविवेश यतो बलिः ॥ स विलोक्याथ लङ्केशमट्टहासं जहास च ॥ २८ ॥
आदित्य इव दुष्प्रेक्ष्यः स्थितो दानवसत्तमः ॥ अथ संदर्शनादेव बलिर्वै विश्वरूपवान् ॥ २९ ॥
स गृहीत्वा च तद्रक्षो ह्युत्सङ्गे स्थाप्य चाब्रवीत् ॥ दशग्रीव महाबाहो कं ते कामं करोम्यहम् ॥
किमागमनकृत्यं ते ब्रूहि त्वं राक्षसेश्वर ॥ ३० ॥
एवमुक्तस्तु बलिना रावणो वाक्यमब्रवीत् ॥ श्रुतं मया महाभाग बद्धस्त्वं विष्णुना पुरा ॥ ३१ ॥
सोहं मोचयितुं शक्तो बन्धनात्त्वां न संशयः ॥ एवमुक्ते ततो हासं [2]बलिः कृत्वेदमब्रवीत् ॥ ३२ ॥
श्रूयतामभिधास्यामि यं त्वं पृच्छसि रावण ॥ य एष पुरुषः श्यामो द्वारि तिष्ठति नित्यदा ॥३३॥
एतेन दानवेन्द्राश्च तथाऽन्ये बलवत्तराः ॥ वशं नीता बलवता पूर्वे पूर्वतराश्च ये ॥ ३४ ॥
बद्धश्चाहमनेनैवं कृतान्तो दुरतिक्रमः ॥ क एनं पुरुषो लोके वञ्चयिष्यति रावण ॥ ३५ ॥
सर्वभूतापहर्ता वै य एष द्वारि तिष्ठति ॥ कर्ता कारयिता चैव धाता च भुवनेश्वरः ॥ ३६ ॥
न त्वं वेद न चाहं वै भूतभव्यभवत्प्रभुम् ॥ कलिश्चैव हि कालश्च सर्वभूतापहारकः ॥ ३७ ॥
लोकत्रयस्य सर्वस्य हर्ता स्रष्टा तथैव च ॥ संहरत्येष भूतानि स्थावराणि चराणि च ॥ ३८ ॥
पुनश्च सृजते सर्वमनाद्यन्तो महेश्वरः ॥ करणं कारणं कर्ता सोयं पुरुषसत्तमः ॥ ३९ ॥
इष्टं चैव हि दत्तं च हुतं चैव निशाचर ॥ सर्वमेव हि लोकेशो धाता गोप्ता न संशयः ॥ ४० ॥

---

पूर्ववद्रमनिकासभवादार्षतयारक्षोविस्रब्धमानसइत्याद्यन्वय ॥ अभ्यागतातिथ्यमिदमित्याह—युद्धातिथ्यमिति ॥ १७ ॥ बलिना राज्ञा । मया दौवारिकेण ॥ १८ ॥ अभिहित तेनैवमुक्त ॥ १९ ॥ संविभागी यथाशास्त्रंद्रव्यादिविभागंकर्ता कालाकाङ्क्षी सत्कर्मयोग्यकालानतिक्रममाकाङ्क्षन् ॥ २४ ॥ एष एतदन्तर्गत । यद्वा भयोत्पादनार्थमेवमुक्ति ॥ २५ ॥ यत यत्र ॥ २८ ॥ विश्वरूपवान् ईश्वरानुग्रहेणव्यायतरूप ॥ २९ ॥ उत्सङ्गे अङ्के ॥ ३० ॥ मुक्त्वा कृत्वा ॥ ३२ ॥ पूर्वे पूर्वतरा प्रपूर्वा ॥ ३४ ॥ नचाहंसाकल्येनकलिः कलहसामर्थ्यप्रद ॥ ३७ ॥ हर्तास्रष्टेतिहर्तृत्वपुरस्करणमेतत्समयानुसारात् ॥ ३८ ॥

[ पा० ] १ ठ. कालाकाङ्क्षी. २ झ. ञ. ठ. बलिर्मुक्त्वैनं.

नैवंविधं महद्भूतं विद्यते भुवनत्रये ॥ ४१ ॥
अहं त्वं चैव पौलस्त्य ये चान्ये पूर्ववत्तराः ॥ नेता तेषां महात्मैष पशुं रशनया यथा ॥ ४२ ॥
वृत्रो दनुः शुकः शुम्भो निशुम्भो दम्भुरेव च ॥ कालनेमिश्च प्रह्लादस्तथा वैरोचनो बलिः ॥४३॥
कालकेयास्तारकाख्यो मुचुकुन्दो विवर्धनः ॥ हिरण्याक्षो मधुश्चैव कैटभो धूमशम्बरौ ॥ ४४ ॥
यमलार्जुनौ च कंसश्च कैटभो मधुना सह ॥ एते तपन्ति द्योतन्ति वान्ति वर्षन्ति चैव हि ॥४५॥
सर्वैः क्रतुशतैरिष्टं सर्वैस्तप्तं महत्तपः ॥ सर्वे ते सुमहात्मानः सर्वे वै योगधर्मिणः ॥ ४६ ॥
सर्वैरैश्वर्यमासाद्य भुक्तभोगैर्महत्तरैः ॥ दत्तमिष्टमधीतं च प्रजाश्च परिपालिताः ॥ ४७ ॥
स्वपक्षेष्वनुगोप्तारः प्रहर्तारः परेष्वपि ॥ समरेष्वपि लोकेषु नैतेषां विद्यते समः ॥ ४८ ॥
शूरास्त्वभिजनोपेताः सर्वशस्त्रास्त्रपारगाः ॥ सर्वविद्याप्रवेत्तारः संग्रामेष्वनिवर्तकाः ॥ ४९ ॥
सर्वैस्त्रिदशराज्यानि काङ्क्षितानि महात्मभिः ॥ युद्धे सुरगणाः सर्वे निर्जिताश्च सहस्रशः ॥ ५० ॥
देवानामपि ये शक्ताः स्वपक्षपरिपालकाः ॥ प्रमत्ता भोगरक्ताश्च बालार्कसमतेजसः ॥ ५१ ॥
यस्तु देवान्प्रधर्षेत तदेषो विष्णुरीश्वरः ॥ उपायपूर्वकं नाशं संवेत्ता भगवान्हरिः ॥ ५२ ॥
प्रादुर्भावं विकुरुते येनैतन्निधनं नयेत् ॥ पुनरेवात्मनात्मानमधिष्ठाय स तिष्ठति ॥ ५३ ॥
एवमेतेन देवेन दानवेन्द्रा महात्मना ॥ ते हि सर्वे क्षयं नीता बलिना कामरूपिणा ॥ ५४ ॥
समरे च दुराधर्षा नृपास्ते च पराजिताः ॥ तेन नीताः क्षयं सर्वे कृतान्तबलचोदिताः ॥ ५५ ॥
एवमुक्त्वाऽथ प्रोवाच राक्षसं दानवेश्वरः ॥ यदेतद्दृश्यते वीर चक्रं दीप्तानलोपमम् ॥ ५६ ॥
एतद्गृहीत्वाऽऽगच्छ त्वं मम पार्श्वं महाबल ॥ ततोऽहं तव चाख्यास्ये मुक्तिकारणमव्ययम् ॥५७॥
तत्कुरुष्व महाबाहो मा विलम्बस्व रावण ॥ एतच्छ्रुत्वा गतो रक्षः प्रहसंश्च महाबलः ॥ ५८ ॥
यत्र स्थितं महद्दिव्यं कुण्डलं रघुनन्दन ॥ लीलयोत्पाटनं चक्रे रावणो बलदर्पितः ॥ ५९ ॥
न च चालयितुं शक्तो रावणोऽभूत्कथंचन ॥ लज्जया स पुनर्भूयो यत्नं चक्रे महाबलः ॥ ६० ॥
उत्क्षिप्तमात्रे दिव्ये च पपात भुवि राक्षसः ॥ छिन्नमूलो यथा शाखी रुधिरौघपरिप्लुतः ॥ ६१ ॥
एतस्मिन्नन्तरे जज्ञे शब्दः पुष्करसंभवः ॥ राक्षसेन्द्रस्य सचिवैर्मुक्तो हाहाकृतो महान् ॥ ६२ ॥
ततो रक्षो मुहूर्तेन चेतनां लभ्य चोत्थितम् ॥ लज्जयावनतीभूतं बलिर्वाक्यमुवाच ह ॥ ६३ ॥
आगच्छ राक्षसश्रेष्ठ वाक्यं शृणु मयोदितम् ॥ यत्त्वया चोद्धृतं वीर कुण्डलं मणिभूषितम् ॥ ६४ ॥
एतद्धि पूर्वजस्यासीत्कर्णाभरणमीक्ष्यताम् ॥ एतत्पतितमत्रैवमन्यद्भूयो महाबल ॥ ६५ ॥

---

एषां पूर्वोदीरितानां । नेता ॥ ४२ ॥ प्रहेत्याद्युक्तेः 'कालनेमिश्चप्राह्लादि'रित्यत्रप्रकारलघुपाठःकर्तव्यः ॥ एवमुत्तरत्रापि । वैरोचनः अमृदुरितिच्छेदः । नाम्नामृदुर्वा ॥ ४३ ॥ तपन्ति तत्प्रतिबन्धसामर्थ्यादेवमुक्तिः ॥ ४५ ॥ समं वस्तु ॥ ४८ ॥ वेत्तारः वेदितारः लाभवन्तोवा ॥ ४९ ॥ योदैत्यः । एषां देवानां ॥५२॥ येन प्रादुर्भावेन । एतन्निधनं विरोधिनिधनं । नयेत् । तंप्रादुर्भावं विकुरुते करोति । अधिष्ठाय 'पूर्णमदःपूर्णमिदं' इत्यादेः ॥ ५३ ॥ ये अपराजिताइतिच्छेदः । भूतं भूतिः ऐश्वर्यं । महतांभूतंयेषांतेतथा ॥ ५५ ॥ चक्रं वर्तुलं ॥ ५६ ॥ मुक्तिकारणं मन्मोक्षहेतुं ॥ ५७ ॥ चालयितुं विद्यमानस्थलतोन्यथयितुं ॥ ६० ॥ उत्क्षिप्तमात्रे एकदेशउन्नतेतदेकदेशताडितोराक्षसोभुविपपात । सालोवृक्षः ॥ ६१ ॥ हाहेतिकृतोहाहाकृतः । कृतंभावेक्तः । हाहेतिकृतंयस्येतिसवा ॥ ६२ ॥ चेतनां संज्ञां । लभ्य प्रलभ्य । अवनतीभूतं नम्रीभूतं ॥ ६३ ॥ उद्यतं उद्धृतं ॥ ६४ ॥ पतितवत् पतितंपतनमस्यास्तीतिपतितवत् । उत्तरपद्यस्थपतितपदस्वारस्यात् ॥ ६५ ॥

[ पा० ] १ झ. ञ. ठ. नेताह्येषां. २ झ. ञ. ठ. वैरोचनोमृदुः. ३ झ. ञ. ठ. समं. ४ झ. ञ. ठ. यस्तुदेवान्प्रधर्षेततदेषां. ५ झ. ञ. ठ. दुराधर्षाःश्रूयन्तेयेपराजिताः । तेननीतामहद्भूताःकृतान्त. ६ झ. ञ. ठ. यथासालो. ७ झ. ञ. ठ. चोद्यतं. ८ झ. ञ. ठ. एतत्पतितवच्चैवमत्रभूमौ.

अन्यत्पर्वतसानौ हि पतितं कुण्डलादनु ॥ मुकुटं वेदिसामीप्ये पतितं युध्यतो भुवि ॥ ६६ ॥
हिरण्यकशिपोः पूर्वं मम पूर्वपितामहात् ॥ न तस्य कालो मृत्युर्वा न व्याधिर्न विहिंसकाः ॥ ६७ ॥
न दिवा मरणं तस्य न रात्रौ सन्ध्ययोरपि ॥ न शुष्केण न चार्द्रेण न च शस्त्रेण केनचित् ॥
विद्यते राक्षसश्रेष्ठ तस्य नास्त्रेण केनचित् ॥ ६८ ॥
प्रह्लादेन समं चक्रे वादं परमदारुणम् ॥ तस्य वादे समुत्पन्ने धीरो लोकभयंकरः ॥ ६९ ॥
सर्वदर्शस्य वीरस्य प्रह्लादस्य महात्मनः ॥ उत्पन्नो राक्षसश्रेष्ठ नृसिंहाकृतिरूपधृत् ॥ ७० ॥
दृष्टं च तेन रौद्रेण क्षुब्धं सर्वमशेषतः ॥ ७१ ॥
तत उद्धृत्य बाहुभ्यां नखैर्निन्ये यमक्षयम् ॥ एष तिष्ठति द्वाःस्थो वै वासुदेवो निरञ्जनः ॥ ७२ ॥
तस्य देवादिदेवस्य तत्त्वतो मे शृणुष्व ह ॥ वाक्यं परमभावेन यदि ते वर्तते हृदि ॥ ७३ ॥
इन्द्राणां च सहस्राणि सुराणामयुतानि च ॥ ऋषीणां सप्तसंख्यानां शतान्यब्दसहस्रशः ॥
वशं नीतानि सर्वाणि य एष द्वारि तिष्ठति ॥ ७४ ॥
तस्य तद्वचनं श्रुत्वा रावणो वाक्यमब्रवीत् ॥ मया प्रेतेश्वरो दृष्टः कृतान्तः सह मृत्युना ॥ ७५ ॥
पाशहस्तो महाज्वाल ऊर्ध्वरोमा भयानकः ॥ विद्युज्जिह्वश्च दंष्ट्रालः सर्पवृश्चिकरोमवान् ॥ ७६ ॥
रक्ताक्षो भीमवेगश्च सर्वसत्त्वभयंकरः ॥ आदित्य इव दुष्प्रेक्ष्यः समरेष्वनिवर्तकः ॥ ७७ ॥
पापानां शमिता चैव स मया युधि निर्जितः ॥ न च मे तत्र भीः काचिद्व्यथा वा दानवेश्वर ॥ ७८ ॥
एनं तु नाभिजानामि तद्भवान्वक्तुमर्हति ॥ ७९ ॥
रावणस्य वचः श्रुत्वा बलिर्वैरोचनोऽब्रवीत् ॥ एष त्रैलोक्यधाता च हरिर्नारायणः प्रभुः ॥ ८० ॥
अनन्तः कपिलो विष्णुर्नारसिंहो महाद्युतिः ॥ ऋतधामा सुधामा च पाशहस्तो भयानकः ॥
द्वादशादित्यसदृशः पुराणपुरुषोत्तमः ॥ ८१ ॥
नीलजीमूतसंकाशः सुरनाथः सुरोत्तमः ॥ ज्वालामाली महाबाहुर्योगी भक्तजनप्रियः ॥ ८२ ॥
एष धारयते लोकानेष वै सृजते प्रभुः ॥ एष संहरते चैव कालो भूत्वा महाबलः ॥ ८३ ॥
एष यज्ञश्च याज्यश्च चक्रायुधधरो हरिः ॥ सर्वदेवमयश्चैव सर्वभूतमयस्तथा ॥ ८४ ॥
सर्वलोकमयश्चैव सर्वज्ञानमयस्तथा ॥ सर्वरूपी महारूपी बलदेवो महाभुजः ॥ ८५ ॥
वीरहा वीरचक्षुष्मांस्त्रैलोक्यगुरुरव्ययः ॥ एवं मुनिगणाः सर्वे कथयन्तीह मोक्षिणः ॥ ८६ ॥
य एनं वेत्ति पुरुषं न च पापैर्विलिप्यते ॥ स्मृत्वा स्तुत्वा तथेष्ट्वा च सर्वमस्मादवाप्यते ॥ ८७ ॥

अन्यत्पतितं । कुण्डलादनु पूर्वपतितकुण्डलादनन्तरं । पुन कुण्डलादनु मुकुटमित्यप्यन्वय । वेदिसामीप्ये तद्देशसमीपे ॥ ६६ ॥ पूर्वजस्येतिसामान्येनोक्तस्यस्वरूपनिरूपयति—हिरण्यकशिपोरिति ॥ ६७ ॥ प्रह्लादेन तनयेन । वादमित्यनेन गुरुशिष्यकथाच-कइतिभावात्ताव्यावर्तयति परमदारुणमिति ॥ ६९ ॥ सर्वैवर्यस्य सर्वत श्रेष्ठत्वेनसमतस्य । नृसिंहाकृतिरूपधृक् नाचसिंहश्चनृ-सिंहौ । आकृतिश्चरूपंचाकृतिरूपे । नृसिंहयोराकृतिरूपेधरतीतिसतथा । नृसिंहेत्याकृति आकरणयस्य तद्रूपधृगितिवा ॥ ७० ॥ कथाकथनस्यैदपर्यमाह—एषइति ॥ ७२ ॥ परमभावेन महाभक्त्या । तेहृदियदिश्रोतव्यमितिवर्ततेतर्हिश्शृणु ॥ ७३ ॥ इन्द्राणां पदस्थापदस्थसाधारण्येन । एवमुत्तरत्रापि । अष्टसहस्रश बहुकालं । वशं स्ववश । नीतानि ॥ ७४ ॥ प्रेतेश्वरोयम॰ ॥ ७५ ॥ पाशहस्तो वरुण । दंष्ट्राल तन्नामाकश्चित् । विद्युज्जिह्वस्यैवविशेषणंवा लातिस्वीकरोतिवत्तेइति । मत्वर्थेलज्वा ॥ ७६ ॥ पापाना तद्वता । शासिता शास्ता ॥ ७८ ॥ एनं उदाहृत ॥ ७९ ॥ जिष्णुर्जयशील ॥ ८१ ॥ सुरनाथ तत्प्रार्थनीय । सुरोत्तम दैवतपति ॥ ८२ ॥ धारयते पालयति पोषयतिच । सृजते सृजति । सहरतेर्भिरत्वात् ॥ ८३ ॥ मोक्षिण. मोक्षापे-क्षावन्त॰ ॥ ८६ ॥ योधिकारी । सर्वं फलं ॥ ८७ ॥

[ पा० ] १ झ. ञ. ठ. सर्वैवर्यस्य. २ झ. ञ. ठ. शासिता. ३ झ. ञ. ठ. जिष्णु॰.

एतच्छ्रुत्वा च वचनं रावणो निर्ययौ तदा ॥ क्रोधसंरक्तनयन उद्यतास्त्रो महाबलः ॥ ८८ ॥
तथाभूतं च तं दृष्ट्वा हरिर्मुसलधृत्प्रभुः ॥ नैनं हन्म्यधुना पापं चिन्तयित्वेति विश्वधृत् ॥
अन्तर्धानं गतो राम ब्रह्मणः प्रियकाम्यया ॥ ८९ ॥
न च तं पुरुषं तत्र द[१]दर्श रजनीचरः ॥ ९० ॥
[ ह[२]र्षोन्नादं विमुञ्चन्वै निष्क्रामन्वरुणालयात् ॥ येनैव संप्रविष्टः स पथा तेनैव निर्ययौ ] ॥ ९१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे प्रथमस्सर्गः ॥ १ ॥

---

## प्रक्षिप्तेषु द्वितीयः सर्गः ॥ २ ॥

सूर्यजिगीषया तन्मण्डलगतेनरावणेनतप्रति युद्धकरणपराजितत्ववचनान्यतरपक्षाङ्गीकरणनिवेदनाय प्रहस्तप्रेषणम् ॥१॥ सूर्यद्वारपालकेनदण्डिनाम्ना तस्मिन्प्रहस्तवचननिवेदने सूर्येणदण्डिनप्रति स्वस्यकालक्षेपासहिष्णुत्वोक्त्या तप्रत्येवान्यतरपक्षाङ्गीकरणाधिकारदाने तेनचरावणप्रतितन्निवेदने रावणेन जयघोषणपूर्वक ततोनिर्गमनम् ॥ २ ॥

अथ संचिन्त्य पौ[३]लस्त्यः सूर्यलोकं जगाम ह ॥ मेरुशृङ्गे वरे रम्ये उषित्वा तत्र शर्वरीम् ॥ १ ॥
पुष्पकं तत्समारुह्य रवेस्तुरगसन्निभम् ॥ [४]मनोवातगतिं दिव्यं विहारवियति स्थितम् ॥
तत्रापश्यद्रविं देवं सर्वतेजोमयं शुभम् ॥ २ ॥
वरकाञ्चनकेयूररक्ताम्बरविभूषितम् ॥ कुण्डलाभ्यां शुभाभ्यां तु भ्राजन्मुखविकासितम् ॥ ३ ॥
केयूरनिष्काभरणं रक्तमालावलम्बिनम् ॥ रक्तचन्दनदिग्धाङ्गं सहस्रकिरणोज्ज्वलम् ॥ ४ ॥
तमादिदेवं[५]मादित्यं विभुं सप्ताश्ववाहनम् ॥ अनाद्यन्तममध्यं च लो[६]कसाक्षिणमीश्वरम् ॥ ५ ॥
तं दृष्ट्वा प्रवरं देवं रावणो राक्षसाधिपः ॥ स प्रहस्तमुवाचाथ रवितेजोबलार्दितम् ॥ ६ ॥
गच्छामात्य वद ह्येनं संदे[७]शान्मम शासनम् ॥ मार्तण्डं भास्करं श्रेष्ठं तत्त्वतो ब्रूहि माचिरम् ॥ ७ ॥
युद्धार्थी रावणः प्राप्तो युद्धं तस्य प्रदीयताम् ॥ निर्जितोस्मीति वा ब्रूहि पक्षमेकतरं कुरु ॥ ८ ॥
तस्य तद्वचनाद्रक्षः सूर्यस्यान्तिकमागमत् ॥ पिङ्गलं दण्डिनं चैव सो[८]ऽपश्यद्द्वारपालकौ ॥ ९ ॥
आभ्यामाख्याय तत्सर्वं रावणस्य विनिश्चयम् ॥ तूष्णीमास्ते प्रहस्तः स सू[९]र्यतेजःप्रतापितः ॥ १० ॥
दण्डी गत्वा रवेः पार्श्वं प्रणम्याख्यातवान्विभुम्॥ ११ ॥

---

मुसलधृक् मुसलायुध । अधुनापापमेनरावणंनहन्मीतिचिन्तयित्वामहापराधकारयित्वा कुलोपरोधबहुरक्षोहननस्यभाव्यत्वादन्तर्धानंगत । ब्रह्मवरोप्येतर्हिमयार्हणीयइतिचेतिहेतो ॥ ८९ ॥ पश्यते पश्यतिअपश्यत् ॥ ९० ॥ इतिसत्यधर्मतीर्थीयेप्रक्षिप्तसर्गव्याख्याने प्रथम सर्ग ॥ १ ॥

सचिन्त्य आलोच्य ॥ १ ॥ नानापातगति उड्डीनावडीनादिगति । विहारवियतिस्थितं विहारार्थकृतवियत् विहारवियत् तस्मिन् । सर्वतेजोमयं सर्वतेजस्विप्रधान ॥ २ ॥ भ्राजन्मुखविकासिन भ्राजत् विकासिमुखंयस्यसतथातं ॥ ३ ॥ उच्चैश्रवसवाहनं उच्चै श्रव पर्यायउच्चै श्रवसशब्द । तत्सदृशंवाहनंअश्वोयस्यस । वाहनान्यश्वायस्यसवा । "एकोश्वोवहतिसप्तनामा—सप्तसप्तिन्" इत्यादिमानात् । अविरोधोमानयोस्तुपुरोगाश्वविवक्षयाएकइत्युक्तिरित्यभिप्रायादित सपाद्य लोकसाक्षीचासौजगत्पतिश्चत । क्वचिल्लोकसाक्षिमितिपाठ तत्रार्षीकारान्तता ॥ ५ ॥ निदेशात् वदेत्याज्ञाया । शासनं अनुशिष्टार्थकवच ॥ ७ ॥ इतिपक्षद्वयमध्येएकतरंपक्षंकुरु ॥ ८ ॥ रक्ष प्रहस्ताख्यं । पिङ्गलंदण्डिनंच द्वारपालौ पश्यते अपश्यत् ॥ ९ ॥ तेजोंशुदीपित तेजोमयाअशव.किरणास्तैर्दीपित ॥ १० ॥ दण्डी दौवारिक ॥ ११ ॥

[ पा० ] १ झ ञ. ठ. पश्यते. २ अयंश्लोक झ पाठे दृश्यते. ३ झ. ठ. लङ्केश. ४ झ. ठ नानापातगतिर्दिव्यं. ५ झ. ठ. मादित्यमुच्चैश्रवसवाहनं ६ झ ठ. लोकसाक्षिजगत्पतिं ७ झ ठ निदेशान्मम. ८ झ. ठ. पश्यतेद्वार. ९ झ. ठ सूर्यतेजोंशुदीपित .

श्रुत्वा तु सूर्यस्तद्वृत्तं दण्डिनो रावणस्य ह ॥ उवाच वचनं श्रीमान्बुद्धिपूर्वं दिवाकरः ॥ १२ ॥
गच्छ दण्डिञ्जयस्वैनं निर्जितोस्मीति वा वद ॥ कुरु यत्ते काङ्क्षितं तं नाहं कालक्षिपां सहे ॥ १३ ॥
स गत्वा वचनात्तस्य राक्षसाय महात्मनः ॥ कथयामास तत्सर्वं सूर्योक्तं वचनं यथा ॥ १४ ॥
स श्रुत्वा वचनं तस्य दण्डिनो वै महात्मनः ॥ घोषयित्वा जगामाथ विजयं राक्षसेश्वरः ॥ १५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे द्वितीयः सर्गः ॥ २ ॥

---

## प्रक्षिप्तेषु तृतीयः सर्गः ॥ ३ ॥

चन्द्रजिगीषयातन्मण्डलंप्रतिप्रस्थितस्यरावणस्य मध्येमार्गं पर्वतमहर्षिणासमागम. ॥ १ ॥ रावणेनतप्रत्यप्सरोभि सह-विमानै· सहसचरतांसुकृतिना स्वरूपादिप्रश्ने तेनतप्रतितत्कथनम् ॥ २ ॥ रावणेनयुद्धायप्रतियोद्धृप्रदर्शनंप्रार्थितेनपर्वतेन तंप्रतिमान्धातृप्रदर्शन ॥ ३ ॥ रावणमान्धातृभ्यानानास्त्रप्रयोगपूर्वकंमहासमरप्रवर्तने अन्यतरापराजये गालवपुलस्त्याभ्या सान्त्वनेनतयोर्युद्धप्रतिनिवर्तनम् ॥ ४ ॥

अथ संचिन्त्य पौलस्त्यः सोमलोकं जगाम ह ॥ मेरुशृङ्गे वरे रम्ये रजनीमुष्य वीर्यवान् ॥ १ ॥
तदा कश्चिद्रथारूढो दिव्यस्रगनुलेपनः ॥ अप्सरोगणमुख्येन सेव्यमानस्तु गच्छति ॥ २ ॥
रतिश्रान्तोप्सरोङ्गेषु चुम्बितः सन्विबुध्यते ॥ रावणस्त्वथ तं दृष्ट्वा कौतूहलसमन्वितः ॥ ३ ॥
अथापश्यदृषिं तत्र पर्वतं मुनिसत्तमम् ॥ दशग्रीवो महात्मानं दृष्ट्वा चेदमुवाच ह ॥
स्वागतं तव देवर्षे दिष्ट्या चैवागतो ह्यसि ॥ ४ ॥
कोयं स्यन्दनमारूढो ह्यप्सरोगणसेवितः ॥ निर्लज्ज इव संयाति भयस्थानं न विन्दति ॥ ५ ॥
रावणेनैवमुक्तस्तु पर्वतो वाक्यमब्रवीत् ॥ शृणु वत्स यथातत्त्वं वक्ष्ये तव महामते ॥ ६ ॥
एतेन निर्जिता लोका ब्रह्मा चैवाभितोषितः ॥ एष गच्छति मोक्षाय सुसुखं स्थानमुत्तमम् ॥ ७ ॥
तपसा निर्जिता लोका विक्रमेण यथा त्वया ॥ प्रयाति पुण्यवान्वत्स सोमं पीत्वा न संशयः ॥८॥
त्वं च राक्षसशार्दूल शूरः सत्यव्रतस्तथा ॥ नैदृशेषु च क्रुध्यन्ति बलिनो ब्रह्मचारिषु ॥ ९ ॥
अथापश्यद्रथवरं महाकायं महौजसम् ॥ जाज्वल्यमानं वपुषा गीतवादित्रसंकुलम् ॥ १० ॥
कैष गच्छति देवर्षे शोभमानो महाद्युतिः ॥ किन्नरैश्च प्रगायद्भिर्नृत्यद्भिश्च मनोहरम् ॥ ११ ॥
श्रुत्वा चैनमुवाचाथ पर्वतो मुनिसत्तमः ॥ एष शूरो रणे योद्धा संग्रामेष्वनिवर्तकः ॥
युध्यमानस्तथैवैष प्रहारैर्जर्जरीकृतः ॥ १२ ॥
कृती शूरो रणे जेता स्वाम्यर्थे त्यक्तजीवितः ॥ संग्रामे निहतो वीरान्हत्वा च सबलान्बहून् ॥१३॥

---

दण्डिन. सकाशात् ॥ १२ ॥ जयस्व जय । निर्जितोस्मीतिवावद । जय स्वेतिच्छेदोवा । स्वत्वात्तववचनममवचनमेवेतिभाव । यत्तेतवानयोर्मध्येकाङ्क्षिततत्कार्षी कुरु । कच्चित्कालक्षपाचरगमयेतिशेष । पुरतोमदन्ववायजनिरेववधिष्यतितत्कीर्तिरेवमत्कीर्तिरितिरविरुपैक्षतेतिभावोऽवधेय ॥ १३ ॥ सामर्थ्येसतिसमितिमुपेयात् । नायात तेननिर्जित सवितेतिस्वविजयंघोषयित्वाजगाम ॥ १५ ॥ इतिसत्यधर्मतीर्थीयेप्रक्षिप्तसर्गव्याख्याने द्वितीय सर्ग ॥ २ ॥

उष्य समुष्य ॥ १ ॥ गच्छति अगच्छत् ॥ २ ॥ चुम्बित ताभि ॥ ३ ॥ कालेन योग्येन । कालोदैवागतइतिक्वचित्पाठः ॥ ४ ॥ भयस्थानं मद्रूपं ॥ ५ ॥ निर्जिता सुकृतार्जिता । यत्सुसुखंउत्तमस्थानं तन्मोक्षाय एषगच्छति ॥ ७ ॥ सोमंपीत्वा पुण्यकृत् सपादितपुण्य । अथवा पुण्यहेतुक्रत्वादिकृत् ॥ ८ ॥ शूर एषुनकोपकुरु । कुतइत्यतआह—नैवेति ॥ ९ ॥ मनोरमं यथातथा ॥ ११ ॥ सग्रामेष्वनिवर्तकोयोद्धा । एष इच्छाविषयइतिवा । अपेक्षितइतियावत् । ‘ एषस्यप्रभृथे ’ इत्यादिवत्

[ पा० ] १ झ. ठ कालेनैवागतो. २ झ. ठ. निर्जितायद्वद्वताराक्षसाधिप। प्रयातिपुण्यकृत्तद्वत्सोम ३ झ. ट नैवेदृशेषु. ४ झ. ठ. मनोरम.

इन्द्रस्यातिथिरेवैष ह्यथवा यत्र चेच्छति ॥ नृत्तगीतविलासैस्तु सेव्यते नरसत्तमः ॥ १४ ॥
पप्रच्छ रावणो भूयः कोयं यात्यर्कसन्निभः ॥ रावणस्य वचः श्रुत्वा पर्वतो वाक्यमब्रवीत् ॥ १५ ॥
य एष दृश्यते राजन्विमाने सर्वकाञ्चने ॥ अप्सरोगणसंयुक्ते पूर्णेन्दुसदृशाननः ॥ १६ ॥
सुवर्णदो महाराज विचित्राभरणाम्बरः ॥ एष गच्छति शीघ्रेण यानेन सुमहाद्युतिः ॥ १७ ॥
पर्वतस्य वचः श्रुत्वा रावणो वाक्यमब्रवीत् ॥ य एते यान्ति राजानो ब्रूहि तानृषिसत्तम ॥ १८ ॥
कोत्र मे याचतो दद्याद्युद्धातिथ्यं महाद्युतिः ॥ क्षिप्रमाख्याहि धर्मज्ञ पिता मे त्वं हि पर्वत ॥१९॥
एवमुक्तः प्रत्युवाच रावणं पर्वतस्तदा ॥ स्वर्गार्थिनो महाराज नैते युद्धार्थिनो नृपाः ॥ २० ॥
वक्ष्यामि च महाराज विचित्राभरणाम्बरः ॥ यस्तु राजा महातेजाः सप्तद्वीपेश्वरो महान् ॥
मान्धातेत्यभिविख्यातः स ते युद्धं प्रदास्यति ॥ २१ ॥
पर्वतस्य वचः श्रुत्वा रावणो वाक्यमब्रवीत् ॥ कुत्रासौ वर्तते राजा तं ममाचक्ष्व तत्त्वतः ॥ २२ ॥
अहं यास्यामि तत्राद्य यत्रासौ नरपुङ्गवः ॥ रावणस्य वचः श्रुत्वा मुनिर्वचनमब्रवीत् ॥ २३ ॥
युवनाश्वसुतो ह्येष मान्धाता राजसत्तमः ॥ सप्तद्वीपान्समुद्रान्ताञ्जित्वाऽद्य स्वर्गमेष्यति ॥ २४ ॥
अथापश्यन्महाबाहुर्विरिञ्चिवरदर्पितः ॥ अयोध्याधिपतिं वीरं मान्धातारं नृपोत्तमम् ॥ २५ ॥
सप्तद्वीपाधिपं यान्तं स्यन्दनेन विराजितम् ॥ काञ्चनेन विचित्रेण महाहारेण भास्वता ॥ २६ ॥
जाज्वल्यमानं रूपेण दिव्यस्रगनुलेपनम् ॥ तमुवाच दशग्रीवो युद्धं मे दीयतामिति ॥ २७ ॥
एवमुक्तो दशग्रीवं प्रहस्येदमुवाच ह ॥ यदि ते जीवितं नेष्टं ततो युध्यस्व मामिति ॥ २८ ॥
मान्धातुर्वचनं श्रुत्वा रावणो वाक्यमब्रवीत् ॥ वरुणस्य कुबेरस्य यमस्यापि न विव्यथे ॥
किमरे मानुषात्त्वत्तो रावणो भयमाविशेत् ॥ २९ ॥
एवमुक्त्वा दशग्रीवः क्रोधात्तं प्रदहन्निव ॥ आज्ञापयामास तदा राक्षसान्युद्धदुर्मदान् ॥ ३० ॥
अथ क्रुद्धास्तु सचिवा रावणस्य दुरात्मनः ॥ ववृषुः शरवर्षाणि क्रूरा युद्धविशारदाः ॥ ३१ ॥
अथ राज्ञा बलवता कङ्कपत्रैरजिह्मगैः ॥ इषुभिस्ताडिताः सर्वे प्रहस्तशुकसारणाः ॥
महोदरविरूपाक्षमारीचाकम्पनादयः ॥ ३२ ॥
अथ प्रहस्तो नृपतिं शरवर्षैरवाकिरत् ॥ अप्राप्तानेव तान्सर्वान्प्रचिच्छेद नृपोत्तमः ॥ ३३ ॥
भुशुण्डीभिश्च भल्लैश्च भिण्डिपालैश्च तोमरैः ॥ नरराजेन दह्यन्ते शलभा इव तेऽग्निना ॥ ३४ ॥

॥ १२ ॥ समरेस्वयबहून्हत्वाइन्द्रस्यातिथि । यत्रगच्छति तत्रातिथि । एतेनानेकेलोकाएतादृशै प्राप्या सन्तीतिद्योतयति । यत्रगच्छति तत्रनृत्तगीतपरै सेव्यतइतिवान्वय ॥ १४ ॥ सर्वकाञ्चने सर्वस्मिन्भागेकाञ्चनयस्यसतथातस्मिन् ॥ १६ ॥ सुवर्णद नाम्ना । शीघ्रेण शीघ्रगेन ॥ १७ ॥ धर्मत विश्रवस्समतपआदिधर्मत ॥ १९ ॥ स्वर्गार्थिन कृतयुद्धादिसाधनास्तत्फलार्थिन । अतोनयुद्धार्थिन ॥ २० ॥ तर्हिमद्भुजदण्डकण्डूतेरुपशम कथं शंसेत्यतआशंसति—**वक्ष्यामीति** ॥ सते युद्धाध्वनिविद्यमानाय । युद्धंसप्रदास्यतीत्यन्वय । अत सतुसते इत्यत्रसइतिनपुनरुक्तमितिमन्तव्य ॥ २१ ॥ तिष्ठते समुखंमह्यं । असौ कुत कुत्र । तन्ममसमाचक्ष्व ॥ २२ ॥ इह अत्रैव ॥ २४ ॥ अथ पर्वतवचनसमनन्तरमेव ॥ २५ ॥ महेन्द्राभेण तत्पर्वतसदृशेन ॥ २६ ॥ नेष्टं नापेक्षित ॥ २८ ॥ यमस्यापि सकाशात् । योरावणइतिपारोक्ष्येणनिर्देशोऽहङ्कारात् ॥ २९ ॥ शिलाशितै शाणोल्लीढै । महोदरविरूपाक्षावकंपनेतिसुगम पाठ । विरूपाद्यकंपनेतिपाठेमहोदरद्विकवाविरूपाक्षद्विकवागृहीत्वाबहुवचनसभवोऽवसेय । पराक्रमबहुत्वादवयवबहुत्वाद्वा ‘ अदिति पाशान् ’ इत्यत्रेवबहुवचन । बहुवचनमाद्यर्थे । महोदरविरूपाक्षादयइत्यर्थइतिवा ॥ ३२ ॥

[ पा० ] १ झ ट. धर्मत . २ झ ठ. महाभागयस्तेयुद्धंप्रदास्यति । सतुराजा ३ झ. ठ. कुतोसौतिष्ठतेराजाततसमाचक्ष्वसुव्रत. ४ झ. ठ. सप्तद्वीपसमुद्रान्ताजित्वेह. ५ झ ठ. महेन्द्राभेण. ६ झ. ठ. कङ्कपत्रै शिलाशितै . ७ झ. ठ. महोदरविरूपाक्षाद्यकपनपुरोगमा .

पुनर्नृपवरः क्रुद्धः पञ्चभिः प्रबिभेद तम् ॥ तोमरैः स महाघोरैः पुरा क्रौञ्चमिवाग्निजः ॥ ३५ ॥
ततो मुहुर्भ्रामयित्वा मुद्गरं वज्रसन्निभम् ॥ मुमोच सोतिवेगेन राक्षसस्य रथं प्रति ॥ ३६ ॥
स पपात महावेगो मुद्गरो वज्रसन्निभः ॥ घूर्णितो रावणस्तेन पतितः शक्रकेतुवत् ॥ ३७ ॥
तदा स नृपतिः प्रीतो हर्षोद्भूतबलो बभौ ॥ [1]सकलेन्दुकरैः स्पृष्टं यथाम्बु लवणाम्भसः ॥ ३८ ॥
ततो रक्षोबलं सर्वं महाभूतमचेतनम् ॥ परिवार्याथ तं तस्थौ राक्षसेन्द्रं समन्ततः ॥ ३९ ॥
ततश्चिरात्समाश्वस्तो रावणो लोकरावणः ॥ मान्धातुः पीडयामास देहं लङ्केश्वरो भृशम् ॥
रथं चाश्वयुजं क्षिप्रं बभञ्ज च महाबलः ॥ ४० ॥
विरथः स रथं प्राप्य शक्तिं घण्टाट्टहासिनीम् ॥ मान्धाता विप्रचिक्षेप तां बलाद्रावणं प्रति ॥४१॥
मरीचिमिव चार्कस्य चित्रभानोः शिखामिव ॥ दीप्यन्तीं रुचिराभासं मान्धातृकरनिस्सृताम् ॥४२॥
तामापतन्तीं शूलेन पौलस्त्यो रजनीचरः ॥ ददाह शक्तिं लङ्केशः पतङ्गमिव पावकः ॥ ४३ ॥
यमदत्तं तु नाराचं निकृष्याथ दशाननः ॥ पातयामास वेगेन स तेनाभिहतो भृशम् ॥ ४४ ॥
मूर्च्छितं नृपतिं दृष्ट्वा प्रहृष्टास्ते निशाचराः ॥ चुक्रुशुः सिंहनादांश्च क्ष्वेलन्तश्च निशाचराः ॥ ४५ ॥
लब्धसंज्ञो मुहूर्तेन ह्ययोध्याधिपतिस्तदा ॥ [2]तं दृष्ट्वा शत्रुभिः शत्रुं पूज्यमानं मुदान्वितैः ॥ ४६ ॥
जातकोपो दुराधर्षश्चन्द्रार्कसदृशद्युतिः ॥ महता शरवर्षेण पीडयन्राक्षसं बलम् ॥ ४७ ॥
चापस्य च निनादेन तस्य बाणरवेण च ॥ संचचाल ततः सैन्यमुद्भूत इव सागरः ॥ ४८ ॥
तद्युद्धमभवद्घोरं नरराक्षससंकुलम् ॥ ४९ ॥
[3]क्रुधाविष्टौ महात्मानौ नरराक्षससत्तमौ ॥ कार्मुकासिधरौ वीरौ शरासनगतौ तथा ॥ ५० ॥
मान्धाता रावणं चैव राक्षसश्चैव तं नृपम् ॥ क्रोधेन महताऽऽविष्टौ शरवर्षं [4]ववर्षतुः ॥ ५१ ॥
तौ परस्परसंक्षोभात्[5]प्रहारैर्जर्जरीकृतौ ॥ ५२ ॥
[6]रावणो रौद्रमस्त्रं तु प्रायुङ्क्त स महाबलः ॥ आग्नेयेन स मान्धाता तदस्त्रं प्रत्यवारयत् ॥ ५३ ॥
गान्धर्वेण दशग्रीवो वारुणेन स राजराट् ॥ ५४ ॥
गृहीत्वा स तु ब्रह्मास्त्रं सर्वभूतभयावहम् ॥ तोलयामास मान्धाता दिव्यं पाशुपतं महत् ॥ ५५ ॥
तदस्त्रं घोररूपं तु त्रैलोक्यभयवर्धनम् ॥ दृष्ट्वा त्रस्तानि भूतानि स्थावराणि चराणि च ॥
वरदानात्तु रुद्रस्य [7]तपसाऽधिगतं महत् ॥ ५६ ॥
ततः प्रकम्पितं सर्वं त्रैलोक्यं सचराचरम् ॥ देवाः प्रकम्पिताः सर्वे लयं नागाश्च मेनिरे ॥ ५७ ॥
अथ तौ मुनिशार्दूलौ ध्यानयोगादपश्यताम् ॥ पुलस्त्यो गालवश्चैव वारयामासतुर्नृपम् ॥
उपलब्धैश्च विविधैर्वाक्यै राक्षससत्तमम् ॥ ५८ ॥

---

अग्निज स्कन्द । 'तकार्तिकेयगाङ्गेयमाग्नेयचप्रचक्षते' इत्युक्ते ॥ ३५ ॥ सकलेन्दुकला पौर्णमासीसबन्धिनी । लवणाभस लवणसमुद्रस्य अबुयथाऽभिवृद्धंभवति तथा ॥ ३८ ॥ अचेतन निस्सज्ञ ॥ ३९ ॥ देहंपीडयामासआयुधै ॥ ४० ॥ मन्त्रिभि प्रहस्तादिभि. ॥ ४६ ॥ राक्षस तत्सबन्धिबलं ॥ ४७ ॥ सागरोमारुतोद्धतोयथा तथा ॥ ४८ ॥ आविष्टौ परस्परसनिकृष्टौ ॥ ५० ॥ मुमोचतु मुमुचतु ॥५१॥ क्षतेपुनर्विक्षतंययोस्तौ ॥ ५२ ॥ अमुञ्चत । अमुञ्चत् ॥ ५३ ॥ तपसाराधितं साधितं ॥ ५६ ॥ नागा महाहय गजावा ॥ ५७ ॥ पुलस्त्योगालवश्चेतिमुनिशार्दूलौ राक्षससत्तमचवारयामासतु । तौमुनी । राक्षससत्तमंचावारयामासतु ॥ ५८ ॥

[ पा० ] १ झ. ठ. सकलेन्दुकलास्पृष्टा २ झ ठ दृष्ट्वातंमन्त्रिभि.शत्रु. ३ झ ठ अथाविष्टौ. ४ झ. ठ. मुमोचतु. ५ झ. ठ. प्रहारै क्षतविक्षतौ. ६ झ. ठ. कार्मुकेऽस्त्रसमाधायरौद्रमस्त्रममुञ्चत. ७ झ. ठ. तपसाराधितमहत्

तौ तु कृत्वा परां प्रीतिं नरराक्षसयोस्तदा ॥ संप्रस्थितौ तु तौ हृष्टौ पथा येनैव चागतौ ॥ ५९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे तृतीयः सर्गः ॥ ३ ॥

---

## प्रक्षिप्तेषु चतुर्थः सर्गः ॥ ४ ॥

मेघमण्डलाद्यतिक्रमेणचन्द्रमण्डलसमीपगतेनरावणेन सहचरेषुप्रहस्तादिषु चान्द्रतेजस्सहनाक्षमेषु युयुत्सया चन्द्रंप्रति शरगणवर्षणे ब्रह्मणातत्रसमागमन ॥ १ ॥ तेनरावणप्रति चन्द्रस्यलोकहितकरत्वोक्त्या तद्धिंसनात्प्रतिनिवर्तनपूर्वकं तस्मैशिवनामाष्टोत्तरशतरूपमहामन्त्रोपदेश ॥ २ ॥

गताभ्यामथ विप्राभ्यां रावणो राक्षसाधिपः ॥ दशयोजनसाहस्रं प्रथमं स मरुत्पथम् ॥ १ ॥
अत्यक्रामन्महातेजाः पुष्पकेण महाबलः ॥ यत्र तिष्ठन्ति संन्यस्ता हंसाः सर्वगुणान्विताः ॥ २ ॥
अत ऊर्ध्वं द्वितीयं तु गत्वा चैष मरुत्पथम् ॥ दशयोजनसाहस्रं तद्धि वै परिगण्यते ॥ ३ ॥
तत्र मेघाः स्थिताः सर्वे त्रिविधा नित्यसंश्रिताः ॥ आग्नेयाः पक्षजा ब्राह्मास्त्रिविधा इति संस्थिताः ॥४॥
अथ गत्वा तृतीयं तु वायोः पन्थानमुत्तमम् ॥ नित्यं यत्र स्थिताः सिद्धाश्चारणाश्च मनस्विनः ॥
दशैव तु सहस्राणि योजनानां तथैव च ॥ ५ ॥
चतुर्थं वायुमार्गं तु गतवान्रावणस्तथा ॥ वसन्ति यत्र नित्यं वै भूताश्च सविनायकाः ॥ ६ ॥
अथ गत्वा तु वै शीघ्रं पञ्चमं वायुगोचरम् ॥ दशैव तु सहस्राणि योजनानां तथैव च ॥ ७ ॥
गङ्गा यत्र सरिच्छ्रेष्ठा नागाश्च कुमुदादयः ॥ कुञ्जरा यत्र तिष्ठन्ति ये च मुञ्चन्ति शीकरान् ॥
गङ्गातोयेषु तिष्ठन्तः पुण्यं कुर्वन्ति सर्वशः ॥ ८ ॥
ततः करिकराद्भ्रष्टं वायुना लोलितं भृशम् ॥ जलं कुञ्जेषु पतितं हिमं भवति राघव ॥ ९ ॥
ततो जगाम षष्ठं स वायुमार्गं महाद्युते ॥ योजनानां सहस्राणि तथैव तु स राक्षसः ॥
यत्रास्ते गरुडो नित्यं ज्ञातिबान्धवसत्कृतः ॥ १० ॥
तथैव तु सहस्राणि योजनानां तथोपरि ॥ सप्तमं वायुमार्गं तु यत्र वै ऋषयः स्थिताः ॥ ११ ॥
अत ऊर्ध्वं स गत्वाऽथ सहस्राणि दशैव तु ॥ अष्टमं वायुमार्गं तु यत्र गङ्गा प्रतिष्ठिता ॥ १२ ॥
आकाशगङ्गा विख्याता ह्यादित्यपथमास्थिता ॥ वायुना धार्यमाणा सा महावेगा महास्वना ॥१३॥

---

तौमुनी । नरराक्षसयो प्रीतिं परस्परमनुराग कृत्वा कारयित्वा । येनपथागतौतेनैवसप्रस्थितौ ॥ ५९ ॥ इतिसत्यधर्मतीर्थीये प्रक्षिप्तसर्गव्याख्यानेतृतीय सर्ग ॥ ३ ॥

विप्राभ्या पौलस्त्यगालवाभ्या । अतऊर्ध्वंहससदनात् । प्रथमंमरुत्पथं दशयोजनसाहस्रं ॥ १ ॥ अतएवतदूर्ध्वं । अनुत्तम अप्रथम । द्वितीयमितियावत् तदेव तदपि । दशयोजनसाहस्रं परिगण्यते गणके ॥ ३ ॥ तत्र तन्मरुत्पथे । त्रिविधामेघा सनिहिता स्थिता । तंप्रकारदर्शयति—आग्नेयाइति । आग्नेया तत्सबन्धिन । पक्षिण पक्ष्यात्मका । ब्राह्मा तत्सबन्धिन इति । 'अग्निकलिभ्याच' इतिढक् ॥ ४ ॥ तृतीयं मरुत्पथ ॥५॥ नित्यतिष्ठन्तीतिनित्यस्था । भूता देवयोनिविशेषा । सविनायका विनायकेनसहिता ॥ ६ ॥ वायोर्गोचरस्तं ॥ ७ ॥ कुमुदादय अनागा अने महतिवाते आगतेपि अगाः पर्वततुल्या । कुञ्जरा अन्येपिगजा कुमुदादिनागेभ्यइतिवा ॥ ८ ॥ रविकरभ्रष्ट तत्किरणच्युतं । वायुनापेशलीकृतं सुरभिलेनकृत । यज्जल वर्षति तत्पुण्यं पवित्रं । हिमं शीतलंपतति ॥ ९ ॥ महाद्युते राम । ज्ञातिबान्धवसत्कृत ज्ञातय एकगोत्रजा । बान्धवा श्वशुरादय ॥ १० ॥ गङ्गा रूपान्तरेणतत्र । अत्रमूलरूपेणेतिज्ञेयं ॥ १२ ॥

[ पा० ] १ झ. ठ अतऊर्ध्वंतुगत्वावैमरुत्पथमनुत्तम २ झ. ठ तत्रसनिहितामेघास्त्रिविधानित्यश स्थिताः । आग्नेया पक्षिणोब्राह्मास्त्रिविधास्तत्रतेस्थिता . ३ झ. ठ. नित्यस्थाभूताश्च. ४ झ. ठ. ततोरविकरभ्रष्टवायुनापेशलीकृतं. ५ झ. ठ. जलपुण्यं प्रपततिहिमंवर्षतिराघव.

अत ऊर्ध्वं प्रवक्ष्यामि चन्द्रमा यत्र तिष्ठति ॥ १४ ॥
अशीतिं तु सहस्राणि योजनानां तथोपरि ॥ चन्द्रमास्तिष्ठते यत्र ग्रहनक्षत्रसंयुतः ॥ १५ ॥
शतं शतसहस्राणि रश्मयश्चन्द्रमण्डलात् ॥ प्रकाशयन्ति लोकांस्तु सर्वसत्त्वसुखावहाः ॥ १६ ॥
ततो दृष्ट्वा दशग्रीवं चन्द्रमा निर्दहन्निव ॥ स तु शीताग्निना शीघ्रं प्रादहद्रावणं तदा ॥ १७ ॥
नासहंस्तस्य सचिवाः शीताग्निं भयपीडिताः ॥ रावणं जयशब्देन प्रहस्तो वाक्यमब्रवीत् ॥ १८ ॥
राजञ्शीतेन बाध्यामो निवर्ताम इतो वयम् ॥ चन्द्ररश्मिप्रतापेन रक्षसां भयमाविशत् ॥ १९ ॥
स्वभासा ह्येष राजेन्द्र शीतांशुर्दहनात्मकः ॥ २० ॥
एतच्छ्रुत्वा प्रहस्तस्य रावणः क्रोधमूर्च्छितः ॥ विस्फार्य धनुरुद्यम्य नाराचैस्तं ह्यपीडयत् ॥ २१ ॥
अथ ब्रह्मा समागम्य चन्द्रलोकं त्वरान्वितः ॥ दशग्रीव महाबाहो साक्षाद्विश्रवसः सुत ॥
गच्छ शीघ्रमितः सौम्य मा चन्द्रं पीडयाशुगैः ॥ २२ ॥
लोकस्य हितकामोऽयं द्विजराजो महाद्युतिः ॥ मन्त्रं च ते प्रदास्यामि [1]प्राणात्ययभयेऽभयम् ॥२३॥
यस्त्विमं संस्मरेन्मन्त्रं न स मृत्युमवाप्नुयात् ॥ एवमुक्तो दशग्रीवः प्राञ्जलिर्वाक्यमब्रवीत् ॥ २४ ॥
यदि तुष्टोसि मे देव अनुग्राह्यो यदि ह्यहम् ॥ यदि मन्त्रेश्वरो देयो दीयतां मम धार्मिक ॥ २५ ॥
यं जप्त्वाऽहं महाभाग सर्वदेवेषु निर्भयः ॥ अमरेषु च सर्वेषु दानवेषु पतत्रिषु ॥
त्वत्प्रसादात्तु देवेश न भयं विद्यते मम ॥ २६ ॥
एवमुक्तो दशग्रीवं ब्रह्मा वचनमब्रवीत् ॥ [2]प्राणात्यये तु वै दश्चि न नित्यं राक्षसाधिप ॥ २७ ॥
अक्षसूत्रं गृहीत्वा तु जपेन्मन्त्रमिमं शुभम् ॥ जप्त्वा तु राक्षसपते त्वमजेयो भविष्यसि ॥
अजप्त्वा राक्षसश्रेष्ठ न ते सिद्धिर्भविष्यति ॥ २८ ॥
शृणु मन्त्रं प्रवक्ष्यामि येन राक्षसपुङ्गव ॥ मन्त्रस्य कीर्तनादेव प्राप्स्यसे समरे जयम् ॥ २९ ॥
नमस्ते देवदेवेश सुरासुरनमस्कृत ॥ भूतभव्यमहादेव हर पिङ्गललोचन ॥ ३० ॥
बालस्त्वं वृद्धरूपी च वैयाघ्रवसनच्छद ॥ आरुणेयोसि देव त्वं त्रैलोक्यप्रभुरीश्वरः ॥ ३१ ॥
हरो [3]हरितनेमिस्त्वं युगान्तदहनोऽनलः ॥ गणेशो लोकशम्भुश्च लोकपालो महाभुजः ॥ ३२ ॥
महादेवो महाशूली महादंष्ट्रो महाभुजः ॥ कालश्च कालरूपी च नीलग्रीवो महोदरः ॥ ३३ ॥
वेदान्तगो वेदमयः पशूनांपतिरव्ययः ॥ शूलधृच्छूलकेतुश्च नेता गोप्ता हरिः शिवः ॥ ३४ ॥
जटी मुण्डी शिखण्डी च लगुडी च महायशाः ॥ भूतेश्वरो गणाध्यक्षः सर्वात्मा सर्वभावनः ॥३५॥
सर्वदः सर्वहारी च स्रष्टा च गुरुरव्ययः ॥ कमण्डलुधरो देवः पिनाकी धूर्जटिस्तथा ॥ ३६ ॥

---

योजनाना प्रमाणत अशीतिंसहस्राणि अशीतिसाहस्री । तिष्ठते तिष्ठति ॥ १५ ॥ सर्वसत्त्वानि सर्वप्राणिन ॥ १६ ॥ शीताग्निना शीतलेपिविरहिणामिववैरिणातापकृदितिसमताऽग्निनाज्ञेया ॥ १७ ॥ नासहन् गत । राजन्जयेतिशब्दोजयशब्दस्तेन ॥ १८ ॥ निवर्ताम निवर्तामहे ॥ १९ ॥ शीतांशुरपिदहनात्मकइत्येपचन्द्रस्यस्वभाव ॥ २० ॥ द्विजराज ब्राह्मणाधिपति । 'सोमोस्माकब्राह्मणानाराजा' इतिश्रुते । यदाप्राणात्ययगति अवसानसमय ॥ २३ ॥ देवेषु देवेभ्य त्वत्प्रसादात् एतत्कालिकात् ॥ २६ ॥ प्राणात्ययेषु तत्तत्सदृशानुसङ्कटेषु ॥ २७ ॥ अक्षसूत्रं कमलाक्षमाला ॥ २८ ॥ जप्त्वायेनसिद्धिर्भविष्यतितमन्त्रंशृणु । कीर्तनात् जपपूर्वकंमन्दमुच्चारात् ॥ २९ ॥ नमस्तइतिमन्त्रप्रारभ । वैयाघ्रवसनच्छद वैयाघ्रव्याघ्रचर्म । तदेववसनमंशुक । तेनछादयतेसतथा ॥ ३१ ॥ हरितनेमीदूर्वालङ्कृततपोंगर्तवान् । 'नेमि कीलेऽवधौगर्ते' इतिविश्व ॥ ३२ ॥ शिखण्डी काकपक्षी । चतुर्दिशखण्डेत्यादिवच्छिखण्डशब्दोजटाजूटवाचीवा ॥ ३५ ॥

[ पा० ] १ झ. ठ. प्राणात्ययगतिर्यदा २ झ ठ. प्राणात्ययेषुजप्तव्योननित्यं. ३ झ ठ. हरितनेमीच.

माननीयोर्हणीयश्च ओंकारः सामवेदगः ॥ मृत्युश्च मृत्युदूतश्च पारियात्रश्च सुव्रतः ॥ ३७ ॥
ब्रह्मचारी गृही योगी वीणापणवतूणवान् ॥ अमरो दर्शनीयश्च बालसूर्यनिभस्तथा ॥ ३८ ॥
श्मशानचारी भगवानुमापतिररिन्दमः ॥ भगनेत्रः प्रहर्ता च पूषदन्तनिपातनः ॥ ३९ ॥
ज्वरहर्ता पाशहस्तः प्रलयः काल एव च ॥ उल्कामुखोऽग्निकेतुश्च मुनिर्दीप्तो विशांपतिः ॥ ४० ॥
उन्मादमोहनकरः समर्थस्त्रिदशोत्तमः ॥ वामनो वामदेवश्च प्राग्दक्षिण्यश्च नामतः ॥ ४१ ॥
भिक्षुश्च भिक्षुरूपी च त्रिजटी जटिलः स्वयम् ॥ चक्रहस्तः प्रतिष्टम्भी चमूनां स्तम्भनस्तथा ॥४२॥
ऋतुर्ऋतुकरः कालो मधुर्मधुरलोचनः ॥ वानस्पत्यः शीकरश्च नित्यमाश्रितपूजितः ॥ ४३ ॥
जगद्धाता च कर्ता च पुरुषः शाश्वतो ह्यजः ॥ धर्माध्यक्षो विरूपाक्षस्त्रिवर्त्मा भूतभावनः ॥ ४४ ॥
त्रिनेत्रो बहुनेत्रश्च सूर्यायुतसमप्रभः ॥ देवदेवोभिदेवश्च चन्द्राङ्कितजटस्तथा ॥ ४५ ॥
नर्तको लासकश्चैव पूर्णेन्दुसदृशाननः ॥ सुब्रह्मण्यः शरण्यश्च सर्वदेवमयस्तथा ॥ ४६ ॥
सर्वभूतनिवासश्च सर्वबन्धविमोचकः ॥ मोहनो वञ्चकश्चैव सर्पधारी वरोत्तमः ॥ ४७ ॥
पुष्पदन्तो विभागश्च मुख्यः सर्वहरस्तथा ॥ हरिश्मश्रुर्धनुर्धारी भीमो भीमपराक्रमः ॥
भक्ताभीष्टप्रदः स्थाणुः परमात्मा सनातनः ॥ ४८ ॥
मया प्रोक्तमिदं पुण्यं नाम्नामष्टोत्तरं शतम् ॥ [ सर्वपापहरं पुण्यं शरण्यं शरणार्थिनाम् ] ॥
जप्यमेतद्दशग्रीव कुर्याच्छत्रुविनाशनम् ॥ ४९ ॥
दत्त्वा तु रावणस्येदं वरं स कमलोद्भवः ॥ पुनरेव जगामाशु ब्रह्मलोकं सनातनम् ॥ ५० ॥
रावणोपि वरं लब्ध्वा पुनरेवागमत्तदा ॥ निवर्तमानः संहृष्टो रावणः स दुरात्मवान् ॥
जह्रे पथि नरेन्द्रर्षिदेवगन्धर्वकन्यकाः ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे चतुर्थः सर्गः ॥ ४ ॥

---

## प्रक्षिप्तेषु पञ्चमः सर्गः ॥ ५ ॥

कदाचनसचिवैः सहपश्चिमार्णवगतेनरावणेन क्वचनद्वीपे कस्यचिन्महापुरुषस्यदर्शनम् ॥ १ ॥ तेनयुद्धायात्मानमाहूतवतोरावणस्य लीलयाऽत्यल्पमुष्टिप्रहारेणनिपातनपूर्वक पातालप्रवेश ॥ २ ॥ तत प्रबुध्यसचिववचनात्पातालप्रविष्टेनरावणेन सर्वाभरणभूषिताना तुल्यरूपाणांमहापुरुषाणाकोटित्रयावलोकनम् ॥ ३ ॥ ब्रह्मवरविभवात्तत पुरतोनिर्गतेनतेन भुजगशायिन. कपिलरूपिणोहरेरवलोकनम् ॥ ४ ॥ कपिलेन स्वसमीपवर्तिकमलावलोकनेन कामवशतया तज्जिघृक्षोस्तस्य निज निश्वासमारुतेनभुविपातनपूर्वकं तंप्रति ब्रह्मवरमाननाय स्वेनाहननकथनम् ॥ ५ ॥ रावणेनतस्यनारायणत्वनिर्धारणेन तप्रति तद्धस्तेनस्वस्यवधप्रार्थनसमकालंतदङ्गे सचराचरसकललोकावलोकनम् ॥ ६ ॥ रामप्रश्नादगस्त्येनतप्रति द्वीपवासिनो महापुरुषस्य श्रीनारायणावताररूपकपिलत्वनिवेदनम् ॥ ७ ॥

[ दत्त्वा तु रावणस्यैवं वरं स कमलोद्भवः ॥ पुनरेवागमत्क्षिप्रं ब्रह्मलोकं पितामहः ॥

---

अत्रागतानामेवनाम्नापुनरागतिरानुपूर्व्यार्थाच्चस्तोत्रमन्त्रत्वान्नदोषावहा । एवमुत्तरत्रापि । ज्येष्ठं साम । ऋच्यध्यारूढत्वेनसाम्नो ज्येष्ठता ॥ ३७ ॥ गुहावासी तपश्चरणार्थ । हरितनेमीत्यत सभवदर्थ ॥ ३८ ॥ चतुर्थ दण्डरूपोपाय । प्राक्प्रदक्षिणवामन प्रदक्षिणा अतिकुशला तेभ्योपिवामानिसयन्तियस । यद्वा प्रदक्षिणोवामनोवामनिर्भगवान्यस्यसइतिवा । 'वामानिसयन्तिसवामनिः' इतिश्रुते ॥ ४१ ॥ इतिसत्यधर्मतीर्थीयेप्रक्षिप्तसर्गव्याख्याने चतुर्थस्सर्ग ॥ ४ ॥

पुनरागमत् स्वंस्थलं ॥ १ ॥

[ पा० ] १ झ ठ. माननीयश्चओकारोवरिष्ठोज्येष्ठसामग . २ झ ठ. ब्रह्मचारीगुहावासीवीणापणव. ३ झ ठ उन्मादोवेपनकरश्चतुर्थोलोकसत्तम . ४ झ. ठ. प्राक्प्रदक्षिणवामन . ५ इदमर्धं झ. ठ पाठयोर्दृश्यते. ६ इदमर्धत्रयं. झ. ठ. पाठयोर्दृश्यते

रावणोपि वरं लब्ध्वा पुनरेवागमत्तथा ॥ १ ॥ ]
केनचित्त्वथ कालेन [1]रावणः प्रययौ गृहात् ॥ पश्चिमार्णवमागच्छत्सचिवैः सह राक्षसैः ॥ २ ॥
द्वीपस्थो [2]ददृशे तेन पुरुषः पावकप्रभः ॥ महाजाम्बूनदप्रख्य एक एव व्यवस्थितः ॥ ३ ॥
[3]यथा दृश्येत भयदो युगान्तानल उत्थितः ॥ देवानामिव देवेशो ग्रहाणामिव भास्करः ॥ ४ ॥
शरभाणां यथा सिंहो हस्तिष्वैरावतो यथा ॥ पर्वतानां यथा मेरुः पारिजातश्च शाखिनाम् ॥ ५ ॥
तथा तं पुरुषं [4]दृष्ट्वा कुण्डमध्येऽनलं तथा ॥ [5]गर्जन्तं विविधैर्नादैर्लम्बहस्तं भयानकम् ॥ ६ ॥
दंष्ट्रालं विकटं चैव कम्बुग्रीवं [6]महोजसम् ॥ मण्डूककुक्षिं पिङ्गाक्षं [7]कैलासशिखरोपमम् ॥ ७ ॥
पद्मपादतलं भीमं [8]रक्ताम्बुजनिभाननम् ॥ महाकायं महानादं मनोऽनिलसमं जवे ॥ ८ ॥
भीममाबद्धतूणीरं [9]सघंटं बद्धचामरम् ॥ ज्वालामालापरिक्षिप्तं [10]किङ्किणीकृतनिस्वनम् ॥ ९ ॥
मालया स्वर्णपद्मानां [11]वक्षोदेशावलम्बया ॥ ऋग्वेदमिव शोभन्तं पद्ममालाविभूषितम् ॥ १० ॥
सोञ्जनाचलसंकाशः काञ्चनाचलसन्निभम् ॥ [12]अब्रवीत्तं दशग्रीवो युद्धं मे दीयतामिति ॥ ११ ॥
जगर्ज चोच्चैर्बलवान्सहामात्यो दशाननः ॥ [13]धृत्वा स राक्षसपतिः शूलशक्त्यृष्टिपट्टिशान् ॥ १२ ॥
स द्वीपिना सिंह इव ऋषभेणेव कुञ्जरः ॥ [14]सुमेरुरिव छागेन नदीवेगैरिवार्णवः ॥ १३ ॥
अकम्प्यमानः पुरुषो [15]रावणं वाक्यमब्रवीत् ॥ युद्धश्रद्धां हि ते रक्षो नाशयिष्यामि दुर्मते ॥ १४ ॥
रावणस्य च यो वेगः सर्वलोक[16]भयावहः ॥ तथा वेगसहस्राणि संश्रितानि तमेव हि ॥ १५ ॥
अभवत्तस्य सा दृष्टिर्ग्र[17]हमालेव चाद्भुता ॥ [18]दन्तानां दशतः शब्दो यन्त्रस्येवातिभीकरः ॥ १६ ॥
धर्मस्तस्य तपश्चैव जगतः सिद्धिहे[19]तुके ॥ ऊरू संश्रित्य तस्थाते मन्मथः शिश्नमास्थितः ॥ १७ ॥
विश्वेदेवाः कटीभागे [20]मरुतो यस्य शीर्षगाः ॥ मध्येष्टौ वसवस्तस्य समुद्राः [21]कुक्षिसंस्थिताः ॥ १८ ॥
[22]पार्श्वस्थाश्च दिशः सर्वाः सर्वसन्धिषु मारुताः ॥ [ [23]पृष्ठं च भगवान्रुद्रो हृदयं च पितामहः ॥ ]
पितरश्चाश्रिताः पृष्ठं हृदयं च पितामहाः ॥ १९ ॥
गोदानानि पवित्राणि भूमिदानानि यानि च ॥ [24]सुवर्णस्य च दानानि शश्वल्लोमाश्रितानि वै ॥२०॥
हिमवान्हेमकूटश्च मन्दरो मेरुरेव च ॥ नरं तु तं समाश्रित्य ह्यस्थिभूता व्यवस्थिताः ॥ २१ ॥
[25]मही वक्षोभवत्तस्य शरीरे द्यौरवस्थिता ॥ [26]उभे सन्ध्ये कायसन्धौ जलवाहाश्च मेहने ॥
बाहू धाता [27]विधाता च भगः पूषा उभौ करौ ॥ २२ ॥

---

दृश्यते अदृश्यत ॥३॥ सघण्टाबद्धचामरं घण्टयाबद्धचामरसहित ॥ ९ ॥ कण्ठदेशावलंबयेतिसुपाठ । देशेऽवलंबयेतिपाठे अवलबतइत्यवलवा । तयेत्यर्थ ॥ १० ॥ अञ्जनाचलसकाश भागविशेषे । काञ्चनाचलसकाश । तथैव त रावणनिरीक्षितपुरुष ॥११॥ अभिभियतोयन्त्रस्य ॥ १६ ॥ कुक्षित कुक्षौ ॥ १८ ॥ पितामहा पितृगणस्था ॥ १९ ॥ कक्षलोमानियानिवैइतिपाठे लोमशब्दस्याकारान्तपुंल्लिङ्गत्वमार्ष ॥ २० ॥ अस्थिभूता सन्ति ॥ २१ ॥ कृकाटिकाया गलमध्यगतोन्नतास्थि । 'वपुर्घाटाकृकाटिका' इत्यमर । स' या तदभिमानिनीदेवता । चशब्दात् जलवाहा' जलधरा घना । विशेष्यं कृकाटिकायामेव । बाहू तत्स्था ॥ २२ ॥

[ पा० ] १ झ. ठ. रावणोलोकरावण. २ झ. ट. दृश्यतेतत्रपुरुष . ३ झ ठ. दृश्यतेभीपणाकारोयुगान्तानिलसनिभ.. ४ झ. ठ दृष्ट्वास्थितंमध्येमहाबल. ५ झ ठ. सगर्जन्विविधै ६ झ. ठ महोरस. ७ झ ठ सिहास्यकैलास. ८ झ ठ. रक्तताल्वकराबुज ९ झ. ठ. सघण्टाबद्ध १० झ ठ किङ्किणीजालनिस्वनं ११ झ ठ कण्ठदेशेऽवलंबया १२ झ. ठ. अब्रवीच्च. १३ झ. ठ. प्राहरद्राक्षसपति शूलशक्त्यृष्टिपट्टिशै . १४ झ ट. सुमेरुरिवनागेन्द्रै १५ झ ठ राक्षस. १६ झ. ठ भयंकर · १७ झ. ठ. ग्रहमालाइवाकुला १८ झ ठ दन्तान्सदशात शब्दोयन्त्रस्येवाभिभियत . १९ झ. ठ हेतुकौ । ऊरूह्याश्रित्य. २० झ. ठ. मरुनोबस्तिपार्श्वयो २१ झ ठ. कुक्षित स्थिता . २२ झ ठ पार्श्वादिषुदिश २३ इदमर्ध झ ठ. पाठयोर्दृश्यते. २४ झ. ठ. सुवर्णवरदानानिकक्षलोमानुगानिच. २५ झ ठ पाणिर्वज्रोऽभवत्तस्य. २६ झ. ठ. कृकाटिकायासंध्याच जलवाहाश्चयेघना . २७ झ. ठ विधाताचतथा विद्याधरादय . । शेषश्चवासुकिश्चैवविशालाक्षइरावत .

ऐरावतो विशालाक्षः शेषो वासुकिरेव च ॥ कम्बलाश्वतरौ नागौ कर्कोटकधनंजयौ ॥ २३ ॥
स च घोरविषो नागस्त[2]क्षकश्चोपतक्षकः ॥ करजा[3]नाश्रितास्तस्य विषवीर्यं मुमुक्षवः ॥ २४ ॥
अग्निरास्यमभूत्तस्य स्कन्धौ रुद्रैरधिष्ठितौ ॥ [4]दन्तान्मासा दंष्ट्रयोश्च उभयोर्ऋतवः स्थिताः ॥
नासे [5]कुहूरमावास्या तच्छिद्रेषु च वायवः ॥ २५ ॥
ग्रीवा तस्याभवद्देवी [6]वाणी चापि सरस्वती ॥ नासत्यौ श्रवणे चोभौ[1] नेत्रे च शशिभास्करौ ॥२६॥
वेदाङ्गानि च यज्ञाश्च [7]नानारूपाणि यानि च ॥ सुवृत्तानि च वाक्यानि तेज[8]स्सिद्धिस्तपांसि च ॥
एतानि नररूपस्य तस्य [9]देहं श्रितानि वै ॥ २७ ॥
तेन [10]मुष्टिप्रहारेण स्वल्पमात्रेण लीलया ॥ पाणिना ताडितं रक्षो निपपात महीतले ॥ २८ ॥
पतितं राक्षसं ज्ञात्वा विद्राव्य च निशाचरान् ॥ ऋग्वेदप्रतिमः सोथ पद्ममालाविभूषितः ॥
प्रविवेश च पातालं [11]गच्छत्पर्वतसन्निभः ॥ २९ ॥
उत्थाय च दशग्रीव आहूय सचिवान्स्वयम् ॥ क्व गतः सहसा ब्रूत प्रहस्तशुकसारणाः ॥ ३० ॥
एवमुक्ता रावणेन [12]राक्षसास्तमथाब्रुवन् ॥ प्रविष्टः स नरोत्रैव देवदानवदर्पहा ॥ ३१ ॥
[13]अथासिं गृह्य वेगेन गरुत्मानिव पन्नगम् ॥ शीघ्रं स तु बिलद्वारं प्रविवेश[14] च दुर्मतिः ॥ ३२ ॥
प्रवि[15]श्य च स तद्द्वारं रावणो वरनिर्भयः ॥ [16]अपश्यच्च नरांस्तत्र नीलाञ्जनचयोपमान् ॥ ३३ ॥
केयूरधारिणः शूरान्रक्तमाल्यानुलेपनान् ॥ [17]अङ्गुलीयकहाराद्यैर्भूषणैश्च विभूषितान् ॥ ३४ ॥
दृश्यन्ते तत्र नृत्यन्त्यस्तिस्रः कोट्यो महात्मनाम् ॥ नि[18]त्योत्सवाः शान्तभया विमलाः पावकप्रभाः ॥३५
क्री[19]डतः प्रेक्षते तान्वै राक्षसो भीमविक्रमः ॥ द्वारस्थो [20]रावणस्तेषां तासु कोटीषु निर्भयः ॥ ३६ ॥
यथा दृष्टः स तु नरस्तु[21]ल्यांस्तांस्तस्य सर्वशः ॥ एकवर्णास्त्वेकबलानेकरूपान्महौजसः ॥ ३७ ॥
चतुर्भुजान्महोत्साहांस्तत्रापश्यत्स[22] रावणः ॥ तान्दृष्ट्वाऽथ दशग्रीव ऊर्ध्वरोमा बभूव ह ॥ ३८ ॥
स्वयंभुवा दत्तवरस्ततः शीघ्रं विनिर्ययौ ॥ ३९ ॥
अथापश्यत्परं तत्र [23]भुजङ्गशयने स्थितम् ॥ पाण्डुरेण [24]महार्हेण कौस्तुभेन विराजितम् ॥ ४० ॥
शेते स पुरुषस्तत्र पावकेनावकुण्ठितः ॥ दिव्यस्रगनुलेपी च दिव्याभरणभूषितः ॥ ४१ ॥
दिव्याम्बरधरा साध्वी त्रैलोक्यस्य विभूषणम् ॥ वालव्यजनहस्ता च देवी तत्र व्यवस्थिता ॥

---

शेषश्चेत्यादीनि सर्पनामानि । कंबलाश्वतरावितिउभावित्यत्रोत्तरत्राप्यन्वेति ॥ २३ ॥ सोपतक्षक उपतक्षकसहित । तस्य कपिलस्य ॥ २४ ॥ अग्नि आस्यं । कुहू नष्टेन्दुकला । स्थिताश्छिद्रेषुवायव इतिसुपठ ॥ २५ ॥ नासत्यौ अश्विनौ ॥ २६ ॥ लीलया लब्धमात्रेण स्पृष्टमात्रेण । वज्रप्रहारेण तत्सदृशेनपाणिना ॥ २८ ॥ ऋग्वेदप्रतिम वेदेषुऋग्वेद प्रधानं तद्वद्देवप्रधान । प्रतिमास्थानीयइतिवा । स कपिल ॥ २९ ॥ सगृह्य तद्वचोगृहीत्वा श्रुत्वेतियावत् । पन्नगप्रतिगरुत्मानिव ॥ ३२ ॥ पश्यत् अपश्यत् ॥ ३३ ॥ महात्मना वायूना । 'त्रिकोटिरूप पवनश्चमेसुत ' इत्याचार्योक्ति ॥ ३५ ॥ पश्यते अपश्यत् ॥ ३६ ॥ ऊर्ध्वरोमा त्रासोर्ध्वाङ्कुरितरोमाञ्च ॥ ३८ ॥ पुरुषं कपिलरूपिणं ॥ ४० ॥

[ पा० ] १ झ. ठ. चोभौ २ झ. ठ. स्तक्षकस्सोपतक्षक ३ झ. ठ नाश्रिताश्चैव. ४ झ. ठ पक्षमासर्तवश्चैवदंष्ट्रयोरुभयो स्थिता. ५ झ ठ रमावास्याछिद्रेषुवायव स्थिता. ६ झ. ट वीणाचापि. ७ झ. ठ तारारूपाणियानिच ८ झ. ठ. तेजासिचतपासिच. ९ झ ठ. देहाश्रितानिवै १० झ ठ वज्रप्रहारेणलब्धमात्रेणलीलया ११ झ ठ. निर्जपर्वतसंनिभ. १२ झ. ठ राक्षसास्तेतदाऽब्रुवन् १३ झ. ठ अथसंगृह्यवेगेन. १४ झ ठ सप्रविश्यचदुर्मति १५ झ. ठ. प्रविचेशचतद्वार. १६ झ ठ संप्रविश्यचपश्यद्वैनीलाञ्जन १७ झ ठ. वरहाटकरत्नाद्यैर्विविधैश्चवि १८ झ. ठ. नृत्योत्सवा वीतभया. १९ झ ठ नृत्यन्त्य पश्यतेतास्तुरावणोभीमविक्रम २० झ. ठ रावणस्तत्र २१ झ. ठ. स्तुल्यास्तानपिसर्वश । एकवर्णानेकवेषान्. २२ झ ठ. त्सराक्षस. । तास्तुदृष्ट्वा. २३ झ ठ. पुरुषंशयने. २४ झ. ठ. महार्हेणशयनासनवेश्मना.

[1]लक्ष्मीर्बर्हिः सपद्मा वै भ्राजन्ती लोकसुन्दरी ॥ ४२ ॥
[2]प्रहृष्टः स तु लङ्केशो दृष्ट्वा तां चारुहासिनीम् ॥ जिघृक्षुः स तदा साध्वीं सिं[3]हासनमुपाश्रिताम् ४३
वि[4]ना तु सचिवैस्तत्र रावणो दुर्मतिस्तदा ॥ ह[5]स्तैर्ग्रहीतुं तामैच्छन्मन्मथेन वशीकृतः ॥
सुप्तमाशीविषं यद्वद्रावणः कालचोदितः ॥ ४४ ॥
अथ सुप्तो महाबाहुः पावकेनावकुण्ठितः ॥ ग्रहीतुकामं तं ज्ञात्वा व्यपविध्य पटं तदा ॥
जहासोच्चैर्भृशं देवस्तं दृष्ट्वा राक्षसाधिपम् ॥ ४५ ॥
ते[6]जसा तस्य संदीप्तो रावणो लोकरावणः ॥ घ्राणवातेन दीर्घेण तस्मिन्नाम रसातले ॥
कृत्तमूलो यथा शाखी निपपात महीतले ॥ ४६ ॥
पतितं राक्षसं ज्ञात्वा वचनं चेदमब्रवीत् ॥ उत्तिष्ठ राक्षसश्रेष्ठ मृत्युस्ते नाद्य विद्यते ॥ ४७ ॥
प्रजापतिवरो र[7]क्ष्यो येन जीवसि रावण ॥ गच्छ रावण वि[8]स्रब्धं नात्र वै मरणं तव ॥ ४८ ॥
लब्ध[9]संज्ञो मुहूर्तेन राक्षसो भीमविक्रमः ॥ तं तु दृष्ट्वा महात्मानं रावणो भयमाप सः ॥ ४९ ॥
एवमुक्तस्तदोत्थाय रावणो देवकण्टकः ॥ रोमहर्षणमापन्नो ह्यब्रवीत्तं म[10]हामुनिम् ॥ ५० ॥
को [11]भवाञ्छौर्यसंपन्नो युगान्तानलसन्निभः ॥ [12]ब्रूहि त्वं देवदेवो वा सर्वदेहेषु सुस्थितः ॥ ५१ ॥
[13]एवमुक्तः स तेनाथ रावणेन दुरात्मना ॥ प्रत्युवाच हसन्देवो मेघगम्भीरया गिरा ॥
किं[14] त्वं मया दशग्रीव वध्योसि [15]नचिरादिह ॥ ५२ ॥
एवमुक्तो दशग्रीवः प्राञ्जलिर्वाक्यमब्रवीत् ॥ प्रजापतेस्तु वचनान्नाहं [16]मृत्युवशं गतः ॥ ५३ ॥
स न जातो जनिष्यो वा म[17]त्तुल्यो वा सुरेष्वपि ॥ प्रजापतिवरं यो हि लङ्घयेद्वीर्यमाश्रितः ॥ ५४ ॥
न तत्र परिहारोस्ति प्रयत्नश्चापि [18]दुर्लभः ॥ त्रैलोक्ये तं न पश्यामि [19]यस्तत्कुर्याद्वरं वृथा ॥ ५५ ॥
[20]अमरो वा सुरश्रेष्ठ तेन मां नाविशद्भयम् ॥ अथापि च भवेन्मृत्यु[21]स्त्वत्तो मे नान्यतः प्रभो ॥५६॥
यशस्यं श्लाघनीयं च [22]त्वत्तो मे मरणं त्विदम् ॥ ५७ ॥
[23]अथापश्यत्तस्य गात्रे रावणो भीमविक्रमः ॥ देवदे[24]वस्य सकलं त्रैलोक्यं सचराचरम् ॥ ५८ ॥
[25]आदित्या वसवो रुद्रा मरुतोथाश्विनावपि ॥ सि[26]द्धाश्च पितरश्चैव यमो वैश्रवणस्तथा ॥
समुद्रा गिरयो नद्यो विद्या वेदास्त्रयोऽग्नयः ॥ ५९ ॥
ग्रहास्तारागणा व्योम सा[27]ध्या गन्धर्वचारणाः ॥ महर्षयो वेदविदो गरुडोथ भुजङ्गमाः ॥ ६० ॥
ये[28] चान्ये संस्थिता देवा दैत्यदानवराक्षसाः ॥ गात्रेषु शयनस्थस्य दृश्यन्ते सूक्ष्ममूर्तयः ॥ ६१ ॥
आह रामोथ धर्मात्मा ह्यगस्त्यं मुनिसत्तमम् ॥ द्वीपस्थः पुरुषः कोसौ तिस्रः को[29]ट्यश्च ताश्च काः ॥६२॥

रक्षेन्द्रः राक्षसेन्द्र ॥ ४३ ॥ रक्ष्य मया ॥ ४८ ॥ मम मया रामरूपेण ॥ ५२ ॥

[ पा० ] १ झ ठ. लक्ष्मीर्देवीसपद्मावैभ्राजतेलोक. २ झ. ठ प्रविष्टस्सतुरक्षेन्द्रो. ३ झ. ठ. सिंहासनसमास्थिता. ४ झ. ठ विनापि. ५ झ. ठ. हस्तेग्रहीतुमन्विच्छन्. ६ झ ठ तेजसासहसादीप्तो ७ झ ठ. रक्ष्यस्तेनजीवसिराक्षस ८ झ. ठ. विस्रब्धोनाधुनामरणं. ९ अस्यश्लोकस्यप्रतिनिधितया लब्धसञ्ज्ञोमुहूर्तेनरावणोभयमाविशदित्यर्धं झ ठ. पाठयोर्दृश्यते. १० झ. ठ. महाद्युतिं ११ झ. ठ. भवान्वीर्यसंपन्नो १२ झ. ठ ब्रूहित्वंकोभवान्देवकुतोभूत्वाव्यवस्थित १३ झ. ठ. एवमुक्तस्ततोदेवो. १४ झ. ठ किंते १५ झ. ठ. नचिरान्मम, १६ झ. ठ. मृत्युपथंगत.. १७ झ. ठ. ममतुल्य सुरेष्वपि १८ झ. ठ. दुर्बलः १९ झ. ठ. योमेकुर्याद्वरं २० झ. ठ अमरोहं २१ झ. ठ. स्त्वद्धस्तान्नान्यत २२ झ ठ स्त्वद्धस्तान्मरणं मम. २३ झ. ठ. अथास्यगात्रेसंपश्यद्रावणो. २४ झ ठ तस्यदेवस्य. २५ झ ठ. आदित्यामरुत:साध्यावसवोथाश्विनावपि. २६ झ. ठ. रुद्राश्चपितरश्चैव. २७ झ. ठ. सिद्धागन्धर्व. २८ झ. ठ. येचान्येदेवतासंघा संस्थितादैत्यराक्षसा.. २९ झ. ठ. कोट्यस्तुकाश्चताः.

शयानः पुरुषः कश्चिद्दैत्यदानवदर्पहा ॥ रामस्य वचनं श्रुत्वा ह्यगस्त्यो वाक्यमब्रवीत् ॥ ६३ ॥
श्रूयतामभिधास्यामि देवदेवः सनातनः ॥ भगवान्कपिलो राम द्वीपस्थो नर उच्यते ॥ ६४ ॥
स वै नारायणो देवः शङ्खचक्रगदाधरः ॥ विधाता चैव भूतानां संहर्ता च तथैव च ॥
अनादिरच्युतो विष्णुः प्रभवः शाश्वतोऽव्ययः ॥ ६५ ॥
ये तु नृत्यन्ति वै तत्र सुरास्ते तस्य धीमतः ॥ तुल्यतेजःप्रतापास्ते कपिलस्य नरस्य वै ॥ ६६ ॥
नातिक्रुद्धेन दृष्टस्तु राक्षसः पापनिश्चयः ॥ न बभूव ततो राम भस्मसाद्रावणः प्रभो ॥ ६७ ॥
भिन्नगात्रो नगप्रख्यो रावणः पतितो भुवि ॥ वाक्छरैस्तं बिभेदाशु रहस्यं पिशुनो यथा ॥ ६८ ॥
अथ दीर्घेण कालेन लब्धसंज्ञः स राक्षसः ॥ आजगाम हृतौजास्तु यत्र ते सचिवाः स्थिताः ॥
तैरेव सहितो लङ्कां जगामाशु दशाननः ॥ ६९ ॥
श्रुत्वैतद्वचनं सर्वमाश्चर्यमिति राघवः ॥ पूज्यमानाः स्थितास्तत्र ये रामस्य समीपतः ॥
आश्चर्यमिति तत्प्राहुर्वानरा राक्षसैः सह ॥ ७० ॥
विभीषणस्तु रामस्य पार्श्वस्थो वाक्यमब्रवीत् ॥ आश्चर्यं स्मारितोस्म्यद्य यत्तद्वृत्तं पुरातनम् ॥ ७१ ॥
अथागस्त्योऽब्रवीत्सर्वमेतद्राम श्रुतं त्वया ॥ हृष्टाः सभाजिताश्चापि राम यास्यामहे वयम् ॥ ७२ ॥
तस्य तद्वचनं श्रुत्वा रामो रमयतां वरः ॥ ७३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे पञ्चमः सर्गः ॥ ५ ॥

---

## चतुर्विंशः सर्गः ॥ २४ ॥

दिग्जयार्थंगतेनरावणेन तत्रतत्ररमणीयतरतरुणीगणस्यबलादपहरणेन पुष्पकारोपणे साध्वीभिस्ताभिस्तंप्रति नारीहेतुकवधप्राप्तिकारकशापदानम् ॥ १ ॥ ततस्ताभि.सहैवलङ्कांप्रविष्टेरावणे शूर्पणखया तंप्रति स्वरमणमारणरूपदोषाविष्करणेन सगर्हणंरोदनम् ॥ २ ॥ रावणेनतांप्रति तन्मारणस्यप्रामादिकत्वोक्त्यापरिसान्त्वनपूर्वकं दानमानादिभिस्तत्परितोषणप्रतिज्ञानेन तदर्थं चतुर्दशसहस्रसख्याकराक्षसैर्दूषणेन शूर्पणखयाचसह दण्डकारण्यंप्रति खरस्यप्रेषणम् ॥ ३ ॥

निवर्तमानः संहृष्टो रावणः सुदुरात्मवान् ॥ जह्रे पथि नरेन्द्रर्षिदेवगन्धर्वकन्यकाः ॥ १ ॥
दर्शनीयां हि रक्षः स कन्यां स्त्रीं वाऽथ पश्यति ॥ हत्वा बन्धुजनं तस्या विमाने तां रुरोध ह ॥ २ ॥
एवं पन्नगकन्याश्च राक्षसासुरमानुषीः ॥ यक्षदानवकन्याश्च विमाने सोध्यरोपयत् ॥ ३ ॥
ताश्च सर्वाः समं दुःखान्मुमुचुर्बाष्पजं जलम् ॥ तुल्यमग्न्यर्चिषां तत्र शोकाग्निभयसंभवम् ॥ ४ ॥
ताभिः सर्वानवद्याभिर्नदीभिरिव सागरः ॥ आपूरितं विमानं तद्भयशोकाशिवाश्रुभिः ॥ ५ ॥

---

रक्षः स इति संबन्धः । कन्या अनूढा । स्त्री सभर्तृका | ॥ २—४ ॥ भयशोकाभ्यां अशिवमश्रु यासां ताभिः

---

खरा वायव ॥ ' प्राण खर ' इति—वायु प्राणशरीरग । ' खेविष्णुरमयत्येनंजीवतस्मात्खर स्मृत ' इतिच्छान्दोग्योपनिषद्भाष्योक्ते. ॥ ६६ ॥ भस्मसात् तदधीन ॥ ६८ ॥ इतिपञ्चसर्गीप्रक्षिप्तेतिबहवः । बहुपुस्तकसंपुटीषुदृश्यतेसेतिव्याख्यातेतिमन्तव्य ॥ इतिसत्यधर्मतीर्थीयेप्रक्षिप्तसर्गव्याख्यानेपञ्चमस्सर्ग ॥ ५ ॥

**स०** समं मिलिताः । शोकाग्निभयसभव काकनयननयेनाग्निपदमुभयान्वयि ॥ शोकाग्नि.स्वजनहननप्रयुक्तशोकवह्नि.। भयाग्नि.कदाकिंकरिष्यतिदुरात्मेतिभयाग्निश्च । तत्सभवंसमानाधिकरण बाष्पजंजलं । अग्न्यर्चिषा अग्न्यर्चिर्भि । **शि०** बाष्पजंजल समं

[पा०] १ झ. ठ कोसौदैत्य. २ झ. ठ देवदेवसनातन ३ झ. ठ. खरास्ते. ४ झ ठ. तुल्यतेज प्रभावास्ते. ५ झ. ठ. नासौक्रुद्धेन. ६ झ. ठ. तदातेनभस्मसाद्रामरावण . ७ झ. ठ. खिन्नगात्रो. ८ झ. ठ महातेजायत्र.

नागगन्धर्वकन्याश्च महर्षितनयाश्च याः ॥ दैत्यदानवकन्याश्च विमाने शतशोऽरुदन् ॥ ६ ॥
दीर्घकेश्यः सुचार्वङ्ग्यः पूर्णचन्द्रनिभाननाः ॥ पीनस्तन्यस्तथा वज्रवेदिमध्यसमप्रभाः ॥ ७ ॥
रथकूबरसंकाशैः श्रोणिदेशैर्मनोहराः ॥ स्त्रियः सुराङ्गनाप्रख्या निष्टप्तकनकप्रभाः ॥
शोकदुःखभयत्रस्ता विह्वलाश्च सुमध्यमाः ॥ ८ ॥
तासां निश्वासवातेन सर्वतः संप्रदीपितम् ॥ अग्निहोत्रमिवाभाति सन्निरुद्धाग्नि पुष्पकम् ॥ ९ ॥
दशग्रीववशं प्राप्तास्तास्तु शोकाकुलाः स्त्रियः ॥ दीनवक्त्रेक्षणाः श्यामा मृग्यः सिंहवशा इव ॥१०॥
काचिच्चिन्तयती तत्र किं नु मां भक्षयिष्यति ॥ काचिद्दध्यौ सुदुःखार्ता अपि मां मारयेदयम् ॥११॥
इति मातृपितॄन्स्मृत्वा भर्तॄन्भ्रातॄंस्तथैव च ॥ दुःखशोकसमाविष्टा विलेपुः सहिताः स्त्रियः ॥ १२ ॥
कथं नु खलु मे पुत्रो भविष्यति मया विना ॥ कथं माता कथं भ्राता निमग्नाः शोकसागरे ॥१३॥
हा कथं नु करिष्यामि भर्तुस्तस्मादहं विना ॥ मृत्यो प्रसादयामि त्वां नय मां दुःखभागिनीम् ॥१४॥
किंनु तद्दुष्कृतं कर्म पुरा देहान्तरे कृतम् ॥ एवं स्म दुःखिताः सर्वाः पतिताः शोकसागरे ॥ १५ ॥
न खल्विदानीं पश्यामो दुःखस्यास्यान्तमात्मनः ॥ अहो धिङ्मानुषं लोकं नास्ति खल्वधमः परः ॥१६॥
यद्दुर्बला बलवता भर्तारो रावणेन नः ॥ सूर्येणोदयता काले नक्षत्राणीव नाशिताः ॥ १७ ॥
अहो सुबलवद्रक्षो वधोपायेषु युज्यते ॥ अहो दुर्वृत्तमास्थाय नात्मानं वै जुगुप्सते ॥ १८ ॥
सर्वथा सदृशस्तावद्विक्रमोस्य दुरात्मनः ॥ इदं त्वसदृशं कर्म परदाराभिमर्शनम् ॥ १९ ॥
यस्मादेष परक्यासु रमते राक्षसाधमः ॥ तस्माद्वै स्त्रीकृतेनैव प्राप्स्यते दुर्मतिर्वधम् ॥ २० ॥
सतीभिर्वरनारीभिरेवं वाक्येऽभ्युदीरिते ॥ नेदुर्दुन्दुभयः खस्थाः पुष्पवृष्टिः पपात च ॥ २१ ॥
शप्तः स्त्रीभिः स तु समं हतौजा इव निष्प्रभः ॥ पतिव्रताभिः साध्वीभिर्बभूव विमना इव ॥२२॥
एवं विलपितं तासां शृण्वन्राक्षसपुङ्गवः ॥ प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥ २३ ॥
एतस्मिन्नन्तरे घोरा राक्षसी कामरूपिणी ॥ सहसा पतिता भूमौ भगिनी रावणस्वसा ॥ २४ ॥
तां स्वसारं समुत्थाप्य रावणः परिसान्त्वयन् ॥ अब्रवीत्किमिदं भद्रे वक्तुकामाऽसि मे द्रुतम् ॥२५॥

॥५—८॥ सन्निरुद्धा अग्नयो यस्मिंस्तादृश अग्निहोत्र | अग्निकुण्डमिव पुष्पकं भाति ॥ ९—१९॥ परक्यासु

एककालावच्छेदेनमुमुचु ॥ ४ ॥ **ति०** वज्रयुतावेदिर्वज्रवेदि । तन्मध्यसमप्रभा मध्यभागेइतिभाव । यद्वा वज्रतुल्यवर्णावेदि पीतवर्णाभ्रमरिका । अतिसूक्ष्मकटिपट्टदविशेष तन्मध्येत्यादिरर्थं ॥ **स०** वज्रवेदि. वज्रयुतावेदि अग्निवेदिर्वा तत्समप्रभा । वज्रात्मिकावेदिरङ्गुलिमुद्रा । मध्येतत्समप्रभा अतिसूक्ष्मकटितटय । ‘ वेदिरङ्गुलिमुद्रायां ’ इतिविश्व ॥ **शि०** मध्ये स्तनयोरन्तरालेवज्रवेदिसमाप्रभायासाता ॥ ७ ॥ **स०** शोकोबहिर्दश्य । दु ख आन्तरच । तेचतेभये घोरेच । शोकदु खभयाभ्या त्रस्ता । ‘ भयप्रतिभयेघोरे ’ इतिविश्व ॥ ८ ॥ सर्वत सर्व । सप्रदीपित तद्वदभूत् ॥ ९ ॥ **स०** श्यामा षोडशवर्षवयस्स ॥ १० ॥ चिन्तयती चिन्तयन्ती । बभूवेतिशेष ॥ ११ ॥ **स०** पुत्र सुत । यद्वा अपुत्र पुत्रभिन्न पुत्रसदृशोदेवर । मयाविनाभविष्यतिजीविष्यति । कथनु । एवव्याख्यानेकन्येत्युक्ति श्यामाइत्युक्तिश्चसमञ्जसीभविष्यत । रावणस्याप्रसूतवनितासमानयनेनपरीक्षकतास्फुटीभविष्यति ॥ १३ ॥ **ति०** तस्माद्भर्तुर्विनाकृताऽहं कथनुकरिष्यामि एतदानुकूल्यमितिशेष ॥ १४ ॥ **स०** देहान्तरेकिनुकर्मकृतं । तद्दुष्कृतं तस्यरावणस्यदुष्कृतं हरणादिकप्राप्त ॥ १५ ॥ **ति०** नास्त्यधम पर । मानुषाल्लोकादितिशेष ॥ १६ ॥ तत्रैवहेतु —यद्दुर्बलाइति ॥ १७ ॥ **ति०** वधोपायेषु वधसपादकेषूपायेषुशस्त्रघातादिषु ॥ **स०** वधोपायेषु हननहेतुषु । रज्यते आसज्जते । जुगुप्सते निन्दति ॥ १८ ॥ अस्यविक्रम सर्वथासदृशोयोग्य । तपस्सपादितभगवत्प्रसादस्येतिशेष ॥ **शि०** अस्यदुरात्मनोविक्रम सदृश कुलोचित । परदाराभिमर्शनंकर्मतु असदृशं ॥ १९ ॥ **स०** वचनानन्तरीभवनहेतु —सतीभिरिति ॥ २१ ॥ **स०** भद्रइतिसबोधनेन नबोधस्तत्पतिर्मृतइत्यस्येतिज्ञायते ॥ २५ ॥

[ पा० ] १ ग. घ. ज. भर्तारदैवतंविना. २ झ. ठ. रज्यते.

सा बाष्पपरिरुद्धाक्षी रक्ताक्षी वाक्यमब्रवीत् ॥ कृतास्मि विधवा राजंस्त्वया बलवता बलात् ॥२६॥
एते राजंस्त्वया वीरा दैत्या विनिहता रणे ॥ कालकेया इति ख्याताः सहस्राणि चतुर्दश ॥ २७ ॥
प्राणेभ्योपि गरीयान्मे तत्र भर्ता महाबलः ॥ सोपि त्वया हतस्तात रिपुणा भ्रातृगृध्नुना ॥ २८ ॥
त्वयाऽस्मि निहता राजन्स्वयमेव हि बन्धुना ॥ राजन्वैधव्यशब्दं च भोक्ष्यामि त्वत्कृते ह्यहम् ॥२९॥
ननु नाम त्वया रक्ष्यो जामाता समरेष्वपि ॥ स त्वया निहतो युद्धे स्वयमेव न लज्जसे ॥ ३० ॥
एवमुक्तो दशग्रीवो भगिन्या क्रोशमानया ॥ अब्रवीत्सान्त्वयित्वा तां सामपूर्वमिदं वचः ॥ ३१ ॥
अलं वत्से रुदित्वा ते न भेतव्यं च सर्वशः ॥ दानमानप्रसादैस्त्वां तोषयिष्यामि यत्नतः ॥ ३२ ॥
युद्धप्रमत्तो व्याक्षिप्तो जयकाङ्क्षी क्षिपञ्छरान् ॥ नावगच्छामि युद्धेषु स्वान्परान्वाप्यहं शुभे ॥३३॥
जामातरं न जाने स्म प्रहरन्युद्धदुर्मदः ॥ तेनासौ निहतः संख्ये मया भर्ता तव स्वसः ॥ ३४ ॥
अस्मिन्काले तु यत्प्राप्तं तत्करिष्यामि ते हितम् ॥ भ्रातुरैश्वर्ययुक्तस्य खरस्य वस पार्श्वतः ॥ ३५ ॥
चतुर्दशानां भ्राता ते सहस्राणां भविष्यति ॥ प्रभुः प्रयाणे दाने च राक्षसानां महाबलः ॥ ३६ ॥
तत्र मातृष्वसेयस्ते भ्राताऽयं वै खरः प्रभुः ॥ भविष्यति तवादेशं सदा कुर्वन्निशाचरः ॥ ३७ ॥
शीघ्रं गच्छत्वयं वीरो दण्डकान्परिरक्षितुम् ॥ दूषणोस्य बलाध्यक्षो भविष्यति महाबलः ॥ ३८ ॥
[ स हि शप्तो वनोद्देशः क्रुद्धेनोशनसा पुरा ॥ राक्षसानामधीवासो भविष्यति महात्मनाम् ] ॥३९॥
तत्र ते वचनं शूरः करिष्यति सदा खरः ॥ रक्षसां कामरूपाणां प्रभुरेष भविष्यति ॥ ४० ॥
एवमुक्त्वा दशग्रीवः सैन्यमस्यादिदेश ह ॥ चतुर्दश सहस्राणि रक्षसां वीर्यशालिनाम् ॥ ४१ ॥
स तैः परिवृतः सर्वै राक्षसैर्घोरदर्शनैः ॥ अगच्छत खरः शीघ्रं दण्डकानकुतोभयः ॥ ४२ ॥
स तत्र कारयामास राज्यं निहतकण्टकम् ॥ सा च शूर्पणखा तत्र न्यवसद्दण्डकावने ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

---

परकीयासु ॥ २०—२८ ॥ यतो मे भर्ता हत. अतएव साह स्वयं स्वबन्धुनैव त्वया निहतास्मि ॥ २९ ॥ नन्विति पृथक् पद । जामाता नाम समरेष्वपि रक्ष्यो ननु नेति काकुः । रक्ष्य एव किलेत्यर्थः ॥ ३०—३४ ॥ अस्मिन्काले तु यत्प्राप्त मत्कर्तव्यत्वेनेति शेषः । मातृष्वसेयस्य खरस्य भ्रातृत्वात् भ्रातुरित्युच्यते । पार्श्वतो वनसमीपे वसेत्यर्थ. । मम तु राज्यपरवशस्य न त्वत्समानने अवकाश इति भावः ॥ ३५ ॥ चतुर्दशानां सहस्राणां प्रयाणे प्रेषणे दाने अन्नपानवस्त्रादिदाने प्रभुस्ते भ्रातेत्यन्वयः । भविष्यतीति । तवादेश त्वद्वचः सदा कुर्वन्भविष्यति ॥ ३६—४३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

---

**स०** शोकातिशयाद्राजन्नितिद्विरुक्ति । ‘ परिहासप्रलापादिष्वनर्थावागपीष्यते ’ इत्यादे ॥ २७ ॥ **स०** गन्धोऽहङ्कारोस्यास्तीतिसतथा । भ्रातृषुगन्धीसचासौगन्धीतिवा । बन्धुना तदपदेशेन ॥ २८ ॥ **ति०** नभेतव्यचसर्वश बान्धवादिभ्योपिमाभैषी । स्वैरचरेत्यर्थइतितीर्थ ॥ ३२ ॥ **स०** व्याक्षिप्त चलच्चित्त ॥ ३३ ॥ इतिचतुर्विंश सर्ग ॥ २४ ॥

[ पा० ] १ ख. ग. घ. ख्यातामहाबलपराक्रमा.. २ अयश्लोक घ. च. छ ज. पाठेषुदृश्यते.

## पञ्चविंशः सर्गः ॥ २५ ॥

दिग्विजयानन्तरंलङ्कामाविशतारावणेन प्रथमनिकुंभिलाप्रवेशः ॥१॥ तत्रयज्ञदीक्षितमिन्द्रजितंप्रति यज्ञफलप्रश्न ॥२॥ याजकेनशुक्रेण तत्प्रतितस्यमौनित्वोक्त्या यज्ञफलनिवेदनम् ॥ ३ ॥ रावणेनेन्द्रजितप्रति शत्रुभूतेन्द्राद्याराधनस्यानौचित्योक्त्या तन्निवर्तनपूर्वक तेनसहस्वभवनमेत्य पुष्पकात्स्वापहृतपरतरुणीगणावतारणम् ॥ ४ ॥ तदसहिष्णुनाविभीषणेनतंप्रति निजभगिन्या कुभीनस्या मधुनामकदैत्यकृतापहरणनिवेदनपूर्वक तस्यपराङ्गनाहरणरूपदुष्कर्मफलत्वकथनम् ॥ ५ ॥ रावणेनमधुवधपूर्वकसुरलोकजयप्रतिज्ञानेन कुभकर्णादिभि सहमधुपुरप्रतिगमन ॥ ६ ॥ तथाकुभीनसीप्रार्थनया मधुवधान्निवृत्य तेनापिसहकैलासगमनम् ॥ ७ ॥

स तु दत्त्वा दशग्रीवो वनं घोरं खरस्य तत् ॥ भगिनीं च समाश्वास्य हृष्टः स्वस्थतरोऽभवत् ॥ १ ॥
ततो निकुम्भिला नाम लङ्कोपवनमुत्तमम् ॥ तद्राक्षसेन्द्रो बलवान्प्रविवेश सहानुगः ॥ २ ॥
ततो यूपशताकीर्णं सौम्यचैत्योपशोभितम् ॥ ददर्श विष्ठितं यज्ञं श्रिया संप्रज्वलन्निव ॥ ३ ॥
ततः कृष्णाजिनधरं कमण्डलुशिखाध्वजम् ॥ ददर्श स्वसुतं तत्र मेघनादं भयावहम् ॥ ४ ॥
तं समासाद्य लङ्केशः परिष्वज्याथ बाहुभिः ॥ अब्रवीत्किमिदं वत्स वर्तसे ब्रूहि तत्त्वतः ॥ ५ ॥
उशना त्वब्रवीत्तत्र यज्ञसंपत्समृद्धये ॥ रावणं राक्षसश्रेष्ठं द्विजश्रेष्ठो महातपाः ॥ ६ ॥
अहमाख्यामि ते राजञ्छ्रूयतां सर्वमेव तत् ॥ यज्ञास्ते सप्त पुत्रेण प्राप्ताः[1] सुबहुविस्तराः ॥ ७ ॥
अग्निष्टोमोऽश्वमेधश्च यज्ञो बहुसुवर्णकः ॥ राजसूयस्तथा यज्ञो गोमेधो वैष्णवस्तथा ॥ ८ ॥
माहेश्वरे प्रवृत्ते तु यज्ञे पुंभिः सुदुर्लभे ॥ वरांस्ते लब्धवान्पुत्रः साक्षात्पशुपतेरिह ॥ ९ ॥
कामगं स्यन्दनं दिव्यमन्तरिक्षचरं ध्रुवम् ॥ मायां च तामसीं नाम यया संपद्यते तमः ॥ १० ॥
एतया किल संग्रामे मायया राक्षसेश्वर ॥ प्रयुक्तया[2] गतिः शक्या न हि ज्ञातुं सुरासुरैः ॥ ११ ॥
अक्षयाविषुधी बाणैश्चापं चापि सुदुर्जयम् ॥ अस्त्रं[3] च बलवद्राजञ्शत्रुविध्वंसनं रणे ॥ १२ ॥
एतान्सर्वान्वरॉल्लब्ध्वा पुत्रस्तेऽयं दशानन ॥ अद्य यज्ञसमाप्तौ च त्वां दिदृक्षुः स्थितो ह्यहम्[4] ॥ १३ ॥
ततोऽब्रवीद्दशग्रीवो न शोभनमिदं कृतम् ॥ पूजिताः शत्रवो यस्माद्द्रव्यैरिन्द्रपुरोगमाः ॥ १४ ॥
एहीदानीं कृतं विद्धि सुकृतं तन्न संशयः ॥ आगच्छ सौम्य गच्छाम स्वमेव भवनं प्रति ॥ १५ ॥

निकुम्भिला नाम लङ्कायाः पश्चिमद्वारवर्ति काननं ॥२॥ चैत्यं देवायतनं। विष्ठितं प्रवृत्त ॥३॥ कमण्डलुः शिखा दण्डो ध्वजश्च यस्य स तथा। अनेन ब्रह्मचर्यं सूचित। न तु ब्रह्मचर्याश्रमः। अग्निष्टोमादियाजित्वात्वोपदेशात् ॥४--५॥ उशना गुरुः शुक्राचार्यः। प्रवर्तकत्वात् स्वयमब्रवीदिति भावः ॥ ६ ॥ यज्ञाः

ति० निकुभिला लङ्कापश्चिमद्वारदेशवर्तिकर्मसिद्धिहेतुभूतंकानन ॥ २ ॥ ति० कमण्डलु शिखाध्वजोदण्डश्चयस्यत । अर्शआद्यजन्तं । दण्डकमण्डलुयुक्तमित्यर्थ । स० कमण्डलु शिखा शिफा दण्डइतियावत् । कमण्डलुशिखे ध्वजे चिह्नेयस्यसतं । 'शिखाशिफाया' 'ध्वजचिह्ने' इतिविश्व ॥ ४ ॥ स० किमिदमुद्दिश्यवर्तसे वर्तयसीतिवा ॥ ५ ॥ स० उशनात्वब्रवीत् तस्यमानत्वेनमौनित्वात् । वागुत्सर्जनस्यसपत्समृद्धिविघातकत्वान्मौन ॥ ६ ॥ ति० पशुपते रुद्रात् । स० साक्षादितिदुर्वासआदिव्यावृत्ति । मूलरूपात् ॥ ९ ॥ स० कामगं भूमौकियत्पर्यन्तंगन्तव्यमितीच्छा तदनुसारिगमनं अन्तरिक्षचरचेतिदिव्यं । तामसींनाममायाच । अन्वर्थकनामेत्याह—ययासपद्यतेतमइति ॥ १० ॥ स० गति प्रयोक्तु ॥ ११ ॥ ति० पुत्रोऽहंचत्वादिदृक्षन्स्थित ॥ १३ ॥ ति० नशोभनकृतमित्यत्रहेतु —पूजिताइति । तपसैवब्रह्मादयोदेवास्तोषणीया नत्विन्द्रादिप्रीणनोपेतयागेनेतिभाव ॥ १४ ॥ स० यत्कृत तद्विसुकृतं । अतीतकार्येनेतिवक्तुमशक्यत्वात् । निकुंभिलावस्थानासमति सुसमतिश्चभवनगमनेइतिचोभयत्रदार्ढ्यसूचनार्थ एह्यागच्छेत्युक्ति । हेइन्द्रएहीत्यादिकंयत्कृतं तत्सुकृतमितिवा ॥ आ इहि त्यज । वीगतिप्रज-

[ पा० ] १ ङ. च. छ. झ. ञ. ट. प्राप्तास्तेबहु. २ ग. घ. च छ. ट प्रयुक्तस्य क. प्रयुद्धस्य. ३ ग. घ ज. अस्त्रंच बलवत्सौम्य. ख. अस्त्राणिविविधान्येवशत्रुविध्वंसनानिवै. ४ झ. ञ ट. दिदृक्षन्स्थितोह्यहं.

ततो गत्वा दशग्रीवः सपुत्रः सविभीषणः ॥ स्त्रियोवतारयामास सर्वास्ता बाष्पगद्गदाः ॥ १६ ॥
लक्षिण्यो रत्नभूताश्च देवदानवरक्षसाम् ॥ [ नार्यो भूषणसंपन्ना ज्वलन्त्यः स्वेन तेजसा ॥ १७ ॥
विभीषणस्तु ता नारीर्दृष्ट्वा शोकपरायणाः ॥ ] तस्य तासु मतिं ज्ञात्वा धर्मात्मा वाक्यमब्रवीत् ॥१८॥
ईदृशैस्त्वं समाचारैर्यशोर्थकुलनाशनैः ॥ धर्षणं ज्ञातिनां ज्ञात्वा स्वमतेन विचेष्टसे ॥ १९ ॥
ज्ञातींस्तान्धर्षयित्वेमास्त्वयाऽऽनीता वराङ्गनाः ॥ त्वामतिक्रम्य मधुना राजन्कुम्भीनसी हृता ॥२०॥
रावणस्त्वब्रवीद्वाक्यं नावगच्छामि किंन्विदम् ॥ कोयं यस्तु त्वयाख्यातो मधुरित्येव नामतः ॥२१॥
विभीषणस्तु संक्रुद्धो भ्रातरं वाक्यमब्रवीत् ॥ श्रूयतामस्य पापस्य कर्मणः फलमागतम् ॥ २२ ॥
मातामहस्य यो भ्राता ज्येष्ठो भ्राता सुमालिनः ॥ माल्यवानिति विख्यातो वृद्धः प्राज्ञो निशाचरः ॥
पिता ज्येष्ठो जनन्या नो ह्यस्माकं चार्यकोऽभवत् ॥ तस्य कुम्भीनसी नाम दुहितुर्दुहिताऽभवत् ॥२४॥
मातृष्वसुरथास्माकं सा च कन्याऽनलोद्भवा ॥ भवत्यस्माकमेवैषा भ्रातॄणां धर्मतः स्वसा ॥ २५ ॥
सा हृता मधुना राजन्राक्षसेन बलीयसा ॥ यज्ञप्रवृत्ते पुत्रे तु मयि चान्तर्जलोषिते ॥ २६ ॥
कुम्भकर्णे महाराज निद्रामनुभवत्यथ ॥ निहत्य राक्षसश्रेष्ठानमात्यानिह संमतान् ॥ २७ ॥
धर्षयित्वा हृता सा तु गुप्ताऽप्यन्तःपुरे तव ॥ श्रुत्वाऽपि तन्महाराज क्षान्तमेव हतो न सः ॥२८॥
यस्मादवश्यं दातव्या कन्या भर्त्रे हि भ्रातृभिः ॥ तदेतत्कर्मणो ह्यस्य फलं पापस्य दुर्मते ॥
अस्मिन्नेवाभिसंप्राप्तं लोके विदितमस्तु ते ॥ २९ ॥

प्रसिद्धाः ॥ ७—१८ ॥ स्वमतेन स्वेच्छया । उल्लङ्घितशास्त्रमर्यादयेत्यर्थः ॥ १९ ॥ ज्ञातीन् आनीतस्त्रीबन्धून् । अस्य कर्मणः परदारापहरणरूपपापस्य । फलमागत स्वीयस्वसुर्बलान्मधुना हरणं॥२०—२३॥ अस्माकं जनन्याः सुमालिसुतायाः कैकस्याः ज्येष्ठा भगिनी काचिदस्ति । सा तु नाम्ना पुष्पोत्कचा । अपरा कुम्भीनसीति पूर्वमुक्ता । अस्माकं त्वार्यको माल्यवान् अस्माक ज्येष्ठमातामहः । अस्माकं जनन्याश्च ज्येष्ठः पिता । तस्य माल्यवतः कुम्भीनसी नाम दुहितास्ति । अनलोद्भवा अनला माल्यवतः सुता तस्याः कन्या कुम्भीनसीत्यर्थ. । अस्मन्मातामहस्य सुमालिनः द्वे पुत्र्यौ प्रसिद्धे । पुष्पोत्कचा कैकसी चेति । तयोर्ज्येष्ठः पिता माल्यवान् । तस्य पुत्री अनला । तस्या. कन्या कुम्भीनसी । सा अस्माकं स्वसा । ज्येष्ठमातामहपुत्र्याः पुत्रीत्वात् । अतएव धर्मतः स्वसेत्युक्ता ॥ २४—२५ ॥ यज्ञप्रमत्तः यज्ञेन प्रमत्तः । विस्मृतस्वगृहकृत्य इत्यर्थ' । अन्तर्जलोषित इति तपोर्थमिति शेषः ॥ २६ ॥ इह गृहे । वर्तमानानिति शेष । समतान् सिद्धान् ॥ २७ ॥ श्रुत्वा चैव मधुना स्वसृहरणं मत्वा अस्माकं क्षान्तमेव न तु मधुर्हतः ॥ २८ ॥ भ्रातृभि' अस्माभिरित्यर्थः । तदिति । आहूय कल्याणपूर्वकं कन्यादान विना बलात् कन्याग्रहण अस्य पापस्य कर्मण. फल । अस्मिन्नेव दृष्टान्ते

नेत्यत्रप्रश्लिष्टस्यईधातोरसनमर्थोनिरसनंचत्यागइतिवा ॥ १५ ॥ **शि०** गत्वा स्वभवनमितिशेष । **स०** स्त्रिय स्वानीता. ॥ १६ ॥ **स०** लक्षिण्य प्रशस्तलक्षणोपेता । रत्नभूता उत्तमा । **ति०** लक्षिण्य सुलक्षणयुक्ता ॥ १७ ॥ **स०** धर्मात्मा विभीषण ॥ १८ ॥ **ति०** ज्ञात्वा तेषापापजनकत्वज्ञात्वापि ॥ १९ ॥ **स०** मधुना दैत्येन । 'त्वामतिक्रम्य अविगणय्य । कुम्भीनसी तवभगिनी । हृता बलात् ॥ २० ॥ **ति०** नावगच्छामि नेमंवृत्तान्तंजानामि । किंविद कथंसपन्नं ॥ २१ ॥ **स०** क्वचिद्गतइन्द्रजित् त्वंवाक्वेतितत्रैवदेत्यतआह—यज्ञप्रवृत्तइति । पुत्रे इन्द्रजिति । मयिचान्तर्जलमुषिते अन्तर्जलोषिते । तपसे इतिशेष ॥ २६ ॥ **स०** क्षान्तमेव समधुर्नहत । सामर्थ्याधिक्यात्तस्यास्माकचकार्यान्तरासक्तत्वादितिभाव ॥ २८ ॥ **ति०** भ्रातृभिरितिगुरुपरं ॥ **स०** कन्या स्वकुलप्रसूता । भर्त्रे मनसाभर्तृत्वेनसमताय । यद्यपिदेयाकन्येति । तथापि बलादबलाहरणतु दुर्मते ज्येष्ठभ्रात अस्मत्वदनुष्ठितस्वपरतरुणीपरिकरहरणादिरूपपापस्यफलं । नोचेच्चेतसापिस्प्रष्टुमशक्यप्राकारादिप्रकारलङ्कान्तर्गुप्त-

[ पा० ] १ इदमर्धद्वयं क.—ज. ञ. पाठेषुदृश्यते. २ ङ.—ट. प्राणिनाज्ञात्वा. क—घ. प्राणिनादत्वा. ३ क—घ. ट. ज्ञातीन्वै. ४ क—ट. योस्माकंज्येष्ठो. ५ च. छ. झ दुर्मते .

विभीषणवचः श्रुत्वा राक्षसेन्द्रः स रावणः ॥ दौरात्म्येनात्मनोद्धूतस्तप्ताम्भा इव सागरः ॥ ३० ॥
ततोऽब्रवीद्दशग्रीवः क्रुद्धः संरक्तलोचनः ॥ कल्प्यतां मे रथः शीघ्रं शूराः सज्जीभवन्तु नः ॥ ३१ ॥
भ्राता मे कुम्भकर्णश्च ये च मुख्या निशाचराः ॥ वाहनान्यधिरोहन्तु नानाप्रहरणायुधाः ॥ ३२ ॥
अद्य तं समरे हत्वा मधुं रावणनिर्भयम् ॥ सुरलोकं गमिष्यामि युद्धाकाङ्क्षी सुहृद्वृतः ॥ ३३ ॥
[ ततो विजित्य त्रिदिवं वशे स्थाप्य पुरंदरम् ॥ निर्भयो विचरिष्यामि त्रैलोक्यैश्वर्यशोभितः ॥ ३४ ॥]
अक्षौहिणीसहस्राणि चत्वार्यग्र्याणि रक्षसाम् ॥ नानाप्रहरणान्याशु निर्ययुर्युद्धकाङ्क्षिणाम् ॥ ३५ ॥
इन्द्रजित्त्वग्रजित्सैन्यात्सैनिकान्परिगृह्य च ॥ जगाम रावणो मध्ये कुम्भकर्णश्च पृष्ठतः ॥ ३६ ॥
विभीषणश्च धर्मात्मा लङ्कायां धर्ममाचरत् ॥ शेषाः सर्वे महाभागा ययुर्मधुपुरं प्रति ॥ ३७ ॥
खरैरुष्ट्रैर्हयैर्दीप्तैः शिंशुमारैर्महोरगैः ॥ राक्षसाः प्रययुः सर्वे कृत्वाऽऽकाशं निरन्तरम् ॥ ३८ ॥
दैत्याश्च शतशस्तत्र कृतवैराश्च दैवतैः ॥ रावणं प्रेक्ष्य गच्छन्तमन्वगच्छन्हि पृष्ठतः ॥ ३९ ॥
स तु गत्वा मधुपुरं प्रविश्य च दशाननः ॥ न ददर्श मधुं तत्र भगिनीं तत्र दृष्टवान् ॥ ४० ॥
सा च प्रह्वाञ्जलिर्भूत्वा शिरसा चरणौ गता ॥ तस्य राक्षसराजस्य त्रस्ता कुम्भीनसी तदा ॥ ४१ ॥
तां समुत्थापयामास न भेतव्यमिति ब्रुवन् ॥ रावणो राक्षसश्रेष्ठः किं चापि करवाणि ते ॥ ४२ ॥
साऽब्रवीद्यदि मे राजन्प्रसन्नस्त्वं महाभुज ॥ भर्तारं न ममेहाद्य हन्तुमर्हसि मानद ॥ ४३ ॥
न हीदृशं भयं किंचित्कुलस्त्रीणामिहोच्यते ॥ भयानामपि सर्वेषां वैधव्यं व्यसनं महत् ॥ ४४ ॥
सत्यवाग्भव राजेन्द्र मामवेक्षस्व याचतीम् ॥ त्वयाऽप्युक्तं महाराज न भेतव्यमिति स्वयम् ॥ ४५ ॥
रावणस्त्वब्रवीद्धृष्टः स्वसारं तत्र संस्थिताम् ॥ क्व चासौ तव भर्ता वै मम शीघ्रं निवेद्यताम् ॥ ४६ ॥
सह तेन गमिष्यामि सुरलोकं जयावहे ॥ तव कारुण्यसौहार्दान्निवृत्तोस्मि मधोर्वधात् ॥ ४७ ॥
इत्युक्ता सा समुत्थाप्य प्रसुप्तं तं निशाचरम् ॥ अब्रवीत्संप्रहृष्टेव राक्षसी सा पतिं वचः ॥ ४८ ॥
एष प्राप्तो दशग्रीवो मम भ्राता महाबलः ॥ सुरलोकजयाकाङ्क्षी साहाय्ये त्वां वृणोति च ॥ ४९ ॥
तदस्य त्वं सहायार्थं सबन्धुर्गच्छ राक्षस ॥ स्निग्धस्य भजमानस्य युक्तमर्थाय कल्पितुम् ॥ ५० ॥
तस्यास्तद्वचनं श्रुत्वा तथेत्याह मधुर्वचः ॥ ५१ ॥
ददर्श राक्षसश्रेष्ठं यथान्याय्यमुपेत्य सः ॥ पूजयामास धर्मेण रावणं राक्षसाधिपम् ॥ ५२ ॥
प्राप्य पूजां दशग्रीवो मधुवेश्मनि वीर्यवान् ॥ तत्र चैकां निशामुष्य गमनायोपचक्रमे ॥ ५३ ॥

---

अभिसंप्राप्त अत' परमन्यत्रापि लोके विदितमस्तु ॥ २९—३२ ॥ रावणान्निर्भयो रावणनिर्भयः ॥ ३३—४१ ॥ अन्यदपि तव प्रियमित्यर्थः ॥ ४२—४३ ॥ ईदृशं भयं भर्तृवधसभवं भयमित्यर्थः ॥ ४४ ॥ सत्यवाग् भवेति । न भेतव्यमिति वचनं सत्य कुर्वित्यर्थः ॥ ४५—५१ ॥ यथान्याय्यमिति

---

कन्यानयनमनयेनकृयस्यादितिभाव ॥ २९ ॥ **स०** रावणनिर्भयं रावणान्मत्त निर्भयस्त ॥ ३३ ॥ **ति०** अग्र्याणि मुख्यानि ॥ ३५ ॥ **स०** सैन्यादग्रत सर्वमन्याग्रभागे । सैनिकान् सेनासमवायिन । दिनंतदेवदैवाज्जागरणस्याभूदित्यभूद्युद्धायगमनंकुंभकर्णस्येतिज्ञेय ॥ ३६ ॥ **ति०** लङ्कायावर्ममाचरन् तत्रैवस्थितइत्यर्थ ॥ ३७ ॥ **ति०** प्रह्वाञ्जलि कृतनम्रत्वचिह्नाञ्जलि ॥ ४१ ॥ **स०** कुलस्त्रीणा भर्तृवधसमानंभय भयहेतुर्नोच्यते ॥ ४४ ॥ **ति०** अर्थाय प्रयोजनाय । कल्पयितु साहाय्यंसपादयितुंयुक्तं । स्निग्धस्य मत्प्रेक्षयास्नयिस्निग्धस्य । भजमानस्य त्वयिजामातृभावंभजत ॥ ५० ॥ **ति०** यथान्याय्यं उपचारपूर्वं ॥ **स०** यथान्याय्य ज्यैष्ठ्यकानिष्ठ्यन्याययोग्यं ॥ ५२ ॥

[ **पा०** ] १ अयश्लोक क—घ. ज. पाठेषुदृश्यते. २ झ. ठ. इन्द्रजित्त्वग्रत.सैन्यात्. ३ झ. ठ. वर्ममाचरन्. ४ ख. राक्षसीतुमधुतदा

ततः कैलासमासाद्य शैलं वैश्रवणालयम् ॥ राक्षसेन्द्रो महेन्द्राभः सेनामुपनिवेशयत् ॥ ५४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

---

## षड्विंशः सर्गः ॥ २६ ॥

कैलासेवसता समुदितेचन्द्रे तत्रयदृच्छासमागतरंभावलोकनक्षुभितहृदाचरावणेन तत्करग्रहणेन तांप्रतिजिगमिषितदेशप्रश्नपूर्वकभोगप्रार्थना ॥ १ ॥ तयातप्रति स्वस्यनलकूबराभिलापनिवेदनेन स्नुषात्वोक्त्या स्वमोचनयाचने तेनबलात्तदुपभोग ॥ २ ॥ तेनभुक्तमुक्तयारभया नलकूबरमेत्य तस्मिन्रावणदुश्चेष्टितनिवेदनम् ॥ ३ ॥ तेनकोपात्तप्रति अकामकामिनीभोगे सप्तधामूर्धस्फुटनविषयकशापदानम् ॥४॥ तच्छ्रवणेनरावणेनाकामकामिनीभोगानभिरोचनं तदपहृतपतिव्रताभिर्हर्षाधिगमश्च ॥ ५ ॥

स तु तत्र दशग्रीवः सह सैन्येन वीर्यवान् ॥ अस्तं प्राप्ते दिनकरे निवासं समरोचयत् ॥ १ ॥
उदिते विमले चन्द्रे तुल्यपर्वतवर्चसि ॥ प्रसुप्तं सुमहत्सैन्यं नानाप्रहरणायुधम् ॥ २ ॥
रावणस्तु महावीर्यो निषण्णः शैलमूर्धनि ॥ स ददर्श गुणांस्तत्र चन्द्रपादसुशोभितान् ॥ ३ ॥
कर्णिकारवनैर्दीप्तैः कदम्बगहनैस्तथा ॥ पद्मिनीभिश्च फुल्लाभिर्मन्दाकिन्या जलैरपि ॥ ४ ॥
चम्पकाशोकपुन्नागमन्दारतरुभिस्तथा ॥ चूतपाटललोध्रैश्च प्रियङ्ग्वर्जुनकेतकैः ॥ ५ ॥
तगरैर्नारिकेलैश्च प्रियालपनसैस्तथा ॥ आरग्वधैस्तमालैश्च प्रियालबकुलैरपि ॥ ६ ॥
एतैरन्यैश्च तरुभिरुद्भासितवनान्तरे ॥ किन्नरा मदनेनार्ता रक्ता मधुरकण्ठिनः ॥
समं संप्रजगुर्यत्र मनस्तुष्टिविवर्धनम् ॥ ७ ॥
विद्याधरा मदक्षीबा मदरक्तान्तलोचनाः ॥ योषिद्भिः सह संक्रान्ताश्चिक्रीडुर्जहृषुश्च वै ॥ ८ ॥
घण्टानामिव सन्नादः शुश्रुवे मधुरस्वरः ॥ अप्सरोगणसङ्घानां गायतां धनदालये ॥ ९ ॥
पुष्पवर्षाणि मुञ्चन्तो नगाः पवनताडिताः ॥ शैलं तं वासयन्तीव मधुमाधवगन्धिनः ॥ १० ॥
मधुपुष्परजःपृक्तं गन्धमादाय पुष्कलम् ॥ प्रववौ वर्धयन्कामं रावणस्य सुखोऽनिलः ॥ ११ ॥

---

अर्घ्याद्युपचारमित्यर्थः ॥ ५२—५४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने पञ्चविंशः सर्गः ॥२५॥

---

तुल्यपर्वतवर्चसि स्वनिविष्टकैलासवत्तुल्याभे ॥२॥ गुणान् भोगार्हधर्मान् ॥३॥ कदम्बगहनैः कदम्बवनैः ॥ ४—६ ॥ रक्ताः रागयुक्ताः । मधुरकण्ठिनः मधुकण्ठध्वनयः । समं स्वस्त्रीभिरिति शेष. ॥ ७—९॥ वासयन्ति अधिवासयुक्त कुर्वन्ति । मधुमाधवगन्धिनः नित्यमेव मधुमाधवाभ्यां चैत्रवैशाखाभ्यां वसन्तमासाभ्यां गन्धिनः तत्कृतपुष्पगन्धाइत्यर्थः ॥१०॥मधुपुष्परजःपृक्तं मधुना मकरन्देन पुष्परजसा

---

स० उपनिवेशयत् उपन्यवेशयत् ॥ ५४ ॥ इति पञ्चविंश सर्ग ॥ २५ ॥

स० चन्द्रपादपशोभितान् चन्द्रश्चपादपाश्चतै । कर्पूरपादपै. कदलीविशेषै । चन्द्रैरुदकै पादपैश्चेतिवा । तैरुपशोभितान् । " चन्द्र·सुधांशुकर्पूरकपिल्लस्वर्णवारिषु " इतिविश्व ॥ ३ ॥ ति० पद्मिन्य सरासि । तासाफुल्लत्वतत्कालोचितविकासवत्कह्लारादिभिर्बोध्यं ॥ ४ ॥ स० तगरा क्षाररसवन्महीरुहा· । " तगर क्षारे " इतिविश्व ॥ ६ ॥ ति० मधुरकण्ठिन मधुरकण्ठध्वनय । समं स्वस्त्रीभिरितिशेष· । यत्र कैलासे ॥ स० रक्ता आसक्ता. ॥ ७ ॥ स० मदक्षीबा मदसाधनमत्ता । मदरक्तान्तलोचना यास्ताभिर्योषिद्भि । सक्रान्ता मिलिता ॥ ८ ॥ ति० वासयन्ति अधिवासयन्ति सुगन्धकुर्वन्ति ॥ १० ॥

[ पा० ] १ झ. ठ. चन्द्रपादपशोभितान्. २ ग. घ. च. छ. ज. ट. कदंबबकुलैस्तथा. ख. कदबविपिनैस्तथा.

गेयात्पुष्पसमृद्ध्या च शैत्याद्वायोर्गिरेर्गुणात् ॥ प्रवृत्तायां रजन्यां च चन्द्रस्योदयनेन च ॥ १२ ॥
रावणः सुमहावीर्यः कामस्य वशमागतः ॥ विनिश्वस्य विनिश्वस्य शशिनं समवैक्षत ॥ १३ ॥
एतस्मिन्नन्तरे तत्र दिव्याभरणभूषिता ॥ सर्वाप्सरोवरा रम्भा दिव्यपुष्पविभूषिता ॥ १४ ॥
दिव्यचन्दनलिप्ताङ्गी मन्दारकृतमूर्धजा ॥ दिव्योत्सवकृतारम्भा पूर्णचन्द्रनिभानना ॥ १५ ॥
चक्षुर्मनोहरं पीनं मेखलादामभूषितम् ॥ समुद्वहन्ती जघनं रतिप्राभृतमुत्तमम् ॥ १६ ॥
कृतैर्विशेषकैरार्द्रैः षडर्तुकुसुमोद्भवैः ॥ बभावन्यतमेव श्रीकान्तिद्युतिमतिह्रियाम् ॥
नीलं सतोयमेघाभं वस्त्रं समवकुण्ठिता ॥ १७ ॥
यस्या वक्त्रं शशिनिभं भ्रुवौ चापनिभे शुभे ॥ ऊरू करिकराकारौ करौ पल्लवकोमलौ ॥
सैन्यमध्येन गच्छन्ती रावणेनोपवीक्षिता ॥ १८ ॥
तां समुत्थाय गच्छन्तीं कामबाणवशं गतः ॥ करे गृहीत्वा लज्जन्तीं स्मयमानोऽभ्यभाषत ॥१९॥
क्व गच्छसि वरारोहे कां सिद्धिं भजसे स्वयम् ॥ कस्याभ्युदयकालोऽयं यस्त्वां समुपभोक्ष्यते ॥२०॥
त्वदाननरसस्याद्य पद्मोत्पलसुगन्धिनः ॥ सुधामृतरसस्येव कोऽद्य तृप्तिं गमिष्यति ॥ २१ ॥
स्वर्णकुम्भनिभौ पीनौ शुभौ भीरु निरन्तरौ ॥ कस्योरस्थलसंस्पर्शं दास्यतस्ते कुचाविमौ ॥ २२ ॥
सुवर्णचक्रप्रतिमं स्वर्णदामचितं पृथु ॥ अध्यारोहति कस्तेऽद्य जघनं स्वर्गरूपिणम् ॥ २३ ॥
मद्विशिष्टः पुमान्कोऽद्य शक्रो विष्णुरथाश्विनौ ॥ मामतीत्य हि यं च त्वं यासि भीरु न शोभनम् २४
विश्रम त्वं पृथुश्रोणि शिलातलमिदं शुभम् ॥ त्रैलोक्ये यः प्रभुश्चैव मदन्यो नैव विद्यते ॥ २५ ॥
तदेवं प्राञ्जलिः प्रह्वो याचते त्वां दशाननः ॥ भर्तुर्भर्ता विधाता च त्रैलोक्यस्य भजस्व माम् ॥२६॥
एवमुक्ताऽब्रवीद्रम्भा वेपमाना कृताञ्जलिः ॥ प्रसीद नार्हसे वक्तुमीदृशं त्वं हि मे गुरुः ॥ २७ ॥
अन्येभ्यो हि त्वया रक्ष्या प्राप्नुयां धर्षणं यदि ॥ तद्धर्मतः स्नुषा तेऽहं तत्त्वमेव ब्रवीमि ते ॥२८॥

---

च संपृक्तं ॥११---१४॥ मन्दारकृतमूर्धजा मन्दारपुष्पकृतालंकारकेशीत्यर्थः ॥१५॥ रतिप्राभृत रत्युपदाभूत रतिवर्धकमित्यर्थ ॥ १६ ॥ षडर्तुकुसुमोद्भवैः षडृतुकुसुमोद्भवैरित्यर्थ । ऋकारस्य गुणश्छान्दस. । विशेषकैरलकारैरित्यर्थः । श्रीकान्तिद्युतिमतिह्रियां देवस्त्रीविशेषाणामन्यतमेव स्थिता । अभिसारत्वेन नीलवस्त्रमादाय समवकुण्ठिता प्रावृतवती ॥ १७---१९ ॥ कां सिद्धिं कस्य भोगसिद्धिमित्यर्थः ॥२०॥ सुधामृतरसस्येव अमृतादमृतरसस्येवेत्यर्थ. । तृप्तियोगे

---

स० गेयात् गानात् । चन्द्रस्योदयनप्रति तत्कालेगेयात्गिरेर्गुणादितिवा । गातुयोग्यादित्यर्थ ॥ १२ ॥ ति० मन्दारै कल्पवृक्षकुसुमै कृतालकारामूर्धजा कचा यस्यास्सा । दिव्योत्सवाय दिव्यरतये । कृतआरभो गमनरूपोयया ॥ १५ ॥ ति० कान्त्या प्रत्यवयवशोभारूपसौन्दर्येण । श्रिया आभरणसपदा । द्युत्या लावण्येनकीर्त्याच । अन्यतमा स्वार्थेतम । अन्याश्रीरिवलक्ष्मीरिवबभावित्यर्थ ॥ १७ ॥ ति० आननरसस्य अधरामृतेनेत्यर्थ. ॥ २१ ॥ स० यन्नदु खेनसबद्धंनचग्रस्तमनन्तरम् । अभिलाषोपनीतंचतत्सुखंस्व पदास्पदम् ' इत्युक्तेर्निरतिशयसुखंस्वर्ग । तस्यरूपमस्यास्तीतिस्वर्गरूपी त । पुंल्लिङ्गत्वमार्ष । स्वर्गरूपिणीमितिपाठे द्वितीयाषष्ठ्यर्थे अतीतइत्यनेनान्वेति ॥ २३ ॥ स० मद्विशिष्ट. मत्तोऽधिक । विष्णुरुपेन्द्र । सर्वसुपर्ववरस्यापिकानिष्ठ्यात्तदनन्तरग्रह । अश्विनौ ननुरुद्रादिकान्सुरान्विहायानयोरनयोग्रहइतिचेत्सत्यं । नलकूबरमणिग्रीवयोर्यमलयो प्रस्तुतत्वात्तत्समावितिप्रमितत्वेनदेवेष्वेतयोरेवसत्त्वादितिरा मन्मथव्ययात सुरेपुव्यथाचिकित्सकत्वेनप्रमितयोरनयोर्ग्रहणंयुक्तिमदितिवाज्ञेयं ॥२४॥ स० त्वयाभर्तृतयाभिमतस्यापिभर्तापोषक । विधाता कर्ता । एतादृशंमाभजस्व ॥ २६ ॥ ति० अन्येभ्योपियदिधर्षणप्राप्नुया तदापित्वयारक्ष्या । अतएववक्तुंनार्हसि । स० तद्धर्मत. मयानलकूबरकृतसंकेतधर्मत ॥ २७---२८ ॥

[ पा० ] १ ठ चन्द्रस्योदयनंप्रति २ ख. समुदैक्षत. ३ झ. श्री कान्तिश्रीद्युतिकीर्तिभि .

अथाब्रवीद्दशग्रीवश्चरणाधोमुखीं स्थिताम् ॥ रोमहर्षमनुप्राप्तां दृष्टमात्रेण तां तदा ॥ २९ ॥
सुतस्य यदि मे भार्या ततस्त्वं हि स्नुषा भवेः ॥ बाढमित्येव सा रम्भा प्राह रावणमुत्तरम् ॥३०॥
धर्मतस्ते सुतस्याहं भार्या राक्षसपुङ्गव ॥ पुत्रः प्रियतरः प्राणैर्भ्रातुर्वैश्रवणस्य ते ॥
विख्यातस्त्रिषु लोकेषु नलकूबर इत्ययम् ॥ ३१ ॥
धर्मतो यो भवेद्विप्रः क्षत्रियो वीर्यतो भवेत् ॥ क्रोधाद्यश्च भवेदग्निः क्षान्त्या च वसुधासमः ॥३२॥
तस्यास्मि कृतसंकेता लोकपालसुतस्य वै ॥ तमुद्दिश्य तु मे सर्वं विभूषणमिदं कृतम् ॥ ३३ ॥
तथा तस्य हि नान्यस्य भावो मां प्रति तिष्ठति ॥ तेन सत्येन मां राजन्मोक्तुमर्हस्यरिन्दम ॥३४॥
स हि तिष्ठति धर्मात्मा मां प्रतीक्षन्समुत्सुकः ॥ तत्र विघ्नं सुतस्येह कर्तुं नार्हसि मुञ्च माम् ॥३५॥
सद्भिराचरितं मार्गं गच्छ राक्षसपुङ्गव ॥ माननीयो मम त्वं हि पालनीया तथाऽस्मि ते ॥ ३६ ॥
एवमुक्तो दशग्रीवः प्रत्युवाच विनीतवत् ॥ स्नुषाऽस्मि यदवोचस्त्वमेकपत्नीष्वयं क्रमः ॥ ३७ ॥
देवलोकस्थितिरियं सुराणां शाश्वती मता ॥ पतिरप्सरसां नास्ति न चैकस्त्रीपरिग्रहः ॥ ३८ ॥
एवमुक्त्वा स तां रक्षो निवेश्य च शिलातले ॥ कामभोगाभिसंसक्तो मैथुनायोपचक्रमे ॥ ३९ ॥
सा विमुक्ता ततो रम्भा भ्रष्टमाल्यविभूषणा ॥ गजेन्द्राक्रीडमथिता नदीवाकुलतां गता ॥ ४० ॥
लुलिताकुलकेशान्ता करवेपितपल्लवा ॥ पवनेनावधूतेव लता कुसुमशालिनी ॥ ४१ ॥
सा वेपमाना लज्जन्ती भीता करकृताञ्जलिः ॥ नलकूबरमासाद्य पादयोर्निपपात ह ॥ ४२ ॥
तदवस्थां च तां दृष्ट्वा महात्मा नलकूबरः ॥ अब्रवीत्किमिदं भद्रे पादयोः पतितासि मे ॥ ४३ ॥
सा वै निश्वसमाना तु वेपमाना कृताञ्जलिः ॥ तस्मै सर्वं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ४४ ॥
एष देव दशग्रीवः प्राप्तो गन्तुं त्रिविष्टपम् ॥ तेन सैन्यसहायेन निशेयं परिणामिता ॥ ४५ ॥
आयान्ती तेन दृष्टास्मि त्वत्सकाशमरिन्दम ॥ गृहीता तेन पृष्टाऽसि कस्य त्वमिति रक्षसा ॥४६॥

---

षष्ठी ॥ २१—३१ ॥ धर्मत धर्मानुष्ठानविषये ॥ ३२ ॥ कृतसकेता कृतरतिसंकेता । यथा तस्य भावो मां प्रति नान्यस्य तथा ममापि भावस्त प्रति तिष्ठतीत्यर्थः ॥ ३३—३६ ॥ स्नुषास्मि यदवोच. । स्नुषास्मीति यदवोच इत्यर्थ. ॥३७—३९ ॥ सा विमुक्तेति ॥ सभोगानन्तरमिति शेषः । गजेन्द्राक्रीडमथिता गजेन्द्राक्रीडेन मथिता ॥ ४० ॥ करवेपितपल्लवा वेपितकरपल्लवा ॥ ४१—४४ ॥ परिणा-

---

ति० चरणाधोमुखी चरणावलोकनेनाधोमुखतयास्थिता ॥ २९ ॥ ति० सुतस्य इन्द्रजितइत्यर्थ ॥ ३० ॥ ति० तेसुतस्य नलकूबरस्य । धर्मत संकेतधर्मत ॥ ३१ ॥ स० धर्मत स्वाध्यायादिधर्मात् । विप्र तत्सम । एवमुत्तरत्रापि ॥ ३२ ॥ ति० यथातस्यभावोमाप्रतितिष्ठति तथाममापिभावस्तंप्रतितिष्ठतीतिशेष । नान्यस्य नान्यंप्रतीत्यर्थ । स० यथातस्यनलकूबरस्य माप्रति मयिभाव मनस्तिष्ठति तथान्यस्यभावोनतिष्ठति । यद्वा यथातस्यविषये । मा शोभाप्रति । ममेतिशेष' । भाव । नान्यस्यपुरुषस्यत्वदादेर्विषयेनतिष्ठति त्वत्कामना ममनास्तीतिभाव ॥३४॥ ति० स्नुषास्मियदिति । स्नुषास्मीतियदवोचइत्यर्थ ॥ ३७ ॥ ति० देवलोकस्थिति देवलोकमर्यादा । इयमितीदशब्दार्थ पतिरिति । स० पतिरप्सरसानास्ति पाणिग्रहणपूर्वकंपतिर्नास्ति । ममास्तुतथा तवतुमन्दोदर्युपर्येववर्तनरूपोधर्मोस्ति । तंमागमयेत्यतआह—नचेति । अहमेकस्त्रीपरिग्रहोनच । कामुकोहं कामिनीकुलटा त्वं । अतोनिर्निबन्धोयुक्तोऽयंनिर्बन्धइतिभाव । ' अप्सरसानियतपतिर्नास्ति । सुराणामप्येकाप्सर परिग्रहोभार्यात्वेननास्तीत्यर्थइतितीर्थोनागोजिभट्टश्चप्रकृतानुपयुक्तान्वयवादिनौ । नचैकस्त्रीपरिग्रहइत्येतदर्थस्यपतिरित्यादिनैवलब्धेराधिक्यमपिननिभालयामासतुरितिज्ञेयं । कामविजयेपुंस्त्वंनास्तीतिरक्षइत्युक्ति । इदपुंस्त्वंशापौपयिकतयापापहेतुरिति विद्यमानमप्यविद्यमानप्रायमित्यभिप्रायेणैवमुक्तिरितिवा ॥ ३८ ॥ ति० करवेपितपल्लवा वेपितकरपल्लवा ॥ ४१ ॥

[ पा० ] १ ग. यथाहित्वंलालनीयातथा. २ ख. विधूतकरपल्लवा. ३ क. ग. घ. च. परिणाम्यते. ४ क—घ. गृहीत्वातेन.

मया तु सर्वं यत्सत्यं तस्मै सर्वं निवेदितम् ॥ काममोहाभिभूतात्मा नाश्रौषीत्तद्वचो मम ॥ ४७ ॥
याच्यमानो मया देव स्नुषा तेऽहमिति प्रभो ॥ तत्सर्वं पृष्ठतः कृत्वा बलात्तेनास्मि धर्षिता ॥४८॥
एवं त्वमपराधं मे क्षन्तुमर्हसि सुव्रत ॥ न हि तुल्यबलं सौम्य स्त्रियाश्च पुरुषस्य च ॥ ४९ ॥
एतच्छ्रुत्वा तु संक्रुद्धस्तदा वैश्रवणात्मजः ॥ धर्षणां तां परां श्रुत्वा ध्यानं संप्रविवेश ह ॥ ५० ॥
तस्य तत्कर्म विज्ञाय तदा वैश्रवणात्मजः ॥ मुहूर्तात्क्रोधताम्राक्षस्तोयं जग्राह पाणिना ॥ ५१ ॥
गृहीत्वा सलिलं सर्वमुपस्पृश्य यथाविधि ॥ उत्ससर्ज [1]यथाशापं राक्षसेन्द्राय दारुणम् ॥ ५२ ॥
अकामा तेन यस्मात्त्वं बलाद्भद्रे प्रधर्षिता ॥ तस्मात्स युवतीमन्यां नाकामामुपयास्यति ॥ ५३ ॥
यदा ह्यकामां कामार्तो धर्षयिष्यति योषितम् ॥ मूर्धा तु [2]सप्तधा तस्य शकलीभविता तदा ॥५४॥
तस्मिन्नुदाहृते शापे ज्वलिताग्निसमप्रभे ॥ देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ॥
पितामहमुखाश्चैव सर्वे देवाः प्रहर्षिताः ॥ ५५ ॥
ज्ञात्वा लोकगतिं सर्वां तस्य मृत्युं च रक्षसः ॥ ऋषयः पितरश्चैव प्रीतिमापुरनुत्तमाम् ॥ ५६ ॥
श्रुत्वा तु स दशग्रीवस्तं शापं रोमहर्षणम् ॥ नारीषु मैथुने भावं नाकामास्वभ्यरोचयत् ॥ ५७ ॥
तेन नीताः स्त्रियः प्रीतिमापुः सर्वाः पतिव्रताः ॥ नलकूबरनिर्मुक्तं शापं श्रुत्वा मनःप्रियम् ॥५८॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

## सप्तविंशः सर्गः ॥ २७ ॥

रावणेन कैलासात्सुमालिप्रभृतिभि सह स्वर्गलोकमेत्येन्द्रादिभि सहमहासमरप्रवर्तनम् ॥ १ ॥ सुमालिनासुरसेनावमर्दने सावित्रनाम्नावसुना तेनसहयुद्ध्वा गदयातस्यहननम् ॥ २ ॥

कैलासं लङ्घयित्वाऽथ दशग्रीवः स रावणः ॥ आससाद महातेजा इन्द्रलोकं निशाचरः ॥ १ ॥
तस्य राक्षससैन्यस्य समन्तादुपयास्यतः ॥ देवलोकं ययौ शब्दो [3]मथ्यमानार्णवोपमः ॥ २ ॥

---

मिता यापितेत्यर्थः । इहेति शेषः ॥ ४५—४९ ॥ ध्यान सप्रविवेशेति । एतदुक्तः सत्यो वाऽसत्यो वेति ज्ञातुमिति शेषः ॥ ५०—५१ ॥ उपस्पृश्य चक्षुरादीन्द्रियमिति शेषः ॥ ५२—५३ ॥ सप्तधा सप्तप्रकारेण शकलीभविता ॥ ५४—५५ ॥ लोकगति लोकस्य तत्पीडामूलदुर्दशां । इदच वचन सीतादेव्या अक्षतत्वस्य सम्यग्रामबोधनार्थं ॥ ५६—५८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने षड्विशःसर्गः ॥२६॥

---

स० इदसर्वमलङ्करणं कस्य कमुद्दिश्येतितेनरक्षसापृष्टा । तुतदनन्तरंमयायन्निवेदनीयंतत्सर्वसत्यंयथाभवतितथानिवेदित । प्रलापकालत्वात्सर्वैतिद्विरुपादानंनदोपायेतिवा ॥ ४७ ॥ स० योषिन्मात्रभाषणनविश्वसनीयमितितद्वचनमिथ्यातथ्यतानिर्णयार्थध्यानमास्थित ॥ ५० ॥ ति० सप्तधेति । सप्तधातुवशात्सप्तप्रकारेण । शकलीभविता ल्युट् ॥ ५४ ॥ स० देवदुन्दुभयोनेदु स्वयमेव दैवात् । एतेनायंशापईश्वरसमतइतिज्ञायते । नकेवलमेतावत् किंतुब्रह्मादेरपिकालआसन्नइतिसमतिरित्याह—पितामहमुखाइति ॥·५५ ॥ स० लोकगतिं जनहिंसा । तस्यरक्षस· मृत्युंचशापरूपतत्साधनंचज्ञात्वाप्रहृर्षिताइतिपूर्वेणान्वय ॥ ५६ ॥ इतिषड्विंश सर्ग· ॥ २६ ॥

ति० कैलासलङ्घयित्वेन्द्रलोकमाससाद । तस्यमेरूपरिप्रतिष्ठितत्वात् ॥ १ ॥ स० भिद्यमानार्णवोपम तत्स्वरसदृश शब्द· ।

[ पा० ] १ क. ख. ग. ङ—ट. तदाशापं. २ च. छ सहस्रधातस्य. क. तुशतधातस्य. ख. तुदशधातस्य. ३ झ. ठ. भिद्यमानार्णवोपम .

श्रुत्वा तु रावणं प्राप्तमिन्द्रश्चलित आसनात् ॥ अब्रवीत्तत्र तान्देवान्सर्वानेव समागतान् ॥ ३ ॥
आदित्यान्सवसून्रुद्रान्विश्वान्साध्यान्मरुद्गणान् ॥ सज्जीभवत युद्धार्थं रावणस्य दुरात्मनः ॥ ४ ॥
एवमुक्तास्तु शक्रेण देवाः शक्रसमा युधि ॥ सन्नह्य सुमहासत्त्वा युद्धश्रद्धासमन्विताः ॥ ५ ॥
स तु दीनः परित्रस्तो महेन्द्रो रावणं प्रति ॥ विष्णोः समीपमागम्य वाक्यमेतदुवाच ह ॥ ६ ॥
विष्णो कथं करिष्यामि महावीर्यपराक्रमः ॥ असौ हि बलवान्रक्षो युद्धार्थमभिवर्तते ॥ ७ ॥
वरप्रदानाद्बलवान्न खल्वन्येन हेतुना ॥ तत्तु सत्यवचः कार्यं यदुक्तं पद्मयोनिना ॥ ८ ॥
तद्यथा नमुचिर्वृत्रो बलिर्नरकशम्बरौ ॥ त्वद्बलं समवष्टभ्य मया दग्धास्तथा कुरु ॥ ९ ॥
न ह्यन्यो देव देवेश त्वामृते मधुसूदन ॥ गतिः परायणं नास्ति त्रैलोक्ये सचराचरे ॥ १० ॥
त्वं हि नारायणः श्रीमान्पद्मनाभः सनातनः ॥ त्वयेमे स्थापिता लोकाः शक्रश्चाहं सुरेश्वरः ॥ ११ ॥
त्वया सृष्टमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ त्वामेव भगवन्सर्वे प्रविशन्ति युगक्षये ॥ १२ ॥
तदाचक्ष्व यथा तत्त्वं देवदेव मम स्वयम् ॥ असि चक्रसहायस्त्वं योत्स्यसे रावणं प्रभो ॥ १३ ॥
एवमुक्तः स शक्रेण देवो नारायणः प्रभुः ॥ अब्रवीन्न परित्रासः कार्यस्ते श्रूयतां च मे ॥ १४ ॥
न तावदेष दुष्टात्मा शक्यो जेतुं सुरासुरैः ॥ हन्तुं चापि समासाद्य वरदानेन दुर्जयः ॥ १५ ॥
सर्वथा तु महत्कर्म करिष्यति बलोत्कटः ॥ राक्षसः पुत्रसहितो दृष्टमेतन्निसर्गतः ॥ १६ ॥
यत्तु मां त्वमभाषिष्ठा युध्यस्वेति सुरेश्वर ॥ नाहं तं प्रतियोत्स्यामि रावणं राक्षसं युधि ॥ १७ ॥
नाहत्वा समरे शत्रुं विष्णुः प्रतिनिवर्तते ॥ दुर्लभश्चैव कामोऽद्य वरगुप्ताद्धि रावणात् ॥ १८ ॥
प्रतिजाने च देवेन्द्र त्वत्समीपे शतक्रतो ॥ भवितास्मि यथाऽस्याहं रक्षसो मृत्युकारणम् ॥ १९ ॥
अहमेव निहन्तास्मि रावणं सपुरस्सरम् ॥ देवता नन्दयिष्यामि ज्ञात्वा कालमुपागतम् ॥ २० ॥
एतत्ते कथितं तत्त्वं देवराज शचीपते ॥ युध्यस्व विगतत्रासः सर्वैः सार्धं महाबल ॥ २१ ॥
ततो रुद्राः सहादित्या वसवो मरुतोऽश्विनौ ॥ सन्नद्धा निर्ययुस्तूर्णं राक्षसानभितः पुरात् ॥ २२ ॥

---

तद्यथेति । त्वद्बलमाहृत्य यथा नमुच्यादयो हतास्तथा अस्यापि हननोपाय कुर्वित्यर्थः ॥ ९ ॥ देवेति सबुद्धिः ॥ १०--१२ ॥ तत्तस्मात्कारणात् । यथा मे जयः स्यात् तथा तत्त्व उपायतत्त्वं आचक्ष्व । स्वयमेव युद्ध्यस्वेति वा । ब्रूहीति शेषः ॥ १३--१५ ॥ मे महत्कर्म युद्धकर्म करिष्यन्तीत्येतत्सहजज्ञानशक्त्या दृष्टमवगतं ॥ १६ ॥ नाहं प्रतियोत्स्यामि इदानी-

---

देवलोकेबभौ श्रुतस्तत्रस्थैरितियावत् ॥ २ ॥ **स०** समागतान् मिलितान् ॥ ३ ॥ **ति०** रावणप्रतिपरिन्नस्त भगवद्वचनस्यपरिपालनीयत्वादितिभाव ॥ ६ ॥ **ति०** बलवत्त्वेहेतुमाह—वरप्रदानादिति । **शि०** तत्सत्यकार्यं सर्वैरितिशेष ॥ ८ ॥ **ति०** तद्बलं अपरिमितंतावकंबलमाश्रित्य यथादग्धास्तथारावणस्यापिवधोपाययत्नंकुरु । मे आख्याहि ॥ ९ ॥ **ति०** गति रक्षक. । परायणं आश्रय. ॥ १० ॥ **ति०** मे वचनमितिशेष ॥ १४ ॥ **ति०** वरदानेनदुर्जयएष युधिसमासाद्यसुरासुरैर्जेतुंहन्तुंचन शक्य ॥ १५ ॥ **शि०** युध्यस्वेति । यन्मात्वमभाषिष्ठा तत्रेदमुत्तरमितिशेष ॥ १७ ॥ **ति०** यथाभवितास्मि तथाप्रतिजाने इत्यर्थं ॥ **शि०** त्वत्समीपेप्रतिजाने । कारणंभवितास्मीत्यनेन स्वस्यसाक्षाद्धननकर्तृत्वाभाव सूचित ॥ १९ ॥ **शि०** युध्यस्व राक्षसैरितिशेष ॥ २१ ॥ **ति०** अभित समुखे ॥ २२ ॥

[ पा० ] १ ङ—ट. करिष्यामिरावणंराक्षसप्रति. २ झ. ञ. ट. अहोतिबलवद्रक्षो ३ झ. ठ तद्बलं. क. त्वन्मत. ४ क यथादग्धास्तथा. ५ क—घ. ज. देवदेवानामापत्सुसुमहाबल. ङ. च छ. झ. ञ. ट. देवदेवेशत्वदृते. ६ परायण नास्तित्वामृतेपुरुषोत्तम. ङ च. छ झ. ञ. ट परायणंचापि ७ घ—ट. असिचक्र. ८ क. ख. ग युध्यसे ९ क ख ग सयुगेरिपुं. ङ. झ. ञ. ट. रावणप्रति. च. छ. रावणंविभो १० ङ. च. झ ञ. ट कर्तव्य श्रूयता ११ क. ख. ग. शक्यो दैवतदानवै.. घ. शक्योदैवतमानुषै. १२ क. ख. ग. हन्तुयुधि. १३ क—घ. ङ रक्ष पुत्रसहायोसौ.

एतस्मिन्नन्तरे नादः शुश्रुवे रजनीक्षये ॥ तस्य रावणसैन्यस्य प्रयुद्धस्य समन्ततः ॥ २३ ॥
ते प्रयुद्धा महावीर्या ह्यन्योन्यमभिवीक्ष्य वै ॥ संग्राममेवाभिमुखा ह्यभ्यवर्तन्त हृष्टवत् ॥ २४ ॥
ततो दैवतसैन्यानां संक्षोभः समजायत ॥ तदक्षयं महासैन्यं दृष्ट्वा समरमूर्धनि ॥ २५ ॥
ततो युद्धं समभवद्देवदानवरक्षसाम् ॥ घोरं तुमुलनिर्ह्रादं नानाप्रहरणोद्यतम् ॥ २६ ॥
एतस्मिन्नन्तरे शूरा राक्षसा घोरदर्शनाः ॥ युद्धार्थं समवर्तन्त सचिवा रावणस्य ते ॥ २७ ॥
मारीचश्च प्रहस्तश्च महापार्श्वमहोदरौ ॥ अकम्पनो निकुम्भश्च शुकः सारण एव च ॥ २८ ॥
संह्रादो धूमकेतुश्च महादंष्ट्रो घटोदरः ॥ जम्बुमाली महाह्रादो विरूपाक्षश्च राक्षसः ॥ २९ ॥
सुप्तघ्नो यज्ञकोपश्च दुर्मुखो दूषणः खरः ॥ त्रिशिराः करवीराक्षः सूर्यशत्रुश्च राक्षसः ॥ ३० ॥
महाकायोतिकायश्च देवान्तकनरान्तकौ ॥ एतैः सर्वैः परिवृतो महावीर्यो महाबलः ॥ ३१ ॥
रावणस्यार्यकः सैन्यं सुमाली प्रविवेश ह ॥ सदैवतगणान्सर्वान्नानाप्रहरणैः शितैः ॥
व्यध्वंसयत्सुसंक्रुद्धो वायुर्जलचरानिव ॥ ३२ ॥
[ सुमालिभयसंत्रस्ताः सुरास्ते सर्वतो दिशि ॥ प्रदुद्रुवुर्वध्यमानाः सिंहत्रस्ता मृगा इव ॥ ३३ ॥]
तद्दैवतबलं राम हन्यमानं निशाचरैः ॥ प्रणुन्नं सर्वतो दिग्भ्यः सिंहनुन्ना मृगा इव ॥ ३४ ॥
एतस्मिन्नन्तरे शूरो वसूनामष्टमो वसुः ॥ सावित्र इति विख्यातः प्रविवेश रणाजिरम् ॥ ३५ ॥
सैन्यैः परिवृतो हृष्टो नानाप्रहरणोद्यतैः ॥ त्रासयञ्शत्रुसैन्यानि सिंहः क्षुद्रमृगानिव ॥ ३६ ॥
तथाऽदित्यौ महावीर्यौ त्वष्टा पूषा च दंशितौ ॥ निर्भयौ सह सैन्येन तदा प्राविशतां रणे ॥३७॥
ततो युद्धं समभवत्सुराणां सह राक्षसैः ॥ क्रुद्धानां रक्षसां कीर्तिं समरेष्वनिवर्तिनाम् ॥ ३८ ॥
ततस्ते राक्षसाः सर्वे विबुधान्समरे स्थितान् ॥ नानाप्रहरणैर्घोरैर्जघ्नुः शतसहस्रशः ॥ ३९ ॥
देवाश्च राक्षसान्घोरान्महाबलपराक्रमान् ॥ समरे विमलैः शस्त्रैरुपनिन्युर्यमक्षयम् ॥ ४० ॥
एतस्मिन्नन्तरे राम सुमाली नाम राक्षसः ॥ नानाप्रहरणैः क्रुद्धस्तत्सैन्यं सोभ्यवर्तत ॥ ४१ ॥
स दैवतबलं सर्वं नानाप्रहरणैः शितैः ॥ व्यध्वंसयत संक्रुद्धो वायुर्जलधरं यथा ॥ ४२ ॥
ते महाबाणवर्षैश्च शूलप्रासैः सुदारुणैः ॥ हन्यमानाः सुराः सर्वे न व्यतिष्ठन्त संहताः ॥ ४३ ॥
ततो विद्राव्यमाणेषु दैवतेषु सुमालिना ॥ वसूनामष्टमः क्रुद्धः सावित्रो वै व्यवस्थितः ॥ ४४ ॥
संवृतः स्वैरथानीकैः प्रहरन्तं निशाचरम् ॥ विक्रमेण महातेजा वारयामास संयुगे ॥ ४५ ॥
ततस्तयोर्महायुद्धमभवद्रोमहर्षणम् ॥ सुमालिनो वसोश्चैव समरेष्वनिवर्तिनोः ॥ ४६ ॥

मिति शेषः ॥ १७—२२ ॥ प्रकृष्ट युद्ध यस्य तत्प्रयुद्ध ॥ २३ ॥ हृष्टवत् हृष्टाः सन्तः ॥२४—२९॥ करवीरपुष्पवत् अक्षिणी यस्य सः करवीराक्षः ॥३०—३७॥ समरेष्वनिवर्तिनां रक्षसां कीर्तिं क्रुद्धानां सुराणां राक्षसैःसह युद्धमभवदिति योजना ॥ ३८—४६ ॥

ति० कीर्तिंप्रतिक्रुद्धानासुराणा राक्षसैःमहयुद्धं समभवदितियोजना ॥ ३८ ॥ इति सप्तविंश सर्ग. ॥ २७ ॥

[ पा० ] १ क—घ. रावणाज्ञया. २ क—घ. महादंष्ट्रोमहामुख ३ क—घ. सर्वैर्महावीर्यैर्वृतोराक्षसपुङ्गवै . ४ क. ख. ग. विध्वंसयतिसंक्रुद्ध सहितै.क्षणदाचरै . ५ अयंश्लोक क. ख. ग. पाठेषुदृश्यते ६ ङ. च. छ. झ. ञ. सैन्यानिप्रविवेशरणाजिरं. ७ क–घ. तथापरौ. ८ ङ. च, छ. झ. ञ. पूषाचतौसम. ९ च. छ. क्रुद्धानाजयकामाना. १० ख. ज. समरेष्वदहन्बलात्.

ततस्तस्य महाबाणैर्वसुना सुमहात्मना ॥ निहतः पन्नगरथः क्षणेन विनिपातितः ॥ ४७ ॥
हत्वा तु संयुगे तस्य रथं बाणशतैश्चितम् ॥ गदां तस्य वधार्थाय वसुर्जग्राह पाणिना ॥ ४८ ॥
ततः प्रगृह्य दीप्ताग्रां कालदण्डोपमां गदाम् ॥ तां मूर्ध्नि पातयामास सावित्रो वै सुमालिनः ॥४९॥
सा तस्योपरि चोल्काभा पतन्तीव बभौ गदा ॥ इन्द्रप्रमुक्ता गर्जन्ती गिराविव महाशनिः ॥५०॥
तस्य नैवास्थि न शिरो न मांसं ददृशे तदा ॥ गदया भस्मतां नीतं निहतस्य रणाजिरे ॥ ५१ ॥
तं दृष्ट्वा निहतं सङ्ख्ये राक्षसास्ते समन्ततः ॥ व्यद्रवन्सहिताः सर्वे क्रोशमानाः परस्परम् ॥
विद्राव्यमाणा वसुना राक्षसा नावतस्थिरे ॥ ५२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

---

## अष्टाविंशः सर्गः ॥ २८ ॥

इन्द्रजिद्बाणाभिघातनिर्विण्णेजयन्ते तन्मातामहेनपुलोम्ना तस्यरणाङ्गणादपवाहनपूर्वकं तेनसहसागरप्रवेशः ॥ १ ॥
पुत्रादर्शनरुष्टेनेन्द्रेण रणायेन्द्रजितंप्रत्यभियाने रावणेनेन्द्रजित्प्रतिनिवर्तनेन स्वयमेवेन्द्रंप्रत्यभियानम् ॥ २ ॥

सुमालिनं हतं दृष्ट्वा वसुना भस्मसात्कृतम् ॥ स्वसैन्यं विद्रुतं चापि लक्षयित्वाऽर्दितं सुरैः ॥ १ ॥
ततः स बलवान्क्रुद्धो रावणस्य सुतस्तदा ॥ निवर्त्य राक्षसान्सर्वान्मेघनादो व्यवस्थितः ॥ २ ॥
सुरथेनाग्निवर्णेन कामगेन महारथः ॥ अभिदुद्राव सेनां तां वनान्यग्निरिव ज्वलन् ॥ ३ ॥
ततः प्रविशतस्तस्य विविधायुधधारिणः ॥ विदुद्रुवुर्दिशः सर्वा दर्शनादेव देवताः ॥ ४ ॥
न बभूव तदा कश्चिद्युयुत्सोरस्य संमुखे ॥ सर्वानाविध्य वित्रस्तांस्ततः शक्रोऽब्रवीत्सुरान् ॥ ५ ॥
न भेतव्यं न गन्तव्यं निवर्तध्वं रणे सुराः ॥ एष गच्छति पुत्रो मे युद्धार्थमपराजितः ॥ ६ ॥
ततः शक्रसुतो देवो जयन्त इति विश्रुतः ॥ रथेनाद्भुतकल्पेन संग्रामे सोभ्यवर्तत ॥ ७ ॥
ततस्ते त्रिदशाः सर्वे परिवार्य शचीसुतम् ॥ रावणस्य सुतं युद्धे समासाद्य प्रजघ्निरे ॥ ८ ॥
तेषां युद्धं समभवत्सदृशं देवरक्षसाम् ॥ महेन्द्रस्य च पुत्रस्य राक्षसेन्द्रसुतस्य च ॥ ९ ॥
ततो मातलिपुत्रे तु गोमुखे राक्षसात्मजः ॥ सारथौ पातयामास शरान्कनकभूषणान् ॥ १० ॥
शचीसुतश्चापि तथा जयन्तस्तस्य सारथिम् ॥ तं चापि रावणिः क्रुद्धः समन्तात्प्रत्यविध्यत ॥ ११ ॥
स हि क्रोधसमाविष्टो बली विस्फारितेक्षणः ॥ रावणिः शक्रतनयं शरवर्षैरवाकिरत् ॥ १२ ॥
ततो नानाप्रहरणांश्छितधारान्सहस्रशः ॥ पातयामास संक्रुद्धः सुरसैन्येषु रावणिः ॥ १३ ॥

---

तस्य सुमालिनः ॥ ४७—५२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

तां सेनां देवसेनां ॥ ३—४ ॥ आविध्य आवेधं प्राप्य वित्रस्तान् ॥ ५—८ ॥ तेषां सदृशं बलवीर्यानुरूपमित्यर्थः ॥ ९ ॥ गोमुख इति मातलिसुतनाम

---

शि० निवर्तध्वं अपसरणादितिशेष ॥ ६ ॥

[ पा० ] १ क. ख. ग. महान्सपन्नगरथ २ च. छ. सर्वानावेक्ष्य. ३ क. ख. ग. वित्रस्तान्दृष्ट्वाशक्रोऽभ्यभाषत. ४ क. ख. ग. समासाद्यव्यवस्थिता . ५ ङ—ट. ततोमातलिपुत्रस्यगोमुखस्यसरावणि । सारथे , ६ क—घ. तत प्रगृह्यशस्त्राण्यसिसारवन्तिमहान्तिच । सुरसैन्येषुसक्रुद्ध पातयामासरावणि .

शतघ्नीमुसलप्रासगदाखड्गपरश्वधान् ॥ महान्ति गिरिशृङ्गाणि पातयामास रावणिः ॥ १४ ॥
ततः प्रव्यथिता लोकाः संजज्ञे च तमो महत् ॥ तस्य रावणपुत्रस्य शत्रुसैन्यानि निघ्नतः ॥ १५ ॥
ततस्तद्दैवतबलं समन्तात्तं शचीसुतम् ॥ बहुप्रकारमस्वस्थमभवच्छरपीडितम् ॥ १६ ॥
नाभ्यजानन्त चान्योन्यं रक्षो वा देवताऽथवा ॥ तत्र तत्र विपर्यस्तं समन्तात्परिधावति ॥ १७ ॥
देवा देवान्निजघ्नुस्ते राक्षसा राक्षसांस्तथा ॥ संमूढास्तमसाच्छन्ना व्यद्रवन्नपरे तदा ॥ १८ ॥
एतस्मिन्नन्तरे वीरः पुलोमा नाम वीर्यवान् ॥ दैत्येन्द्रस्तेन संगृह्य शचीपुत्रोपवाहितः ॥ १९ ॥
संगृह्य तं तु दौहित्रं प्रविष्टः सागरं तदा ॥ आर्यकः स हि तस्यासीत्पुलोमा येन सा शची ॥२०॥
ज्ञात्वा प्रणाशं तु तदा जयन्तस्याथ देवताः ॥ अप्रहृष्टास्ततः सर्वा व्यथिताः संप्रदुद्रुवुः ॥ २१ ॥
रावणिस्त्वथ संक्रुद्धो बलैः परिवृतः स्वकैः ॥ अभ्यधावत देवांस्तान्मुमोच च महास्वनम् ॥ २२ ॥
दृष्ट्वा प्रणाशं पुत्रस्य दैवतेषु च विद्रुतम् ॥ मातलिं चाह देवेशो रथः समुपनीयताम् ॥ २३ ॥
स तु दिव्यो महाभीमः सज्ज एव महारथः ॥ उपस्थितो मातलिना वाह्यमानो महाजवः ॥२४॥
ततो मेघा रथे तस्मिंस्तडिद्वन्तो महाबलाः ॥ अग्रतो वायुचपला नेदुः परमनिस्वनाः ॥ २५ ॥
नानावाद्यानि वाद्यन्त गन्धर्वाश्च समाहिताः ॥ ननृतुश्चाप्सरःसङ्घा निर्याते त्रिदशेश्वरे ॥ २६ ॥
रुद्रैर्वसुभिरादित्यैः साध्यैश्च समरुद्गणैः ॥ वृतो नानाप्रहरणैर्निर्ययौ त्रिदशाधिपः ॥ २७ ॥
निर्गच्छतस्तु शक्रस्य परुषं पवनो ववौ ॥ भास्करो निष्प्रभश्चासीन्महोल्काश्च प्रपेदिरे ॥ २८ ॥
एतस्मिन्नन्तरे वीरो दशग्रीवः प्रतापवान् ॥ आरुरोह रथं दिव्यं निर्मितं विश्वकर्मणा ॥ २९ ॥
पन्नगैस्तु महाभोगैर्वेष्टितं रोमहर्षणैः ॥ तेषां निश्वासवातेन प्रदीप्तमिव संयुगे ॥ ३० ॥
दैत्यैर्निशाचरैश्चैव सरथः परिवारितः ॥ समराभिमुखो दैत्यो महेन्द्रं सोभ्यवर्तत ॥ ३१ ॥
पुत्रं तं वारयित्वा तु स्वयमेव व्यवस्थितः ॥ सोपि युद्धाद्विनिष्क्रम्य रावणिः समुपाविशत् ॥ ३२ ॥
ततो युद्धं प्रवृत्तं तु सुराणां राक्षसैः सह ॥ शस्त्राणि वर्षतां घोरं मेघानामिव संयुगे ॥ ३३ ॥
कुम्भकर्णस्तु दुष्टात्मा नानाप्रहरणोद्यतः ॥ नाज्ञायत तदा युद्धे सह केनाप्ययुध्यत ॥ ३४ ॥

---

॥ १०—१४ ॥ तमः सजज्ञे रावणपुत्रस्य माययेति शेषः ॥ १५—१६ ॥ विपर्यस्तं विशीर्णं ॥ १७—१८ ॥ पुलोमा नामास्तीति शेषः । तेन पुलोम्ना ॥ १९ ॥ येन सा शचीउत्पादितेति शेषः । तस्मात् शची पौलोमीति नामवती जातेत्यर्थः ॥ २० ॥ प्रणाशं अदर्शनं । व्यथिताः अतएवाप्रहृष्टाः ॥ २१—२४ ॥ वायुचपलाः वायुचलिताः ॥ २५—३३ ॥ नानाप्रहरणोद्यतः उद्यतनानाप्रहरणः । नाज्ञायत अयं मया योद्धव्य इत्येको लक्ष्यत्वेन न ज्ञायते । अपि तु केनापि अयुध्यत । येन केनापि प्राप्तेन सर्वेणाप्ययुध्यतेत्यर्थः ॥३४॥

ति० प्रव्यथितालोका भूरादयस्तत्प्रजाश्च ॥१५॥ ति० तंशचीसुत । हिंसेतिशेष ॥ शि० शचीसुतसमन्तात् शचीसुतस्यचतुर्दिक्षु ॥ १६ ॥ शि० परिधावत पर्यधावत् ॥ १७ ॥ ति० विद्रुतं पलायन ॥ २३ ॥ शि० अग्रत अग्रभागे । स्थिताइतिशेष ॥ २५ ॥ ति० वाद्यन्त अवाद्यन्त ॥ २६ ॥ ति० युद्धात् युद्धस्थानात् । समुपाविशत् तूष्णीमास्त ॥ ३२ ॥ ति० कुम्भकर्णस्त्विति । अस्यजागरितस्ययुद्धादिप्रसङ्गेऽनेकदिनमपिजागरणमित्यतोज्ञायते ॥ ३४ ॥

[ पा० ] १ च. छ. लोकास्तमश्चसमजायत. २ ट त्परिधावत ३ क—घ. मातामहार्यकस्तस्यपौलोमी. ४ च छ पौलोमीयेन. ५ क—घ. पुत्रस्यरावणेश्चापिविक्रमं. ६ ग च छ. वाद्यान्यवाद्यन्त ७ च. छ गन्धर्वाश्चजगुस्तथा. ८ ख. घ—छ. ञ. ट. रादित्यैरश्विभ्यां. ९ ङ. च. छ. झ. ञ. ट. दिव्यो १० ङ. झ. ञ. ट. तदाराजन्युद्धकेनाभ्यपद्यत.

दन्तैर्भुजाभ्यां पद्भ्यां च शक्तितोमरसायकैः ॥ येन केनैव संरब्धस्ताडयामास वै सुरान् ॥ ३५ ॥
ततो रुद्रैर्महाघोरैः संगम्याथ निशाचरः ॥ प्रयुद्धस्तैश्च संग्रामे क्षतः शस्त्रैर्निरन्तरम् ॥ ३६ ॥
बभौ शस्त्राचिततनुः कुम्भकर्णः क्षरन्नसृक् ॥ विद्युत्स्तनितनिर्घोषो धारावानिव तोयदः ॥ ३७ ॥
ततस्तद्राक्षसं सैन्यं प्रयुद्धं समरुद्गणैः ॥ रणे विद्रावितं सर्वं नानाप्रहरणैः शितैः ॥ ३८ ॥
केचिद्विनिहताः कृत्ताश्चेष्टन्ति स्म महीतले ॥ वाहनेष्ववसक्ताश्च स्थिता एवापरे रणे ॥ ३९ ॥
रथान्नागान्खरानुष्ट्रान्पन्नगांस्तुरगाञ्रणे ॥ शिंशुमारान्वराहांश्च पिशाचवदनांस्तथा ॥ ४० ॥
तान्समालिङ्ग्य बाहुभ्यां विष्टब्धाः केचिदुच्छ्रिताः ॥ देवैस्तु शस्त्रसंभिन्ना मम्रिरे च निशाचराः ४१
चित्रकर्म इवाभाति स तेषां रणसंप्लवः ॥ निहतानां प्रमत्तानां राक्षसानां महीतले ॥ ४२ ॥
शोणितोदकनिष्पन्दकङ्कगृध्रसमाकुला ॥ प्रवृत्ता संयुगमुखे शस्त्रग्राहवती नदी ॥ ४३ ॥
एतस्मिन्नन्तरे क्रुद्धो दशग्रीवः प्रतापवान् ॥ निरीक्ष्य तद्बलं कृत्स्नं दैवतैर्विनिपातितम् ॥ ४४ ॥
स तं प्रतिविगाह्याशु प्रवृद्धं सैन्यसागरम् ॥ त्रिदशान्समरे निघ्नञ्शक्रमेवाभ्यवर्तत ॥ ४५ ॥
आगाच्छक्रो महच्चापं विस्फार्य सुमहास्वनम् ॥ यस्य विस्फारघोषेण स्वनन्ति स्म दिशो दश ॥४६॥
तद्विकृष्य महच्चापमिन्द्रो रावणमूर्धनि ॥ निपातयामास शरान्पावकादित्यवर्चसः ॥ ४७ ॥
तथैव च महाबाहुर्दशग्रीवो व्यवस्थितः ॥ शक्रं कार्मुकविभ्रष्टैः शरवर्षैरवाकिरत् ॥ ४८ ॥
प्रयुध्यतोरथ तयोर्बाणवर्षैः समन्ततः ॥ न ज्ञायते तदा किंचित्सर्वं हि तमसा वृतम् ॥ ४९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

---

## एकोनत्रिंशः सर्गः ॥ २९ ॥

ससैन्येनेन्द्रेण रावणेसमाक्रान्ते इन्द्रजिताकोपादिन्द्रेणसहयोधनम् ॥ १ ॥ तथा माययेन्द्रस्यबन्धनेन स्वसेनामध्यप्रापणम् ॥ २ ॥ रावणेनेन्द्रजितंप्रति इन्द्रस्यरथारोपणेनलङ्काप्रापणचोदनपूर्वक पश्चाल्लङ्काप्रतिगमनम् ॥ ३ ॥

ततस्तमसि संजाते सर्वे ते देवराक्षसाः ॥ अयुध्यन्त बलोन्मत्ताः सूदयन्तः परस्परम् ॥ १ ॥
ततस्तु देवसैन्येन राक्षसानां बृहद्बलम् ॥ दशांशं स्थापितं युद्धे शेषं नीतं यमक्षयम् ॥ २ ॥

---

प्रयुद्ध प्रकृष्टयुद्धः ॥ ३६—३९ ॥ रथानित्यादिश्लोकद्वयमेकं वाक्य ॥ विष्टब्धाः अवलम्ब्य स्थिता. । केचिदुच्छ्रिताश्च केवल स्थिताश्च ॥ ४०—४१ ॥ चित्रकर्म इवेति वाक्ये सन्धिरनित्यः । रणसघर्ष रणसंमर्दः । चित्रकर्मेवाश्चर्यकर आभातीत्यर्थः॥४२—४८ ॥ तमसावृत उभयशरवर्षसर्वदिक्छादनकृतेनेति शेषः ॥ ४९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने अष्टाविशः सर्गः ॥ २८ ॥

---

यावदन्त इति। परसैन्यस्यान्तो यावत् तावन्मध्येन

---

ति० अपिचप्रहरणनियमोपिनास्तीत्याह—दन्तैरिति॥३५॥ ति० समरुद्गणै देवैरितिशेष ॥३८॥ ति० अवसक्ता दृढग्रहणवन्त स्थिता । मरणेपीतिशेष ॥३९॥ ति० रथादीन्बाहुभ्यासमालिङ्ग्यविष्टब्धा. । केचिदुत्थिता मूर्च्छिता कालेनगतमूर्च्छाउत्थिता । मम्रिरे मृता ॥ ४१ ॥ ति० चित्रकर्मइवेत्यसन्धिरार्ष । यथासिद्धमायानिर्मितं चित्रकर्म आश्चर्यकर तथैवतेषारणसप्लव रणसमर्द आभातिस्म ॥ स० सर्वेषा पश्यताजनाना । निहताना, महीतलेप्रसुप्तानाराक्षसाना । रणसप्लव रणेपात । चित्रकर्मइव शिल्पिकर्मेवाभातिस्म । निश्चेष्टत्वाच्चित्रप्रायतातेषामितिभाव ॥ ४२ ॥ इत्यष्टाविंश सर्ग ॥ २८ ॥

ति० देवाश्चराक्षसाश्च देवराक्षसा ॥ १ ॥

[ पा० ] १ क—घ. सैन्यंत्रिदशैस्समरुद्गणै . २ ङ. च. झ. ट. प्रसुप्ताना. ३ ख—घ. च. छ. ज ट. तत.शक्रो.

तस्मिंस्तु तामसे युद्धे सर्वे ते देवराक्षसाः ॥ अन्योन्यं नाभ्यजानन्त युध्यमानाः परस्परम् ॥ ३ ॥
इन्द्रश्च रावणश्चैव रावणिश्च महाबलः ॥ तस्मिंस्तमोजालवृते मोहमीयुर्न ते त्रयः ॥ ४ ॥
स तु दृष्ट्वा बलं सर्वं निहतं रावणः क्षणात् ॥ क्रोधमभ्यागमत्तीव्रं महानादं च मुक्तवान् ॥ ५ ॥
क्रोधात्सूतं च दुर्धर्षः स्यन्दनस्थमुवाच ह ॥ परसैन्यस्य मध्येन यावदन्तो नयस्व माम् ॥ ६ ॥
अद्यैतांस्त्रिदशान्सर्वान्विक्रमैः समरे स्वयम् ॥ नानाशस्त्रैर्महाघोरैर्नयामि यमसादनम् ॥ ७ ॥
अहमिन्द्रं वधिष्यामि धनदं वरुणं यमम् ॥ त्रिदशान्विनिहत्याथ स्वयं स्थास्याम्यथोपरि ॥
विषादो न च कर्तव्यः शीघ्रं वाहय मे रथम् ॥ ८ ॥
[1]द्विः खलु त्वां ब्रवीम्यद्य यावदन्तो नयस्व माम् ॥ ९ ॥
अयं स नन्दनोद्देशो यत्र वर्तामहे वयम् ॥ नय मामद्य तत्र त्वमुदयो यत्र पर्वतः ॥ १० ॥
तस्य तद्वचनं श्रुत्वा तुरङ्गान्स मनोजवान् ॥ आदिदेशाथ शत्रूणां मध्येनैव च सारथिः ॥ ११ ॥
तस्य तं निश्चयं ज्ञात्वा शक्रो देवेश्वरस्तदा ॥ रथस्थः समरस्थांस्तान्देवान्वाक्यमथाब्रवीत् ॥ १२ ॥
सुराः शृणुत मद्वाक्यं यत्तावन्मम रोचते ॥ जीवन्नेव दशग्रीवः साधु रक्षो निगृह्यताम् ॥ १३ ॥
एष ह्यतिबलः सैन्ये रथेन पवनौजसा ॥ गमिष्यति प्रवृद्धोर्मिः समुद्र इव पर्वणि ॥ १४ ॥
न ह्येष हन्तुं शक्योऽद्य वरदानात्सुनिर्भयः ॥ तद्ग्रहीष्यामहे रक्षो यत्ता भवत संयुगे ॥ १५ ॥
यथा बलौ निरुद्धे च त्रैलोक्यं भुज्यते मया ॥ एवमेतस्य पापस्य निरोधो मम रोचते ॥ १६ ॥
ततोऽन्यं देशमास्थाय शक्रः संत्यज्य रावणम् ॥ अयुध्यत महाराज राक्षसांस्त्रासयन्रणे ॥ १७ ॥
उत्तरेण दशग्रीवः प्रविवेशानिवर्तकः ॥ दक्षिणेन तु पार्श्वेन प्रविवेश शतक्रतुः ॥ १८ ॥
ततः स योजनशतं प्रविष्टो राक्षसाधिपः ॥ देवतानां बलं सर्वं शरवर्षैरवाकिरत् ॥ १९ ॥
ततः शक्रो निरीक्ष्याथ प्रनष्टं तु स्वकं बलम् ॥ न्यवर्तयदसंभ्रान्त समावृत्य दशाननम् ॥ २० ॥

---

मां नयस्व ॥६—७॥ अथोपरि सर्वेषामुपरिष्टादित्यर्थः ॥ ८ ॥ देवसेनामध्ये प्रवेशे किं भविष्यतीति विषण्ण सारथिं पुनश्चाह—द्विः खल्वित्यादि ॥ यावदन्तो नयस्व मामिति द्वि. द्विवार त्वां ब्रवीमि खलु । तत्कथ न नयसीत्यर्थ ॥ ९ ॥ अपरिमितदेवसेनाया क आदि कोन्त इत्यत्राह—अयमिति ॥ वय यत्र वर्तामहे स नन्दनोद्देश. । एप आदि । एनमारभ्य उदयपर्वतो यत्र तत्र मामद्य नय । सोन्तो देवसेनायाः ॥१०—१५ ॥ बलौ महाबलौ । निरुद्धे अहत्वैव कृतविरोधे सति । एवमेतस्य निरोधोपीत्यब्रवीदिति पूर्वेणान्वयः ॥ १६ ॥ ततोन्यमिति ॥ रावणावस्थितदेशादित्यर्थः। रावण सत्यज्येति । वज्रादिना प्रहर्तुमशक्यत्वात् पुरस्थितिर्निष्प्रयोजनेति मत्वेति शेष ॥ १७ ॥ उत्तरेणेति ॥ देवसेनामिति शेष. ॥ १८—१९ ॥ न्यवर्त-

---

**शि०** इन्द्रादीन्वधिष्यामि ब्राह्मणवसिष्ठन्यायेननपूर्वेणपौनरुक्त्य । त्रिदशान्विनिहत्यउपरिस्वर्गे स्वयंस्थास्यामि ॥ ८ ॥ द्विर्ब्रवीमि अस्यावश्यकत्वाद्देवहननस्यसारथ्ये परशरदीर्णतनुकत्वाद्विरुक्ति ॥९॥ **ति०** अपरिमितदेवसेनाया अन्तस्यदुर्ज्ञेयत्वादाह—**अयमिति।** नन्दनमारभ्योदयपर्वतान्तंसेनातिष्ठतीतिभाव ॥ १० ॥ **शि०** तुरगानादिदेश चालयामासेत्यर्थ ॥ ११ ॥ **स०** अनिवर्तक अनिवर्तितुं । ण्वुल्तुमुनोरेकार्थत्वात् । यद्वा निवर्तकेन्द्रस्यदिगन्तरगमनान्नविद्यतेनिवर्तकोयस्यसतथा ॥ १८ ॥ **ति०** दशाननं न्यवर्तयदित्यत्रहेतु असम्भ्रान्त'समावृत्येति ॥ २० ॥

[ **पा०** ] १ क. ख. त्रिःखलु.

एतस्मिन्नन्तरे नादो मुक्तो दानवराक्षसैः ॥ हा हताः स इति ग्रस्तं दृष्ट्वा शक्रेण रावणम् ॥ २१ ॥
ततो रथं समास्थाय रावणिः क्रोधमूर्च्छितः ॥ तत्सैन्यमतिसंक्रुद्धः प्रविवेश सुदारुणम् ॥ २२ ॥
तां प्रविश्य महामायां प्राप्तां गोपतिना पुरा ॥ प्रविवेश सुसंरब्धस्तत्सैन्यं समभिद्रवत् ॥ २३ ॥
स सर्वा देवतास्त्यक्त्वा शक्रमेवाभ्यधावत ॥ महेन्द्रश्च महातेजा नापश्यच्च सुतं रिपोः ॥ २४ ॥
विमुक्तकवचस्तत्र वध्यमानो हि रावणिः ॥ त्रिदशैः सुमहावीरैर्न चकार च किंचन ॥ २५ ॥
समातलिं समायान्तं ताडयित्वा शरोत्तमैः ॥ महेन्द्रं बाणवर्षेण भूय एवाभ्यवाकिरत् ॥ २६ ॥
ततस्त्यक्त्वा रथं शक्रो विससर्ज च सारथिम् ॥ ऐरावतं समारुह्य मृगयामास रावणिम् ॥ २७ ॥
स तत्र मायाबलवानदृश्योथान्तरिक्षगः ॥ इन्द्रं मायापरिक्षिप्तं कृत्वा स प्राद्रवच्छरैः ॥ २८ ॥
स तं यदा परिश्रान्तमिदं जज्ञेऽथ रावणिः ॥ तदैनं मायया बध्वा स्वसैन्यमभितोनयत् ॥ २९ ॥
[1]तं तु दृष्ट्वा बलात्तेन नीयमानं महारणात् ॥ महेन्द्रममराः सर्वे किंनु स्यादित्यचिन्तयन् ॥ ३० ॥
दृश्यते न स मायावी शक्रजित्समितिंजयः ॥ विद्यावानपि येनेन्द्रो मायया नीयते बलात् ॥३१॥
एतस्मिन्नन्तरे क्रुद्धाः सर्वे सुरगणास्तदा ॥ रावणं विमुखीकृत्य शरवर्षैरवाकिरन् ॥ ३२ ॥
रावणस्तु समासाद्य आदित्यांश्च वसूंस्तथा ॥ न शशाक स संग्रामे योद्धुं शत्रुभिरर्दितः ॥ ३३ ॥
स तं दृष्ट्वा परिम्लानं प्रहारैर्जर्जरीकृतम् ॥ रावणिः पितरं युद्धेऽदर्शनस्थोऽब्रवीदिदम् ॥ ३४ ॥
आगच्छ तात गच्छामो [3]रणकर्म निवर्तताम् ॥ जितं नो विदितं तेऽस्तु स्वस्थो भव गतज्वरः ॥३५॥
अयं हि सुरसैन्यस्य त्रैलोक्यस्य च यः प्रभुः ॥ [4]स गृहीतो देवबलाद्भग्नदर्पाः सुराः कृताः ॥ ३६ ॥
यथेष्टं भुङ्क्ष्व लोकांस्त्रीन्निगृह्यारातिमोजसा ॥ वृथा किं ते श्रमेणेह युद्धमद्य तु निष्फलम् ॥ ३७ ॥
ततस्ते दैवतगणा निवृत्ता रणकर्मणः ॥ तच्छ्रुत्वा रावणेर्[5]वाक्यं स्वस्थचेता बभूव ह ॥ ३८ ॥

[6]अथ रणविगतज्वरः प्रभुर्विजयमवाप्य निशाचराधिपः ॥
स्वभवनमभितो जगाम हृष्टः स्वसुतमवाप्य च वाक्यमब्रवीत् ॥ ३९ ॥

---

यत् स्वसेनया दशानन समावृत्य न्यवर्तयत् ॥२०—२१ ॥ तत्सैन्य देवसैन्य ॥ २२ ॥ गोपतिना रुद्रेण ॥२३—२८॥ स्वसैन्यमभितः स्वसेनायाः पार्श्वं ॥२९—३० ॥ विद्यावानपि असुरमायासहार्यपि येनानेन रावणिना मायया नीयते। एतत्किंन्विति चुक्रुशु.॥३१—३३ ॥ युद्धे अदर्शनस्थोब्रवीदिति । सति दर्शने महेन्द्र एव नाशयेदिति भाव. ॥ ३४ ॥ निवर्ततां निवृत्तमस्तु समाप्तमस्तु। कथ निवृत्तिरित्यत्राह—जितमिति । भावे निष्ठा ॥ ३५ ॥ दैवबलात् देवसेनायाः ॥ ३६—३८ ॥ रणविगतज्वर विगतरणज्वर इत्यर्थः

---

**ति०** पुरस्स्थित्वादेवसेनाजयस्याशक्यत्वान्मायाश्रयते—तामिति । समभिद्रवत् समभ्यद्रावयदित्यर्थ ॥ २३ ॥ **ति०** किचन किमपिभयमित्यर्थ ॥ **स०** किचन लक्ष्यत्वेन नचकार। विमुक्तकवच मन्त्रजपाद्यर्थंकवचोन्मोचनज्ञेयं ॥२५॥ **स०** मायापरिक्षिप्त स्वमाययातिरस्कृतंकृत्वा ॥ २८ ॥ **स०** दर्शनस्थ पितृदृष्टिपथमात्रगत ॥ अदर्शनस्थइतिच्छेदेपि इतरदृष्टिपथमप्राप्तइत्यर्थ ॥ ३४ ॥ **ति०** गच्छाम स्वपुरमितिशेष ॥ **शि०** नोस्माभिर्जितं देवजातमितिशेष ॥ ३५ ॥ **स०** देवबलात् देवतासैन्यं प्राप्य ॥ ३६ ॥ **ति०** रणविगत. विगतरण ॥ ३९ ॥ इत्येकोनत्रिंश' सर्ग ॥ २९ ॥

[ पा० ] १ क—घ. तंदृष्ट्वाथबलात्तस्मान्माययाऽपहृतंरणे. २ च. छ. बध्वासुरपतिर्येनमायया. ३ च. छ. निवर्तस्वरणादित . क—घ. निवृत्तंरणकर्मतत् ४ क—घ. च छ. सगृहीतोमयाशक्रोभग्न. ५ ङ—ट वाक्यंशक्रादीना सुरागता . ६ ङ. च छ झ. ञ. ट. अथसरणविगतमुत्तमौजास्त्रिदशरिपु प्रथितोनिशाचरेन्द्र । स्वसुतवचनमादृत प्रियतत्समनुनिशम्यजगादचैवसूनुम्

अतिबलसदृशैः पराक्रमैस्तैर्मम कुलमानविवर्धनं कृतम् ॥
यदयमतुल्यबलस्त्वयाऽद्य वै त्रिदशपतिस्त्रिदशाश्च निर्जिताः ॥ ४० ॥
नय रथमधिरोप्य वासवं नगरमितो व्रज सेनया वृतस्त्वम् ॥
अहमपि तव गच्छतो द्रुतं सह सचिवैरनुयामि पृष्ठतः ॥ ४१ ॥
अथ स बलवृतः सवाहनस्त्रिदशपतिं परिगृह्य रावणिः ॥
स्वभवनमभिगम्य वीर्यवान्कृतसमरान्विससर्ज राक्षसान् ॥ ४२ ॥
[ तान्विसृज्य तदा रक्षो महेन्द्रं पाकशासनम् ॥ बबन्ध नगरद्वारि मध्ये क्रीडननिर्वृतः ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

---

## त्रिंशः सर्गः ॥ ३० ॥

इन्द्रजिद्बद्धेन्द्रमोचनायदेवगणप्रार्थितेनब्रह्मणा तैस्सहलङ्कामेत्य रावणंप्रतीन्द्रमोचनचोदना ॥ १ ॥ तथेन्द्रजिते तदीप्सितावध्यत्ववरदानपूर्वकं तस्मादिन्द्रमोचनम् ॥ २ ॥ तथा बन्धनलज्जितमिन्द्रंप्रति तत्कृताहल्याधर्षणादिस्मारणपूर्वकं तस्यबन्धनहेतुत्वनिवेदनम् ॥ ३ ॥ इन्द्रेण ब्रह्मचोदनयायजनेन पुनरिन्द्रासनारोहणम् ॥ ४ ॥ एवमगस्त्येन रामप्रतीन्द्रजित्पराक्रमादिकथनम् ॥ ५ ॥

जिते महेन्द्रेऽतिबले रावणस्य सुतेन वै ॥ [ प्रजापतिं सुराः सर्वे गताः परमदुःखिताः ॥ १ ॥
भगवन्पुरुहूतोऽयं निगृहीतोऽभवद्वरात् ॥ राक्षसेन्द्रं सुरैः सर्वैरवध्यं कृतवानसि ॥ २ ॥
महेश्वरेण पुत्रस्य वरा दत्ता दुरात्मनः ॥ किं करोतु सुरेन्द्रस्तं मायया बलवत्तरम् ॥ ३ ॥
सुराश्च सर्वे लोकेश न जयन्ति भवद्वरात् ॥ तस्मात्त्वमेव देवेन्द्रं मोचयस्व महाद्युते ॥
अद्यप्रभृति लोकेश स्वविक्रमबलोदितः ॥ ४ ॥
इति विज्ञाप्य भावज्ञाः प्रणिपत्य प्रसाद्य च ॥ प्रजापतिं पुरस्कृत्य ययुर्लङ्कां सुरास्तदा ॥ ५ ॥
तत्र रावणमासाद्य पुत्रभ्रातृभिरावृतम् ॥ अब्रवीद्गगने तिष्ठन्सामपूर्वं प्रजापतिः ॥ ६ ॥
वत्स रावण तुष्टोस्मि पुत्रस्य तव संयुगे ॥ अहोस्य विक्रमौदार्यं तव तुल्योधिकोपि वा ॥ ७ ॥
जितं हि भवता सर्वं त्रैलोक्यं स्वेन तेजसा ॥ कृता प्रतिज्ञा सफला प्रीतोस्मि स्वसुतेन वै ॥ ८ ॥
अयं च पुत्रोतिबलस्तव रावण वीर्यवान् ॥ जगतीन्द्रजिदित्येव परिख्यातो भविष्यति ॥ ९ ॥

---

॥ ३९—४० ॥ त्वरितमुपनयस्वेति पाठे निर्जिता इति पूर्वेणान्वय. ॥ ४१ ॥ राक्षसान्विससर्जेति स्वं स्वं निवेश प्रतीति शेष. ॥ ४२—४३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकोनत्रिंश. सर्ग.॥२९॥

अहोस्येति सधिरार्षः॥ ७॥ स्वसुतेन स्वसुतबलेन। त्वया कृता प्रतिज्ञा चतुरो दिक्पालान् जेष्यामीति

---

ति० तवतुल्य । एषइतिशेष ॥ स० अधिकोपिवा मायायोवने ॥ ७ ॥

[ पा० ] १ क. ख घ. यदमरसमविक्रमत्वयावै ङ झ ञ. यदयमतुलबलस्त्वया. २ ङ—ट तवपृष्ठतोद्रुतं. ३ ङ—ट हृष्टवत्. ४ क.—घ. मभिगम्यराक्षसोमुदितमनाविससर्ज ५ अयंश्लोक ख ग. पाठयोर्दृश्यते. ६ प्रजापतिंसुरा सर्वेइत्यादय, प्रणिपत्यप्रसाद्यचेत्यन्ता श्लोका क—घ. पाठेषुदृश्यन्ते. ७ क—घ. गतालङ्का. ८ ङ. च छ. झ. ट. स्वसुतस्यते

बलवान्दुर्जयश्चैव भविष्यत्येव राक्षसः ॥ यं समाश्रित्य ते राजन्स्थापितास्त्रिदशा वशे ॥ १० ॥
तन्मुच्यतां महाबाहो महेन्द्रः पाकशासनः ॥ किं चास्य मोक्षणार्थाय प्रयच्छन्तु दिवौकसः ॥११॥
अथाब्रवीन्महातेजा इन्द्रजित्समितिंजयः ॥ अमरत्वमहं देव वृणे[1] यद्येष मुच्यते ॥ १२ ॥
[2]चतुष्पदां खेचराणामन्येषां च महौजसाम् ॥ वृक्षगुल्मक्षुपलतातृणोपलमहीभृताम् ॥ १३ ॥
सर्वेपि जन्तवोऽन्योन्यं भेतव्ये सति बिभ्यति ॥ अतोत्र लोके सर्वेषां सर्वस्माच्च भवेद्भयम् ॥१४॥
ततोऽब्रवीन्महातेजा मेघनादं प्रजापतिः ॥ नास्ति सर्वामरत्वं हि कस्य[3]चित्प्राणिनो भुवि ॥
चतुष्पदः पक्षिणश्च भूतानां वा महौजसाम् ॥ १५ ॥
[[4]मरणान्तानि सर्वाणि स्थावराणि चराणि च ॥ अपि शुष्कस्य वृक्षस्य पर्णस्य पतनं भवेत् ॥१६॥]
श्रुत्वा पितामहेनोक्तमिन्द्रजित्प्रभुणाऽव्ययम् ॥ अथाब्रवीत्स तत्र[5]स्थं मेघनादो महाबलः ॥
श्रूयतां वा भवेत्सिद्धिः शतक्रतुविमोक्षणे ॥ १७ ॥
ममेष्टं नित्यशो हव्यैर्मन्त्रैः संपूज्य पावकम् ॥ संग्राममवतर्तुं च शत्रुनिर्जयकाङ्क्षिणः ॥ १८ ॥
अश्वयुक्तो रथो मह्यमुत्तिष्ठेत्तु विभावसोः ॥ तत्स्थस्यामरता स्यान्मे एष मे निश्चयो वरः ॥ १९ ॥
तस्मिन्यद्यसमाप्ते च जप्यहोमे विभावसौ ॥ युध्येयं देव संग्रामे तदा मे स्याद्विनाशनम् ॥ २० ॥
सर्वो हि तपसा देव वृणोत्यमरतां पुमान् ॥ विक्रमेण मया त्वेतदमरत्वं प्रवर्तितम् ॥ २१ ॥
एवमस्त्विति तं चाह वाक्यं देवः पितामहः ॥ मुक्तश्चेन्द्रजिता शक्रो गताश्च त्रिदिवं सुराः ॥२२॥
एतस्मिन्नन्तरे राम दीनो भ्रष्टामरद्युतिः ॥ इन्द्रश्चिन्तापरीतात्मा ध्यानतत्परतां गतः ॥ २३ ॥
तं तु दृष्ट्वा तथाभूतं प्राह देवः प्रजापतिः ॥ शतक्रतो किमु पुरा करोति स्म सुदुष्करम् ॥ २४ ॥
अमरेन्द्र मया बह्व्यः प्रजाः सृष्टास्तदा प्रभो ॥ एकवर्णाः समाभाषा एकरूपाश्च सर्वशः ॥ २५ ॥

---

कृता प्रतिज्ञा ॥ ८—१४ ॥ तत इत्यादिसार्धमेकवाक्यं ॥ सर्वामरत्व सर्वस्मादपि निमित्तात्सर्वस्मिन्नपि काले मरणराहित्यं भुवि मत्सृष्टप्राणिनां नास्ति पक्ष्यादिभ्यो यन्मरण ॥ १५—१६ ॥ पूर्वोक्तविवरणमेतत् श्रूयतामिति । वा अथवेत्यर्थ. । सर्वामरत्वाभावेपि शतक्रतुविमोक्षणे तन्निमित्त मया सिद्धिः कांक्षिता सा श्रूयता ॥१७॥ नित्यशो नियमेन । हव्यै पावक सपूज्य शत्रुनिर्जयकाङ्क्षिणः सग्राममवतर्तुं प्रवेष्टु वाञ्छतो ममाश्वयुक्तो रथो विभावसोरग्ने. तत्कालमुत्तिष्ठेत तत्स्थस्य मे सग्रामे अमरता स्यादेव एष मे निश्चयो वर: ॥१८—१९॥ तस्मिन् साग्रामिकयागे अपेक्षिते विभावसौ जप्यहोमे चासमाप्ते तु विघ्नवशादसमाप्ते तु यदि युध्येय तदैव संग्राम एव विनाशनं भवत्विति ममेष्टमिति सबन्ध. । प्रकारान्तरेण विनाशो माभूदित्यर्थः ॥२०॥मयात्रैतदद्भुतं लोकविलक्षण प्राप्यत इति विस्मयते —सर्व इत्यादि॥ प्रवर्तितं प्रकीर्तित। दातव्यत्वेनेति शेषः ॥ २१—२२ ॥ भ्रष्टामरद्युतिः भ्रष्टामराणां देवाना द्युतिर्यस्य स तथा ॥ २३ ॥ हे शतक्रतो एवमिदानी शोचन्भवान् पुरा सुदुष्कर किमु करोति स्म । कस्मात्कृतवानसीत्यर्थ. ॥ २४ ॥ एतादृशदुःखबीज मया

---

ति० तन्मुच्यता त्रिदशानावशेस्थापितत्वात्तावतएवार्थस्यत्वत्सपाद्यत्वादितिभाव । अस्यमोक्षणार्थाय अन्यदप्यभीष्टदिवौकस. किंप्रयच्छन्तु तद्वदेतिशेष ॥ ११ ॥ शि० मुच्यते मोच्यते ॥ १२ ॥ तत्रस्थ गगनग ॥ १७ ॥ शि० इदंयाचितंत्वरितमेवदेहीतिबोधयन्नाह—सर्वइति ॥ सर्वोजनस्तपसाऽमरतांवृणोति । मयातुविक्रमेण इन्द्रनिग्रहेणेत्यर्थ । एतदमरत्व प्रवर्तितं वृतं । एतेनवरप्राप्तिमन्तराइन्द्रमोक्षोनभवितेतिध्वनित ॥ २१ ॥

[ पा० ] १ क—घ. वृणोम्यस्यविमोक्षणे. २ चतुष्पदामित्यादिश्लोकद्वयं झ पाठेनदृश्यते ३ घ. केषाचित्प्राणिनामिह. ४ अयंश्लोक क—घ. ज. पाठेदृश्यते. ५ क—घ. च ज. तत्रस्थमिन्द्रजितपद्मसभवं.

तासां नास्ति विशेषो हि दर्शने लक्षणेऽपि वा ॥ ततोऽहमेकाग्रमनास्ताः प्रजाः पर्यचिन्तयम् ॥२६॥
सोहं तासां विशेषार्थं स्त्रियमेकां विनिर्ममे ॥ यद्यत्प्रजानां प्रत्यङ्गं विशिष्टं तत्तदुद्धृतम् ॥ २७ ॥
ततो मया रूपगुणैरहल्या स्त्री विनिर्मिता ॥ हलं नामेह वैरूप्यं हल्यं तत्प्रभवं भवेत् ॥ २८ ॥
यस्मान्न विद्यते हल्यं तेनाहल्येति विश्रुता ॥ अहल्येति मया शक्र तस्या नाम प्रवर्तितम् ॥ २९ ॥
निर्मितायां च देवेन्द्र तस्यां नार्यां सुरर्षभ ॥ भविष्यतीति कस्यैषा मम चिन्ता ततोऽभवत् ॥३०॥
त्वं तु शक्र तदा नारीं जानीषे मनसा प्रभो ॥ स्थानाधिकतया पत्नी ममैषेति पुरन्दर ॥ ३१ ॥
सा मया न्यासभूता तु गौतमस्य महात्मनः ॥ न्यस्ता बहूनि वर्षाणि तेन निर्यातिता च ह ॥३२॥
ततस्तस्य परिज्ञाय मया स्थैर्यं महामुनेः ॥ ज्ञात्वा तपसि सिद्धिं च पत्न्यर्थं स्पर्शिता तदा ॥ ३३ ॥
स तया सह धर्मात्मा रमते स महामुनिः ॥ आसन्निराशा देवास्तु गौतमे दत्तया तया ॥ ३४ ॥
संक्रुद्धस्त्वं हि धर्मात्मन्गत्वा तस्याश्रमं मुनेः ॥ दृष्टवांश्च तदा तां स्त्रीं दीप्तामग्निशिखामिव ॥ ३५ ॥
सा त्वया धर्षिता शक्र कामार्तेन समन्युना ॥ दृष्टस्त्वं च तदा तेन ह्याश्रमे परमर्षिणा ॥ ३६ ॥
ततः क्रुद्धेन तेनासि शप्तः परमतेजसा ॥ गतोसि येन देवेन्द्र दशाभागविपर्ययम् ॥ ३७ ॥
यस्मान्मे धर्षिता पत्नी त्वया वासव निर्भयम् ॥ तस्मात्त्वं समरे राजञ्छत्रुहस्तं गमिष्यसि ॥ ३८ ॥
अयं तु भावो दुर्बुद्धे यस्त्वयेह प्रवर्तितः ॥ मानुषेष्वपि लोकेषु भविष्यति न संशयः ॥ ३९ ॥
तत्रार्धं तस्य यः कर्ता त्वय्यर्धं निपतिष्यति ॥ न च ते स्थावरं स्थानं भविष्यति न संशयः ॥४०॥
यश्च यश्च सुरेन्द्रः स्याद्ध्रुवः स न भविष्यति ॥ एष शापो मया मुक्त इत्यसौ त्वां तदाऽब्रवीत् ॥४१॥
तां तु भार्यां स निर्भर्त्स्य सोऽब्रवीत्सुमहातपाः ॥ दुर्विनीते विनिध्वंस ममाश्रमसमीपतः ॥ ४२ ॥

कृतमित्यत्राह—अमरेन्द्रेत्यादि ॥ एकवर्णाः समाभाषा एकरूपकान्तिस्वराः । एकरूपाः समानवयोव स्थ-कालाः ॥ २५ ॥ दर्शने सौन्दर्ये लक्षणे नयनाद्यवय-वसौष्ठवे च तासां विशेषो नासीत् । ततोहमिति । एका-ग्रमनाः सावधानः सन् ताः प्रजा उद्दिश्य पर्यचिन्तय । तासां विशेषकरणप्रकारमचिन्तय वा ॥२६॥ तासां वि-शेषार्थं किंचित्किंचिदङ्गवैकल्यप्रयुक्तपरस्परवैलक्षण्य-सिद्ध्यर्थमेकां स्त्रियं विनिर्ममे निर्मितवानस्मि । प्रत्यङ्गं अङ्गमङ्गं यद्यद्विशिष्टं सारभूतं सौन्दर्यं तत्तदुद्धृतं ॥२७॥ रूपगुणैः प्रत्यङ्गमुद्धृतैः सौन्दर्यगुणैः । अहल्या नामा-ङ्गना काचिद्विनिर्मिता ॥ २८—२९ ॥ भविष्यतीति कस्यैषा पत्नी भविष्यतीति चिन्ताऽभवत् । तत्तुल्यवरा-भावादिति भावः ॥३०॥ स्थानाधिकतया त्रैलोक्याधि-पतित्वेन हेतुनेत्यर्थः। ममैषा पत्नीति मनसा जानीषे । अस्मदनुमतिं विना तां प्रार्थितवानसीत्यर्थः ॥ ३१ ॥ निर्यातिता पुनः प्रत्यर्पिता ॥ ३२ ॥ स्थैर्यं जितेन्द्रियत्वं तपसि तपोविषये । स्पार्शिता दत्ता ॥ ३३—३६ ॥ दशाभागविपर्ययं दशाभागोऽवस्थाविशेषः तस्य विप-र्ययं सहजसात्त्विकावस्थाविपर्ययमित्यर्थः ॥ ३७—३८ ॥ अयं भावः मानुषेष्वपि शास्त्राधिकारिष्वपि भविष्यति । राज्ञस्तव दोषादिति भावः ॥ ३९ ॥ तत्र जारभावे यो धर्मः समुत्थास्यति तस्य यः कर्ता तत्र पुरुषे तस्याधर्मस्यार्धं निपतिष्यति त्वय्यर्धं निपतिष्य-तीत्यर्थः । "राजा राष्ट्रकृतं पापं" इति न्यायात् । स्थावरं स्थिरं । स्थानं पदं ॥ ४० ॥ न केवलं तवैवा-स्थिरत्वं अपितु अन्यस्यापि जारस्येत्याह—यश्चेति ॥

ति० तत्प्रभवं वैरूप्यप्रभवं । हल्यं निन्द्यं ॥२८॥ स० अस्मान्विहायैयवनितामुनयेदत्तेतिमन्युसहितेन । समन्युनापि शतवारविर-चितयज्ञेनापि । धर्षिता । अनेनसत्कर्मकरणमपीश्वरकरुणाविनानकुशलोपलंभकमितिसूचितभवति ॥ ३६ ॥ ति० दशाभाग अवस्थाभेद ऐश्वर्यरूप तस्यविपर्ययं बन्धनरूपाविपरीतावस्था ॥ ३७ ॥ स० अयंभाव जारभाव. । मानुषेषु त्वत्स्वामिकेषु भविष्यति । राजदोषात् ॥ ३९ ॥ ति० विनिध्वंस ध्वस्तसौख्याभव ॥ स० विनिध्वंस चेतनत्वादिध्वस्ताभव ॥ ४२ ॥

[ पा० ] १ क—छ, झ, ञ प्रकीर्तित. २ च झ. ञ. ट. निर्भयात्.

[ ¹समेष्टं पावकं दीप्तं हविषा पूज्य देववत् ॥ ब्रह्मवर्षसहस्राणि रामं संपूज्य मोक्ष्यसे ॥
तदैव हि भवेत्सुभ्रूस्तव पापस्य संक्षयः ] ॥ ४३ ॥
रूपयौवनसंपन्ना यस्मात्त्वमनवस्थिता ॥ तस्माद्रूपवती लोके न त्वमेका भविष्यति ॥ ४४ ॥
रूपं च ते प्रजाः सर्वा गमिष्यन्ति न संशयः ॥ ²यत्तदेकं समाश्रित्य विभ्रमोऽयमुपस्थितः ॥ ४५ ॥
तदाप्रभृति भूयिष्ठं प्रजा रूपसमन्विताः ॥ सा तं प्रसादयामास महर्षिं गौतमं तदा ॥ ४६ ॥
अज्ञानाद्धर्षिता नाथ त्वद्रूपेण दिवौकसा ॥ न कामकाराद्विप्रर्षे प्रसादं कर्तुमर्हसि ॥ ४७ ॥
अहल्यया त्वेवमुक्तः प्रत्युवाच स गौतमः ॥ उत्पत्स्यति महातेजा इक्ष्वाकूणां महारथः ॥ ४८ ॥
रामो नाम श्रुतो लोके वनं चाप्युपयास्यति ॥ ब्राह्मणार्थे महाबाहुर्विष्णुर्मानुषविग्रहः ॥ ४९ ॥
तं द्रक्ष्यसि यदा भद्रे ततः पूता भविष्यसि ॥ स हि पावयितुं शक्तस्त्वया यद्दुष्कृतं कृतम् ॥५०॥
तस्यातिथ्यं च कृत्वा वै मत्समीपं गमिष्यसि ॥ वत्स्यसि त्वं मया सार्धं तदा हि वरवर्णिनि ॥५१॥
एवमुक्त्वा स विप्रर्षिराजगाम स्वमाश्रमम् ॥ ततश्चचार सुमहत्तपो सा पत्नी ब्रह्मवादिनः ॥ ५२ ॥
शापोत्सर्गाद्धि तस्येदं मुनेः सर्वमुपस्थितम् ॥ तत्स्मर त्वं महाबाहो दुष्कृतं यत्त्वया कृतम् ॥
तेन त्वं ग्रहणं शत्रोर्यातो नान्येन वासव ॥ ५३ ॥
शीघ्रं वै यज यज्ञं त्वं वैष्णवं सुसमाहितः ॥ पावितस्तेन यज्ञेन यास्यसे त्रिदिवं ततः ॥ ५४ ॥
पुत्रश्च तव देवेन्द्र न विनष्टो महारणे ॥ नीतः सन्निहितश्चैव आर्यकेण महोदधौ ॥ ५५ ॥
एतच्छ्रुत्वा महेन्द्रस्तु यज्ञमिष्ट्वा च वैष्णवम् ॥ पुनस्त्रिदिवमाक्रामदन्वशासच्च देवराट् ॥ ५६ ॥
एतदिन्द्रजितो नाम बलं यत्कीर्तितं मया ॥ निर्जितस्तेन देवेन्द्रः प्राणिनोऽन्ये तु किं पुनः ॥५७॥
आश्चर्यमिति रामश्च लक्ष्मणश्चाब्रवीत्तदा ॥ अगस्त्यवचनं श्रुत्वा वानरा राक्षसास्तदा ॥ ५८ ॥

---

हे सुरेन्द्र य एव जारः स्यात्सोपि ध्रुवो मा भविष्यतीत्यर्थः ॥ ४१—४३ ॥ रूपेति ॥ ममाश्रमसमीपतो यस्मात्त्वमनवस्थिता तस्मादेवैतत्पर्यन्तं त्वमेकैव रूपवतीति यत् स्थितं तन्न भविष्यति ॥ ४४ ॥ तद्रूपप्रसिद्धं तव सौन्दर्यं सर्वा प्रजा स्त्रियः गमिष्यन्तीति। विभ्रमः काममोहः ॥ ४५—५२ ॥ नान्येनेति । नतु हेत्वन्तरेणेत्यर्थः ॥ ५३—५४ ॥ आर्यकेण मातामहेन । नीतः महोदधौ सन्निहितः सम्यङ् निहितः निक्षिप्तः ॥ ५५—५७ ॥ रामः अगस्त्यवचः श्रुत्वा आश्चर्यमित्यब्रवीत् । तथा लक्ष्मणः तथा वानरराक्षसाश्चाब्रु-

---

ति० किंतुतावकंसुन्दररूपंसर्वा प्रजा गमिष्यन्ति । स० त्वमेकारूपवतीनभविष्यसि। बह्व्योरूपवत्योभवन्तिभामिन्य इतिभाव ॥ एकं लोकविलक्षणरूपसमाश्रित्य विभ्रम परसङ्गप्रापकोमोह' उपस्थित 'विभ्रम कामविकार । उपस्थित प्रवृत्त । इन्द्रस्येतिशेष' ' इतिनागोजिभट्ट । पत्नीशापप्रसक्तिसमयोऽयमितिपरपरोपयोगो न साक्षादितिकिञ्चिदस्वारस्यतत्रबोध्यम् ॥४५॥ स० त्वद्रूपेण ' मुनिवेषंसमास्थायेतिप्रागुदीरणात् । नकामकारात् तद्रमणेच्छाया । यद्यपिदेवराजकुतूहलात् 'प्रहृष्टेनान्तरात्मना ' इतिवचनान्मनसानुमेनेकामिनीमहेन्द्रसगमितिज्ञायते । तथापिबहिस्तथाऽप्रदर्शनान्नकामकारादित्युक्तिरिति वा कदापिप्रमदानभवेत्येतादृशशापोपयोगिकामकाराभावान्नकामकारादित्युक्तिरिति वेतिज्ञेयोऽविरोध ॥ ननु 'अहल्याजारत्वाद्यपिदोषकृतोपितेनबहुतरोलोपआसीदित्युत्कर्षमेववक्ति 'बहुनरकफलोह्यसौतस्यनलोमचक्षीयते ' इतिश्रुत्यन्तराच्चे'तिगीताभाष्योक्ते कथविधिनेन्द्रस्यपदभ्रंशइवारिकरपरिग्रहादिगौतमशापनिमित्तइतिकथितमितिचेन्न । पारत्रिकानन्दह्रासादिर्यथा सोदरदारपरिग्रहेसुग्रीवादे तथानास्तिभाव्यानन्दह्रासादिरितिबहुनरकफलोह्यसावितिवदतोभाष्यकृतोऽनुमतऐहिकोऽनर्थइत्यविरोधइतिकात्रकथन्ता ॥ ४७ ॥ ति० ब्राह्मणार्थे विश्वामित्रार्थे ॥ ४९ ॥ शि० विनष्टोमृतोनभविष्यतीतिशेष ॥ ५५ ॥ ति० यज्ञमिष्ट्वेति । देवानानयज्ञेष्वधिकारइतिजैमिन्युक्तंतुप्रमादादितिनिरूपितप्राक् ॥ ५६ ॥

[ पा० ] १ इदमर्धत्रयं ख. ग. पाठयोर्दृश्यते. २ ग च. ज. यत्तदेकं

विभीषणस्तु रामस्य पार्श्वस्थो वाक्यमब्रवीत् ॥ आश्चर्यं स्मारितोस्म्यद्य यत्तदृष्टं पुरातनम् ॥ ५९ ॥
अगस्त्यं त्वब्रवीद्रामः सत्यमेतच्छ्रुतं च मे ॥ ६० ॥
एवं राम समुद्भूतो रावणो लोककण्टकः ॥ सपुत्रो येन संग्रामे जितः शक्रः सुरेश्वरः ॥ ६१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे त्रिंशः सर्गः ॥ ३० ॥

## एकत्रिंशः सर्गः ॥ ३१ ॥

अगस्त्यमुखाद्दृष्टशोरावणविजयश्राविणारामेण तम्प्रति रावणजेतृसत्त्वसंदेहेनप्रश्ने तम्प्रत्यगस्त्येन रावणपराजयकथनोप्रक्रम. ॥ १ ॥ कार्तवीर्यार्जुनजिगीषयामाहिष्मतीगतेनरावणेन तदमात्यान्प्रति राज्ञिरणायनिजाह्वाननिवेदनचोदना ॥२॥ तैर्नगरेऽर्जुनासान्निध्यबोधितेनरावणेन नर्मदामेत्य तत्रस्नानाह्निककरणपूर्वकं तत्पुलिनेसचिवानीतकुसुमादिसाधनैः शिवलिङ्गार्चनोपक्रम. ॥ ३ ॥

ततो रामो महातेजा विस्मयात्पुनरेव हि ॥ उवाच प्रणतो वाक्यमगस्त्यमृषिसत्तमम् ॥ १ ॥
भगवन्राक्षसः क्रूरो यदाप्रभृति मेदिनीम् ॥ पर्यटत्किं तदा लोकाः शून्या आसन्द्विजोत्तम ॥ २ ॥
राजा वा राजमात्रो वा किं तदा नात्र कश्चन ॥ धर्षणं येन न प्राप्तो रावणो राक्षसेश्वरः ॥ ३ ॥
उताहो हतवीर्यास्ते बभूवुः पृथिवीक्षितः ॥ बहिष्कृता वरास्त्रैश्च बहवो निर्जिता नृपाः ॥ ४ ॥
राघवस्य वचः श्रुत्वा ह्यगस्त्यो भगवानृषिः ॥ उवाच रामं प्रहसन्पितामह इवेश्वरम् ॥ ५ ॥
इत्येवं बाधमानस्तु पार्थिवान्पार्थिवर्षभ ॥ चचार रावणो राम पृथिवीं पृथिवीपते ॥ ६ ॥
ततो माहिष्मतीं नाम पुरीं स्वर्गपुरीप्रभाम् ॥ संप्राप्तो यत्र सान्निध्यं सदाऽऽसीद्वसुरेतसः ॥ ७ ॥
तुल्य आसीन्नृपस्तस्य प्रभावाद्वसुरेतसः ॥ अर्जुनो नाम यत्राग्निः शरकुण्डेशयः सदा ॥ ८ ॥

वन्नित्यनुषङ्गः ॥ ५८ ॥ हे राम अगस्त्यस्तु आश्चर्यं यद्दृष्टं पुरातनमब्रवीत्तत्सर्वं मया दृष्टं इदानीमहं स्मारितोस्मि । विभीषणसंवादेन सर्वस्यागस्त्योक्तस्य सत्यत्वं दर्शितम् ॥ ५९—६१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

येन कारणेन रावणो धर्षणं न प्राप्तः । तस्मात्तदा तत्काले राजाक्षत्रियोवा राजमात्रोवा अक्षत्रियोपि प्रभुर्वा कश्चन नासीत् ॥ ३ ॥ उताहो इति पक्षान्तरे वर्तते । अथवा विद्यमानाएव पृथिवीक्षितः हतवीर्याः वीर्यरहिता आसन् । अथवा वीर्यवत्त्वेपि वरास्त्रैर्दिव्यास्त्रैर्बहिष्कृता. सन्तः निर्जिता. इत्युवाचेति पूर्वेणान्वयः ॥ ४ ॥ रावणापजयस्मरणप्रीत्या प्रहसन्नित्युक्त । रामस्यामर्षो वर्तत इति मुनेर्मन्दहासो वा । ईश्वरं अग्निप्रधानशौर्यादिक्षत्रगुणं रुद्रं ॥ ५—६ ॥ वसुरेतसः अग्नेः सान्निध्यं प्राकाररूपेण नित्यसान्निध्यमित्यर्थ. ॥ ७ ॥ शरकुण्डेशयः शरास्तरणवत्

स० मन्त्रातृतत्पुत्रकृतमाश्चर्यंस्मारितोस्मि ॥ ५९ ॥ इतित्रिंश सर्गं ॥ ३० ॥

ति० विस्मयात् भगवत्प्रसादवैभवश्रवणजविस्मयादिव ॥ १ ॥ ति० लोका मनुष्यलोकप्राणिन । शून्या शूरत्वगुणशून्या स० लोका. शून्या निर्वीरा ॥ २ ॥ ति० तस्याग्ने प्रभावात् प्रसादात् । वसुरेतस अग्ने । तुल्यआसीत् । यत्र अर्जुनराज्यवेलाया अग्नि.शरकुण्डेशय शरास्तृतकुण्डेवसति । शत्रूणामभिचारार्थशरपरिस्तृतकुण्डेनित्यसंनिहितोवर्ततइत्यर्थ ॥ ८ ॥

[ पा० ] १ ग. च छ ट. यत्रन. २ क. ज हीनवीर्यास्ते. ग. च. छ हीनसत्वास्ते ३ च छ. ञ तस्यासीद्वसुरेतस.. घ. ञ. प्रथमंवसुरेतस , क. परमंवसुरेतस . ४ क. ज स्वत्रप्रतापात् ५ क. ज. यस्याग्नि .

तमेव दिवसं सोथ हैहयाधिपतिर्बली ॥ अर्जुनो नर्मदां रन्तुं गतः स्त्रीभिः सहेश्वरः ॥ ९ ॥
तमेव दिवसं सोथ रावणस्तत्र आगतः ॥ [1]रावणो राक्षसेन्द्रस्तु तस्यामात्यानपृच्छत ॥ १० ॥
क्वार्जुनो नृपतिः शीघ्रं सम्यगाख्यातुमर्हथ ॥ रावणोऽहमनुप्राप्तो युद्धेप्सुर्नृवरेण ह ॥
ममागमनम[2]प्यग्रे युष्माभिः सन्निवेद्यताम् ॥ ११ ॥
इत्येवं राव[3]णोक्तास्ते अमात्याः सुविपश्चितः ॥ अब्रुवन्राक्षसपतिमसान्निध्यं महीपतेः ॥ १२ ॥
श्रुत्वा विश्रवसः पुत्रः पौराणामर्जुनं गतम् ॥ अपसृत्यागतो विन्ध्यं हिमवत्सन्निभं गिरिम् ॥१३॥
स तमभ्रमिवाविष्टमुद्भ्रान्तमिव मेदिनीम् ॥ अपश्यद्रावणो विन्ध्यमालिखन्तमिवाम्बरम् ॥ १४ ॥
सहस्रशिखरोपेतं सिंहाध्युषितकन्दरम् ॥ प्रपातप[4]तितैस्तोयैः साट्टहासमिवाम्बुधिम् ॥ १५ ॥
देवदानवगन्धर्वैः साप्सरोगणकिन्नरैः ॥ स्वस्त्रीभिः क्रीडमानैश्च स्वर्गभूतं महोच्छ्रयम् ॥ १६ ॥
नदीभिः स्यन्दमानाभिः स्फाटिकप्रतिमं जलम् ॥ फणाभिश्चलजिह्वाभिरनन्तमिव विष्ठितम् ॥१७॥
उत्क्रामन्तं दरीवन्तं हिमवत्सन्निभं गिरिम् ॥ पश्यमानस्ततो विन्ध्यं रावणो नर्मदां ययौ ॥
चलोपलजलां पुण्यां पश्चिमोदधिगामिनीम् ॥ १८ ॥
महिषैः सृमरैः सिंहैः शार्दूलर्क्षगजोत्तमैः ॥ उष्णाभितप्तैस्तृषितैः संक्षोभितजलाशयाम् ॥ १९ ॥
चक्रवाकैः सकारण्डैः सहंसजलकुक्कुटैः ॥ सारसैश्च सदा मत्तैः सुकूजद्भिः समावृताम् ॥ २० ॥
फुल्लद्रुमकृतोत्तंसां चक्रवाकयुगस्तनीम् ॥ विस्तीर्णपुलिनश्रोणीं हंसावलिसुमेखलाम् ॥ २१ ॥
पुष्परेण्वनुलिप्ताङ्गीं जलफेनामलांशुकाम् ॥ जलावगाहसंस्पर्शां फुल्लोत्पलशुभेक्षणाम् ॥ २२ ॥
पुष्पकादवरुह्याशु नर्मदां सरितां वराम् ॥ इष्टामिव वरां नारीमवगाह्य दशाननः ॥ २३ ॥
स तस्याः पुलिने रम्ये [5]नानामुनिनिषेविते ॥ उपोपविष्टैः सचिवैः सार्धं राक्षसपुङ्गवः ॥ २४ ॥
प्रख्याय नर्मदां चाथ गङ्गेयमिति रावणः ॥ नर्मदादर्शजं हर्षमाप्तवान्राक्षसाधिपः ॥ २५ ॥
उवाच सचिवांस्तत्र सलीलं शुकसारणौ ॥ २६ ॥
एष रश्मिसहस्रेण जगत्कृत्वेव काञ्चनम् ॥ तीक्ष्णतापकरः सूर्यो [6]नभसोऽर्धं समाश्रितः ॥

कुण्डमग्निकुण्ड तत्र शेत इति तथा । पचाद्यच् । "शयवासवासिषु" इत्यलुक् ॥ ८ ॥ तमेवदिवसमिति, यस्मिन्दिवसे रावणोगतस्तस्मिन्नेव दिवसइत्यर्थः। स्त्रीभी रन्तु नर्मदां गत इत्यन्वय.। ईश्वरः राजा ॥९—११॥अब्रुवन् ब्रुवते स्म ॥१२॥ विश्रवस पुत्रो रावणः। पौराणा मुखादिति शेष । अपसृत्य पुरान्निवृत्त्य॥१३॥ स इत्यादिसार्धपञ्चकं ॥ अभ्रमिव महामेघमिवाविष्टं । मेदिनीमुद्भ्रान्तमिव उद्भिद्योद्गतमिव ॥१४॥ सहस्रशिखरोपेत । प्रपातपतितैः तटात्पतितैः । "प्रपातस्तु तट" इत्यमर'॥१५—१६॥ स्फटिकप्रतिमं जल स्यन्दमानाभिर्नदीभिर्हेतुभिर्जिह्वाभिरुपलक्षितमनन्तमिव विष्ठित ॥ १७ ॥ उत्क्रामन्तऊर्ध्वं व्याप्नुवान । उत्कावन्तमिति पाठान्तरं । चलोपलजलां उपलेपु चलानि जलानि यस्यास्तां । चलोपलामलामिति पाठे जलवेगेन चलोपलतया निर्मलां ॥ १८—२० ॥ अथ नर्मदायाः स्त्रीसाम्यमाह–फुल्लद्रुमेत्यादिना ॥ २१—२४ ॥ नर्मदां गङ्गेयमिति प्रख्याय प्रशस्य ॥ २५ ॥ सलील सविलास ॥ २६ ॥ एष इत्यादिसार्धं ॥ काञ्चनं कृत्वा

ति० जनानाजलावगाहेसुखम्पर्शरूपगुणोयस्यास्ता ॥ २३ ॥ ति० नर्मदा गङ्गेयमिति प्रख्याय प्रशस्य । अनेन नर्मदायास्तद्गतपापनाशकत्वंतत्तटकृतशिवपूजादेर्महाफलत्वगङ्गाया सर्वोत्कृष्टत्वचसूचितम् ॥ २५ ॥ स० चन्द्रायति चन्द्रायते ॥

[ पा० ] १ एतदर्धस्यस्थाने. क. घ. पाठयो रावणोराक्षसेन्द्रस्तुतस्मिन्प्राप्यदिनेपुरी । अपश्यन्हैहयेशंतुतस्यामात्यानपृच्छत. इत्येक श्लोकोदृश्यते. २ क ख. ग. ज. मव्यग्रैर्युष्माभि . ३ क ङ. च ज. झ. ट. रावणेनोक्तायेऽमात्या. ४ क.—ट. पतितै शीतैस्साट्टहासमिवाम्बुभि ५ क—घ. च. ज नानाकुसुमशोभिते. ६ क ख. ग ङ—ट नभसोमध्यमास्थित.,

मामासीनं विदित्वेह चन्द्रायति दिवाकरः ॥ २७ ॥
नर्मदाजलशीतश्च सुगन्धिः श्रमनाशनः ॥ मद्भयादनिलोप्यत्र वात्येष सुसमाहितः ॥ २८ ॥
इयं चापि सरिच्छ्रेष्ठा नर्मदा नर्मवर्धिनी ॥ नक्रमीनविहङ्गोर्मिः सभयेवाङ्गना स्थिता ॥ २९ ॥
तद्भवन्तः क्षताः शस्त्रैर्नृपैरिन्द्रसमैर्युधि ॥ चन्दनस्य रसेनेव रुधिरेण समुक्षिताः ॥ ३० ॥
ते यूयमवगाहध्वं नर्मदां शर्मदां शुभाम् ॥ महापद्मप्रमुखा मत्ता गङ्गामिव महागजाः ॥
अस्यां स्नात्वा महानद्यां पाप्मानं विप्रमोक्ष्यथ ॥ ३१ ॥
अहमप्यद्य पुलिने शरदिन्दुसमप्रभे ॥ पुष्पोपहारं शनकैः करिष्यामि कपर्दिनः ॥ ३२ ॥
रावणेनैवमुक्तास्तु प्रहस्तशुकसारणाः ॥ समहोदरधूम्राक्षा नर्मदां विजगाहिरे ॥ ३३ ॥
राक्षसेन्द्रगजैस्तैस्तु क्षोभिता नर्मदा नदी ॥ वामनाञ्जनपद्माद्यैर्गङ्गा इव महागजैः ॥ ३४ ॥
ततस्ते राक्षसाः स्नात्वा नर्मदायां महाबलाः ॥ उत्तीर्य पुष्पाण्याजह्रुर्बल्यर्थं रावणस्य तु ॥ ३५ ॥
नर्मदापुलिने हृद्ये शुभ्राभ्रसदृशप्रभे ॥ राक्षसैस्तु मुहूर्तेन कृतः पुष्पमयो गिरिः ॥ ३६ ॥
पुष्पेषूपहृतेष्वेवं रावणो राक्षसेश्वरः ॥ अवतीर्णो नदीं स्नातुं गङ्गामिव महागजः ॥ ३७ ॥
तत्र स्नात्वा च विधिवज्जप्त्वा जप्यमनुत्तमम् ॥ नर्मदासलिलात्तस्मादुत्ततार स रावणः ॥ ३८ ॥
ततः क्लिन्नाम्बरं त्यक्त्वा शुक्लवस्त्रसमावृतम् ॥ रावणं प्राञ्जलिं यान्तमन्वयुः सर्वराक्षसाः ॥
तद्गतीवशमापन्ना मूर्तिमन्त इवाचलाः ॥ ३९ ॥
यत्र यत्र च याति स्म रावणो राक्षसेश्वरः ॥ जाम्बूनदमयं लिङ्गं तत्र तत्र स्म नीयते ॥ ४० ॥
वालुकावेदिमध्ये तु तल्लिङ्गं स्थाप्य रावणः ॥ अर्चयामास गन्धैश्च पुष्पैश्चामृतगन्धिभिः ॥ ४१ ॥
ततः सतामार्तिहरं परं वरं वरप्रदं चन्द्रमयूखभूषणम् ॥
समर्चयित्वा स निशाचरो जगौ प्रसार्य हस्तान्प्रणनर्त चाग्रतः ॥ ४२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

सुवर्णं कृत्वेत्यर्थः । चन्द्रायति चन्द्रवदाचरति ॥ २७—२८ ॥ नर्मवर्धिनी प्रीतिवर्धिनीत्यर्थः ॥ २९—३० ॥ अवगाहध्व स्नान कुरुत । शर्मदां सुखदां । महापद्मः पुण्डरीकाख्यो दिग्गजस्तन्मुखा. महागजा इव ॥ ३१ ॥ पुष्पोपहार पुष्पबलिं ॥ ३२—३८ ॥ तत्र नर्मदापुलिने । प्राञ्जलि रुद्रं प्रति कृताञ्जलि । तद्गतीवशमिति च्छान्दसो दीर्घः । मूर्तिमन्तः प्राण्याकारा. अचला इव स्थिताः राक्षसाः । तत्र तत्र नीयत इति प्रतिदिवस देवपूजार्थं तै. राक्षसैरिति शेषः । यदा कैलासे रावणः पीडितो विमुक्त. तदाप्रभृति तत्प्रीत्यर्थं रावणो लिङ्गपूजा करोति स्मेति ज्ञेयम् ॥ ३९—४१ ॥ जगाविति । सामगान कृतवानित्यर्थः। साम्ना सहस्रशाखापारगो रावण इति प्रसिद्धिः॥४२॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे

---

मद्भयादित्यत्राप्यन्वेति ॥२७॥ ति० नक्रादियुताऊर्मयोयस्या सा ॥ २९ ॥ ति० सार्वभौममुखा सार्वभौमनामकदिग्गजादय ॥ ३१ ॥ ति० राक्षसेन्द्राएवगजास्तै । ति० वामनाद्या दिग्गजा । गङ्गाइव महागजैरित्यसधिरार्षं ॥ ३४ ॥ ति० रावणस्यबल्यर्थं रावणकर्तृकशिवपूजार्थं ॥३५॥ ति० तल्लिङ्गं जाबूनदमयंनित्यपूजालिङ्ग । ऐश्वर्यकामनयाहि तल्लिङ्गपूजारावणस्य । एश्वर्यकामस्यसौवर्णलिङ्गपूजायास्तन्त्रेपूक्ते ॥ ४१ ॥ इत्येकत्रिंश सर्ग ॥ ३१ ॥

[ पा० ] १ क. ख. च. छ. धर्मवर्धिनी ङ. झ. ञ. ट शमवर्धिनी २ क—घ. ज शर्मदानृणा. ३ ङ झ. ञ. ढ. सार्वभौमसुखा ४ ङ. च. झ. ञ. ट पाप्मनो. ५ च छ. गङ्गेवसुमहानदी ६ क—घ. ज. नर्मदायावराभसि. ७ क घ. च. छ. ज, चायतान्.

# द्वात्रिंशः सर्गः ॥ ३२ ॥

नर्मदायारावणोपवेशदेशतोऽर्वाग्देशेस्त्रीभि.सहजलक्रीडाकुर्वताऽर्जुनेन निजभुजसहस्रेणनर्मदाप्रवाहेनिरुद्धे प्रतिस्रोतसा-तत्प्रवाहेण रावणार्जितपूजासाधनपुष्पाद्यपहरणम् ॥ १ ॥ प्रवाहप्रातिलोम्यपरिज्ञानायस्वप्रेषिताभ्याशुकसारणाभ्यां तत्का-रणनिवेदितेनरावणेनार्जुनमेत्य रणायसमाह्वानम् ॥ २ ॥ अर्जुनेन रणेनिजगदाप्रहारेणविह्वलस्यरावणस्य बलाद्बन्धनेन निजनगरप्रापणम् ॥ ३ ॥

नर्मदापुलिने यत्र राक्षसेन्द्रः सुदारुणः ॥ पुष्पोपहारं कुरुते तस्माद्देशाददूरतः ॥ १ ॥
अर्जुनो जयतां श्रेष्ठो माहिष्मत्याः पतिः प्रभुः ॥ क्रीडते सह नारीभिर्नर्मदातोयमाश्रितः ॥ २ ॥
तासां मध्यगतो राजा रराज च तदाऽर्जुनः ॥ करेणूनां सहस्रस्य मध्यस्थ इव कुञ्जरः ॥ ३ ॥
जिज्ञासुः स तु बाहूनां सहस्रस्योत्तमं बलम् ॥ रुरोध नर्मदावेगं बाहुभिर्बहुभिर्वृतः ॥ ४ ॥
कार्तवीर्यभुजासक्तं तज्जलं प्राप्य निर्मलम् ॥ कूलोपहारं कुर्वाणं प्रतिस्रोतः प्रधावति ॥ ५ ॥
समीननक्रमकरः सपुष्पकुशसंस्तरः ॥ स नर्मदाम्भसो वेगः प्रावृट्काल इवाबभौ ॥ ६ ॥
स वेगः कार्तवीर्येण संप्रेषित इवाम्भसः ॥ पुष्पोपहारं सकलं रावणस्य जहार ह ॥ ७ ॥
रावणोर्धसमाप्तं तमुत्सृज्य नियमं तदा ॥ नर्मदां पश्यते कान्तां प्रतिकूलां यथा प्रियाम् ॥ ८ ॥
पश्चिमेन तु तं दृष्ट्वा सागरोद्गारसन्निभम् ॥ वर्धन्तमम्भसो वेगं पूर्वामाशां प्रविश्य तु ॥ ९ ॥
ततोऽनुभ्रान्तशकुनां स्वभावोपरमे स्थिताम् ॥ निर्विकाराङ्गनाभासामपश्यद्रावणो नदीम् ॥ १० ॥
सव्येतरकराङ्गुल्या सशब्दं च दशाननः ॥ वेगप्रभवमन्वेष्टुं सोदिशच्छुकसारणौ ॥ ११ ॥
तौ तु रावणसंदिष्टौ भ्रातरौ शुकसारणौ ॥ व्योमान्तरगतौ वीरौ प्रस्थितौ पश्चिमामुखौ ॥ १२ ॥

---

मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

प्रतिस्रोतः प्रतिप्रवाहं ॥ ५ ॥ कुशसंस्तरः कुशास्तरणं ॥ ६—७ ॥ रावण इत्यादिश्लोकद्वयं ॥ सागरोद्गारसन्निभं समुद्रपरीवाहसन्निभ । पूर्वामाशां प्रविश्यत्विति । पूर्वामाशां प्रविश्य पश्यत इत्यन्वयः । रावण इति शेषः ॥ ८—९ ॥ स्वभावस्य नदीस्वभावस्योपरमेऽलभावे स्थितां नदीमपश्यत् । नद्या एव स्वभावो निमित्तान्तरेण वेति जिज्ञासयेति शेषः ॥१०॥ सव्येतरकराङ्गुल्या सशब्दं शीघ्रान्वेषणद्योतिहुकारसंहित यथा तथा ॥ ११—१२ ॥

---

शि० नर्मदेति । श्लोकद्वयमेकान्वयि ॥ १ ॥ स० कार्तवीर्यभुजासक्त तद्भुजकृतबन्धनं । कूलोपहारकुर्वाणंसत् प्रतिस्रोत यथावास्थितप्रवाहविपरीतप्रवाहंअधावत् ॥ ५ ॥ ति० कुशसस्तर. । कुशास्तरणं । सतुतत्पुलिनेकर्मनिमित्तमृषिगणकृत ॥ ६ ॥ ति० सप्रेषितइव रावणंप्रतीतिशेष ॥ ७ ॥ ति० पश्यते पश्यतिस्म ॥ ८ ॥ ति० सागरोद्गार चन्द्रोदयकालिक-समुद्रपरिवृद्धि । तेनहिसमुद्रगानद्यस्तत्समीपदेशेविपरीतप्रवाहा क्रियन्तइतिप्रसिद्धम् ॥ पश्चिमेनमार्गेणपूर्वामाशाप्रविश्यवर्धमान-मंभसोवेगंदृष्ट्वा प्रतिकूलाकान्ताप्रियामिवनर्मदापश्यतिस्मेत्यन्वय । पूर्णामाशाप्रविश्यतीतिपाठे रावणइतिशेष । तस्यक्रियदूरवृद्धि-रितिनिर्णयार्थमितिभाव । तस्मात्प्रविश्यतुइत्येवपाठोयुक्त कतकसमतश्च ॥ ९ ॥ शि० रावणोपश्यत् अजानात् । एतेनान्येनकेन-नचिदयमुपद्रव कृतइतिरावणेननिश्चितमितिसूचितं । ति०तत पूर्वदिशि॥१०॥ स०सव्येतरकराङ्गुल्यावामदक्षिणहस्ताङ्गुलिभि ॥ अशब्दास्य निश्शब्दमुख. ॥ नियमस्थत्वात् ॥ ११ ॥ ति० व्योमान्तरगतौ आकाशमार्गगौ ॥ १२ ॥

[ पा० ] १ झ. ह्यशब्दास्योदशानन .

अर्धयोजनमात्रं तु गत्वा तौ रजनीचरौ ॥ पश्येतां पुरुषं तोये क्रीडन्तं सहयोषितम् ॥ १३ ॥
बृहत्सालप्रतीकाशं तोयव्याकुलमूर्धजम् ॥ मदरक्तान्तनयनं मदव्याकुलतेजसम् ॥ १४ ॥
नदीं बाहुसहस्रेण रुन्धन्तमरिमर्दनम् ॥ गिरिं पादसहस्रेण रुन्धन्तमिव मेदिनीम् ॥ १५ ॥
बालानां वरनारीणां सहस्रेण समावृतम् ॥ समदानां करेणूनां सहस्रेणेव कुञ्जरम् ॥ १६ ॥
तमद्भुततमं दृष्ट्वा राक्षसौ शुकसारणौ ॥ सन्निवृत्तावुपागम्य रावणं तमथोचतुः ॥ १७ ॥
बृहत्सालप्रतीकाशः कोप्यसौ राक्षसेश्वर ॥ नर्मदां रोधवद्रुद्ध्वा क्रीडापयति योषितः ॥ १८ ॥
तेन बाहुसहस्रेण सन्निरुद्धजला नदी ॥ सागरोद्गारसंकाशानुद्गारान्सृजते मुहुः ॥ १९ ॥
इत्येवं भाषमाणौ तौ निशाम्य शुकसारणौ ॥ रावणोऽर्जुन इत्युक्त्वा प्रययौ युद्धलालसः ॥ २० ॥
अर्जुनाभिमुखे तस्मिन्रावणे राक्षसाधिपे ॥ चण्डः प्रवाति पवनः सनादः सरजास्तदा ॥
सकृदेव कृतो रावः सरक्तः प्रेषितो घनैः ॥ २१ ॥
महोदरमहापार्श्वधूम्राक्षशुकसारणैः ॥ संवृतो राक्षसेन्द्रस्तु तत्रागाद्यत्र चार्जुनः ॥ २२ ॥
अदीर्घेणैव कालेन स तदा राक्षसो बली ॥ तं नर्मदाह्रदं भीममाजगामाञ्जनप्रभः ॥ २३ ॥
स तत्र स्त्रीपरिवृतं वाशिताभिरिव द्विपम् ॥ नरेन्द्रं पश्यते राजा राक्षसानां तदाऽर्जुनम् ॥ २४ ॥
स रोषाद्रक्तनयनो राक्षसेन्द्रो बलोद्धतः ॥ इत्येवमर्जुनामात्यानाह गम्भीरया गिरा ॥ २५ ॥
अमात्याः क्षिप्रमाख्यात हैहयस्य नृपस्य वै ॥ युद्धार्थी समनुप्राप्तो रावणो नाम राक्षसः ॥ २६ ॥
रावणस्य वचः श्रुत्वा मन्त्रिणोथार्जुनस्य ते ॥ उत्तस्थुः सायुधास्ताश्च रावणं वाक्यमब्रुवन् ॥ २७ ॥
युद्धस्य कालो विज्ञातः साधु भोः साधु रावण ॥ यः क्षीबं स्त्रीवृतं चैव योद्धुमुत्सहसे नृपम् ॥२८॥
स्त्रीसमक्षं कथं यत्तद्योद्धुमुत्सहसेऽर्जुनम् ॥ वाशितामध्यगं मत्तं शार्दूल इव कुञ्जरम् ॥ २९ ॥
क्षमस्वाद्य दशग्रीव चोष्यतां शर्वरी त्वया ॥ युद्धे श्रद्धा च यद्यस्ति श्वस्तात समरेऽर्जुनम् ॥ ३० ॥
यदि वाप्यस्ति मतिर्योद्धुं युद्धतृष्णासमावृता ॥ निहत्यास्मांस्ततो युद्धमर्जुनेनोपयास्यसि ॥ ३१ ॥
ततस्ते रावणामात्यैरमात्याः पार्थिवस्य तु ॥ सूदिताश्चापि ते युद्धे भक्षिताश्च बुभुक्षितैः ॥ ३२ ॥
ततो हलहलाशब्दो नर्मदातीर आबभौ ॥ अर्जुनस्यानुयातॄणां रावणस्य च मन्त्रिणाम् ॥ ३३ ॥

---

पश्येतां अपश्यतामित्यर्थः ॥ १३—१७ ॥ रोधवत् तटवत् । अकारान्तत्वमार्षं । क्रीडापयतीतिपुगार्ष. क्रीडयतीत्यर्थ. ॥ १८—१९ ॥ निशाम्य दृष्ट्वा । अर्जुन इत्युक्त्वेति । अन्यस्यैव सामर्थ्यं न संभवतीति युक्त्येति शेष. ॥ २० ॥ रावणस्योत्पातमाह—सकृदिति ॥ सरक्तः रक्तवर्षसहितः । रावः शब्दः । सकृत् एकवारमेव । घनै. प्रेषित. कृत' । वर्षुकमेघानां सकृद्राव उत्पात इति भावः ॥ २१—२३ ॥ वाशिताभि. करेणुभिः । "वाशिता स्त्रीकरेण्वोश्च" इत्यमरः । पश्यते पश्यति ॥ २४ ॥ इत्येव वक्ष्यमाणप्रकारेण ॥२५—२७॥ युद्धस्येत्यादि ॥ व्यङ्ग्योक्ति । क्षीब मत्त ॥२८–२९॥ उष्यतां इहेति शेष. ॥३०—

---

ति० रोधवत् रुध्यतेऽनेनेतिरोधसेतु । तद्वदित्यर्थ ॥ १८ ॥ ति० सरक्तपृषत रक्तबिन्दुसहितोराव शब्द सकृदेव रावणप्रस्थानेनसहैवैकवारच्चघनै कृत । रक्तवर्षुकमेघानासकृद्रावोप्युत्पातइतिकतक ॥ २२ ॥ ति० उष्यता इहेतिशेष । युध्येतिपदं । समरेश्रद्धायद्यस्तितदाश्वोऽर्जुन युध्य युध्यस्व ॥ ३० ॥ ति० हलहलेतिशब्दानुकार । अनुयात्रा अनुचरा । मन्त्रिणइत्यर्थ ॥ ३३ ॥

[ पा० ] १ घ. च. छ. शैलवद्रुद्ध्वा. २ क—घ. तस्मिन्प्रस्थितेराक्षसेश्वरे ३ झ सरक्तपृष्ठतोघनै ४ क. ख. घ ङ च. ज. झ. ट सायुधास्तच. ५ झ. युद्धश्रद्धातु ६ क—ट. यदिवापिल्वरातुभ्यंयुद्धश्रद्धासमावृता। निपात्यास्मान् ७ ङ च छ. झ. ञ. ट. नर्मदातीरगोबभौ. ८ झ. स्यानुयात्राणा.

इषुभिस्तोमरैः शूलैस्त्रिशूलैर्वज्रकर्षणैः ॥ सरावणा नर्दयन्तः समन्तात्सममिद्रुताः ॥ ३४ ॥
हैहयाधिपयोधानां वेग आसीत्सुदारुणः ॥ सनक्रमीनमकरसमुद्रस्येव निस्स्वनः ॥ ३५ ॥
रावणस्य तु तेऽमात्याः प्रहस्तशुकसारणाः ॥ कार्तवीर्यबलं क्रुद्धा निर्दहन्ति स्म तेजसा ॥ ३६ ॥
अर्जुनाय तु तत्कर्म रावणस्य समन्त्रिणः ॥ क्रीडमानाय कथितं पुरुषैर्द्वाररक्षिभिः ॥ ३७ ॥
श्रुत्वा न भेतव्यमिति स्त्रीजनं तं ततोऽर्जुनः ॥ उत्ततार जलात्तस्माद्गङ्गातोयादिवाञ्जनः ॥ ३८ ॥
क्रोधदूषितनेत्रस्तु स ततोऽर्जुनपावकः ॥ प्रजज्वाल महाघोरो युगान्त इव पावकः ॥ ३९ ॥
स तूर्णतरमादाय वरहेमाङ्गदो गदाम् ॥ अभिदुद्राव रक्षांसि तमांसीव दिवाकरः ॥ ४० ॥
बाहुविक्षेपकरणां समुद्यम्य महागदाम् ॥ गारुडं वेगमास्थाय चापपातैव सोऽर्जुनः ॥ ४१ ॥
तस्य मार्गं समारुध्य विन्ध्योऽर्कस्येव पर्वतः ॥ स्थितो विन्ध्य इवाकम्प्यः प्रहस्तो मुसलायुधः ॥४२॥
ततोऽस्य मुसलं घोरं लोहबद्धं महोद्धतः ॥ प्रहस्तः प्रेषयन्क्रुद्धो ररास च यथाऽम्बुदः ॥ ४३ ॥
तस्याग्रे मुसलस्याग्निरशोकापीडसन्निभः ॥ प्रहस्तकरमुक्तस्य बभूव प्रदहन्निव ॥ ४४ ॥
अथायान्तं तु मुसलं कार्तवीर्यस्तदाऽर्जुनः ॥ निपुणं वञ्चयामास सगदोऽगदविक्रमः ॥ ४५ ॥
ततस्तमभिदुद्राव प्रहस्तं हैहयाधिपः ॥ भ्रामयाणो गदां गुर्वीं पञ्चबाहुशतोच्छ्रयाम् ॥ ४६ ॥
तथाहतोऽतिवेगेन प्रहस्तो गदया तदा ॥ निपपात हतः शैलो वज्रिवज्रहतो यथा ॥ ४७ ॥
प्रहस्तं पतितं दृष्ट्वा मारीचशुकसारणाः ॥ समहोदरधूम्राक्षा ह्यपसृष्टा रणाजिरात् ॥ ४८ ॥
अपक्रान्तेष्वमात्येषु प्रहस्ते विनिपातिते ॥ रावणोऽभ्यद्रवत्तूर्णमर्जुनं नृपसत्तमम् ॥ ४९ ॥
सहस्रबाहोस्तद्युद्धं विंशद्बाहोश्च दारुणम् ॥ नृपराक्षसयोस्तत्र चारब्धं रोमहर्षणम् ॥ ५० ॥
सागराविव संरब्धौ चलन्मूलाविवाचलौ ॥ तेजोयुक्ताविवादित्यौ प्रदहन्ताविवानलौ ॥ ५१ ॥
बलोद्धतौ यथा नागौ वाशितार्थे यथा वृषौ ॥ मेघाविव विनर्दन्तौ सिंहाविव बलोत्कटौ ॥ ५२ ॥
रुद्रकालाविव क्रुद्धौ तदा तौ राक्षसार्जुनौ ॥ परस्परं गदाभ्यां तौ ताडयामासतुर्भृशम् ॥ ५३ ॥
वज्रप्रहारानचला यथा घोरान्विषेहिरे ॥ गदाप्रहारांस्तौ तत्र सेहाते नरराक्षसौ ॥ ५४ ॥

३३ ॥ कर्षणं आयुधविशेषः ॥ ३४ ॥ वेगो युद्धवेगः ॥ ३५—३८ ॥ युगान्ते युगान्तकाले उत्थितो घोरः पावक इव ॥३९—४०॥ बाहुभिर्विक्षेपकरणं भ्रमणं यस्यास्तां । वेगः शैघ्र्यं आपपातैव न तु विलम्बितवान् ॥ ४१—४२ ॥ अस्य प्रेषयन् अर्जुनस्य संहारार्थं क्षिपन् ॥ ४३ ॥ अशोकपुष्पकृतः आपीडः अशोकापीडः ॥ ४४ ॥ वञ्चयामास प्रतिहतवानित्यर्थः । सगदः गदासहितः । अगदः अरोगः अप्रतिबन्धइतियावत् । विक्रमो यस्येति विग्रहः ॥ ४५ ॥ पञ्चबाहुशतैः उच्छ्रय उत्क्षेपो यस्याः सा ॥ ४६ ॥ तथा शैल इव स्थितः निपपात ॥ ४७—५० ॥ सागरावित्यादिश्लोकत्रयं ॥ वाशितार्थे करेण्वर्थे ।

**ति०** कर्षणमायुधविशेषः ॥ सरावणान्मन्त्रिणोर्दयन्तोऽर्जुनमन्त्रिणः बभूवुरितिशेषः ॥ ३४ ॥ **ति०** नक्रादिसहितसमुद्रस्येवस्वनआसीत् ॥ ३५ ॥ **ति०** स्त्रीजनं नभेतव्यमित्युक्त्वेतिशेषः ॥ अञ्जनोदिग्गजः ॥ ३८ ॥ **ति०** अर्जुनरूपःपावकइतिरूपकं ॥ ३९ ॥ **ति०** गारुडंवेगं गरुडसदृशवेगं ॥ ४१ ॥ **ति०** विन्ध्यपर्वतोर्कमार्गंरुद्ध्वास्थितइतिपौराणिकीकथा ॥ ४२ ॥ **ति०** अस्यप्रेषयन् अस्यसंहारार्थंक्षिपन् ॥ ४३ ॥ **ति०** अशोकापीडं अशोकपुष्पशिखा । तत्संनिभः ॥ ४४ ॥ **ति०** गतविक्लबः गतभयः ॥ ४५ ॥ **स०** 'वासितास्त्रीकरेण्वोश्च' इत्यमरः । स्त्रीसामान्यवाचीशब्दोऽयमितिवासितार्थे धेन्वर्थे । वृषौयथेत्यप्यन्वेति । 'वासितार्थेवृषाविव' इत्यादिप्रयोगात् । स्वामीवाशशब्दइत्यस्येदमितितालव्यमध्यंपपाठ ॥ २५ ॥ **स०** विषेहिरइत्यभूतोपमा । यद्वा वज्रार्थंप्रहारान् पाषाणकुट्टककृतान् । आकरागारस्थाद्रिरीणां ॥ ५४ ॥

**[ पा० ]** १ ग. ङ. च. छ. झ. ञ. ट. यथान्तकः. २ क. ङ. ज—ट. आधावमानंमुसलं. ३ ङ. च. छ. झ. ञ. ट. गदयागतविक्लबः.

यथाऽशनिरवेभ्यस्तु जायतेऽथ प्रतिश्रुतिः ॥ तथा तयोर्गदापोथैर्दिशः सर्वाः प्रतिश्रुताः ॥ ५५ ॥
अर्जुनस्य गदा सा तु पात्यमानाऽहितोरसि ॥ काञ्चनाभं नभश्चक्रे विद्युत्सौदामिनी यथा ॥ ५६ ॥
तथैव रावणेनापि पात्यमाना मुहुर्मुहुः ॥ अर्जुनोरसि निर्भाति गदोल्केव महागिरौ ॥ ५७ ॥
नार्जुनः खेदमायाति न राक्षसगणेश्वरः ॥ इदमासीत्तयोर्युद्धं यथा पूर्वं बलीन्द्रयोः ॥ ५८ ॥
शृङ्गैरिव वृषा युध्यन्दन्ताग्रैरिव कुञ्जरौ ॥ परस्परं तौ निघ्नन्तौ नरराक्षससत्तमौ ॥ ५९ ॥
ततोऽर्जुनेन क्रुद्धेन सर्वप्राणेन सा गदा ॥ स्तनयोरन्तरे मुक्ता रावणस्य महोरसि ॥ ६० ॥
वरदानकृतत्राणे सा गदा रावणोरसि ॥ दुर्बलेव यथावेगं द्विधा भूत्वाऽपतत्क्षितौ ॥ ६१ ॥
स त्वर्जुनप्रमुक्तेन गदापातेन रावणः ॥ अपासर्पद्धनुर्मात्रं निषसाद च निष्टनन् ॥ ६२ ॥
स विह्वलं तदालक्ष्य दशग्रीवं ततोऽर्जुनः ॥ सहसोत्पत्य जग्राह गरुत्मानिव पन्नगम् ॥ ६३ ॥
स तं बाहुसहस्रेण बलाद्गृह्य दशाननम् ॥ बबन्ध बलवान्राजा बलिं नारायणो यथा ॥ ६४ ॥
बध्यमाने दशग्रीवे सिद्धचारणदेवताः ॥ साध्वीति वादिनः पुष्पैः किरन्त्यर्जुनमूर्धनि ॥ ६५ ॥
व्याघ्रो मृगमिवादाय मृगराडिव दन्तिनम् ॥ ननाद हैहयो राजा हर्षादम्बुदवन्मुहुः ॥ ६६ ॥
प्रहस्तस्तु समाश्वस्तो दृष्ट्वा बद्धं दशाननम् ॥ सह तै राक्षसैः क्रुद्धश्चाभिदुद्राव पार्थिवम् ॥ ६७ ॥
नक्तंचराणां वेगस्तु तेषामापततां बभौ ॥ उद्धूत आतपापाये पयोदानामिवाम्बुधौ ॥ ६८ ॥
मुञ्चमुञ्चेति भाषन्तस्तिष्ठतिष्ठेति चासकृत् ॥ मुसलानि सशूलानि सोत्ससर्ज तदाऽर्जुने ॥ ६९ ॥
अप्राप्तान्येव तान्याशु असंभ्रान्तस्तदाऽर्जुनः ॥ आयुधान्यमरारीणां जग्राहारिनिषूदनः ॥ ७० ॥
ततस्तैरेव रक्षांसि दुर्धरैः प्रवरायुधैः ॥ भित्त्वा विद्रावयामास वायुरम्बुधरानिव ॥ ७१ ॥
राक्षसांस्त्रासयित्वा तु कार्तवीर्योऽर्जुनस्तदा ॥ रावणं गृह्य नगरं प्रविवेश सुहृद्वृतः ॥ ७२ ॥

---

युध्यन्ताविति शेष' ॥ ५१ —५४ ॥ प्रतिश्रुताः प्रतिश्रुतवन्त इत्यर्थ' । मत्वर्थीयाजन्तः । गदापोथैः गदापातैः ॥ ५५ ॥ विद्युद्विशेषेण द्योतमाना सौदामिनी नभ इव राक्षसोरः काञ्चनाभं स्वर्णवर्णं चकार ॥ ५६—६० ॥ दुर्बलेव बलरहितेव । यथावेग स्ववेगोचितं । प्रहर्तु स्वय द्विधा भूत्वा क्षितावपतत् । तत्र हेतुः—वरदानकृतत्राण इति ॥ ६१ ॥ निष्टनन् रटन् ॥ ६२—६४ ॥ साध्वीति वादिनः

---

**नि०** अशनिरवेभ्य अशनिपातध्वनिभि । प्रतिश्रुति प्रतिध्वनि ॥ **ति०** प्रतिश्रुता प्रतिध्वनिमत्य ॥ ५५ ॥ **ति०** अहितोरसि रावणोरसि ॥ ५६ ॥ **ति०** नराक्षसगणेश्वर खेदमायाति ॥ ५८ ॥ **ति०** वृषायुध्यन् वृषावयुध्यन्नित्यर्थ ॥ **स०** वृषा वृषौ । डादेशश्छन्दस्तुल्यत्वात् ॥ यथा वृषाकुञ्जरौचेत्येतेयुध्यंस्तथैतौअयुध्येता । वृषञ्छब्दोऽयवृषभवाची । ततश्चावृत्त्या वृषा वृषा वृषाणौ । युध्यन्युध्यन् युध्यन्तौ । ' कनिन्युवृषि ' इतिकनिन् । ' वृषातुवासवे—। वृषभेतुरगेपुसि' इतिभानु ॥ विनिघ्नन्तौ बभूवतु ॥ ५९ ॥ **ति०** अपासर्पत् अपराङ्मुखएवपृष्ठतोऽगच्छत् ॥ ६२ ॥ **स०** साध्वी बन्धनक्रियेतिशेष । नागोजिभट्टस्तुदीर्घआर्षइत्यूचिवान् । परतुतेननवक्तव्य । कर्तव्यतेनापिविशेष्यपदपूरणं । तच्चसाध्व्यनुरूपंनिरूपितरीत्यासमञ्जसभवतीतिसाध्वीतिसाधुतासभवात् ॥ ६५ ॥ **ति०** आतपापाये वर्षाकाले ॥ ६८ ॥ **ति०** सोत्ससर्जेत्यार्ष । सहैवत्यक्तवन्त इत्यर्थ ॥ ६९ ॥ **ति०** अप्राप्तान्येव स्वसमीपमनागतान्येवान्तरिक्षस्थान्येव । अमरारीणातान्यायुधानिरावणग्राहिकरव्यतिरिक्तकरैराशुजग्राह ॥ ७० ॥ इतिद्वात्रिंश सर्ग ॥ ३२ ॥

[ **पा०** ] १ क—ट. सममासीत्. २ झ ठ परस्परंविनिघ्नन्तौ ३ ङ—ट. गदाघातेन ४ ख घ. च. छ. सिंहराडिवकुञ्जर ग नरसिंहोयथासुर. ङ. झ. ञ. ट मृगराडिवकुञ्जर ५ ङ च छ. झ ञ त्रासयामास.

स कीर्यमाणः कुसुमाक्षतोत्करैर्द्विजैः सपौरैः पुरुहूतसन्निभः ॥
तदाऽर्जुनः संप्रविवेश तां पुरीं बलिं निगृह्येव सहस्रलोचनः ॥ ७३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

दैवतमुखादर्जुनकृतरावणबन्धनश्राविणापुलस्त्येन माहिष्मतीमेत्यार्जुनाद्रावणमोचनम् ॥ १ ॥

रावणग्रहणं तत्तु वायुग्रहणसन्निभम् ॥ ततः पुलस्त्यः शुश्राव कथितं दिवि दैवतैः ॥ १ ॥
ततः पुत्रकृतस्नेहात्कम्प्यमानो महाधृतिः ॥ माहिष्मतीपतिं द्रष्टुमाजगाम महामुनिः ॥ २ ॥
स वायुमार्गमास्थाय वायुतुल्यगतिर्द्विजः ॥ पुरीं माहिष्मतीं प्राप्तो मनःसंपातविक्रमः ॥ ३ ॥
सोमरावतिसंकाशां हृष्टपुष्टजनाकुलाम् ॥ प्रविवेश पुरीं ब्रह्मा इन्द्रस्येवामरावतीम् ॥ ४ ॥
पादचारमिवादित्यं निष्पतन्तं सुदुर्दशम् ॥ ततस्ते प्रत्यभिज्ञाय चार्जुनाय निवेदयन् ॥ ५ ॥
पुलस्त्य इति विज्ञाय वचनाद्धैहयाधिपः ॥ शिरस्यञ्जलिमाधाय प्रत्युद्गच्छत्तपस्विनम् ॥ ६ ॥
पुरोहितोस्य गृह्यार्घ्यं मधुपर्कं तथैव च ॥ पुरस्तात्प्रययौ राज्ञः शक्रस्येव बृहस्पतिः ॥ ७ ॥
ततस्तमृषिमायान्तमुद्यन्तमिव भास्करम् ॥ अर्जुनो दृश्य संभ्रान्तो ववन्देन्द्र इवेश्वरम् ॥ ८ ॥
स तस्य मधुपर्कं गां पाद्यमर्घ्यं निवेद्य च ॥ पुलस्त्यमाह राजेन्द्रो हर्षगद्गदया गिरा ॥ ९ ॥
अद्यैवममरावत्या तुल्या माहिष्मती कृता ॥ अद्याहं तु द्विजेन्द्र त्वां यस्मात्पश्यामि दुर्दशम् ॥१०॥
अद्य मे कुशलं देव अद्य मे कुशलं व्रतम् ॥ अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥
यस्माद्देवगणैर्वन्द्यौ वन्देऽहं चरणौ तव ॥ ११ ॥
इदं राज्यमिमे पुत्रा इमे दारा इमे वयम् ॥ ब्रह्मन्किं कुर्मि किं कार्यमाज्ञापयतु नो भवान् ॥१२॥
तं धर्मेऽग्निषु पुत्रेषु शिवं पृष्ट्वा च पार्थिवम् ॥ पुलस्त्योवाच राजानं हैहयानां तथार्जुनम् ॥ १३ ॥
नरेन्द्राम्बुजपत्राक्ष पूर्णचन्द्रनिभानन ॥ अतुलं ते बलं येन दशग्रीवस्त्वया जितः ॥ १४ ॥
भयाद्यस्योपतिष्ठेतां निष्पन्दौ सागरानिलौ ॥ सोयं मृधे त्वया बद्धः पौत्रो मे रणदुर्जयः ॥ १५ ॥
पुत्रकस्य यशः पीतं नाम विश्रावितं त्वया ॥ मद्वाक्याद्याच्यमानोऽद्य मुञ्च वत्स दशाननम् ॥१६॥

---

इय क्रिया साध्वीति वदन्तः ॥ ६५—७३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने द्वात्रिंश. सर्गः॥३२॥

---

कम्प्यमानः अनुकम्पायुक्ततया संपद्यमानः । यद्वा पौत्रस्नेहात्कम्पित इत्यर्थः । महाधृतेरपि कम्पितहृदयमित्यर्थः ॥ २ ॥ मनःसंपातविक्रमः मनोगतिः। वायुतुल्यगति' वायुसमानवेगः ॥ ३ ॥ अमरावतिसकाशामित्यत्र "ङयापो सञ्ज्ञाछन्दसोर्बहुल" इति ह्रस्वः ॥ ४ ॥ सुदुर्दश दुर्दर्शमिति यावत् । प्रत्युद्गच्छत् प्रत्युद्गच्छत । ईश्वरं ब्रह्माण ॥ ५—११ ॥ कि कुर्मि कि करवाणि किं वा कार्यं मया ॥ १२ ॥ शिव कुशलं । पुलस्त्योवाचेति सन्धिरार्ष. ॥ १३—१५ ॥ पुत्रकस्य मदीयबालकस्य । नाम विश्रावितं

---

स० दिवि स्वर्गे । दैवतै कथितं ॥ १ ॥ ति० प्रत्यभिज्ञाय द्वाःस्थामन्त्रिणोवा ॥ ५ ॥ ति० प्रत्युद्गच्छत् प्रत्युदगच्छत् ॥ ६ ॥ स० पुलस्त्योवाच सन्धिरार्षं । पुलस्त्योस्याअस्तीतिपुलस्त्याजिह्वा । 'मिथ्याशब्दोऽनिर्वचनीयवदति'—'जिह्वैकृतोच्युतविकर्षति' इत्यादिवत्करणेकर्तृत्वोपचार ॥ १३ ॥ ति० यस्य रावणस्य ॥ १५ ॥

[ पा० ] १ ख. द्वास्स्थाराज्ञेन्यवेदयन् २ क—ट. यस्तेदेवगणै . ३ क—घ ज. चरणाविमौ.

पुलस्त्याज्ञां प्रगृह्योचे न किंचन वचोऽर्जुनः ॥ मुमोच वै पार्थिवेन्द्रो राक्षसेन्द्रं प्रहृष्टवत् ॥ १७ ॥
स तं प्रमुच्य त्रिदशारिमर्जुनः प्रपूज्य दिव्याभरणस्रगम्बरैः ॥
अहिंसकं सख्यमुपेत्य साग्निकं प्रणम्य तं ब्रह्मसुतं गृहं ययौ ॥ १८ ॥
पुलस्त्येनापि संत्यक्तो राक्षसेन्द्रः प्रतापवान् ॥ परिष्वक्तः कृतातिथ्यो लज्जमानो विनिर्जितः ॥१९॥
पितामहसुतश्चापि पुलस्त्यो मुनिपुङ्गवः ॥ मोचयित्वा दशग्रीवं ब्रह्मलोकं जगामह ॥ २० ॥
एवं स रावणः प्राप्तः कार्तवीर्यात्प्रधर्षणम् ॥ पुलस्त्यवचनाच्चापि पुनर्मुक्तो महाबलः ॥ २१ ॥
एवं बलिभ्यो बलिनः सन्ति राघवनन्दन ॥ नावज्ञा हि परे कार्या य इच्छेत्प्रियमात्मनः ॥२२॥
ततः स राजा पिशिताशनानां सहस्रबाहोरुपलभ्य मैत्रीम् ॥
पुनर्नृपाणां कदनं चकार चचार सर्वां पृथिवीं च दर्पात् ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

## चतुस्त्रिंशः सर्गः ॥ ३४ ॥

वालिजिगीषयाकिष्किन्धामेत्यरावणेन रणायवालिसमाह्वानम् ॥ १ ॥ तारेण वालिनोदक्षिणसागरनिवेदितेनतेन पुष्पकारोहणेनवेगाद्दक्षिणसमुद्रगमनम् ॥ २ ॥ वालिना स्वजिघृक्षयासमीपोपसर्पिणोरावणस्य स्वकक्षनिक्षेपेण पश्चिमादिसागरत्रयप्रापणेन तत्रतत्रसंध्योपासनपूर्वककिष्किन्धोपवनमेत्य तत्रकक्षाद्रावणोत्सर्जनम् ॥ ३ ॥ वालिबलविज्ञानविस्मितेनरावणेन तत्प्रशसनपूर्वकं तेनसहाग्निसाक्षिकसख्यकरणम् ॥ ४ ॥

अर्जुनेन विमुक्तस्तु रावणो राक्षसाधिपः ॥ चचार पृथिवीं सर्वामनिर्विण्णस्तथा कृतः ॥ १ ॥
राक्षसं वा मनुष्यं वा शृणुते यं बलाधिकम् ॥ रावणस्तं समासाद्य युद्धे ह्वयति दर्पितः ॥ २ ॥
ततः कदाचित्किष्किन्धां नगरीं वालिपालिताम् ॥ गत्वा ह्वयति युद्धाय वालिनं हेममालिनम् ॥३॥
ततस्तु वानरामात्यस्तारस्तारापिता प्रभुः ॥ उवाच वानरो वाक्यं युद्धप्रेप्सुमुपागतम् ॥ ४ ॥
राक्षसेन्द्र गतो वाली यस्ते प्रतिबलो भवेत् ॥ कोऽन्यः प्रमुखतः स्थातुं तव शक्तः प्लवङ्गमः ॥५॥

---

रावणजिदिति नाम त्वया त्रैलोक्ये विश्रावितं । वत्स बालं ॥ १६ ॥ किंचिद्वचोपि नोवाच किंचन अविद्यमान किंचिद्वचन न किंचिदप्यवददित्यर्थः । अपि तु क्रियाकेवलमुत्तरमिति मुमोचेत्यर्थः । प्रहृष्टवत् ब्रह्मणा प्रार्थनीयोस्मीति संतोषयुक्तः सन् ॥ १७ ॥ परस्परहिंसाप्रवृत्तिनिवारणसाधनभूत साग्निकं अग्निसाक्षिपूर्वकं ॥ १८ ॥ अपिना अर्जुनेनापीति समुच्चीयते । कृतातिथ्य इति । अर्जुनेनेति शेषः ॥ १९— २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

युद्धे युद्धनिमित्त । ह्वयति आह्वयति स्म ॥ २— ३ ॥ वानरामात्यः वालिनोमात्यः मन्त्री तार उवाच । तथा तारापिता सुषेणश्चोवाच । प्रभुः युवराजः सुग्रीवश्चोवाच ॥ ४ ॥ ते तुभ्य । प्रतिबल इति । युद्धे

---

शि० राक्षसेन्द्र लज्जमान सन् ययाविति शेषः ॥ १९ ॥ ति० बलिभ्योपिबलिन सन्ति । ईश्वरसृष्टेर्विचित्रत्वादित्याशयः ॥ य श्रेयइच्छेत्तेनपरे परस्मिन् । अवज्ञानकार्या ॥ स० रावणदिग्विजयकालेजगच्छून्यंकिमित्यस्योत्तरमाह—एवमिति ॥ २२ ॥ इतित्रयस्त्रिंश सर्ग ॥ ३३ ॥

ति० अनिर्विण्ण कृत. पुलस्त्येनविमोच्यार्जुनसख्यंप्रापय्यतेनपूजयित्वाविसर्जितत्वात्पराभवजनितनिर्वेदरहित कृतइत्यर्थः ॥ स० तथाकृतोपि अर्जुनेनपराजितोपि अनिर्विण्ण लज्जारहित ॥ १ ॥ शि० वालीगत समुद्रसमीपमितिशेष ॥ ५ ॥

चतुर्भ्योपि समुद्रेभ्यः संध्यामन्वास्य रावण ॥ ईमं मुहूर्तमायाति वाली तिष्ठ मुहूर्तकम् ॥ ६ ॥
एतानस्थिचयान्पश्य य एते शङ्खपाण्डुराः ॥ युद्धार्थिनामिमे राजन्वानराधिपतेजसा ॥ ७ ॥
यद्वामृतरसः पीतस्त्वया रावण राक्षस ॥ तदा वालिनमासाद्य तदन्तं तव जीवितम् ॥ ८ ॥
पश्येदानीं जगच्चित्रमिमं विश्रवसः सुत ॥ इदं मुहूर्तं तिष्ठस्व दुर्लभं ते भविष्यति ॥ ९ ॥
अथवा त्वरसे मर्तुं गच्छ दक्षिणसागरम् ॥ वालिनं द्रक्ष्यसे तत्र भूमिस्थमिव पावकम् ॥ १० ॥
स तु तारं विनिर्भर्त्स्य रावणो लोकरावणः ॥ पुष्पकं तत्समारुह्य प्रययौ दक्षिणार्णवम् ॥ ११ ॥
तत्र हेमगिरिप्रख्यं तरुणार्कनिभाननम् ॥ रावणो वालिनं दृष्ट्वा संध्योपासनतत्परम् ॥ १२ ॥
पुष्पकादवरुह्याथ रावणोञ्जनसन्निभः ॥ ग्रहीतुं वालिनं तूर्णं निश्शब्दपदमाव्रजत् ॥ १३ ॥
यदृच्छया तदा दृष्टो वालिनाऽपि स रावणः ॥ पापाभिप्रायवान्दृष्ट्वा चकार न तु संभ्रमम् ॥ १४ ॥
शशमालक्ष्य सिंहो वा पन्नगं गरुडो यथा ॥ न चिन्तयति तं वाली रावणं पापनिश्चयम् ॥ १५ ॥
जिघृक्षमाणमायान्तं रावणं पापचेतसम् ॥ कक्षावलम्बिनं कृत्वा गमिष्ये त्रीन्महार्णवान् ॥ १६ ॥
द्रक्ष्यन्त्यरिं ममाङ्कस्थं स्रंसदूरुकराम्बरम् ॥ लम्बमानं दशग्रीवं गरुडस्येव पन्नगम् ॥ १७ ॥
इत्येवं मतिमास्थाय वाली कर्णमुपाश्रितः ॥ जपन्वै नैगमान्मन्त्रांस्तस्थौ पर्वतराडिव ॥ १८ ॥
तावन्योन्यं जिघृक्षन्तौ हरिराक्षसपार्थिवौ ॥ प्रयत्नवन्तौ तत्कर्म ईहतुर्बलदर्पितौ ॥ १९ ॥
हस्तग्राहं तु तं मत्वा पादशब्देन रावणम् ॥ पराङ्मुखोपि जग्राह वाली सर्पमिवाण्डजः ॥ २० ॥
ग्रहीतुकामं तं गृह्य रक्षसामीश्वरं हरिः ॥ खमुत्पपात वेगेन कृत्वा कक्षावलम्बिनम् ॥ २१ ॥
तं चापीडयमानं तु वितुदन्तं नखैर्मुहुः ॥ जहार रावणं वाली पवनस्तोयदं यथा ॥ २२ ॥
अथ ते राक्षसामात्या ह्रियमाणं दशाननम् ॥ मुमोक्षयिषवो वालिं रवमाणा अभिद्रुताः ॥ २३ ॥
अन्वीयमानस्तैर्वाली भ्राजतेऽम्बरमध्यगः ॥ अन्वीयमानो मेघौघैरम्बरस्थ इवांशुमान् ॥ २४ ॥

दातुमिति शेषः ॥ ५—६ ॥ युद्धार्थिनामिति । वानराधिपतेजसा मृतानां युद्धार्थिनामिमे । एव त्वमपि भविष्यसीति भावः ॥ ७ ॥ तदा तथापि वालिनमासाद्य तव जीवित तदन्त तत्समीपप्राप्तिपर्यन्तमित्यर्थः ॥ ८ ॥ जगच्चित्र जगत. सर्वस्याप्याश्चर्यभूतं व्यापारमिदानीं पश्य । दुर्लभं जीवितमिति शेषः ॥ ९—१० ॥ तार तारादीन् । यद्वा पूर्व तार एवोक्तवान् तस्य तारापितृत्वं सबन्धविशेषात् । निःशब्दं निःशब्दचरणविन्यासं ॥ १३ ॥ पापाभिप्रायवान् बन्धनाभिप्रायवान् ॥ १४ ॥ सिंहो वा सिंह इव ॥ १५ ॥ जिघृक्षमाणमित्यारभ्य इत्येवमित्यन्त वालिविचारः ॥ १६ ॥ द्रक्ष्यन्ति देवादय इति शेष. । ममाङ्कस्थ कक्षस्थमिति यावत् । गरुडस्येवेति । अङ्कस्थमित्यनुकर्षः ॥ १७ ॥ कर्णमुपाश्रित. पादशब्दश्रवणार्थ कर्णमुपाश्रितमना' । नैगमान् वैदिकान् । देवकुमारत्वान्मन्त्रवत्त्व ॥ १८—१९ ॥ हस्तग्राह हस्तैर्ग्रहणाभिप्रायवन्तं । पादशब्देन सूक्ष्मपादशब्देन ॥ २०—२१ ॥ आपीडयमानं "णिचश्च" इत्या-

ति० चतुर्भ्यं समुद्रेभ्य चतुर्षुसमुद्रेषु । सध्यां सम्यग्ध्येयदेवताब्रह्मरूपामन्वास्य ध्यात्वा इदमुहूर्त अस्मिन्मुहूर्तेआयाति ॥ ६ ॥ ति० यद्वेति यद्यप्यर्थे ॥ ८ ॥ शि० इममुहूर्ततिष्ठस्व । इदानीमेवचित्रंजगत्पश्य । अनन्तरदुर्लभभविष्यति मरिष्यमाणत्वादित्यर्थ ॥ ९ ॥ ति० सन्ध्योपासनतत्परं सम्यग्ध्येयब्रह्मोपासनतत्परं ॥ स० सध्यादेवतोपासननिरतं ॥ १२ ॥ ति० नैगमान् वैदिकान् । बाल्यादयोपिस्वयंप्रतिभातसकलवेदा. । जपन् तदर्थध्यायन् ॥ १८ ॥ ति० तत्कर्म ग्रहणकर्म ॥ १९ ॥ ति० मुमोक्षयिषवइति । मोक्षशब्दात्तत्करोतीतिण्यन्तात्सन् । रवमाणा क्रोशन्त. ॥ २३ ॥

[ पा० ] १ झ इदंमुहूर्तं. २ ट. इमंमुहूर्तं. ३ क. ख. घ. ज. भास्करं. ४ ग. ङ. च. छ. झ. ञ. ट. पापाभिप्रायकंदृष्ट्वा. ५ च. छ. मौनमुपाश्रित. ङ. झ. ञ. ट. मौनमुपास्थित..

तेऽशक्नुवन्तः संप्राप्तुं वालिनं राक्षसोत्तमाः ॥ तस्य बाहूरुवेगेन परिश्रान्ता व्यवस्थिताः ॥ २५ ॥
वालिमार्गादपाक्रामन्पर्वतेन्द्रा हि गच्छतः ॥ किं पुनर्जीवितप्रेप्सुर्बिभ्रद्वै मांसशोणितम् ॥ २६ ॥
अपक्षिगणसंपातान्वानरेन्द्रो महाजवः ॥ क्रमशः सागरान्सर्वान्संध्याकालमवन्दत ॥ २७ ॥
संभाज्यमानो भूतैस्तु खेचरैः खेचरोत्तमः ॥ पश्चिमं सागरं वाली ह्याजगाम सरावणः ॥ २८ ॥
तस्मिन्संध्यामुपासित्वा स्नात्वा जप्त्वा च वानरः ॥ उत्तरं सागरं प्रायाद्वहमानो दशाननम् ॥२९॥
बहुयोजनसाहस्रं वहमानो महाहरिः ॥ वायुवच्च मनोवच्च जगाम सह शत्रुणा ॥ ३० ॥
उत्तरे सागरे संध्यामुपासित्वा दशाननम् ॥ वहमानोऽगमद्वाली पूर्वं वै स महोदधिम् ॥ ३१ ॥
तत्रापि संध्यामन्वास्य वासविः स हरीश्वरः ॥ किष्किन्धामभितो गृह्य रावणं पुनरागमत् ॥ ३२ ॥
चतुर्ष्वपि समुद्रेषु संध्यामन्वास्य वानरः ॥ रावणोद्वहनश्रान्तः किष्किन्धोपवनेऽपतत् ॥ ३३ ॥
रावणं तु मुमोचाथ स्वकक्षात्कपिसत्तमः ॥ कुतस्त्वमिति चोवाच प्रहसन्रावणं मुहुः ॥ ३४ ॥
विस्मयं तु महद्गत्वा श्रमलोलनिरीक्षणः ॥ राक्षसेन्द्रो हरीन्द्रं तमिदं वचनमब्रवीत् ॥ ३५ ॥
वानरेन्द्र महेन्द्राभ राक्षसेन्द्रोस्मि रावणः ॥ युद्धेप्सुरिह संप्राप्तः स चाद्यासादितस्त्वया ॥ ३६ ॥
अहो बलमहो वीर्यमहो गाम्भीर्यमेव च ॥ येनाहं पशुवद्गृह्य भ्रामितश्चतुरोर्णवान् ॥ ३७ ॥
एवमश्रान्तवद्वीर शीघ्रमेव महार्णवान् ॥ मां चैवोद्वहमानस्तु कोन्यो वीरः क्रमिष्यति ॥ ३८ ॥
[ ये सुरा दानवा लोके दैत्यराक्षसपन्नगाः ॥ सर्वेषामेव तेषां त्वं बलादभ्यधिको ह्यसि ॥ ३९ ॥ ]
त्रयाणामेव भूतानां गतिरेषा प्लवङ्गम ॥ मनोनिलसुपर्णानां तव चात्र न संशयः ॥ ४० ॥
सोहं दृष्टबलस्तुभ्यमिच्छामि हरिपुङ्गव ॥ त्वया सह चिरं सख्यं सुस्निग्धं पावकाग्रतः ॥ ४१ ॥
दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनभोजनम् ॥ सर्वमेवाविभक्तं नौ भविष्यति हरीश्वर ॥ ४२ ॥

---

त्मनेपदं ॥ २२—२४ ॥ तेऽशक्नुवन्त इति ॥ अशक्नुवन्त इति पद ॥ २५ ॥ हि यस्मात्पर्वतेन्द्रा अपि वालिमार्गादपाक्रामन् । मासादिमान् जीवितप्रेप्सुः प्राणी गच्छतस्तस्य मार्गादपाक्रामतीति किं पुनः । पर्वतेन्द्रा हीति च पाठः ॥ २६ ॥ अपक्षिगणसंपातान् पक्षिगणैरप्यशक्यसपातान् सागरान् । क्रमशोऽगच्छन्निति शेष. । सध्याकालं प्रात.सध्याकालदेवतारूपमवन्दत ॥ २७ ॥ सभाज्यमान. पूज्यमानः । पश्चिममित्यादि । दक्षिणे सध्याङ्गशौचं । पश्चिमे मन्त्रपूर्वकसंध्याङ्गस्नान । उत्तरे प्रोक्षणादिक । पूर्वेऽर्घ्यप्रदानादिकमिति । अन्यथा संध्याचतुष्टयाभावात् तदङ्गस्यापि तत्त्वेन व्यपदेशात् ॥ २८—३१ ॥ वासवस्यापत्य वासविः ॥ ३२—३३ ॥ प्रहसन्निति मां जिघृक्षुः स्वयमेव दुरात्मा निगृहीत इति प्रहसन् ॥ ३४—३५ ॥ त्वयासादित इति कक्षनिक्षेप प्रापित इत्यर्थः ॥३६—३७॥ अश्रान्तवत् अश्रान्त.सन् । मां चैव महाद्रिसमानभारमित्यर्थ. ॥ ३८—४० ॥ तुभ्यं

---

**ति०** अपक्षिगणसपातान् यावताकालेनवालीगच्छति तावताकालेनपक्षिगणैरप्राप्यान्सागरान्क्रमशोऽगच्छन्नितिशेष ॥ २७ ॥ **ति०** सरावण कक्षस्थरावणसहित ॥ २८ ॥ **ति०** तस्मिन्निति । दक्षिणसमुद्रतटेपि 'जपन्वैनैगमान्मन्त्रा'नित्युक्ते समुद्रचतुष्टयेपिप्रात सध्याकालस्यउदयात्पूर्वपरतश्चमिलित्वात्रिमुहूर्तात्मकस्य मध्येचतुस्समुद्रतटावच्छेदेनकिञ्चित्किञ्चित्कालंध्येयब्रह्मणोध्याननियमस्तत्प्रतिपादकमन्त्रस्मरणनियमश्चवालिनइतिगम्यते ॥ ईदृशव्रतंचमहेन्द्रोरावणस्यसमूलनाशायपुत्रद्वाराऽनुतिष्ठतीतिबोध्य ॥ यत्तु तस्यदक्षिणसमुद्रेशौच पश्चिमेस्नानं उत्तरेआपोहिष्ठादिमन्त्रैर्मार्जन पूर्वसमुद्रेऽर्घ्यादीत्येवसध्यावन्दनशेषानुष्ठानत्वाच्चतुर्षुसमुद्रेषुसंध्यामन्वास्येत्युक्तिरितिकतकतीर्थादय । तत् 'जपन्वैनैगमान्मन्त्रान्' इतिदक्षिणसमुद्रस्नानकालोक्त्याविरुध्यते । मदुक्तरीत्यासामञ्जस्याच्च । सध्याकालेगायत्र्यर्थब्रह्मणोध्यानमेवप्रधानं । सएवसध्यापदार्थइतिस्पष्टंश्रुतिस्मृतिविदाम् ॥ २९ ॥ **ति०** नौ आवयो. ॥ ४२ ॥

[ पा० ] १ ङ. च. छ. झ. ञ. ट. सपूज्यमानोयातस्तुखचरैः. २ क. घ. ज. खेचरोहरि.. ३ क. ख. ज. पाठेष्वयंश्लोकोदृश्यते.

ततः प्रज्वालयित्वाऽग्निं तावुभौ हरिराक्षसौ ॥ भ्रातृत्वमुपसंपन्नौ परिष्वज्य परस्परम् ॥ ४३ ॥
अन्योन्यं लम्बितकरौ ततस्तौ हरिराक्षसौ ॥ किष्किन्धां विशतुर्हृष्टौ सिंहौ गिरिगुहामिव ॥ ४४ ॥
स तत्र मासमुषितः सुग्रीव इव रावणः ॥ अमात्यैरागतैर्नीतस्त्रैलोक्योत्सादनार्थिभिः ॥ ४५ ॥
एवमेतत्पुरा वृत्तं वालिना रावणः प्रभो ॥ धर्षितश्च कृतश्चापि भ्राता पावकसन्निधौ ॥ ४६ ॥
बलमप्रतिमं राम वालिनोऽभवदुत्तमम् ॥ सोपि त्वया विनिर्दग्धः शलभो वह्निना यथा ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

---

## पञ्चत्रिंशः सर्गः ॥ ३५ ॥

रामेणागस्त्यंप्रति हनुमत्प्रशंसनपूर्वक तस्यवाल्यपेक्षयाऽधिकवलत्वोक्त्या तेनसुग्रीवप्रीत्यैवाल्यमारणे कारणप्रश्न ॥ १ ॥ अगस्त्येन तदुपोद्घाततयारामंप्रति हनुमदुत्पत्त्यादिकथनोपक्रम ॥ २ ॥ भगवतावायुदेवेन सुमेरुगिरिचारिण केसरिनाम्नोवानरराजस्यजायायामञ्जनायां हनुमत. समुत्पादनम् ॥ ३ ॥ जातमात्रेणहनुमता निजजनन्यांफलानयनायगतायां क्षुत्पीडासहिष्णुतयाऽद्यद्दिवाकरेफलत्वबुद्ध्या तज्जिहीर्षयाजवाद्गगने समुत्पतनम् ॥ ४ ॥ तदन्तरेसूर्यग्रहणायतत्समीपोपसर्पिणाराहुणा स्वजिघृक्षयास्वाभिमुख्येनाधावतिसतिहनुमति इन्द्रप्रति स्वरक्षणप्रार्थना ॥५॥ तदेन्द्रकरोत्सृष्टवज्राभिघातभग्नहनौहनुमति गिरौपततिसति क्रुद्धेनवायुना सकलप्राणिश्वासनिरोधनपूर्वक हनुमदानयनेनगुहाप्रवेश. ॥ ६ ॥ तदादेवगन्धर्वादिप्रार्थितेनब्रह्मणा वाय्वनुनयायदेवादिभि सह गुहायांवायुसमीपप्रत्यागमनम् ॥ ७ ॥

अपृच्छत तदा रामो दक्षिणाशाश्रयं मुनिम् ॥ प्राञ्जलिर्विनयोपेत इदमाह वचोर्थवत् ॥ १ ॥
अतुलं बलमेतद्वै वालिनो रावणस्य च ॥ न त्वेताभ्यां हनुमता समं त्विति मतिर्मम ॥ २ ॥
शौर्यं दाक्ष्यं बलं धैर्यं प्राज्ञता नयसाधनम् ॥ विक्रमश्च प्रभावश्च हनूमति कृतालयाः ॥ ३ ॥
दृष्ट्वैव सागरं वीक्ष्य सीदन्तीं कपिवाहिनीम् ॥ समाश्वास्य महाबाहुर्योजनानां शतं प्लुतः ॥ ४ ॥
धर्षयित्वा पुरीं लङ्कां रावणान्तःपुरं तदा ॥ दृष्ट्वा संभाषिता चापि सीता ह्याश्वासिता तथा ॥५॥
सेनाग्रगा मन्त्रिसुताः किंकरा रावणात्मजः ॥ एते हनुमता तत्र ह्येकेन विनिपातिताः ॥ ६ ॥
भूयो बन्धाद्विमुक्तेन भाषयित्वा दशाननम् ॥ लङ्का भस्मीकृता येन पावकेनेव मेदिनी ॥ ७ ॥
न कालस्य न शक्रस्य न विष्णोर्वित्तपस्य च ॥ कर्माणि तानि श्रूयन्ते यानि युद्धे हनूमतः ॥ ८ ॥

---

तवेत्यर्थः ॥ ४१—४४ ॥ सुग्रीव इवेति भ्रातृभावेनेत्यर्थः। आगतैरिति। सहेति शेषः ॥४५॥ भ्राताकृतः सोदरभावतया स्नेहीकृतः ॥ ४६–४७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने चतुस्त्रिंशःसर्गः ॥३४॥

अपृच्छतेत्यस्य विवरण इदवचनमिति ॥ १ ॥ एताभ्यामिति । एतयोरित्यर्थ. । षष्ठ्यर्थे बहुलं छन्दसीति वक्तव्य । इति षष्ठ्यर्थे चतुर्थी ॥२॥ नयसाधनं नीतिकृत्यसपादनं ॥ ३–७ ॥ कालस्य यमस्य ॥८॥

---

शि० विशतु विविशतु ॥ ४४ ॥ ति० धर्षितोवालिनारावण । पश्चात्पावकनिकटेभ्राताकृत सोदरभावतयास्नेह कृत । स० धर्षित प्राक् ॥ ४६ ॥ स० सोपि तादृशोपि ॥ ४७ ॥ इतिचतुस्त्रिंश.सर्गं ॥ ३४ ॥

स० दक्षिणाशाश्रयंविन्ध्यमुल्लङ्घ्य दक्षिणदिगाश्रयंमुनिमगस्त्यं इद वक्ष्यमाणं । अपृच्छत अपृच्छत् । आहवे चाय्यतेपूज्यत इति आहवचोराम । आहवशब्दोपपदात्पूजार्थाच्चायते 'अन्येभ्योपिदृश्यते' इतिकर्मणिडप्रत्ययेरूपं ॥ हेइदम अस्यापत्यमिकाम । दमयतीतिदम । ए दम इदम । तस्यसबुद्धि । अर्थवदितिक्रियाविशेषणं ॥ १ ॥ ति० हनूमता तद्बलेन ॥ २ ॥ ति० नकेवलंबलमेवाधिकं किंत्वन्यदपीत्याह—शौर्यमिति । दाक्ष्यं क्षिप्रकारित्वं । बलं शारीर । धैर्य केनाप्यप्रकंम्प्यता । प्राज्ञता शीघ्रकार्याकार्यनिर्णेतृता । नयसाधनं राजनीतिकृत्यसपादन ॥ ३ ॥ ति० बन्धात् ब्रह्मास्त्रबन्धात् ॥ स० पावकेन सकर्षणमुखोद्गतेन ॥ ७ ॥ ति० यानिकर्माणिहनूमतोदृष्टानि तानि कालस्ययमस्येन्द्रादेश्चनश्रूयन्ते ॥ स० हनूमतोयानिकर्माणि

एतस्य बाहुवीर्येण लङ्का सीता च लक्ष्मणः ॥ प्राप्ता मया जयश्चैव राज्यं मित्राणि बान्धवाः ॥ ९ ॥
हनूमान्यदि नो न स्याद्वानराधिपतेः सखा ॥ प्रवृत्तिमपि को वेत्तुं जानक्याः शक्तिमान्भवेत् ॥१०॥
किमर्थं वाल्यनेनैव सुग्रीवप्रियकाम्यया ॥ तदा वैरे समुत्पन्ने न दग्धो वीरुधो यथा ॥ ११ ॥
न हि वेदितवान्मन्ये हनूमानात्मनो बलम् ॥ यद्दृष्टवाञ्जीवितेष्टं क्लिश्यन्तं वानराधिपम् ॥ १२ ॥
एतन्मे भगवन्सर्वं हनूमति महामतौ ॥ विस्तरेण यथातत्त्वं कथयामरपूजित ॥ १३ ॥
राघवस्य वचः श्रुत्वा हेतुयुक्तमृषिस्तदा ॥ हनूमतः समक्षं तमिदं वचनमब्रवीत् ॥ १४ ॥
सत्यमेतद्रघुश्रेष्ठ यद्ब्रवीषि हनूमतः ॥ न बले विद्यते तुल्यो न गतौ न मतौ परः ॥ १५ ॥
अमोघशापैः शापस्तु दत्तोस्य ऋषिभिः पुरा ॥ न वेत्ता हि बलं येन बली सन्नरिमर्दनः ॥ १६ ॥
बाल्येप्येतेन यत्कर्म कृतं राम महाबल ॥ तन्न वर्णयितुं शक्यमिति बालतयाऽस्यते ॥ १७ ॥
यदि वाऽस्ति ह्यभिप्रायस्तच्छ्रोतुं तव राघव ॥ समाधाय मतिं राम निशामय वदाम्यहम् ॥ १८ ॥
सूर्यदत्तवरस्वर्णः सुमेरुर्नाम पर्वतः ॥ यत्र राज्यं प्रशास्त्यस्य केसरी नाम वै पिता ॥ १९ ॥
तस्य भार्या बभूवैषा ह्यञ्जनेति परिश्रुता ॥ जनयामास तस्यां वै वायुरात्मजमुत्तमम् ॥ २० ॥
शालिशूकनिभाभासं प्रासूतास्मुं तदाऽञ्जना ॥ फलान्याहर्तुकामा वै निष्क्रान्ता गहनेचरा ॥ २१ ॥
एष मातुर्वियोगाच्च क्षुधया च भृशार्दितः ॥ रुरोद शिशुरत्यर्थं शिशुः शरवणे यथा ॥ २२ ॥
तदोद्यन्तं विवस्वन्तं जपापुष्पोत्करोपमम् ॥ ददर्श फललोभाच्च ह्युत्पपात रविं प्रति ॥ २३ ॥
बालार्काभिमुखो बालो बालार्क इव मूर्तिमान् ॥ ग्रहीतुकामो बालार्कं प्लवतेऽम्बरमध्यगः ॥ २४ ॥
एतस्मिन्प्लवमाने तु शिशुभावे हनूमति ॥ देवदानवयक्षाणां विस्मयः सुमहानभूत् ॥ २५ ॥
नाप्येवं वेगवान्वायुर्गरुडो वा मनस्तथा ॥ यथाऽयं वायुपुत्रस्तु क्रमतेऽम्बरमुत्तमम् ॥ २६ ॥
यदि तावच्छिशोरस्य त्वीदृशो गतिविक्रमः ॥ यौवनं बलमासाद्य कथं वेगो भविष्यति ॥ २७ ॥
तमनुप्लवते वायुः प्लवन्तं पुत्रमात्मनः ॥ सूर्यदाहभयाद्रक्षंस्तुषारचयशीतलः ॥ २८ ॥
बहुयोजनसाहस्रं क्रमत्येष गतोम्बरम् ॥ पितुर्बलाच्च बाल्याच्च भास्कराभ्याशमागतः ॥ २९ ॥

---

लङ्का प्राप्ता विभीषणाय देयत्वेन प्राप्तेत्यर्थः। लक्ष्मणः प्राप्त इति । ओषध्यानयनेनेति शेषः॥९॥ हनूमान्यदि नो न स्यात् सहायत्वेनेति शेषः ॥ १० ॥ वीरुध इत्यकारान्तो वृक्षवाची ॥ ११ ॥ बाल्यवधहेतुं स्वय रामः ऊहति—न हीत्यादि ॥ १२ ॥ हनूमत्येतदिति हनूमद्विषये पृष्टमित्यर्थः ॥ १३—१४ ॥ यद्ब्रवीषि हे रघुश्रेष्ठ तदेतत्सत्यं। स आत्मनो बल न हि वेदेत्यर्थः ॥१५॥ तदेव दर्शयति—अमोघेत्यादि ॥१६॥ बालतया आस्यत इति। बालतया बालभावेन । अजानतैवेत्यर्थः ॥ १७ ॥ निशामय शृणु ॥ १८ ॥ सूर्यदत्तवरस्वर्णः सूर्यदत्तवरेण स्वर्णरूपः । सुमेरुः सुवर्णमेरुः ॥ १९ ॥ परिश्रुता प्रसिद्धा ॥ २० ॥ शालिशूकसमाभासं शाल्यग्रवत्पिङ्गलाभास । काञ्चनाद्रिकमनीयविग्रहमित्युक्तेः । प्रासूत प्रसूतवती ॥२१॥ शरवणे

---

श्रूयन्ते तानिनकालस्य नशक्रस्य नवित्तपस्यापिश्रूयन्ते । कथं विष्णोरनुग्रहादितिशेष । नञोयथाश्रुतविष्णुपदेनैवान्वयेवित्तपस्येत्यत्रनञोनुवृत्तिप्रसङ्ग । तदङ्गीकारेचैकेनैवचारितार्थ्यान्नञ्द्वयस्याधिक्यंस्यात् । 'नतेविष्णोजायमानोनजातोदेवमहिम्न परमन्तमाप ।' इत्यादिप्रमाणबाधश्च ॥ **शि०** वित्तपस्य विदाज्ञानेनैवतपआलोचनंदर्शनंयस्यतस्यविष्णोश्चन । उपलक्षणमेतत् ब्रह्मशिवयोरपि । अतएव नपतत्प्रकर्षदोष ॥ ८ ॥ **ति०** किमर्थवालिघातेनेतिपाठे सुग्रीवप्रियकाम्ययावालिघातेकिमर्थनप्रवृत्त इत्यर्थ । पदच्छेदशेषपूरणाभ्यागूढत्वात्तस्यैवविवरणंतदावैरइत्यादि ॥ ११ ॥ जीवितेष्ट जीवितादपिप्रियं ॥ १२ ॥ **स०** अमोघशापै बहुव्रीहि ॥ १६ ॥ **ति०** शिशुभावे बाल्यावस्थायाहनूमतिप्लवमानेसति ॥ २५ ॥ **शि०** भविष्यतीति विचार्येति

[ पा० ] १ झ. वालीचैतेन. २ क—ट. महामुने. ३ ग. घ. च. छ. झ. ञ. ट. प्रासूतेमंतदा.

शिशुरेष त्वदोषज्ञ इति मत्वा दिनेश्वरः ॥ कार्यं चात्र समायत्तमित्येवं न ददाह सः ॥ ३० ॥
यमेव दिवसं ह्येष ग्रहीतुं भास्करं प्लुतः ॥ तमेव दिवसं राहुर्जिघृक्षति दिवाकरम् ॥ ३१ ॥
अनेन स परामृष्टो राम सूर्यरथोपरि ॥ अपक्रान्तस्ततस्त्रस्तो राहुश्चन्द्रार्कमर्दनः ॥ ३२ ॥
स इन्द्रभवनं गत्वा सरोषः सिंहिकासुतः ॥ अब्रवीद्भ्रुकुटिं कृत्वा देवं देवगणैर्वृतम् ॥ ३३ ॥
बुभुक्षापनयं दत्त्वा चन्द्रार्कौ मम वासव ॥ किमिदं तत्त्वया दत्तमन्यस्य बलवृत्रहन् ॥ ३४ ॥
अद्याहं पर्वकाले तु जिघृक्षुः सूर्यमागतः ॥ अथान्यो राहुरासाद्य जग्राह सहसा रविम् ॥ ३५ ॥
स राहोर्वचनं श्रुत्वा वासवः संभ्रमान्वितः ॥ उत्पपातासनं हित्वा चोद्वहन्काञ्चनीं स्रजम् ॥३६॥
ततः कैलासकूटाभं चतुर्दन्तं मदस्रवम् ॥ शृङ्गारधारिणं प्रांशुं स्वर्णघण्टाट्टहासिनम् ॥ ३७ ॥
इन्द्रः करीन्द्रमारुह्य राहुं कृत्वा पुरस्सरम् ॥ प्रायाद्यत्राभवत्सूर्यः सहानेन हनूमता ॥ ३८ ॥
अथातिरभसेनागाद्राहुरुत्सृज्य वासवम् ॥ अनेन च स वै दृष्टः प्रधावञ्शैलकूटवत् ॥ ३९ ॥
ततः सूर्यं समुत्सृज्य राहुं फलमवेक्ष्य च ॥ उत्पपात पुनर्व्योम ग्रहीतुं सिंहिकासुतम् ॥ ४० ॥
उत्सृज्यार्कमिमं राम प्रधावन्तं प्लवङ्गमम् ॥ अवेक्ष्यैवं परावृत्य मुखशेषः पराङ्मुखः ॥ ४१ ॥
इन्द्रमाशंसमानस्तु त्रातारं सिंहिकासुतः ॥ इन्द्र इन्द्रेति संत्रासान्मुहुर्मुहुरभाषत ॥ ४२ ॥
राहोर्विक्रोशमानस्य प्रागेवालक्षितं स्वरम् ॥ श्रुत्वेन्द्रोवाच मा भैषीरहमेनं निषूदये ॥ ४३ ॥
ऐरावतं ततो दृष्ट्वा महत्तदिदमित्यपि ॥ फलं मत्वा हस्तिराजमभिदुद्राव मारुतिः ॥ ४४ ॥
तथास्य धावतो रूपमैरावतजिघृक्षया ॥ मुहूर्तमभवद्धोरमिन्द्राग्योरिव भास्वरम् ॥ ४५ ॥
एवमाधावमानं तु नातिक्रुद्धः शचीपतिः ॥ हस्तान्तादतिमुक्तेन कुलिशेनाभ्यताडयत् ॥ ४६ ॥
ततो गिरौ पपातैष इन्द्रवज्राभिताडितः ॥ पतमानस्य चैतस्य वामो हनुरभज्यत ॥ ४७ ॥
तस्मिंस्तु पतिते बाले वज्रताडनविह्वले ॥ चुक्रोधेन्द्राय पवनः प्रजानामहिताय सः ॥ ४८ ॥
प्रचारं स तु संगृह्य प्रजास्वन्तर्गतः प्रभुः ॥ गुहां प्रविष्टः स्वसुतं शिशुमादाय मारुतः ॥ ४९ ॥
विण्मूत्राशयमावृत्य प्रजानां परमार्तिकृत् ॥ रुरोध सर्वभूतानि यथा वर्षाणि वासवः ॥ ५० ॥

शिशुः स्कन्दः ॥ २२—२९ ॥ दोषज्ञः विद्वान् स न भवतीत्यदोषज्ञः । "दोषज्ञौ वैद्यविद्वांसौ" इत्यमरः ॥ ३०—३१ ॥ स राहुः । परामृष्टः स्पृष्टः ॥ ३२—३९ ॥ तत इति महाशैलकूटवत् बृहत्तरफलमवेक्ष्येत्यर्थः ॥ ४० ॥ मुखशेष इति राहुस्वरूपकथन ॥ ४१—४५ ॥ हस्तान्तात् हस्ताग्रात् । हस्तान्त इति समीप इत्यर्थः ॥ ४६—४८ ॥ प्रचारं स्वीयं देहियात्राहेतुभूत । गृह्य संक्षिप्य । अन्तर्गतः सर्वदेहान्तर्गतः ॥ ४९ ॥ रुरोधेति । निरुद्धस्वगतिप्रचारमकरोत् । एवंविधार्थस्य देवानां शक्यत्वे दृष्टान्तः

शेष ॥ २८ ॥ स० अदोषज्ञ सूर्यसमीपगमनेमांदहेदितिदोषानभिज्ञ ॥ ३१ ॥ ति० सूर्यरथोपरि तदुपरितनप्रदेशे ॥ स० अनेन हनुमता । पुरा सूर्यदर्शनात्पूर्वमेव । दृष्टोऽभूत् पुनश्चराहु त्रस्तस्सन्अपक्रान्तोभूत् ॥ ३२ ॥ ति० हेवासव चन्द्रार्कौ ममयथाकालं बुभुक्षापनयं बुभुक्षाअपनीयतेऽनेनेतिव्युत्पत्त्याऽन्नंदत्त्वा तदन्नं ॥ ३४ ॥ शृङ्गारधारिणं नानाशृङ्गारधारिणं । स्वर्णघण्टाशब्दरूपाट्टहासवन्तं ॥ ३७ ॥ ति० अतिरभसेन अतिवेगात् । वासवादपिपूर्वमितिशेष ॥ ३९ ॥ स० मुखशेष "शिरस्तुतस्यप्रहृतामवाप" इत्यादेर्मुखशेषइतिराहुस्वरूपसकीर्तनं ॥ ४१ ॥ स० इन्द्रइन्द्रेतिनिस्सधि कवि.कवयन्नवगमयति हनुमताऽसधिंत्रासकारणमितिमन्तव्यं ॥ ४२ ॥ स० प्राक् पूर्वं । आलक्षितंबहुवारंतेनसहसकथनेनज्ञातंस्वरश्रुत्वा दूरत श्रुत्वा राहोराह्वानंममेतिनिश्चिकाय ॥४३॥ ति० इदमपिमहत्फलमितिमत्वा ॥४४॥ स० नातिक्रुद्ध बालइत्यलक्ष्यतयाकोपाटोपाभावो-महेन्द्रस्येतिज्ञेयं । अतएवहस्तान्तात् हस्ताग्रादित्युक्तिः ॥ ४६ ॥ ति० वामाहनु हनुशब्द स्त्रिया । "तत्पराहनु" इतिकोशात् ॥ ४७ ॥ ति० प्रभु सर्वजगत्प्रवृत्तिनिवृत्तिकर्ता ॥ ४९ ॥ स० विण्मूत्राशयं तदुभयाधारस्थान । "आशय पनसाधारयोरपि"

[ पा० ] १ क—ट. फलन्तहस्तिराजानमभि. २ ङ. च. छ. झ. ट. मिन्द्राग्युपरिभास्वरं. ३ झ. वामाहनु .

वायुप्रकोपाद्भूतानि निरुच्छ्वासानि सर्वतः ॥ सन्धिभिर्भिद्यमानैश्च काष्ठभूतानि जज्ञिरे ॥ ५१ ॥
निःस्वाध्यायवषट्कारं निष्क्रियं धर्मवर्जितम् ॥ वायुप्रकोपात्त्रैलोक्यं निरयस्थमिवाभवत् ॥ ५२ ॥
ततः प्रजाः सगन्धर्वाः सदेवासुरमानुषाः ॥ प्रजापतिं समाधावन्दुःखिताश्च सुखेच्छया ॥ ५३ ॥
ऊचुः प्राञ्जलयो देवा महोदरनिभोदराः ॥ त्वया तु भगवन्सृष्टाः प्रजानाथ चतुर्विधाः ॥ ५४ ॥
त्वया दत्तोऽयमस्माकमायुषः पवनः पतिः ॥ सोऽस्मान्प्राणेश्वरो भूत्वा कस्मादेषोऽद्य सत्तम ॥ ५५॥
रुरोध दुःखं जनयन्नन्तःपुर इव स्त्रियः ॥ तस्मात्त्वां शरणं प्राप्ता वायुनोपहता वयम् ॥
[ वायुसंरोधजं दुःखमिदं नो नुद दुःखहन् ॥ ५६ ॥ ]
एतत्प्रजानां श्रुत्वा तु प्रजानाथः प्रजापतिः ॥ कारणादिति चोक्त्वाऽसौ प्रजाः पुनरभाषत ॥५७॥
यस्मिंश्च कारणे वायुश्चुक्रोध च रुरोध च ॥ प्रजाः शृणुध्वं तत्सर्वं श्रोतव्यं चात्मनः क्षमम् ॥५८॥
पुत्रस्तस्यामरेशेन इन्द्रेणाद्य निपातितः ॥ राहोर्वचनमास्थाय ततः स कुपितोऽनिलः ॥ ५९ ॥
अशरीरः शरीरेषु वायुश्चरति पालयन् ॥ शरीरं हि विना वायुं समतां याति दारुभिः ॥ ६० ॥
वायुः प्राणः सुखं वायुर्वायुः सर्वमिदं जगत् ॥ वायुना संपरित्यक्तं न सुखं विन्दते जगत् ॥६१॥
अद्यैव च परित्यक्तं वायुना जगदायुषा ॥ अद्यैव ते निरुच्छ्वासाः काष्ठकुड्योपमाः स्थिताः ॥६२॥
तद्यामस्तत्र यत्रास्ते मारुतो रुक्प्रदो हि नः ॥ मा विनाशं गमिष्याम अप्रसाद्यादितेः सुतम्॥६३॥

ततः प्रजाभिः सहितः प्रजापतिः सदेवगन्धर्वभुजङ्गगुह्यकैः ॥
जगाम तत्रास्यति यत्र मारुतः सुतं सुरेन्द्राभिहतं प्रगृह्य सः ॥ ६४ ॥
ततोऽर्कवैश्वानरकाञ्चनप्रभं सुतं तदोत्सङ्गगतं सदागतेः ॥
चतुर्मुखो वीक्ष्य कृपामथाकरोत्सदेवगन्धर्वर्षियक्षराक्षसैः ॥ ६५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

यथा वर्षाणीति ॥ ५०—५३ ॥ महोदरनिभोदराः आयुःस्तम्भान्महोदरव्याधिग्रस्तोदरवदुदरं येषांते तथा ॥ ५४—५६ ॥ कारणादिति चोक्त्वा किंचित्कारणमत्रास्तीत्युक्त्वा ॥ ५७—६२ ॥ रुक्प्रदः शूलरोगप्रदः । गमिष्याम अप्रसाद्येति संधिरार्षः ॥ ६३ ॥ तत्रास्यतीति । यत्र अस्यति तिष्ठतीति यावत् ॥ ६४ ॥ सदागतेर्वायोः । गन्धर्वर्षियक्षेति गुरुलघुभेद आर्षः ॥ ६५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

इतिविश्व. ॥ दुरदृष्टवशाद्दुर्ष्टियथावासवइन्द्रस्तुरुन्धेतद्वद्रुरोध ॥ ५० ॥ ति० स्वाध्यायोवेदाध्ययनं । वषट्कारोयाग । निष्क्रियं संसारशून्यं । निरयस्थमिव अतिशयितदु.खवदित्यर्थं ॥ ५२ ॥ ति० दारुभि समतांयाति क्षणमपिनचलतीत्यर्थ. ॥ ६० ॥ स० इदंसर्वंजगत् वायुः तदधीनमितियावत् ॥ ६१ ॥ स० रुक्प्रद महोदरादिसदृशरोगद । न· परदु खमात्मगामीति मन्यमानोमहात्मेतिसूचयितुमियमुक्तिः । अदितेः सुतं देवं । वायु अप्रसाद्य प्रसन्नमविधायगमिष्याम । अप्रसाद्येत्यसधिरार्षं. ॥ ६३ ॥ स० यत्र सुतंहनूमन्तंप्रगृह्यसवायु आस्यति आस्ते। तत्रजगाम। य जगत् अस्यति क्षिपतितिरस्करोतीतियावत्। ससुतंप्रगृह्ययत्रवर्तते । सप्तमीबलादस्यलाभ. । तत्रजगामेतिवा ॥ ६४ ॥ इतिपञ्चत्रिंश सर्ग ३५ ॥

[ पा० ] १ इदमर्धं, ग. ङ. च, छ, झ- ञ. ट. पाठेषुदृश्यते. २ ख. ङ—ट. सुतं. ३ ज. गन्धर्वसयक्षराक्षसै..

# षट्त्रिंशः सर्गः ॥ ३६ ॥

ब्रह्मणा वायुसान्त्वनपूर्वकंनिजकरपरामर्शनेनहनुमदुज्जीवने तुष्टेनवायुना यथापुरंसर्वप्राणिषुसंचरणम् ॥ १ ॥ ब्रह्मणा रुद्रेन्द्रादिभिर्हनुमतेवरदापनपूर्वक स्वयमपितस्मैवरदानेन स्वलोकगमनम् ॥ २ ॥ वरदप्तेनहनुमतापीडितैर्महर्षिभिस्तप्रति केनापिनिजबलस्मारणावधि दीर्घकाल स्वबलापरिज्ञानप्रकारकशापदानम् ॥ ३ ॥ एवमगस्त्येन रामप्रति हनुमतऋषिशापमूलकस्वबलाज्ञानस्य बाल्यमारणकारणत्वोक्तिपूर्वकं श्रीरामाभ्यनुज्ञानेनमुनिगणैःसह स्वाश्रमगमनम् ॥ ४ ॥

ततः पितामहं दृष्ट्वा वायुः पुत्रवधार्दितः ॥ शिशुकं तं समादाय उत्तस्थौ धातुरग्रतः ॥ १ ॥
चलत्कुण्डलमौलिस्रक्तपनीयविभूषणः ॥ पादयोर्न्यपतद्वायुस्तिस्रोपस्थाय वेधसे ॥ २ ॥
[ त्रिगुणाय त्रिवेदाय त्रियुगाय त्रिशक्तये ॥ त्रिकालाय त्रिधाम्ने ते त्रिलोकपतये नमः ॥ ३ ॥
इति नत्वा ततो वायुर्ब्रह्मणेऽनन्तशक्तये ॥ शिशुकं तं समादाय उपतस्थे पितामहम् ॥ ४ ॥ ]
तं तु वेदविदा तेन लम्बाभरणशोभिना ॥ वायुमुत्थाप्य हस्तेन शिशुं तं परिमृष्टवान् ॥ ५ ॥
स्पृष्टमात्रस्ततः सोथ सलीलं पद्मयोनिना ॥ जलसिक्तं यथा सस्यं पुनर्जीवितमाप्तवान् ॥ ६ ॥
प्राणवन्तमिमं दृष्ट्वा प्राणो गन्धवहो मुदा ॥ चचार सर्वभूतेषु सन्निरुद्धं यथा पुरा ॥ ७ ॥
मरुद्रोधाद्विनिर्मुक्तास्ताः प्रजा मुदिता भवन् ॥ शीतवातविनिर्मुक्ताः पद्मिन्य इव साम्बुजाः ॥ ८ ॥
ततस्त्रियुग्मः स्त्रिककुत्त्रिधामा त्रिदशार्चितः ॥ उवाच देवता ब्रह्मा मारुतप्रियकाम्यया ॥ ९ ॥
भो महेन्द्रेशवरुणप्रजेश्वरधनेश्वराः ॥ जानतामपि वः सर्वं वक्ष्यामि श्रूयतां हितम् ॥ १० ॥
अनेन शिशुना कार्यं कर्तव्यं वो भविष्यति ॥ तद्ददध्वं वरान्सर्वे मारुतस्यास्य तुष्टये ॥ ११ ॥
ततः सहस्रनयनः प्रीतियुक्तः शुभाननः ॥ कुशेशयमयीं मालामुत्क्षिप्येदं वचोऽब्रवीत् ॥ १२ ॥
[ अद्यैव च परित्यक्तं वायुना जगदायुषा ] मत्करोत्सृष्टवज्रेण हनुरस्य यथा हतः ॥
नाम्ना वै कपिशार्दूलो भविता हनुमानिति ॥ १३ ॥
अहमस्य प्रदास्यामि परमं वरमद्भुतम् ॥ इतः प्रभृति वज्रस्य ममावध्यो भविष्यति ॥ १४ ॥

---

तिस्रोपस्थाय त्रिरुपस्थाय । लुगप्यार्षः। त्रिरुपस्थायेतिच पाठः । न्यपतदिति । उपस्थानपूर्वक त्रिः साष्टाङ्गमनमदित्यर्थः ॥ २—४ ॥ हनुमज्जीवनार्थं अङ्गुल्यग्रविन्यस्तवेदपदेन वेदविदा विदितनिखिलवेदवेदान्तेन ब्रह्मणा लम्बाभरणशोभिना हस्तेन तं शिशुं च परिमृष्टवान् ॥ ५—६ ॥ सर्वभूतेषु सन्निरुद्ध अन्तः प्रतिष्ठितं यथा भवति तथा प्राणः प्राणभूतश्चचार ॥ ७ ॥ शीतदाहो हिमेन दाहः । शीतवात विनिर्मुक्ता इतिच पाठः ॥ ८ ॥ त्रीणि युग्मानि यस्यासौ त्रियुग्मः । तानि तु ऐश्वर्यं वीर्यं यशः श्रीः ज्ञानं वैराग्य । त्रिककुत् त्रिमूर्तिप्रधानः । त्रिधामा त्रिलोकगृहः । त्रिदशार्चितः देवार्चितः ॥ ९ ॥ ईश इत्यनेन रुद्र इत्युच्यते । प्रजेश्वरः यमः । वक्ष्यामि श्रूयतामिति । गुरुवैषम्यमार्षं ॥ १०—११ ॥ कुशे-

---

स० वधार्दित ताडनार्दित । शिशुक शिशुप्रतिमासदृश । वस्तुतस्तुनशिशु । तथालोकानाप्रदर्शयितारं ॥ शि० शिशुकं अनुकंपितसुतं ॥ १ ॥ शि० वेदवित् ब्रह्मा आतेन विस्तृतेनहस्तेन । वेदविदेतिच्छेदेतु हस्तस्यैवेदमपिविशेषणं । वेदस्थापनकर्त्रेतितदर्थ ॥ ५ ॥ स० सनिरुद्धं रुद्धं भावेक्त. । निरोध । सम्यक् नि निर्गत रोधोयस्मिन्कर्मणितद्यथाभवतितथा निरोधरहितं यथापुराप्राणापानाद्यात्मातथाभूत्वाचचार ॥ ७ ॥ स० जानता ज्ञानिना । वः हितवक्ष्यामि श्रूयता ॥ नागोजिभट्टवक्ष्यामिश्रूयतामित्यत्रगुरुवैषम्यमार्षमितिव्याचख्यौतत्किमभिप्रायकंवेतिज्ञानदरिद्राविचार्याः ॥ १० ॥ स० हत. हता । हतेत्यपिक्वचित्पाठ. । अहत अहता । सर्वात्मनानाशंप्राप्तेत्यतोहनुमानितिनाम्नाभवितेतिवा ॥ १३ ॥ ति० अह मालादानपूर्ववरं

[ पा० ] १ इदंश्लोकद्वयं च. पाठेदृश्यते. २ इदमर्धं च. छ. पाठयोर्दृश्यते.

मार्तण्डस्त्वब्रवीत्तत्र भगवांस्तिमिरापहः ॥ तेजसोस्य मदीयस्य ददामि शतिकां कलाम् ॥ १५ ॥
यदा तु शास्त्राण्यध्येतुं शक्तिरस्य भविष्यति ॥ तदास्य शास्त्रं दास्यामि येन वाग्मी भविष्यति ॥
न चास्य भविता कश्चित्सदृशः शास्त्रदर्शने ॥ १६ ॥
वरुणश्च वरं प्रादान्नास्य मृत्युर्भविष्यति ॥ वर्षायुतशतेनापि मत्पाशादुदकादपि ॥
यमो दण्डादवध्यत्वमरोगित्वं[1] च नित्यशः ॥ १७ ॥
वरं ददामि संतुष्ट अविषादं च संयुगे ॥ गदेयं मामिका चैनं संयुगे न वधिष्यति ॥
इत्येवं[2] वरदः प्राह तदा ह्येकाक्षिपिङ्गलः ॥ १८ ॥
मत्तो मदायुधानां च न वध्योऽयं भविष्यति ॥ [ मच्छूलेनाप्यवध्यत्वं[3] मम चैव भविष्यति ॥१९॥
मच्छक्तिमचलां चैव हन्तैव हि विशेषतः ॥ ] इत्येवं शंकरेणापि दत्तोस्य परमो वरः ॥ २० ॥
सर्वेषां ब्रह्मदण्डानामवध्योऽयं भविष्यति ॥ दीर्घायुश्च महात्मा च इति ब्रह्माऽब्रवीद्वचः ॥ २१ ॥
विश्वकर्मा च दृष्ट्वैनं[4] बालसूर्योपमं शिशुम् ॥ शिल्पिनां प्रवरः प्रादाद्वरमस्य महामतिः[5] ॥ २२ ॥
मत्कृतानि च शस्त्राणि यानि दिव्यानि[6] संयुगे ॥ तैरवध्यत्वमापन्नश्चिरजीवी भविष्यति ॥ २३ ॥
[ विनिर्मितानि[7] देवानामायुधानि तु यानि च ॥ तेषां संग्रामकालेषु अवध्योऽयं भविष्यति ॥२४॥ ]
ततः सुराणां तु वरैर्दृष्ट्वा ह्येनमलंकृतम् ॥ चतुर्मुखस्तुष्टमना वायुमाह जगद्गुरुः ॥ २५ ॥
अमित्राणां भयकरो मित्राणामभयंकरः ॥ अजेयो भविता पुत्रस्तव मारुत मारुतिः ॥ २६ ॥
कामरूपः कामचारी कामगः प्लवतां वरः ॥ भवत्यव्याहतगतिः कीर्तिमांश्च भविष्यति ॥ २७ ॥
रावणोत्सादनार्थानि रामप्रियकराणि च ॥ रोमहर्षकराण्येष कर्ता कर्माणि संयुगे ॥ २८ ॥
एवमुक्त्वा तमामन्त्र्य मारुतं त्वमरैः सह ॥ यथागतं ययुः सर्वे पितामहपुरोगमाः ॥ २९ ॥
सोपि गन्धवहः पुत्रं प्रगृह्य गृहमानयत् ॥ अञ्जनायास्तमाचख्यौ वरदत्तं विनिर्गतः ॥ ३० ॥

---

शयमयीं काञ्चनपद्ममयीमित्यर्थ. ॥ १२—१४ ॥ शतिकां शतैकांशभूतां ॥ ५ ॥ शास्त्र शास्त्रार्थज्ञान । ऐन्द्रव्याकरणमित्यर्थ. । शास्त्रदर्शने शास्त्रज्ञाने॥१६॥ वरुणोक्तवरस्तु स्वयुद्धनिमित्तमरणाभावमात्र ॥ १७—१९ ॥ परमो वरः शूलपाशुपतास्त्राद्यवध्यत्वमित्यर्थः ॥ २० ॥ सर्वेषां ब्रह्मास्त्रान्तानामित्यर्थ. । ब्रह्मदण्डाना ब्रह्मशापानां ब्रह्मायुधानां वा । दीर्घायुश्चेति ॥२१॥ यज्ञाद्यायुधानामपि विश्वकर्मनिर्मितत्वेपि तदतिरिक्तायुधपरमिदं ॥ २२—२९ ॥ वरदत्तं

दास्यामि ॥ १४ ॥ **ति०** शास्त्र शास्त्राध्ययन तदर्थज्ञानंच ॥ १६ ॥ **ति०** सतुष्टअविषादमित्यार्षोसन्धि ॥ १८ ॥ **ति०** महात्मा मह्रानात्मायस्यसः । ब्रह्मज्ञइतियावत् । सर्वेषाब्रह्मास्त्रान्ताना ब्रह्मदण्ड ब्रह्मर्षिक्रियमाण सहारोद्देश्यक शापोनभविष्यति । अस्येतिशेष ॥ २१ ॥ **स०** दिव्यानि दिविभवानि । तानि प्रसिद्धानि । तैरस्त्रै । इतिवरंददावित्यर्थ । दिव्यानितानीतिपदमेकंवा । इतानि हनुमन्तप्राप्तानि । तानिनभवन्तीत्यनितानि । दिव्यानिचतान्यनितानिच । दिव्यानितानियानितै । प्रतिघातमनितानीतिवा । नातोपितानितैरित्यनन्वयशङ्केतिमन्तव्य ॥ मत्कृतानियानि तानिदिव्यानि । तैरितिवा । तच्छब्देन दिव्यत्वविशिष्टशस्त्राणापरामर्शोज्ञेय ॥ २३ ॥ **ति०** एवमुक्त्वा महेन्द्रादयइत्यर्थ ॥ अमरै परिवारदेवगणै ॥ **स०** अमरै अमरत्वदै वरै.सहवर्तमानतंहनुमन्तमुक्त्वा मारुतंचामन्त्र्य पितामहपुरोगमा.सर्वेपिययाऽऽगतास्तथाययु । पितामहपुरोगमा

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट मरोगत्वचदत्तवान् २ ङ. झ. ञ. ट. इत्येवंवनद प्राहतदा. ग इत्येवंधनद प्रादात्तदा. ३ अयंश्लोक च. पाठेदृश्यते ४ ङ. च. झ. ञ. ट दृष्ट्वेमबालंप्रतिमहारथ.. ५ क—घ. मह्रात्मन . ६ ङ. च. झ. ञ. ट. दिव्यानितानिच. ७ अयंश्लोक. क—घ. पाठेषुदृश्यते.

प्राप्य राम वरानेष वरदानसमन्वितः ॥ बलेनात्मनि संस्थेन सोपूर्यत यथाऽर्णवः ॥ ३१ ॥
तरसा पूर्यमाणोपि तदा वानरपुङ्गवः ॥ आश्रमेषु महर्षीणामपराध्यति निर्भयः ॥ ३२ ॥
स्रुग्भाण्डान्यग्निहोत्रं च वल्कलाजिनसंचयान् ॥ भग्नविच्छिन्नविध्वस्तान्संशान्तानां करोत्ययम् ३३
एवंविधानि कर्माणि प्रावर्तत महाबलः ॥ सर्वेषां ब्रह्मदण्डानामवध्यः शंभुना कृतः ॥ ३४ ॥
जानन्त ऋषयस्तं वै क्षमन्ते तस्य शक्तितः ॥ ३५ ॥
यथा केसरिणा त्वेष वायुना सोञ्जनासुतः ॥ प्रतिषिद्धोपि मर्यादां लङ्घयत्येव वानरः ॥ ३६ ॥
ततो महर्षयः क्रुद्धा भृग्वङ्गिरसवंशजाः ॥ शेपुरेनं रघुश्रेष्ठ नातिक्रुद्धातिमन्यवः ॥ ३७ ॥
बाधसे यत्समाश्रित्य बलमस्मान्प्लवङ्गम ॥ तद्दीर्घकालं वेत्तासि नास्माकं शापमोहितः ॥
यदा ते स्मार्यते कीर्तिस्तदा ते वर्धते बलम् ॥ ३८ ॥
ततः स हृततेजौजा महर्षिवचनौजसा ॥ एषोश्रमाणि तान्येव मृदुभावं गतोचरत् ॥ ३९ ॥
अथर्क्षरजसो नाम वालिसुग्रीवयोः पिता ॥ सर्ववानरराजासीत्तेजसा भास्करप्रभः ॥ ४० ॥
स च राज्यं चिरं कृत्वा वानराणां हरीश्वरः ॥ स च ऋक्षरजा नाम कालधर्मेण संगतः ॥ ४१ ॥
तस्मिन्नस्तमिते चाथ मन्त्रिभिर्मन्त्रिकोविदैः ॥ पित्र्ये पदे कृतो वाली सुग्रीवो वालिनः पदे ॥४२॥
सुग्रीवेण समं त्वस्य अद्वैधं छिद्रवर्जितम् ॥ आबाल्यं सख्यमभवदनिलस्याग्निना यथा ॥ ४३ ॥
एष शापवशादेव न वेद बलमात्मनः ॥ वालिसुग्रीवयोर्वैरं यदा राम समुत्थितम् ॥ ४४ ॥
न ह्येष राम सुग्रीवो भ्राम्यमाणोपि वालिना ॥ देव जानाति न ह्येष बलमात्मनि मारुतिः ॥४५॥
ऋषिशापाहृतबलस्तदैष कपिसत्तमः ॥ सिंहः कुञ्जररुद्धो वा आस्थितः सहितो रणे ॥ ४६ ॥

---

दत्तवरं ॥ ३०—३२ ॥ स्रुग्भाण्डानि यज्ञोपकरणानि । संशान्तानां शान्तिप्रधानाना ॥ ३३ ॥ शभुना ब्रह्मणा । " शम्भू ब्रह्मत्रिलोचनौ " इत्यमर ॥३४॥ तस्य शक्तित' ब्रह्मणो वरशक्तित. ॥ ३५—३६ ॥ नातिक्रुद्धातिमन्यवः । क्रोधो जिघांसा मन्युरमर्षः । अतिक्रुद्धा अतिमन्यवश्च न भवन्तीति तथा ॥ ३७ ॥ तत् बलं ॥ ३८ ॥ हृततेजौजाः अपहृतस्ववीर्यबलज्ञान इत्यर्थ. । एषोश्रमाणीति आर्ष. सधि ॥ ३९ ॥ ऋक्षरजस इत्यकारान्तोप्यस्ति ॥ ४०—४१ ॥ वालिन. पदे यौवराज्ये ॥ ४२ ॥ अस्य हनूमत सुग्रीवेण सह आबाल्यं बाल्यमारभ्य ॥ ४३—४५ ॥ रणे युद्धादौ स्वबलमास्थितोभूत्

---

वरदा अमरैरितरै सहएवमुक्त्वेतिवा ॥ २९ ॥ **ति०** अग्निहोत्राणि अग्निहोत्रसाधनभूताग्नय । भग्नविच्छिन्नध्वस्तशब्दा स्रुग्भाण्डादिषुक्रमेणयोज्या । सशान्ताना सम्यक्शान्ताना शान्तिप्रधानानामृषीणामितियावत् ॥ **स०** सशान्तानामिति । एतेन निरपराधोपरोधोऽनेनकृतइतिसूच्यते ॥ ३३ ॥ **ति०** जानन्त वरदानमितिशेष । सहन्ते क्षमन्ते । तस्यचेष्टितमिति शेष ॥ ३५ ॥ **स०** महर्षिवचनौजसा वचनसामर्थ्येन । हृततेजौजा तेजश्शब्दपर्यायोयंतेजशब्द । एधोदकमित्यादिवत् । ओजोऽवष्टंभशक्ति । तेज पराक्रम । 'ओजोऽवष्टभप्रकाशयो तेजोवाग्निपराक्रमे' इतिचविश्व ॥ तानि सत्वानि । अश्रमाणि स्वप्रयुक्तश्रमरहितानि । यथाभवेयुस्तथा मृदुभाव मार्दवगत । अचरत् सचचार । एषतानाश्रमानेवेतिकासुचित्पुस्तकसपुटीषु पाठोस्ति । तत्रतुनायास ॥ ३९ ॥ **ति०** अद्वैध एकप्रकार ॥ ४३ ॥ **स०** एषहनुमान् नवेद नवेदेवस्थित ॥ ४४ ॥ **ति०** वालिनाभ्राम्यमाणएषसुग्रीवोपि तद्बलनवेदेत्यनुकर्ष । तदपिदेवकार्ययावदेव । तदातुजाम्बवतास्मारित समुद्रतीरेतज्ज्ञातवान् । उक्तमेवपुनराह—**देवेति** ॥ **स०** ननुहनुमतोज्ञानाभावेस्वप्रयोजनार्थंस्मार्यंतेवर्वंतइतिप्रागुक्ते स्मारयितव्यो मारयितव्ये वालिनिसुग्रीवेणेत्यतआह—नहीति । वालिनाभ्राम्यमाणएषसुग्रीव एषमारुतिरात्मबलनजानातीतिनवेद । अतोनबोधयामासेतिभाव ॥ ४५ ॥ **ति०** तदा सुग्रीवविपत्समये । आहृतबल अपहृतस्वबलपरिज्ञान । अतएव रणेकुञ्जररुद्ध सिहइव सहित

[ पा० ] १ ग. घ च बलेनापूर्यमाणोपि. २ झ न्यग्निहोत्राणि ३ च छ. विध्वस्तान्महर्षीणांकरोत्यय. क. ख. विध्वस्ताञ्शान्तानग्नीन्करोत्यसौ. ४ झ सहन्ते.

पराक्रमोत्साहमतिप्रतापसौशील्यमाधुर्यनयानयैश्च ॥
गाम्भीर्यचातुर्यसुवीर्यधैर्यैर्हनूमतः कोऽभ्यधिकोस्ति लोके ॥ ४७ ॥
असौ पुनर्व्याकरणं ग्रहीष्यन्सूर्योन्मुखः प्रष्टुमनाः कपीन्द्रः ॥
उद्यद्गिरेरस्तगिरिं जगाम ग्रन्थं महद्धारयनप्रमेयः ॥ ४८ ॥
ससूत्रवृत्त्यर्थपदं महार्थं ससंग्रहं सिध्यति वै कपीन्द्रः ॥
न ह्यस्य कश्चित्सदृशोस्ति शास्त्रे वैशारदे च्छन्दगतौ तथैव ॥ ४९ ॥
सर्वासु विद्यासु तपोविधाने प्रस्पर्धते यो हि गुरुं सुराणाम् ॥
सोयं नवव्याकरणार्थवेत्ता ब्रह्मा भविष्यत्यपि ते प्रसादात् ॥ ५० ॥
प्रवीविविक्षोरिव सागरस्य लोकान्दिधक्षोरिव पावकस्य ॥
युगक्षये ह्येव यथाऽन्तकस्य हनूमतः स्थास्यति कः पुरस्तात् ॥ ५१ ॥
एषेव चान्ये च महाकपीन्द्राः सुग्रीवमैन्दद्विविदाः सनीलाः ॥
सतारतारेयनलाः सरम्भास्त्वत्कारणाद्राम सुरैर्हि सृष्टाः ॥ ५२ ॥

---

॥ ४६ ॥ पराक्रमेति । सौशील्यं सुस्वभावत्व । माधुर्य वाचः । नयानयौ प्रवृत्तिनिवृत्ती । गाम्भीर्य चित्तस्य । धैर्य आपद्यक्षोभ. ॥ ४७ ॥ उद्यद्गिरेः उदयगिरेरित्यर्थ' । महद्ग्रन्थं व्याकरणग्रन्थं । धारयन् अर्थतः पाठतश्च गृह्णन्नित्यर्थ । धारयदिति पाठे नुडभाव आर्ष. । धारयते इति पाठान्तर ॥ ४८ ॥ ससूत्रेति । सूत्रमष्टाध्यायी । लक्षण वृत्ति सूत्रार्थमात्रप्रतिपादकग्रन्थः । अर्थपदं वार्तिक उक्तानुक्तदुरुक्तिचिन्तानुरूप । महार्थ भाष्य विस्तरविवरणरूप । सग्रह प्रकरणादि । साध्यति साधयति धारयतीत्यर्थ. । शास्त्रान्तरेष्वपि वैशारदे वैदुष्ये । छन्दगतौ छन्द'-शास्त्रे ॥ ४९—५० ॥ प्रवीविवक्षोर्युगान्ते भूमिमाप्लावयितु प्रकर्षेण विशेपेण वेगमिच्छोः । युगक्षये काले युगान्तकाल इत्यर्थ. ॥ ५१ ॥ एषेवेति सधि-

---

सुग्रीवसहितोयमास्थित स्थितएव । नतुयुद्धकृतवानिति । सिह कुञ्जररुद्धेवेतिपाठान्तर । तत्रसविरार्षे **स०** कुञ्जररुद्धसिंहो वासिहइव । अनेनशापपरिहारसमर्थोपिस्वेच्छयातदानुकूल्यसपादयन्नटनमाटीकतहनुमानितिसूच्यते ॥ ४६ ॥ **ति०** पराक्रम महत्स्वपियुद्धकार्येषूत्साह । उत्साहपदेनेतरकार्यविषय स । मतिरर्थनिर्धारण । प्रताप प्रभाव । सौशील्यं सुस्वभावत्वं । माधुर्य वाचि । नयानयौ तत्परिज्ञाने । प्रवृत्तिनिवृत्तीइत्यन्ये । गाभीर्य आपद्यक्षोभ । सुवीर्य स्वरक्षणेनपरपराभव । धैर्यमकंप्यचित्तता । हनूमतएतैर्गुणै. कोप्यधिक नकोपीत्यर्थ ॥ ४७ ॥ **ति०** धारयनप्रमेयइति नुडभावआर्षे । सूर्यसामुख्यार्थ तावद्गमन ॥ **स०** प्रष्टुमना सूर्यप्रतिमहद्व्याकरणंग्रहीष्यन् ग्रन्थधारयेतिसपादयेतितेनोक्तइतिशेष । तर्हिसूर्यापेक्षयाविज्ञत्वमायातमस्येत्यतआह—**नप्रमेयइति** । नसमास । अप्रमेयइत्यर्थ ॥ तत्राध्ययनतु तदन्तर्गतनारायणविवक्षयेतिबोध्य । सूर्योहनुमतोपिज्ञानाधिक किमित्यतोनेत्याह—नप्रमेयइति । अपदार्थ सूर्यइतियावत् । एतेनापिनटनंस्फुटीकृतवेदितव्यं । नागोजिभट्टपक्षे ग्रन्थव्याकरणपदयोरर्थविशेषविवक्षानुडभावार्षत्वकल्पनचेतिद्रष्टव्यं । अध्याहारश्चान्यत्रतेनापीवेतरैरप्यवश्यमङ्गीकृतइतिनकुतुकितातेनकर्तव्या ॥ ४८ ॥ **ति०** कोसौग्रन्थस्तत्राह—ससूत्रेति । सिध्यति सिद्धोभवति । शास्त्रान्तरेष्वपीत्यर्थ । तदेवाह—नह्यस्यसदृश शास्त्रेकश्चित् । छन्दगतौ पूर्वोत्तरमीमासामुखेनवेदार्थनिर्णये । वैशारदे वैदुष्ये । विशिष्यनवमव्याकरणकर्ताहनुमानितिचप्रसिद्धिरितिकतक ॥ **स०** ससूत्रवृत्त्यर्थपद सूत्र शिवडमरुनिस्सृतंचतुर्दशलक्षण । वृत्ति सूत्रवृत्ति । अर्थपदं तदर्थबोधकंतत्कालवर्तिपद । महार्थ बह्वर्थोपेत । ससग्रह सग्रहाख्यग्रन्थसहित । प्रति कपीन्द्र सिध्यति । 'सूत्रमष्टाध्यायीलक्षण । वृत्तिस्तात्कालिकसूत्रवृत्ति । अर्थबोधकपदवद्वार्तिक । महार्थ महाभाष्यपतञ्जलिकृत । ससग्रह व्याडिकृतसग्रहाख्यग्रन्थसहित । सिध्यतिसिद्धोभवति " इतिव्याकुर्वन्नागोजिभट्ट हनुमत पाणिनिपतञ्जल्यादीनाप्राचीनता स्वप्राचीनाचीर्णकर्मवशाज्जानातीतिनवयमधुनातनतनुतनवोव्याकर्तुंप्रभवाम । नवमव्याकरणकरणसमर्थस्यैतदनुसरणस्यायुक्तत्वाच्च । अइउणादीनासूत्राणानित्यत्वाद्भूमौ प्रवर्तयितुंपाणिनिस्तप कृत्वालब्धवास्तानीत्युपपत्ते । वैशारदे विशारदत्वे । छन्दगतौ छन्दोज्ञाने । छन्दश्शब्दपर्यायोऽयछन्दशब्द. ॥ ४९ ॥ **स०** एषेव एषइव । आर्ष सन्धि ॥ ५२ ॥

[ पा० ] १ क. ड. झ. ट. सिध्यतिवै. २ ड च. छ झ. ञ. ट. लोकक्षयेष्वेवयथा

[ गजो गवाक्षो गवयः सुदंष्ट्रो मैन्दः प्रभोज्योतिमुखो नलश्च ॥
एते च ऋक्षाः सह वानरेन्द्रैस्त्वत्कारणाद्राम सुरैर्हि सृष्टाः ॥ ५३ ॥
मही गता देवगणाः समस्ता महाबला रावणनाशहेतोः ॥
एतत्तु मत्तो विदितं तवास्तु प्लवङ्गमानां धरणीनिवासः ॥ ५४ ॥ ]
तदेतत्कथितं सर्वं यन्मां त्वं परिपृच्छसि ॥ हनूमतो बालभावे कर्मैतत्कथितं मया ॥ ५५ ॥
श्रुत्वाऽगस्त्यस्य कथितं रामः सौमित्रिरेव च ॥ विस्मयं परमं जग्मुर्वानरा राक्षसैः सह ॥ ५६ ॥
अगस्त्यस्त्वब्रवीद्रामं सर्वमेतच्छ्रुतं त्वया ॥ दृष्टः संभाषितश्चासि राम गच्छामहे वयम् ॥ ५७ ॥
श्रुत्वैतद्राघवो वाक्यमगस्त्यस्योग्रतेजसः ॥ प्राञ्जलिः प्रणतश्चापि महर्षिमिदमब्रवीत् ॥ ५८ ॥
अद्य मे देवता तुष्टाः पितरः प्रपितामहाः ॥ युष्माकं दर्शनादेव नित्यं तुष्टाः सबान्धवाः ॥ ५९ ॥
विज्ञाप्यं तु ममैतद्धि तद्वदाम्यागतस्पृहः ॥ तद्भवद्भिर्मम कृते कर्तव्यमनुकम्पया ॥ ६० ॥
पौरजानपदान्स्थाप्य स्वकार्येष्वहमागतः ॥ क्रतूनेव करिष्यामि प्रभावाद्भवतां सताम् ॥ ६१ ॥
सदस्या मम यज्ञेषु भवन्तो नित्यमेव तत् ॥ भविष्यथ महावीर्या ममानुग्रहकाङ्क्षिणः ॥ ६२ ॥
अहं युष्मान्त्समाश्रित्य तपोनिर्धूतकल्मषान् ॥ अनुग्रहीतः पितृभिर्भविष्यामि सुनिर्वृतः ॥
तदागन्तव्यमनिशं भवद्भिरिह सङ्गतैः ॥ ६३ ॥
अगस्त्याद्यास्तु तच्छ्रुत्वा ऋषयः संशितव्रताः ॥ एवमस्त्विति [2] तं चोक्त्वा प्रयातुमुपचक्रमुः॥६४॥
एवमुक्त्वा गताः सर्वे [3] ऋषयस्ते यथागतम् ॥ [ [4] अभिवाद्य महात्मानो राघवेण विसर्जिताः ॥]
राघवश्च तमेवार्थं चिन्तयामास विस्मितः ॥ ६५ ॥
ततोऽस्तं भास्करे याते विसृज्य नृपवानरान् ॥ संध्यामुपास्य विधिवत्तदा नरवरोत्तमः ॥
प्रवृत्तायां रजन्यां तु सोन्तःपुरचरोऽभवत् ॥ ६६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

---

## सप्तत्रिंशः सर्गः ॥ ३७ ॥

श्रीरामेणागस्त्यादिनिर्गमानन्तरसुखेनतद्रात्रियापनपूर्वकंप्रभातेभरतादिभि सहपौरप्रधानाधिष्ठितसभाप्रवेश· ॥ १ ॥

अभिषिक्ते तु काकुत्स्थे धर्मेण विदितात्मनि ॥ व्यतीता या निशा पूर्वा पौराणां हर्षवर्धिनी ॥१॥

---

रार्थः । तारेयोङ्गद ॥ ५२—५९ ॥ मम एतद्वक्ष्यमाण विज्ञाप्यमस्ति । आगतस्पृहोह् यद्वदामि तद्भवद्भि. मत्कृते मन्निमित्त अनुकम्पया कर्तव्य॥६०॥ आगतः वनादागत. अहं ॥ ६१ ॥ सदस्याः विधिदर्शिन. । महावीर्याः महातपोवीर्याः॥६२॥अनुग्रहीतइति । अनुगृहीत इत्यर्थः । अनिश सुनिर्वृत इत्यन्वयः ॥ ६३—६४ ॥ तमेवार्थं यागरूपप्रयोजन ॥ ६५—६६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

ऋषिगणास्त्वभिषेककाले संप्राप्ताः कथितकथाः

---

ति० तदा आगन्तव्यमितिच्छेद ॥ ६३ ॥ इतिषट्त्रिंश सर्ग ॥ ३६ ॥

स० निशा अभिषेकदिनरजनी अपूर्वा आश्चर्यावहा । तत्रहेतु —अननुभूतहर्षवर्धिनीति । पूर्वा प्राथमिकीतिवा ॥ १ ॥

[ पा ] १ इदंश्लोकद्वयं क—घ. च झ. ञ ट पाठेषुदृश्यते. २ ग. ङ. झ. ञ. ट. तंप्रोच्य. च. सश्रुत्य. ख. सभाष्य. ३ च. ऋषय.स्त्वस्वमाश्रमं. ४ इदमर्धं ख. घ. च. ज. पाठेषुदृश्यते.

तस्यां रजन्यां व्युष्टायां प्रातर्नृपतिबोधकाः ॥ बन्दिनः समुपातिष्ठन्सौम्या नृपतिवेश्मनि ॥ २ ॥
ते रक्तकण्ठिनः सर्वे किन्नरा इव शिक्षिताः ॥ तुष्टुवुर्नृपतिं वीरं यथावत्संप्रहर्षिणः ॥ ३ ॥
वीर सौम्य प्रबुध्यस्व कौसल्याप्रीतिवर्धन ॥ जगद्धि सर्वं स्वपिति त्वयि सुप्ते नराधिप ॥ ४ ॥
विक्रमस्ते यथा विष्णो रूपं चैवाश्विनोरिव ॥ बुद्ध्या बृहस्पतेस्तुल्यः प्रजापतिसमो ह्यसि ॥ ५ ॥
क्षमा ते पृथिवीतुल्या तेजसा भास्करोपमः ॥ वेगस्ते वायुना तुल्यो गाम्भीर्यमुदधेरिव ॥ ६ ॥
अप्रकम्प्यो यथा स्थाणुश्चन्द्रे सौम्यत्वमीदृशम् ॥ नेदृशाः पार्थिवाः पूर्वं भवितारो नराधिप ॥७॥
यथा त्वमतिदुर्धर्षो धर्मनित्यः प्रजाहितः ॥ न त्वां जहाति कीर्तिश्च लक्ष्मीश्च पुरुषर्षभ ॥ ८ ॥
श्रीश्च धर्मश्च काकुत्स्थ त्वयि नित्यं प्रतिष्ठितौ ॥ एताश्चान्याश्च मधुरा बन्दिभिः परिकीर्तिताः ॥९॥
सूताश्च संस्तवैर्दिव्यैर्बोधयन्ति स्म राघवम् ॥ स्तुतिभिः स्तूयमानाभिः प्रत्यबुध्यत राघवः ॥ १० ॥
स तद्विहाय शयनं पाण्डुराच्छादनास्तृतम् ॥ उत्तस्थौ नागशयनाद्धरिर्नारायणो यथा ॥ ११ ॥
समुत्थितं महात्मानं प्रह्वाः प्राञ्जलयो नराः ॥ सलिलं भाजनैः शुभ्रैरुपतस्थुः सहस्रशः ॥ १२ ॥
कृतोदकशुचिर्भूत्वा काले हुतहुताशनः ॥ देवागारं जगामाशु पुण्यमिक्ष्वाकुसेवितम् ॥ १३ ॥
तत्र देवान्पितॄन्विप्रानर्चयित्वा यथाविधि ॥ बाह्यकक्ष्यान्तरं रामो निर्जगाम जनैर्वृतः ॥ १४ ॥
उपतस्थुर्महात्मानो मन्त्रिणः सपुरोहिताः ॥ वसिष्ठप्रमुखाः सर्वे दीप्यमाना इवाग्नयः ॥ १५ ॥
क्षत्रियाश्च महात्मानो नानाजनपदेश्वराः ॥ रामस्योपाविशन्पार्श्वे शक्रस्येव यथाऽमराः ॥ १६ ॥
भरतो लक्ष्मणश्चात्र शत्रुघ्नश्च महायशाः ॥ उपासांचक्रिरे हृष्टा वेदास्त्रय इवाध्वरम् ॥ १७ ॥
यांताः प्राञ्जलयो भूत्वा किंकरा मुदिताननाः ॥ मुदिता नाम पार्श्वस्था बहवः समुपाविशन् ॥१८॥
वानराश्च महावीर्या विंशतिः कामरूपिणः ॥ सुग्रीवप्रमुखा राममुपासन्ते महौजसः ॥ १९ ॥
विभीषणश्च रक्षोभिश्चतुर्भिः परिवारितः ॥ उपासते महात्मानं धनेशमिव गुह्यकाः ॥ २० ॥
तथा निगमवृद्धाश्च कुलीना ये च मानवाः ॥ शिरसा वन्द्य राजानमुपासन्ते विचक्षणाः ॥ २१ ॥

---

विसृष्टाश्च । अभिषेकदिनस्य या निशा पौराणा हर्षवर्धिनी पूर्वा प्रथमा निशाऽसीत् सा च व्यतीता ॥ १—३ ॥ त्वयि सुप्ते सर्वं स्वपितीति त्वयि ब्राह्मे मुहूर्ते उत्थाय धर्मानुष्ठानरहिते सति सर्वं जगत्सुप्तधर्मकं भवति । " यथा राजा तथा प्रजाः " इतिन्यायादिति भावः ॥ ४ ॥ बृहस्पतेस्तुल्यो बुद्ध्येति । प्रजापतिसमोसिप्रजापरिपालन इति शेषः ॥५—६॥ अप्रकम्प्य इति ॥ ईदृशाः पार्थिवाः पूर्वं नाभूवन्निति शेषः। न भवितार इति । अग्र इति शेष. ॥७॥ न जहाति न त्यजति ॥ ८—११ ॥ सलिलं गृहीत्वेति शेषः॥१२॥ कृतोदकशुचिः उदकेन कृतशौच इत्यर्थः । देवागारं

---

स० रजन्या तच्चतुर्थयामादिभागे । व्युष्टाया उषस्त्वावस्थागताया ॥ २ ॥ स० रक्तकण्ठिन मधुरकण्ठा । रक्तोमधुर कण्ठोयेषाते तथा तेसन्त्येषा तेतया । स्वहस्ताधस्तात्स्थितगायनवन्त । एवंचनकर्मधारयादित्वाद्यनित्यताभ्युपगमाद्यायास महत्त्वं चवन्दिनालभ्यतइतिज्ञेयम् ॥ ३ ॥ ति० ईदृशंसौम्यत्व त्वद्वृत्तिसौम्यत्वंचन्द्रे नान्यत्र ॥ ७ ॥ ति० एताश्चान्याश्च । उक्तयइति शेष. ॥ ९ ॥ ति० पाण्डुराच्छादनं उत्तराच्छादनपट' ॥ स० उत्तस्थौ नागशयनाद्यथानारायणोमूलरूपी ॥ ११ ॥ ति० सलिलं गृहीत्वेतिशेष ॥ शौचाद्यर्थमितिभाव ॥ १२ ॥ ति० मुदितानाम तन्नामका किङ्करा ॥ १८ ॥ कतक० विंशतिर्वानरा सुग्रीवाङ्गदहनुमज्जाम्बवत्सुषेणतारनीलनलमैन्दद्विविदकुमुदशरभशतबलिगन्धमादनगजगवाक्षगवयधूम्ररभज्योतिर्मुखाविंशति प्रधानवानराइत्यर्थ ॥ १९ ॥

[ पा० ] १ क. ख. घ ज. पुनरेवापरेऽहनि छ. प्रातरेवापरेऽहनि. २ घ. ज पर्युपातिष्ठन् ३ क—ज. नृपतिंसुसंयथाकालंप्रहर्षिता.. ४ च. छ. पाण्डुराच्छादनंतत.. ५ च. छ एतेप्राञ्जलयो. ६ च. छ. मुदिताराम. क—घ. ज. भृत्याश्चराम.

तथा परिवृतो राजा श्रीमद्भिर्ऋषिभिर्वृतः ॥ राजभिश्च महावीर्यैर्वानरैश्च सराक्षसैः ॥ २२ ॥
यथा देवेश्वरो नित्यमृषिभिः समुपास्यते ॥ अधिकस्तेन रूपेण सहस्राक्षाद्विरोचते ॥ २३ ॥
तेषां समुपविष्टानां तास्ताः सुमधुराः कथाः ॥ कथ्यन्ते धर्मसंयुक्ताः पुराणज्ञैर्महात्मभिः ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

# ॥ अथाधिकपाठश्लोकप्रारम्भः ॥

## प्रक्षिप्तेषु प्रथमः सर्गः ॥ १ ॥

रामंप्रत्यगस्त्येन मेरुशृङ्गनिवासिनोब्रह्मणोनेत्रांबुजाताद्दक्षरजोनामकवानरवराद्वालिसुग्रीवजननप्रकारनिरूपणम् ॥ १ ॥

एतच्छ्रुत्वा तु निखिलं राघवोऽगस्त्यमब्रवीत् ॥ य एषर्क्षरजा नाम वालिसुग्रीवयोः पिता ॥ १ ॥
जननी का च भगवन्न त्वया परिकीर्तिता ॥ वालिसुग्रीवयोर्ब्रह्मन्माता मे नामतः कुतः ॥
एतद्ब्रह्मन्समाचक्ष्व कौतूहलमिदं हि नः ॥ २ ॥
स प्रोक्तो राघवेणैवमगस्त्यो वाक्यमब्रवीत् ॥ ३ ॥
शृणु राम कथामेतां यथापूर्वं समासतः ॥ नारदः कथयामास ममाश्रममुपागतः ॥ ४ ॥
कदाचिदटमानोसावतिथित्वमुपागतः ॥ अर्चितस्तु यथान्यायं विधिदृष्टेन कर्मणा ॥ ५ ॥
सुखासीनः कथां त्वेनां मया पृष्टः स कौतुकात् ॥ कथयामास धर्मात्मा महर्षे श्रूयतामिति ॥६॥
मेरुर्नगवरः श्रीमाञ्जाम्बूनदमयः शुभः ॥ तस्य यन्मध्यमं शृङ्गं सर्वदैवतपूजितम् ॥ ७ ॥
तस्मिन्दिव्या सभा रम्या ब्राह्मी या शतयोजना ॥ तस्यामास्ते सदा देवः पद्मयोनिश्चतुर्मुखः ॥८॥
योगमभ्यसतस्तस्य नेत्राभ्यां यद्रसोस्रवत् ॥ तद्गृहीतं भगवता पाणिना चर्चितं तु तत् ॥ ९ ॥
निक्षिप्तमात्रं तद्भूमौ ब्रह्मणा लोककर्तृणा ॥ तस्मिन्नश्रुकणे राम वानरः संबभूव ह ॥ १० ॥
उत्पन्नमात्रस्तु तदा वानरश्च नरोत्तम ॥ समाश्वास्य प्रियैर्वाक्यैरुक्तः किल महात्मना ॥ ११ ॥

---

देवपूजागृह ॥ १३—२४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

ति० ऋषिभि ऋषयोत्रवसिष्ठाद्या ॥ २२ ॥ ति० तेनरूपेण सर्वलोकोपास्यत्वाकारेण ॥ २३ ॥ इतिसप्तत्रिंश सर्ग ॥ ३७ ॥
अथप्रक्षिप्तसर्गपञ्चकव्याख्यानंसत्यधर्मतीर्थीय ॥ स० अत्रवालिसुग्रीवोत्पत्तीतिहासोरावणश्वेतद्वीपगमनेतिहासश्चकैश्चनसर्गैरगस्त्योक्तितयाप्रतिपाद्यते । तेप्रक्षिप्ता पूर्वसर्गान्तेऽगस्त्यस्यस्वाश्रमप्रतिगमनकथनादितिनागोजिभट्ट । तन्न । बहुपुस्तकसपुटीमनवलोक्यैतत्साहसकरणस्यायुक्तत्वात् । वर्ततेचकासुचित्सपुटीषुकथितेतिहाससमाप्त्यनन्तरतस्यस्वाश्रमगमनकथा । तस्मादस्माभिर्व्याख्यायन्ते ॥ य' क किंगुणक कस्यपुत्र ॥ १ ॥ माता वालिसुग्रीवयोश्चनश्रुता नामचकि ॥२॥ ममाश्रममुपागतोनारद कथयामास । एताकथासमासत.शृणु ॥४॥ अटमान अटन् । अतिधर्म बहुधर्मउपागत प्राप्तोनारद । कर्मणा गवाद्यर्पणेन ॥ ५ ॥ महर्षे अगस्त्य ॥ ६ ॥ नगवर पर्वतोत्तम ॥ ७ ॥ दिव्या दिविभवेव । रम्यामनोहरा ॥ ८ ॥ योगमभ्यसत अभ्यस्यत योगाभ्यासकुर्वत । तस्य चतुराननस्य । नेत्राभ्यारस स्रवत् अस्रवत् ॥ एतेनैकमुखसबन्धोद्योत्यते । नेत्रेभ्यइतिपाठे मुखचतुष्टयगतनयनाष्टकादित्यर्थ । तत् सरस । गृहीत गृहीत । पाणिनातत् स । चर्चितं चर्चित ॥ ९ ॥ लोककर्तृणेतिविशेषणाद्ब्रह्मशब्दोनपुंसकश्चतुर्मुखवाची । लोककर्तृणा कर्त्रेतिवा ॥ १० ॥ महात्मना समाश्वास्यवाक्यैरुक्त. ॥ ११ ॥

[ पा० ] १ ड च छ झ. ञ ट. ऋषिभिर्वरै . क. घ. ज. ऋषिसत्तमै . २ झ. ञ. सुग्रीवयोश्चापिनामनीकेनहेतुना. ३ ड. च कथामेता ४ ड. च छ. झ. ञ. ब्रह्मण शतयोजना.

पश्य शैलं सुविस्तीर्णं सुरैरध्युषितं तदा ॥ तस्मिन्रम्ये गिरिवरे बहुमूलफलाशनः ॥ १२ ॥
ममान्तिकचरो नित्यं भव वानरपुङ्गव ॥ कंचित्कालमिहास्स्व त्वं तव श्रेयो भविष्यति ॥ १३ ॥
एवमुक्तः स चैतेन ब्रह्मणा वानरोत्तमः ॥ प्रणम्य शिरसा पादौ देवदेवस्य राघव ॥
उक्तवॉल्लोककर्तारमादिदेवं जगद्गुरुम् ॥ १४ ॥
यथाऽऽज्ञापयसे देव स्थितोऽहं तव शासने ॥ एवमुक्त्वा हरिर्देवं ययौ हृष्टमनास्तदा ॥ १५ ॥
स तदा द्रुमषण्डेषु फलपुष्पघनेषु च ॥ अर्क्षप्रतिबलः शैघ्ये वने फलकृताशनः ॥ १६ ॥
क्वचिन्मधूनि मुख्यानि चिन्वन्पुष्पाण्यनेकशः ॥ दिनेदिने च सायाह्ने ब्रह्मणोन्तिकमागमत् ॥१७॥
गृहीत्वा राम मुख्यानि पुष्पाणि च फलानि च ॥ ब्रह्मणो देवदेवस्य पादमूले न्यवेदयत् ॥ १८ ॥
एवं तस्य गतः कालो बहुः पर्यटतो गिरिम् ॥ १९ ॥
कस्यचित्त्वथ कालस्य समतीतस्य राघव ॥ ऋक्षराड्वानरश्रेष्ठस्तृष्णया परिपीडितः ॥ २० ॥
उत्तरं मेरुशिखरं गतस्तत्र च दृष्टवान् ॥ नानाविहङ्गसंघुष्टं प्रसन्नसलिलं सरः ॥ २१ ॥
चलत्केसरमात्मानं कृत्वा तस्य तटे स्थितः ॥ ददर्श तस्मिन्तसरसि वक्त्रच्छायामथात्मनः ॥ २२ ॥
कोऽयमस्मिन्मम रिपुर्वसत्यन्तर्जले महान् ॥ रूपं चान्तर्गतं तत्र वीक्ष्य तत्पाथसो हरिः ॥ २३ ॥
क्रोधाविष्टमना ह्येष नियतं माऽवमन्यते ॥ तदस्य दुष्टभावस्य कर्तव्यो निग्रहो मया ॥ २४ ॥
एवं संचिन्त्य मनसा स वै वानरचापलात् ॥ आप्लुत्य चापतत्तस्मिन्ह्रदे वानरसत्तमः ॥ २५ ॥
उत्प्लुत्य तस्मात्सरस उत्थितः प्लवगः पुनः ॥ तस्मिन्नेव क्षणे राम स्त्रीत्वं प्राप स वानरः ॥ २६ ॥
मनोज्ञरूपा सा नारी लावण्यललिता शुभा ॥ विस्तीर्णजघना सुभ्रूर्नीलकुञ्चितमूर्धजा ॥ २७ ॥
मुग्धा सस्मितवक्त्रा च पीनस्तनतटा शुभा ॥ ह्रदतीरस्थिता भाति ऋजुयष्टिर्लता तथा ॥ २८ ॥
त्रैलोक्यसुन्दरी कान्ता सर्वचित्तप्रमाथिनी ॥ लक्ष्मीव पद्मरहिता चन्द्रज्योत्स्नेव निर्मला ॥ २९ ॥
रूपेणाप्यभवत्सा तु श्रीर्गौर्देवी उमा यथा ॥ द्योतयन्ती दिशः सर्वास्तत्राभूत्सा वराङ्गना ॥ ३० ॥
एतस्मिन्नन्तरे देवो निर्वृत्तः सुरनायकः ॥ पादावुपास्य देवस्य ब्रह्मणस्तेन वै पथा ॥ ३१ ॥
तस्यामेव च वेलायामादित्योपि परिभ्रमन् ॥ तस्मिन्नेव वने सोभूद्यस्मिन्त्सा तनुमध्यमा ॥ ३२ ॥
युगपत्सा तदा दृष्टा देवाभ्यां सुरसुन्दरी ॥ कन्दर्पवशगौ तौ तु दृष्ट्वा तां संबभूवतुः ॥ ३३ ॥
ततः क्षुभितसर्वाङ्गौ सुरेन्द्रतपनावुभौ ॥ तद्रूपमद्भुतं दृष्ट्वा त्याजितौ धैर्यमात्मनः ॥ ३४ ॥
ततस्तस्यां सुरेन्द्रेण स्कन्नं शिरसि पातितम् ॥ अनासाद्यैव तां नारीं संनिवृत्तमथोऽभवत् ॥
ततः सा वानरपतिं प्रासूत बलशालिनम् ॥ ३५ ॥
अमोघरेतस्त्वात्तस्य वासवस्य महात्मनः ॥ वालेषु पतितं बीजं वाली नाम बभूव ह ॥ ३६ ॥

आस्स्व उपविश ॥ १३ ॥ हरि कपि ॥ १५ ॥ बहु काल ॥ १९ ॥ आत्मन स्वस्य ॥ २२ ॥ अन्तर्जले जलमध्ये ॥ पश्यतस्तस्यरूपमन्तर्गतं ॥ २३ ॥ दुष्टभावस्य दुर्मनस ॥ २४ ॥ तस्मात्पुन प्लवगउत्थित ॥ २६ ॥ ऋजुयष्टि लतावल्ली॥२८॥ सर्वचित्तप्रमाथिनी सर्वेषापुसा ॥ २९ ॥ श्रिय रमा । अभ्यभवत् अजयत् ॥ ३० ॥ निर्वृत सुखित । उपास्य सेवित्वा । पथा मार्गेण ॥ ३१ ॥ तस्यावेलाया इन्द्रागमनसमये ॥ ३२ ॥ सुरसुन्दरी सुरतरुणी ॥ ३३ ॥ आत्मन सर्वस्वामिनोहरे सकाशात्धर्मत्याजितौ देवेच्छयात्यक्तधर्मौतावभूता ॥ ३४ ॥ स्कन्नं रेत. । निवृत्तमद सइन्द्र । जज्ञे जनयामास ॥ ३५ ॥ वालेषु रोमसु ॥ ३६ ॥

-[ पा० ] १ ङ. वानरोतिबल शीघ्रंवने २ ङ च झ. ञ. दुष्टभावस्यपुष्कलकुमतेर्गृहं. ३ झ. ठ रूपेणाभ्यभवत्सातु श्रियंदेवीमुमायथा. ४ ठ. निर्वृत . ५ ठ. सनिवृत्तमदोभवत्. ६ ङ. च. छ. झ. ञ. पतिंजज्ञेवानरमीश्वर.

भास्करेणापि तस्यां वै कन्दर्पवशवर्तिना ॥ [1]बीजं तु सिक्तं ग्रीवायां विधानमनुवर्तिना ॥
तेनापि सा वरतनुर्नोक्ता किंचिद्वचः शुभम् ॥ ३७ ॥
निवृत्तमदनश्चाथ सूर्योपि समपद्यत ॥ ग्रीवायां पतिते बीजे सुग्रीवः समजायत ॥ ३८ ॥
एवमुत्पादितौ वीरौ वानरेन्द्रौ महाबलौ ॥ ३९ ॥
दत्त्वा तु काञ्चनीं मालां वानरेन्द्रस्य वालिनः ॥ अक्षय्यां गुणसंपूर्णां शक्रस्तु त्रिदिवं ययौ ॥४०॥
सूर्योपि स्वसुतस्यैनं निरूप्य पवनात्मजम् ॥ कृत्येषु व्यवसायेषु जगाम सविताऽम्बरम् ॥ ४१ ॥
तस्यां निशायां व्युष्टायामुदिते च दिवाकरे ॥ स तु वानररूपं तु प्रतिपेदे पुनर्नृप ॥ ४२ ॥
स एव वानरो भूत्वा पुत्रौ स्वस्य प्लवङ्गमौ ॥ पिङ्गेक्षणौ हरिवरावपश्यत्कामरूपिणौ ॥ ४३ ॥
मधून्यमृतकल्पानि पायितौ तेन तौ तदा ॥ गृह्य ऋक्षरजास्तौ तु ब्रह्मणोऽन्तिकमागतः ॥ ४४ ॥
दृष्ट्वार्क्षरजसं पुत्रं ब्रह्मा लोकपितामहः ॥ बहुशः सान्त्वयामास पुत्राभ्यां सहितं हरिम् ॥ ४५ ॥
सान्त्वयित्वा ततः पश्चाद्देवदूतमथादिशत् ॥ गच्छ मद्वचनाद्दूत किष्किन्धां नाम वै शुभाम् ॥४६॥
सा ह्यस्य गुणसंपन्ना महती च पुरी शुभा ॥ तत्र वानरयूथानि बहूनि निवसन्ति च ॥ ४७ ॥
बहुरत्नसमाकीर्णा वानरैः कामरूपिभिः ॥ पण्यापणवती दुर्गा चातुर्वर्ण्ययुता सदा ॥
विश्वकर्मकृता दिव्या मन्नियोगाच्च शोभना ॥ ४८ ॥
तत्रर्क्षरजसं [2]पुत्रं सपुत्रं वानरर्षभम् ॥ यूथपालान्समाहूय यांश्चान्यान्प्राकृतान्हरीन् ॥ ४९ ॥
तेषां संभाव्य सर्वेषां मदीयं जनसंसदि ॥ अभिषेचय राजानमारोप्य महदासने ॥ ५० ॥
दृष्टमात्राश्च ते सर्वे वानरेण च धीमता ॥ अस्यर्क्षरजसो नित्यं भविष्यन्ति वशानुगाः ॥ ५१ ॥
इत्येवमुक्ते वचने ब्रह्मणा तु हरीश्वरम् ॥ पुरतःकृत्य दूतोसौ प्रययौ तां [3]पुरीं शुभाम् ॥ ५२ ॥
स प्रविश्यानिलगतिस्तां गुहां [4]वानरोत्तमम् ॥ स्थापयामास राजानं पितामहनियोगतः ॥ ५३ ॥
राज्याभिषेकविधिना स्नातोथाभ्यर्चितस्तदा ॥ स बद्धमुकुटः श्रीमानभिषिक्तः स्वलंकृतः ॥ ५४ ॥
आज्ञापयामास हरीन्सर्वान्मुदितमानसः ॥ सप्तद्वीपसमुद्रायां पृथिव्यां ये प्लवङ्गमाः ॥ ५५ ॥
वालिसुग्रीवयोरेव ह्येष त्वृक्षरजाः पिता ॥ जननी चैव तु हरिरित्येतद्भद्रमस्तु ते ॥ ५६ ॥
यश्चैतच्छ्रावयेद्विद्वान्यश्चैतच्छृणुयान्नरः ॥ सिद्ध्यन्ति तस्य कार्यार्था मनसो हर्षवर्धनाः ॥ ५७ ॥
एतच्च सर्वं कथितं मया विभो प्रविस्तरेणेह यथार्थतस्तव ॥
उत्पत्तिरेषा रजनीचराणामुक्ता तथैवेह हरीश्वराणाम् ॥ ५८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे प्रथमः सर्गः ॥ १ ॥

---

विधानं हरिकॢप्ति । तेनापि भास्करेणापि ॥ ३७ ॥ काञ्चनी सुवर्णमयी ॥ ४० ॥ पवनात्मजनिरूप्यहितकारिण ॥ विद्यानुबन्धात् ॥ ४१ ॥ तेन पित्रा ॥ ४४ ॥ पुत्र स्वाश्रुजं ॥ पुत्राभ्या वालिसुग्रीवाभ्या ॥ ४५ ॥ अस्य ऋक्षरजस ॥ ४६ ॥ पण्यापणवती पण्येति अवद्यपण्येति यदन्ततयानिपातितं । पणितव्यवदापणवती । चातुर्वर्ण्येतिस्वार्थेष्यञ् । मन्नियोगात् मदाज्ञाया ॥ ४८ ॥ प्राकृतान् चापल्येन ॥ ४९ ॥ तेषा तान् । मदीय मत्पुत्रं । महदासने महता पूर्वेपा आसने ॥ ५० ॥ वशानुगा अधीनाः ॥ ५१ ॥ सदूत ॥ ५३ ॥ एष हरिरेव जननी जनकश्च पूर्वोदीरितरीत्या ॥ ५६ ॥ कार्यार्था कार्यसिद्धय ॥ ५७ ॥ रजनीचराणा रावणादीना हरीश्वराणाऋक्षरजआदीना ॥ ५८ ॥ इतिप्रक्षिप्तेपुप्रथम सर्ग ॥ १ ॥

[ पा० ] १ ङ. च. छ. झ ञ बीजनिपक्त. २ ङ नीलासपुत्र. च छ झ ञ दृष्ट्वासपुत्रं ३ च छ ञ. गुहाशुभा ४ च छ झ. ञ. वानरोत्तम.

## प्रक्षिप्तेषु द्वितीयः सर्गः ॥ २ ॥

अगस्त्येनरामंप्रति रावणेनसीताहरणैकारणकथनारभ· ॥ १ ॥ कदाचन सनत्कुमारंदृष्टवताशवणेन तंप्रति चराचरनियन्तृप्रश्ने तेनतंप्रति नारायणस्यतन्महिमत्वोक्ति ॥ २ ॥ तथातेन रावणप्रति हरिकरनिहताना शाश्वततल्लोकप्राप्तिनिवेदनम् ॥ ३ ॥

एतां श्रुत्वा कथां दिव्यां पौराणीं राघवस्ततः ॥ भ्रातृभिः सहितो वीरो विस्मयं परमं ययौ ॥ १ ॥
राघवोथ ऋषेर्वाक्यं श्रुत्वा वचनमब्रवीत् ॥ कथेयं महती पुण्या त्वत्प्रसादाच्छ्रुता मया ॥ २ ॥
बृहत्कौतूहलेनास्मि संवृतो मुनिपुङ्गव ॥ उत्पत्तिर्यादृशी दिव्या वालिसुग्रीवयोर्द्विज ॥ ३ ॥
ब्रह्मर्षे मम किं चित्रं सुरेन्द्रतपनावुभौ ॥ जातौ वानरशार्दूलौ बलेन बलिनां वरौ ॥ ४ ॥
एवमुक्ते तु रामेण कुम्भयोनिरभाषत ॥ एवमेतन्महाबाहो वृत्तमासीत्पुरा किल ॥ ५ ॥
अथापरां कथां दिव्यां शृणु राजन्सनातनीम् ॥ यदर्थं राम वैदेही रावणेन पुरा हृता ॥
तत्तेऽहं कीर्तयिष्यामि समाधिं श्रवणे कुरु ॥ ६ ॥
पुरा कृतयुगे राम प्रजापतिसुतं प्रभुम् ॥ सनत्कुमारमासीनं रावणो राक्षसाधिपः ॥
ददर्श सूर्यसंकाशं ज्वलन्तमिव तेजसा ॥ ७ ॥
विनयावनतो भूत्वा ह्यभिवाद्य कृताञ्जलिः ॥ उक्तवान्रावणो राम तमृषिं सत्यवादिनम् ॥ ८ ॥
को ह्यस्मिन्प्रवरो लोके देवानां बलवत्तरः ॥ यं समाश्रित्य विबुधा जयन्ति समरे रिपून् ॥ ९ ॥
कं यजन्ति जना नित्यं कं ध्यायन्ति च योगिनः ॥ एतन्मे शंस भगवन्विस्तरेण तपोधन ॥ १० ॥
विदित्वा हृद्गतं तस्य ध्यानदृष्टिर्महायशाः ॥ उवाच रावणं प्रेम्णा श्रूयतामिति पुत्रक ॥ ११ ॥
यो बिभर्ति जगत्कृत्स्नं यस्योत्पत्तिं न विद्महे ॥ सुरासुरैर्नतो नित्यं हरिर्नारायणः प्रभुः ॥ १२ ॥
यस्य नाभ्युद्भवो ब्रह्मा विश्वस्य जगतः पतिः ॥ येन सर्वमिदं सृष्टं विश्वं स्थावरजङ्गमम् ॥ १३ ॥
तं समाश्रित्य विबुधा विधिना हरिमध्वरे ॥ पिबन्ति ह्यमृतं चैव मानवाश्च यजन्ति तम् ॥ १४ ॥
पुराणैश्चैव वेदैश्च पाञ्चरात्रैस्तथैव च ॥ ध्यायन्ति योगिनो नित्यं क्रतुभिश्च यजन्ति तम् ॥ १५ ॥
दैत्यदानवरक्षांसि ये चान्ये चामरद्विषः ॥ सर्वाञ्जयति संग्रामे सदा सर्वैः स पूज्यते ॥ १६ ॥
श्रुत्वा महर्षेस्तद्वाक्यं रावणो राक्षसाधिपः ॥ उवाच प्रणतो भूत्वा पुनरेव महामुनिम् ॥ १७ ॥
दैत्यदानवरक्षांसि ये हताः समरेऽरयः ॥ कां गतिं प्रतिपद्यन्ते के च ते हरिणा हताः ॥ १८ ॥
रावणस्य वचः श्रुत्वा प्रत्युवाच महामुनिः ॥ दैवतैर्निहता नित्यं प्राप्नुवन्ति दिवः स्थलम् ॥ १९ ॥
पुनस्तस्मात्परिभ्रष्टा जायन्ते वसुधातले ॥ पूर्वार्जितैः सुखैर्दुःखैर्जायन्ते च म्रियन्ति च ॥ २० ॥

ये ये हताश्चक्रधरेण राजंस्त्रिलोकनाथेन जनार्दनेन ॥
ते ते गतास्तत्र लयं नरेन्द्राः क्रोधोपि देवस्य वरेण तुल्यः ॥ २१ ॥
श्रुत्वा ततस्तद्वचनं निशाचरः सनत्कुमारस्य मुखाद्विनिर्गतम् ॥
तथा प्रहृष्टः स बभूव विस्मितः कथं नु यास्यामि हरिं महाहवे ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे द्वितीयः सर्गः ॥२॥

---

किंचित्रं कीदृशंचित्र । अत्यद्भुतमिदममभार्तात्पर्यं ॥ ४ ॥ पुरावृत्तमासीत् ॥ ५ ॥ समाधि सावधानता ॥ ६ ॥ जयन्ति पराभावयन्ति ॥ ९ ॥ ध्यानदृष्टि ध्यानेकृतेअपरोक्षीकृतसर्वं । पुत्रकश्रूयतामित्यब्रवीत् ॥ ११ ॥ हरीतरैर्हता कागतिंप्रतिपद्यन्ते हरिणाहताश्चकिस्थानंप्रतिपद्यन्ते ॥ १८ ॥ तन्निलयं वैकुण्ठ ॥ २१ ॥ इतिप्रक्षिप्तेपुद्वितीय.सर्ग ॥ २ ॥

[ पा० ] १ छ. पूर्वै·. २ ङ. च. छ. झ. ञ. गतास्तन्निलयं.

## प्रक्षिप्तेषु तृतीयः सर्गः ॥ ३ ॥

नारायणकरान्मरणाभिलाषिणंरावणंप्रति तन्मनोभावविदासनत्कुमारेण नारायणस्यरामत्वेनभुव्यवतरणकथनम् ॥ १ ॥

एवं चिन्तयतस्तस्य रावणस्य दुरात्मनः ॥ पुनरेवापरं वाक्यं व्याजहार महामुनिः ॥ १ ॥
मनसश्चेप्सितं यत्ते भविष्यति महाहवे ॥ सुखी भव महाबाहो कंचित्कालमुदीक्षय ॥ २ ॥
एवं श्रुत्वा महाबाहुस्तमृषिं प्रत्युवाच सः ॥ कीदृशं लक्षणं तस्य ब्रूहि सर्वमशेषतः ॥ ३ ॥
राक्षसस्य वचः श्रुत्वा स मुनिः प्रत्यभाषत ॥ श्रूयतां सर्वमाख्यास्ये तव राक्षसपुङ्गव ॥ ४ ॥
स हि सर्वगतो देवः सूक्ष्मोऽव्यक्तः सनातनः ॥ तेन सर्वमिदं [1]प्रोतं त्रैलोक्यं सचराचरम् ॥ ५ ॥
स भूमौ दिवि पाताले पर्वतेषु वनेषु च ॥ स्थावरेषु च सर्वेषु वनेषु नगरीषु च ॥ ६ ॥
ओंकारश्चैव सत्यं च सावित्री पृथिवी च सः ॥ धराधरधरो देवो ह्यनन्त इति विश्रुतः ॥ ७ ॥

अहश्च रात्रिश्च उभे च सन्ध्ये दिवाकरश्चैव यमश्च सोमः ॥
स एव कालो ह्यनलश्च वायुः स ब्रह्म[2]रुद्रौ च स एव बालः ॥ ८ ॥
विद्योतति ज्वलति भाति च पाति लोकान्सृजत्ययं संहरति प्रशास्ति ॥
क्रीडां करोत्यव्ययलोकनाथो विष्णुः पुराणो भव[3]नाशहेतुः ॥ ९ ॥

अथवा बहुना तेन किमुक्तेन दशानन ॥ तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥ १० ॥
नीलोत्पलदलश्यामः किञ्जल्कारुणवस्त्रकः ॥ प्रावृट्काले यथा व्योम्नि सतडित्तोयदस्तथा ॥ ११ ॥
श्रीमान्मेघवपुःश्यामः पङ्कजारुणलोचनः ॥ श्रीवत्सेनोरसा युक्तः शशाङ्ककृतलक्षणः ॥ १२ ॥
तस्य नित्यं शरीरस्था मेघस्येव शतह्रदाः ॥ संग्रामरूपिणी लक्ष्मीर्देहमावृत्य तिष्ठति ॥ १३ ॥
न स शक्यः सुरैर्द्रष्टुं नासुरैर्न च पन्नगैः ॥ यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥ १४ ॥
न हि यज्ञफलैस्तात न तपोभिस्तु संचितैः ॥ शक्यते भगवान्द्रष्टुं न दानेन न चेज्यया ॥ १५ ॥
तद्भक्तैस्तद्गतप्राणैस्तच्चित्तैस्तत्परायणैः ॥ शक्यते भगवान्द्रष्टुं ज्ञाननिर्दग्धकिल्बिषैः ॥ १६ ॥

---

एतद्धननस्यावश्यकत्वात्स्वयमेवमहामुनिराह—एवमिति ॥ १ ॥ कंचित्कालं स्वल्पकाल ॥ २ ॥ सचराचरचेतिसर्वमिद ॥ ५ ॥ ओंकार ओमित्याक्रियमाण । 'ओमित्येतदक्षरमुद्गीथमुपासीत' इतिश्रुते । सत्यं 'तदेतत्सत्य' इतिश्रुते । सावित्री तदभिमानी । धराधरधर वराहकृष्णरूपेणपृथिवीपर्वतधर । देव क्रीडादिगुणवान् । अनन्त देशत कालत परिच्छेद-शून्य । अबद्धइतिवा ॥ ७ ॥ 'सब्रह्मरुद्रेन्द्रसइतिपद । ब्रह्मरुद्राभ्यासहित सब्रह्मरुद्र । सचासौ इन्द्रश्चासौ सच इन्द्रस । इन्द्रेतिप्रातिपदिकनिर्देशोवा ॥ ८ ॥ ज्वलतंभातीतिलाघवमार्षं । किंप्रयोजनमेतेनतस्येत्यतआह—क्रीडामिति ॥ अव्ययलोकनाथ अव्ययश्चासौलोकनाथश्चसतथा । एकोमुख्योभवनाशक भवनाशकैक ॥ ९ ॥ विशकलिततयाकियद्वाच्यमित्येकयोक्त्याह—अथवेति ॥ १० ॥ किञ्जल्कारुणवाससा किजल्कवदरुणं अव्यक्तरागवासोयस्यतेन ॥ ११ ॥ श्रीवत्सेनोरसा तत्सहितोरसा । शशाङ्ककृतलक्षण शशाङ्केकृतलक्षणंचिह्न तत्सस्थत्वादिना येनस ॥ 'शशिबिंबसस्थ'इत्यादे ॥१२॥ शतह्रदा तटित । सग्राम-रूपिणी सग्राममूलिका । लक्ष्मी सपत् ॥ १३ ॥ यस्ययदुपरिप्रसादंकुरुते सोधिकारीतंद्रष्टुमर्हति । "यमेवैषवृणुतेतेनलभ्य" इतिश्रुते ॥ १४ ॥ नायमात्मेत्यादिभावमभिधत्ते—**नहीति** । यज्ञफलै तन्निष्पन्नफलै । इज्यया यागेन ॥ १५ ॥ तद्भक्तै तन्माहात्म्यज्ञानपूर्वकसुदृढस्नेहवद्भि । तद्गतप्राणै तद्गता प्राणाइन्द्रियाणिबाह्यानियेषातै । तत्परायणै सपरायणंमुख्याश्रयो

[पा०] १ ङ. च छ. झ. ञ. व्याप्तं. २ ङ. झ. ञ. ब्रह्मरुद्रेन्द्रसएवचाप. ३ ङ. झ. ञ. भवनाशकैक. च. छ. भवनाशनैक.

अथवा राक्षसेन्द्र त्वं यदि तं द्रष्टुमिच्छसि ॥ कथयिष्यामि ते सर्वं श्रूयतां यदि रोचते ॥ १७ ॥
कृते युगे व्यतीते वै मुखे त्रेतायुगस्य तु ॥ हितार्थं देवमर्त्यानां भविता नृपविग्रहः ॥ १८ ॥
इक्ष्वाकूणां च यो राजा भाव्यो दशरथो भुवि ॥ तस्य सूनुर्महातेजा रामो नाम भविष्यति ॥१९॥
महातेजा महाबुद्धिर्महाबलपराक्रमः ॥ महाबाहुर्महासत्त्वः क्षमया पृथिवीसमः ॥ २० ॥
आदित्य इव दुष्प्रेक्ष्यः समरे शत्रुभिः सदा ॥ भविता हि तदा रामो नरो नारायणः प्रभुः ॥२१॥
पितुर्नियोगात्स विभुर्दण्डके विविधे वने ॥ विचरिष्यति धर्मात्मा सह भ्रात्रा महात्मना ॥ २२ ॥
तस्य पत्नी महाभागा लक्ष्मीः सीतेति विश्रुता ॥ दुहिता जनकस्यैषा उत्थिता वसुधातलात् ॥२३॥
रूपेणाप्रतिमा लोके सर्वलक्षणलक्षिता ॥ छायेवानुगता रामं निशाकरमिव प्रभा ॥ २४ ॥
शीलाचारगुणोपेता साध्वी धैर्यसमन्विता ॥ सहस्रांशो रश्मिरिव ह्येकमूर्तिरिव स्थिता ॥ २५ ॥
एवं ते सर्वमाख्यातं मया रावण विस्तरात् ॥ महतो देवदेवस्य शाश्वतस्याव्ययस्य च ॥ २६ ॥
एवं श्रुत्वा महाबाहू राक्षसेन्द्रः प्रतापवान् ॥ त्वया सह विरोधेच्छुश्चिन्तयामास राघव ॥ २७ ॥
[ सनत्कुमारात्तद्वाक्यं श्रुत्वा राक्षसपुङ्गवः ॥ अनुज्ञातं रिपुं प्रायात्प्रणिपत्य महामुनिम् ॥ २८ ॥]
वाक्यं सनत्कुमारस्य चिन्तयानो मुहुर्मुहुः ॥ रावणो मुमुदे श्रीमान्युद्धार्थी विचचार ह ॥ २९ ॥
श्रुत्वा च तां कथां रामो विस्मयोत्फुल्ललोचनः ॥ शिरसश्चालनं कृत्वा तमर्थं परिचिन्तयन् ॥३०॥

श्रुत्वा तु वाक्यं च नरेश्वरस्तदा मुदा युतो विस्मयमानचक्षुः ॥
पुनश्च तं ज्ञानवतां प्रधानमुवाच वाक्यं वद मे पुरातनम् ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे तृतीयः सर्गः ॥ ३ ॥

---

येषातै । ज्ञानं शास्त्रजन्यं । द्रष्टु अपरोक्षीकर्तु ॥ १६ ॥ हेराक्षसेन्द्र तं श्रीनारायणं । यदिद्रष्टुमिच्छसि तर्हि तथापृच्छ तंद्रष्टुमिच्छामीतिमामापृच्छस्व । 'नापृष्ट कस्यचिद्ब्रूयात्' इति । ततश्चमद्वचनंतेतुभ्यंयदिरोचते तर्हि सर्वंकथयिष्यामिश्रूयता ॥ १७ ॥ मुखे पूर्वभागे । हितार्थं तच्छत्रुहननद्वारातदभीष्टप्रापणार्थ । नृपविग्रह नृपस्यराज्ञोविग्रहोदेहोयस्यतादृशोसौभविता भविष्यति ॥ १८ ॥ तद्विशदयति—इक्ष्वाकूणामिति । तद्गोत्रापत्यानामित्यर्थ । मध्येयोदशरथइतिभाव्योराजातस्येत्यन्वय ॥ १९ ॥ तेज परपराभवशक्ति ॥ २० ॥ सचमहातेजस्त्वादिगुणोरामनामानरो नसाधारण । किंतु य प्रभुर्नारायण सएव तदाभविताहि । नरोऽविनाशीतिनारायणविशेषणवा ॥ २१ ॥ पितुर्दशरथस्यनियोगात् वनवासाज्ञाया । दण्डकेतत्रापिविविधेवने । सहभ्रात्रा उपलक्षणमेतत् । सहसीतयेतिचग्राह्य ॥ २२ ॥ ननुराजदाराणामन्त पुरएववासस्योचितत्वात्कथराम सीतानीतवान्वनमित्यतआह—तस्येति ॥ नारायणस्येत्यर्थ । सीतेतिविश्रुता रामत्वदशाया । अथवा रामस्येत्यर्थ । लक्ष्मीरितिविधेयं । एषा बुद्धिसंनिहिता । वसुधातलात् यज्ञभूमे ॥ २३ ॥ तत किंप्रकृताशङ्कासमाधानमितितत्राह—रूपेणेत्यादिना । यतश्छायेवानुगताऽतएतदन्यनारीष्वेवतथात्वमितिभाव । निशाकरप्रभेवच । एकामूर्तिरिवेत्यनेनसीतायालक्ष्मीत्वेनचिच्छक्तित्वाद्रामेणाभिन्नैवसेतिकेषाचिदाशासनंनिरस्तं । इवेनभेदस्यैवोक्ते. । तदाचेत्तत्रगमिष्यसितद्दर्शनतवभविष्यति । तदानीतस्माद्वधोपायंत्वमेवचिन्तयेतिभावः ॥ २४ ॥ देवदेवस्यसर्वंभविष्यं ते तुभ्यमाख्यात ॥ २६ ॥ सनत्कुमारान्निस्सृतमितिशेष । वाक्यतदर्थं । मुमुदे श्रीहरिलोकप्रापकस्यतदवताररामान्मरणस्यत्वेननिश्चितत्वादितिभाव ॥ २९ ॥ विस्मयमानेतत्सूचकेचक्षुषीयस्यस' ॥ तमगस्त्यं । पुराणं पुरातनंवृत्तान्तवदेत्युवाच ॥ ३१ ॥ इतिप्रक्षिप्तेषुतृतीय सर्ग. ॥ ३ ॥

[ पा० ] १ अयंश्लोक. क. पाठेदृश्यते. २ ङ. च. छ. झ. ञ. विस्मयंपरमंगतः.

## प्रक्षिप्तेषु चतुर्थः सर्गः ॥ ४ ॥

अगस्त्येनरामंप्रति तत्करान्मरणेच्छयारावणेनसीताहरणकरणोक्तिः ॥ १ ॥

ततः पुनर्महातेजाः कुम्भयोनिर्महायशाः ॥ उवाच रामं प्रणतं पितामह इवेश्वरम् ॥ १ ॥
श्रूयतामिति चामन्त्र्य रामं सत्यपराक्रमम् ॥ कथाशेषं महातेजाः कथयामास स प्रभुः ॥ २ ॥
यथाख्यानं श्रुतं चैव यथावृत्तं च तत्तथा ॥ प्रीतात्मा कथयामास राघवाय महामतिः ॥ ३ ॥
एतदर्थं महाबाहो रावणेन दुरात्मना ॥ सुता जनकराजस्य हृता राम महामते ॥ ४ ॥
एतां कथां महाबाहो नारदः सुमहायशाः ॥ कथयामास मंह्यं वै मेरौ गिरिवरोत्तमे ॥ ५ ॥
देवगन्धर्वसिद्धानामृषीणां च महात्मनाम् ॥ कथाशेषं पुनः सोथ कथयामास राघव ॥
नारदः सुमहातेजाः प्रहसन्निव मानद ॥ ६ ॥
तां कथां शृणु राजेन्द्र महापापप्रणाशिनीम् ॥ यां तु श्रुत्वा महाबाहो ऋषयो दैवतैः सह ॥
ऊचुस्तं नारदं सर्वे हर्षपर्याकुलेक्षणाः ॥ ७ ॥
यश्चेमां श्रावयेन्नित्यं शृणुयाद्वापि भक्तितः ॥ स पुत्रपौत्रवान्राम स्वर्गलोके महीयते ॥ ८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे चतुर्थः सर्गः ॥ ४ ॥

---

## प्रक्षिप्तेषु पञ्चमः सर्गः ॥ ५ ॥

अगस्त्येनश्रीरामंप्रति रावणस्यश्वेतद्वीपगमनवृत्तान्तादिनिरूपणपूर्वकं तदभ्यनुज्ञयास्वाश्रमंप्रतिगमनम् ॥ १ ॥

ततः स रावणो राम पर्यटन्पृथिवीतलम् ॥ विजयार्थी महाशूरै राक्षसैः परिवारितः ॥ १ ॥
दैत्यदानवरक्षस्सु यं शृणोति बलाधिकम् ॥ तमाह्वयति युद्धार्थी रावणो बलदर्पितः ॥ २ ॥
एवं स पर्यटन्सर्वां पृथिवीं पृथिवीपते ॥ ब्रह्मलोकान्निवृत्तं तमाससादाथ नारदम् ॥ ३ ॥
व्रजन्तं मेघपृष्ठस्थमंशुमन्तमिवापरम् ॥ तं चाभिसृत्य प्रीतात्मा ह्यभिवाद्य कृताञ्जलिः ॥
उवाच हृष्टमनसा रावणो नारदं तथा ॥ ४ ॥
आब्रह्मभवनाल्लोकास्त्वया दृष्टा ह्यनेकशः ॥ अस्मिँल्लोके महाभाग मानवा बलवत्तराः ॥
योद्धुमिच्छामि तैः सार्धं यथाकामं यथासुखम् ॥ ५ ॥

---

ईश्वरं रुद्रं ॥ १ ॥ इतिचोवाचेत्यत्रत्यचकारस्यकथयामासेत्यनेनान्वय ॥ २ ॥ यथाख्यानं तच्चरितसूचकाख्यानमनतिक्रम्य । यथावृत्त तत्कालेकार्यं यथाजातं तदनतिक्रम्यच यथा येनप्रकारेणश्रुतं स्वेनश्रवणंकृत । तथा तेनैवप्रकारेण कथयामासेत्यन्वय ॥ ३ ॥ एतदर्थं रामात्स्वस्यमरणप्राप्त्यर्थं ॥ ४ ॥ एताकथा रावणसनत्कुमारसंवादरूपा ॥ ५ ॥ देवादीना शृण्वतामितिशेष. । सनारद । कथाशेषं रावणदिग्विजयकथाशेष । शेषस्यापिकथारूपत्वात्ताकथामितिपरामर्श ॥ ६ ॥ सर्वपापप्रणाशिनी श्वेतद्वीपस्थश्रीहरिमाहात्म्यप्रतिपादकत्वादितिभाव ॥ याकथा । हेराम नारदंप्रतिएवमूचु ॥ ७ ॥ वचनप्रकारमेवाह—यइति । हेनारद य पुमान् इमाकथाश्शृणुयात् श्रावयेद्वा । भक्तितइत्युभयत्रान्वयि । सपुमान्स्वर्गलोकेमहीयतेइत्यूचुरित्यन्वय ॥ ८ ॥ इतिप्रक्षिप्तेषुचतुर्थ सर्ग ॥ ४ ॥

निवर्तन्तं निवर्तमानं ॥ ३ ॥ अभीसृत्य अभिसृत्य । अभिद्रुत्येतिक्वचित्पाठ ॥ ४ ॥ यदृच्छया कलहकारणाभावेनापि ।

[ पा० ] १ ङ. च. छ. झ. ञ. दुर्धर्षमेरौ. २ ठ. सर्वपापप्रणाशिनीं. ३ ङ राक्षसोनाम. ४ झ. ठ. न्निवर्तन्तमाससादाथ. ५ ठ. तमभीसृत्य

तच्छ्रुत्वा नारदो वाक्यं रावणस्य दुरात्मनः ॥ चिन्तयित्वा मुहूर्तं तु महात्मा प्रत्युवाच तम् ॥६॥
अस्ति राजन्महाद्वीपः क्षीरोदस्य समीपतः ॥ यत्र ते चन्द्रसंकाशा मानवाः सुमहाबलाः ॥ ७ ॥
महाकाया महावीर्या मेघस्तनितनिस्वनाः ॥ महामात्रा धैर्यवन्तो महापरिघबाहवः ॥ ८ ॥
श्वेतद्वीपे मया दृष्टा मानवा राक्षसाधिप ॥ बलवीर्यसमायुक्तान्यादृशांस्त्वमिहेच्छसि ॥ ९ ॥
नारदस्य वचः श्रुत्वा रावणः प्रत्युवाच ह ॥ कथं नारद जायन्ते तस्मिन्द्वीपे महाबलाः ॥ १० ॥
श्वेतद्वीपे कथं वासः प्राप्तस्तैः सुमहात्मभिः ॥ एतन्मे सर्वमाख्याहि प्रभो नारद तत्त्वतः ॥ ११ ॥
त्वया दृष्टं जगत्सर्वं हस्तामलकवत्सदा ॥ रावणस्य वचः श्रुत्वा नारदः प्रत्युवाच तम् ॥ १२ ॥
अनन्यमानसा नित्यं नारायणपरायणाः ॥ तदाराधनसक्ताश्च तच्चित्तास्तत्परायणाः ॥ १३ ॥
एकान्तभावानुगतास्ते नरा राक्षसाधिप ॥ तच्चित्तास्तद्गतप्राणा नरा नारायणं श्रिताः ॥
श्वेतद्वीपे तु तैर्वास आर्जितः पुण्यकर्तृभिः ॥ १४ ॥
ये हता लोकनाथेन शार्ङ्गमानम्य संयुगे ॥ चक्रायुधेन देवेन तेषां वासस्त्रिविष्टपे ॥ १५ ॥
न हि यज्ञफलैस्तात न तपोभिर्न संयमैः ॥ न च दानफलैर्मुख्यैः स लोकः प्राप्यते सुखम् ॥१६॥
नारदस्य वचः श्रुत्वा दशग्रीवः सुविस्मितः ॥ ध्यात्वा तु सुचिरं कालं तेन योत्स्यामि संयुगे ॥
आपृच्छ्य नारदं प्रायाच्छ्वेतद्वीपाय रावणः ॥ १७ ॥
नारदोपि चिरं ध्यात्वा कौतूहलसमन्वितः ॥ दिदृक्षुः परमाश्चर्यं तत्रैव त्वरितं ययौ ॥ १८ ॥
स हि केलिकरो विप्रो नित्यं च समरप्रियः ॥ १९ ॥
रावणोपि ययौ तत्र राक्षसैः सह राघव ॥ महता सिंहनादेन नादयन्स दिशो दश ॥ २० ॥
गते तु नारदे तत्र रावणोपि महायशाः ॥ प्राप श्वेतं महाद्वीपं दुर्लभं यत्सुरैरपि ॥ २१ ॥
तेजसा तस्य द्वीपस्य रावणस्य वलीयसः ॥ तत्तस्य पुष्पकं यानं वातवेगसमाहतम् ॥
अवस्थातुं न शक्नोति वाताहत इवाम्बुदः ॥ २२ ॥
सचिवा राक्षसेन्द्रस्य द्वीपमासाद्य दुर्दृशम् ॥ अब्रुवन्रावणं भीता राक्षसा जातसाध्वसाः ॥ २३ ॥
राक्षसेन्द्र वयं मूढा भ्रष्टसंज्ञा विचेतसः ॥ अवस्थातुं न शक्ष्यामो युद्धं कर्तुं कथंचन ॥ २४ ॥
एवमुक्त्वा दुद्रुवुस्ते सर्व एव निशाचराः ॥ २५ ॥
रावणोपि हि तद्यानं पुष्पकं हेमभूषितम् ॥ विसर्जयामास तदा सह तैः क्षणदाचरैः ॥ २६ ॥
गते तु पुष्पके राम रावणो राक्षसाधिपः ॥ कृत्वा रूपं महाभीमं सर्वराक्षसवर्जितः ॥
प्रविवेश तदा तस्मिञ्छ्वेतद्वीपे स रावणः ॥ २७ ॥
प्रविशन्नेव तत्राशु नारीभिरुपलक्षितः ॥ २८ ॥

---

यथाकामं तत्तदिच्छानुसार्यायुवादिना । मानवा तदादय ॥ ५ ॥ महाद्वीपं । 'द्वीपोस्त्रिया' इत्यमर । द्विर्गताआपोत्र । "ऋक्पूरब्धू"—इत्यप्रत्यय । "द्यन्तरुपसर्गेभ्योपईत्" । चन्द्रसकाशा शुभ्रवर्णा. ॥ ७ ॥ स्तनितंशब्द ॥ ८ ॥ बहुवीर्यबलोपेतान्यादृशास्त्वमिच्छसि ॥ ९ ॥ श्वेतद्वीपे केवलहरिनिलये ॥ १ ॥ हस्तामलकवत् हस्तन्यस्तामलकवत् अमलोदकवद्वा ॥ १२ ॥ आर्जित तपसासपादित ॥ १४ ॥ त्रिविष्टपे स्वर्गे ॥ १५ ॥ सलोक भगवल्लोक ॥ १६ ॥ तेन हरिणा । आपृच्छ्य गच्छामीति ॥ १७ ॥ कौतूहलसमन्वित अपूर्वसमरदर्शनकौतुक ॥ १८ ॥ केलिकर क्रीडापर ॥ १९ ॥ दुर्दृश दुस्साधदर्शनं । राक्षसा दूता ॥ २३ ॥ महाभीम मायया । सर्वराक्षसवर्जित स्वसेवकविकल. ॥ २७ ॥ नारीभि तत्रत्याभि ।

[ पा० ] १ ड च. छ. झ. ञ. महाद्वीपं. २ ठ, बहुवीर्यबलोपेतान्यादृशान्. ३ ड च. छ. झ ञ सुमहात्मभि . ४ ड. झ. ञ. गतंतुपुष्पकंराम.

एकया सुस्मितं कृत्वा हस्ते गृह्य स रावणः ॥ पृष्टश्चागमनं ब्रूहि किमर्थमिह चागतः ॥ २९ ॥
को हि त्वं कस्य वा पुत्रः केन वा प्रहितो वद ॥ इत्युक्तो रावणो राजन्क्रुद्धो वचनमब्रवीत् ॥३०॥
अहं विश्रवसः पुत्रो रावणो नाम राक्षसः ॥ युद्धार्थमिह संप्राप्तो न च पश्यामि कंचन ॥ ३१ ॥
एवं कथयतस्तस्य रावणस्य दुरात्मनः ॥ प्राहसंस्ते ततः सर्वे सस्वनं युवतीजनाः ॥ ३२ ॥
एकया क्रुद्धया तासां बालवद्गृह्य लीलया ॥ भ्रामितस्तु सखीमध्ये विक्षिप्तः स दशाननः ॥ ३३ ॥
सखीमन्यां समाहूय पश्य त्वं कीटकं धृतम् ॥ दशास्यं विंशतिभुजं कृष्णाञ्जनसमप्रभम् ॥ ३४ ॥
हस्ताद्धस्तं स च क्षिप्तो भ्राम्यते श्रमलालसः ॥ ३५ ॥
भ्राम्यमाणेन बलिना राक्षसेन विपश्चिता ॥ पाणावेकाऽथ संदष्टा रोषेण वनिता शुभा ॥ ३६ ॥
मुक्तस्तया शुभः कीटो धुन्वन्त्या हस्तवेदनात् ॥ गृहीत्वाऽन्या राक्षसेन्द्रमुत्पपात विहायसा ॥३७॥
ततस्तामपि संक्रुद्धो विददार नखैर्भृशम् ॥ तया स हि विनिर्धूतः सहसैव निशाचरः ॥ ३८ ॥
पपात चाम्भसो मध्ये सागरस्य भयातुरः ॥ पर्वतस्येव शिखरं यथा वज्रविदारितम् ॥ ३९ ॥
प्रापतत्सागरस्यैव जले तस्यौ निपातितः ॥ ४० ॥
एवं स रावणो राम श्वेतद्वीपनिवासिभिः ॥ स्त्रीजनैर्विनिगृह्याशु भ्रामितश्च ततस्ततः ॥ ४१ ॥
नारदोपि महातेजा रावणं वीक्ष्य धर्षितम् ॥ विस्मयं सुचिरं गत्वा प्रजहास ननर्त च ॥ ४२ ॥
ततः स सागरजलाज्जलक्लिन्नशिरोरुहः ॥ दक्षिणं तीरमासाद्य चिन्तयामास विस्मितः ॥ ४३ ॥
ये मया निर्जिता लोका न तेषु भयमीदृशम् ॥ स्वभावतोल्पवीर्याणां विरुद्धं योषितामिदम् ॥४४॥
नूनमेतस्य लोकस्य मानवाः प्रभविष्णवः ॥ स्त्रीरूपविग्रहधरा यान्ममाचष्ट नारदः ॥ ४५ ॥
बलवद्भिस्तु संधेयमिति संचिन्त्य निश्चितम् ॥ भूयस्तासां प्रवृत्त्यर्थं तद्वनं समलोडयत् ॥ ४६ ॥
अथापश्यन्महात्मानं पितामहसुतं प्रभुम् ॥ सनत्कुमारमासीनं सर्वयोगभृतां वरम् ॥ ४७ ॥
जाज्वल्यमानं तपसा समिद्भिरिव पावकम् ॥ अपश्यद्दक्षिणे पार्श्वे विचरन्तं गुहाश्रयम् ॥ ४८ ॥
स तं दृष्ट्वा तपोवृद्धमभिवाद्य कृताञ्जलिः ॥ व्रीडितः परिपप्रच्छ ब्रह्मर्षिं सत्यवादिनम् ॥ ४९ ॥
भगवन्केन लोकोयं कल्पितः सुमहात्मना ॥ के वा लोके वसन्त्यस्मिन्सर्वज्ञानवतां वर ॥ ५० ॥
किं च त्वं ध्यायसे ब्रह्मन्शंस मे सुसमाधिना ॥ एतन्मे ब्रूहि तत्सर्वं सर्वज्ञो ह्यसि विश्रुतः ॥५१॥
एवमुक्तो महातेजा विदित्वा तस्य हृद्गतम् ॥ उवाच वाक्यं प्रहसञ्श्रूयतामिति पुत्रक ॥ ५२ ॥
यो हि वै सर्वमेवेदं बिभर्ति सचराचरम् ॥ त्रैलोक्यं सर्वभूतात्मा यस्योत्पत्तिं न विद्महे ॥ ५३ ॥
यमाहुर्वेदविदुषः पुरुषं तमसः परम् ॥ आदित्यरूपमजरं परमात्मानमीश्वरम् ॥ ५४ ॥
यस्य नाभिभवो ब्रह्मा पिता मम पितामहः ॥ कैलासनिलयः श्रीमान्भवश्च क्रोधसंभवः ॥ ५५ ॥

---

उपलक्षितोदृष्ट ॥ २८ ॥ सरावण गृह्य गृहीत्वा ॥ २९ ॥ प्रहित प्रेषित ॥ ३० ॥ कंचन योद्धारं ॥ ३१ ॥ प्रहसन् प्राहसन् ॥ ३२ ॥ तासामध्ये एका एकया । मध्येगृह्यगृह्य ग्राहंग्राहं । दशानन सखीमध्येभ्रामित ॥ ३३ ॥ कीटक कृमि विशेषं । धृतपश्य ॥ ३४ ॥ श्रमलालस तत्करस्पर्शोभवतीत्यौत्सुक्यवान् । श्रमेणशुष्ककण्ठतयातृष्णावानितिवा ॥ "लालसस्तृष्णातिरेकयो । औत्सुक्येच" इतिविश्व ॥ ३५ ॥ सदष्टा आत्मानंमोचयितु ॥ ३६ ॥ हस्तवेदनात्तयाधुन्वन्त्यामुक्त । रक्षेन्द्रं राक्षसश्रेष्ठं ॥ ३७ ॥ भयातुर. जीवनभयातुर. ॥ ३९ ॥ प्रापतत्प्राक् । तयानिपातित ॥ ४० ॥

[ पा० ] १ ङ. च छ झ. ञ. गृह्यदशानन २ ठ. प्रहसंस्ते. ३ च. छ झ. ञ. तासामेकातत क्रुद्धावाल. ४ ठ. गृह्यगृह्यतुलीलया ५ ठ. भ्रमलालस. ६ झ. ठ त्वान्यातुरक्षेन्द्रं. ७ रसागरजलेतयासौविनिपातितः ८ विस्मयंसुचिरगले-त्यारभ्य एतदर्थमहाबाहोरावणेनदुरात्मनेत्यत पूर्वविद्यमाना बहव श्लोका ङ च. छ झ. ञ. पाठेषुनदृश्यन्ते.

यं समाश्रित्य विबुधा विधिना हरिमध्वरे ।। पिबन्ति चामृतं हृष्टाः परिभूय दितेः सुतान् ।।५६।।
यस्य श्वासानिलोद्धूताः स्त्रियस्त्वामपराजितम् ।। गृहीत्वा सुमहावेगाश्चिक्षिपुः सागराम्भसि ।।५७।।
येन दैत्या महावीर्या दानवाश्च सनैर्ऋताः ।। निहता बहुरूपेण बहवो बाहुशालिना ।। ५८ ।।
तेनायं लोकनाथेन कल्पितः सुमहात्मना ।। गोविन्देन निवासार्थं लोको वै सुमहात्मना ।। ५९ ।।
अर्चयन्ति जगन्नाथं नारायणपरायणाः ।। अद्वेषाः सर्वभूतेषु महायोगबलाश्रयाः ।। ६० ।।
यजन्ति पञ्चभिर्यज्ञैः सततं मधुसूदनम् ।। एकान्तिनो महासत्त्वा वसन्ति सुसमाहिताः ।। ६१ ।।
यः पुराणे च वेदे च पाञ्चरात्रे च पठ्यते ।। सांख्ययोगे च मुनिभिर्ध्यायते चेज्यते च यः ।।६२।।
मुनिभिर्देवसङ्घैश्च स्थाप्यते भगवान्हरिः ।। मधुकैटभयोर्हन्ता यस्तमन्वेष्टुमर्हति ।। ६३ ।।
पितामहोपि तं देवं न च जानाति रावण ।। ६४ ।।
यस्तु नित्यं विजानाति हरिं नारायणं विभुम् ।। जगदाभरणं पुण्यं तस्य मोक्षो न संशयः ।। ६५ ।।
एतच्छ्रुत्वा मुनेर्वाक्यं प्रसन्नेनान्तरात्मना ।। पुनरेव ततो रक्षः पप्रच्छ मुनिपुङ्गवम् ।। ६६ ।।
कथं च दृश्यते देव कथं च श्रूयते भुवि ।। कथं च क्रीडते लोके द्रष्टुं वा शक्यते कथम् ।। ६७ ।।
कियत्कालेन वा ब्रह्मँल्लोकोयं तपसा मया ।। शक्यः प्रवेष्टुं तद्ब्रूहि सर्वं हि विदितं तव ।। ६८ ।।
आकर्ण्य सस्पृहं तस्य वाक्यं वाक्यविशारदः ।। प्रत्युवाच मुनिर्धीमांस्तत्सर्वमनुपूर्वशः ।। ६९ ।।
स हि सर्वगतो देवः सूक्ष्मोऽव्यक्तः सनातनः ।। येन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ।।७०।।
स भूमौ दिवि पाताले पर्वतेषु वनेषु च ।। सागरेषु च सर्वेषु वसतीह सरित्सु च ।। ७१ ।।

अहश्च रात्रिश्च उभे च संध्ये दिवाकरश्चैव यमश्च सोमः ।।
स एव कालो वरुणः स एव स ब्रह्मरुद्रेन्द्रमुखः स चाग्निः ।। ७२ ।।

ओंकारो भूर्भुवः स्वश्च गायत्री सन्ध्य एव च ।। धराधरधरो देवः सोनन्त इति विश्रुतः ।। ७३ ।।

विद्योतति ज्वलति वर्षति वाति पाति गर्जत्युपैति तपते दहते स चैव ।।
लोकान्सृजत्यवति संहरते सदैव दैत्यान्स एव दहते जगति प्रसह्य ।। ७४ ।।

स न शक्यः सुरैर्द्रष्टुं नासुरैर्न च पन्नगैः ।। प्रसादं कुरुते यस्य स वै तं द्रष्टुमर्हति ।। ७५ ।।
तद्गतैस्तद्गतप्राणैः शुचिभिस्तत्परायणैः ।। शक्यः प्रवेष्टुं लोकोऽयं ज्ञाननिर्धूतकिल्बिषैः ।। ७६ ।।
एवंविधैरयं लोकः प्राप्यते पुरुषोत्तमैः ।। अकामकारिभिर्देवैरक्रोधैर्दग्धतामसैः ।। ७७ ।।
यश्चैव सुमहाकायः प्रविष्टो लोकमव्ययम् ।। आस्ते तथैव हरिणा कृता तेन महापुरी ।। ७८ ।।
अष्टाविंशे युगे प्राप्ते मनोरस्य विवस्वतः ।। वैष्णवीं मूर्तिमाविश्य लोकमेनं प्रवेक्ष्यसि ।। ७९ ।।
नातः परतरं श्रोतुं मत्तो वै राक्षसेश्वर ।। उत्तिष्ठ गच्छ भद्रं ते प्राप्स्यसे गतिमीप्सिताम् ।। ८० ।।
एवमुक्तस्तथेत्युक्त्वा तं प्रणम्याभिपूज्य च ।। समासाद्य महत्सैन्यं ययौ लङ्कामशङ्कितः ।। ८१ ।।
नारदोपि प्रहृष्टात्मा दृष्ट्वा सर्वमशेषतः ।। द्रुतं मेरुमुपागम्य विशते तां शुभां सभाम् ।। ८२ ।।
तस्यां ब्रह्माणमासीनमभिवाद्य कृताञ्जलिः ।। देवान्संश्रावयामास समीपे पद्मजन्मनः ।। ८३ ।।
निशम्य सुमहत्पुण्यमाख्यानं पद्मसंभवः ।। नारदं संपरिष्वज्य प्राह भूतभविष्यवित् ।। ८४ ।।
हिरण्यकशिपुः पूर्वं बभूवैष निशाचरः ।। अवध्यो बहुभिर्योगैर्वरदानान्महाबलः ।। ८५ ।।
स कदाचिन्महात्मानं पद्मनाभमधोक्षजम् ।। सभायां गर्हयन्दर्पान्नृसिंहवपुषं हरिम् ।। ८६ ।।
समुद्धृत्य नखैस्तेन दीर्यमाणस्य संयुगे ।। रक्तसंस्पर्शजं दिव्यं चक्षुर्दैत्यपतेरभूत् ।। ८७ ।।

स तु तद्राक्षसं जन्म तस्मान्मानुषजन्मनः ॥ भाविनीं निधनप्राप्तिं पश्यन्दिव्येन चक्षुषा ॥ ८८ ॥
श्रीवत्साङ्कं तदङ्कस्थः प्राह दैत्यः शनैरिदम् ॥ नखैर्विभिन्नहृदयः क्षणं दीनः कृताञ्जलिः ॥ ८९ ॥
तप्तहाटककेशान्त ज्वलत्पावकलोचन ॥ वज्रायुधनखस्पर्श दिव्यसिंह नमोस्तु ते ॥ ९० ॥
कैटभारे हरे देव विष्णो विपुलविक्रम ॥ त्राहि मां भूतभव्येश शरणागतवत्सल ॥ ९१ ॥
त्वद्धते राक्षसे भावे मानुषे च पदे विभो ॥ प्राप्नुयां त्वन्मयो लोकं लोकनाथ प्रसीद मे ॥ ९२ ॥
एवमुक्तस्तथेत्युक्त्वा ययौ दैत्यपतिं हरिः ॥ हंसयुक्तविमानेन किङ्किणीजालमालिना ॥ ९३ ॥
स एव च पुनस्तत्र राक्षसोऽभून्महासुरः ॥ राक्षसेन विधानेन सदा तद्भावभावितः ॥ ९४ ॥
मानुषत्वमुपागम्य लोकान्हन्तुं कृतोद्यमम् ॥ तृतीयं च हतं तेन श्वेतद्वीपं प्रवेक्ष्यति ॥ ९५ ॥
वैष्णवं तेज आविश्य यथोक्तं ब्रह्मवादिना ॥ मयाऽपि चेहसंस्थेन दृष्टमेवाक्षदर्शनात् ॥ ९६ ॥
मयाऽवलम्बितं सर्वं देवस्य परमात्मनः ॥ यस्त्विदं पठते नित्यं पुण्यमाख्यानमादितः ॥ ९७ ॥
नारदोक्तं मनुष्यो वै स याति परमां गतिम् ॥ वैष्णवं परमाख्यानं सर्वपापप्रणाशनम् ॥ ९८ ॥
नित्यं च शृणुयाद्यश्च सोपि पापात्प्रमुच्यते ॥ जातिस्मरत्वं विप्रत्वं कुले महति संभवम् ॥
सर्वज्ञतां च लभते नात्र कार्या विचारणा ॥ ९९ ॥
स च संस्तूय च हरिं प्रविष्टः कमलोद्भवः ॥ अनुभाव्य सुरान्सर्वान्ययौ स्वं लोकमीश्वरः ॥१००॥
नारदस्तु ततस्तस्मान्मेरुपृष्ठं परिभ्रमन् ॥ स तु मामाजगामाशु दिदृक्षुर्द्वादशात्मकम् ॥ १०१ ॥
स मया शास्त्रतः सम्यगभिवाद्याभिपूजितः ॥ आख्यानमिदमाचष्ट ममानुग्रहकाम्यया ॥ १०२ ॥
मयाप्येतत्सदस्येत्य पावनार्थं मनोहरम् ॥ भक्त्या तव महाबाहो कथामृतमुदाहृतम् ॥ १०३ ॥
एतदर्थं महाबाहो रावणेन दुरात्मना ॥ विज्ञाय च हृता सीता त्वत्तो मरणकाङ्क्षया ॥ १०४ ॥
भवान्नारायणो देवः शङ्खचक्रगदाधरः ॥ शार्ङ्गपद्मायुधधरः सर्वदेवनमस्कृतः ॥ १०५ ॥
श्रीवत्साङ्को हृषीकेशः सर्वदेवाभिपूजितः ॥ पद्मनाभो महायोगी भक्तानामभयप्रदः ॥ १०६ ॥
वधार्थं रावणस्य त्वं प्रविष्टो मानुषीं तनुम् ॥ किं न वेत्सि त्वमात्मानं राम नारायणो ह्यहम्[1]॥१०७
मा मुह्यस्व महाभाग स्मर चात्मानमात्मना ॥ गुह्याद्गुह्यतरस्त्वं हि एवमाह पितामहः ॥ १०८ ॥
त्रिगुणश्च त्रिवेदी च त्रिधामा त्रिपदात्मकः ॥ त्रिकालकर्मा त्रैविद्यस्त्रिदशारिप्रमर्दनः ॥ १०९ ॥
त्वयाऽऽक्रान्तास्त्रयो लोकाः पुराणैर्विक्रमैस्त्रिभिः ॥ त्वं महेन्द्रानुजः श्रीमान्बलिबन्धनकारणात् ११०
अदित्या गर्भसंभूतो विष्णुस्त्वं हि सनातनः ॥ लोकाननुग्रहीतुं वै प्रविष्टो मानुषीं तनुम् ॥१११॥
तदिदं साधितं कार्यं सुराणां सुरसत्तम ॥ निहतो रावणः पापः सपुत्रगणबान्धवः ॥ ११२ ॥
प्रहृष्टाश्च सुराः सर्वे ऋषयश्च तपोधनाः ॥ प्रशान्तं च जगत्सर्वं त्वत्प्रसादात्सुरेश्वर ॥ ११३ ॥

---

एतदर्थं हरिहस्तहतस्यमोक्षोभवतीतिमुनिप्रोक्त ॥ १०४ ॥ नारायणकृतमारणस्यमुक्तिहेतुत्वेमद्धस्तहननमुद्दिश्यमद्भार्याचौर्यंतस्य कुतइत्यत सएवत्वमितितत्वमाह—भवानिति । शार्ङ्गेणसहपद्मग्रहणाद्विनायुधरिपुपराभावनसामर्थ्यसूचयति ॥ १०५ ॥ यथा येनप्रकारेण । नारायणोऽहमित्यात्माननवेत्सिकि ॥ १०७ ॥ मामुह्यस्व नमोहंप्राप्नुहि । उपदेशक्रमाप्तमिदमित्याह—पितामहइति ॥ १०८ ॥ त्रिगुण. सत्त्वरजस्तम प्रवर्तक । त्रिवेदी ऋगादिवेद्य । त्रिधामा वैकुण्ठादिधामत्रयवान् । त्रिचरागम[2]. त्रीनर्थान् चरति चारयति अवगमयतिसत्रिचर । सआगमोवेद । सयेनव्यासादिरूपेणस । 'त्र्यर्थताश्रुतिपुवित्त' इत्यादे. । त्रिकालकर्मन् कालत्रयविहितकर्मकर्त । त्रैविद्य तत्प्राप्य ॥ १०९ ॥ पुराणै. त्रिभिर्विक्रमै आदिकालिकपादविक्षेपै. ॥ ११० ॥

[ पा० ] १ झ. ठ. यथानारायणोह्यहं. २ झ, ठ. त्रिचरागमः । त्रिकालकर्मत्रैविद्यत्रिदशा.

सीता लक्ष्मीर्महाभागा संभूता वसुधातले ॥ त्वदर्थमियमुत्पन्ना जनकस्य गृहे शुभा ॥
लङ्कामानीय यत्नेन मातेव परिरक्षिता ॥ ११४ ॥
एवमेतत्समाख्यातं तव राम महायशः ॥ ममापि नारदेनोक्तमृषिणा दीर्घजीविना ॥ ११५ ॥
यथा सनत्कुमारेण व्याख्यातं तस्य रक्षसः ॥ तेनापि च तदेवाशु कृतं सर्वमशेषतः ॥ ११६ ॥
यश्चैतच्छ्रावयेच्छ्राद्धे विद्वान्ब्राह्मणसन्निधौ ॥ अनन्तमक्षय्यं दत्तं पितॄणामुपतिष्ठति ॥ ११७ ॥
एतां श्रुत्वा कथां दिव्यां रामो राजीवलोचनः ॥ परं विस्मयमापन्नो भ्रातृभिः सह राघवः ॥११८॥
वानराः सहसुग्रीवा राक्षसाः सविभीषणाः ॥ राजानश्च महामात्या ये चान्येऽपि समागताः ॥११९॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा धर्मसमन्विताः ॥ सर्वे चोत्फुल्लनयनाः सर्वे हर्षसमन्विताः ॥
राममेवानुपश्यन्ति भृशमत्यन्तहर्षिताः ॥ १२० ॥
अगस्त्यस्त्वब्रवीद्रामं सर्वमेतच्छ्रुतं त्वया ॥ दृष्टः संभाषितश्चापि राम गच्छामहे वयम् ॥
[ एवमुक्त्वा गताः सर्वे पूजितास्ते यथागतम् ॥ १२१ ॥ ]
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे पञ्चमः सर्गः ॥ ५ ॥

---

## अष्टत्रिंशः सर्गः ॥ ३८ ॥

रामेण स्वाभिषेकावलोकनकुतुकसमागतनानादेशाधिपानां तत्तन्नगरप्रतिप्रेषणम् ॥ १ ॥

एवमास्ते महाबाहुरहन्यहनि राघवः ॥ प्रशासत्सर्वकार्याणि पौरजानपदेषु च ॥ १ ॥
ततः कतिपयाहस्सु वैदेहं मिथिलाधिपम् ॥ राघवः प्राञ्जलिर्भूत्वा वाक्यमेतदुवाच ह ॥ २ ॥
भवान्हि गतिरव्यग्रा भवता पालिता वयम् ॥ भवतस्तेजसोग्रेण रावणो निहतो मया ॥ ३ ॥
इक्ष्वाकूणां च सर्वेषां मैथिलानां च सर्वशः ॥ अतुलाः प्रीतयो राजन्संबन्धकपुरोगमाः ॥ ४ ॥
तद्भवान्स्वपुरीं यातु रत्नान्यादाय पार्थिव ॥ भरतश्च सहायार्थं पृष्ठतस्तेऽनुयास्यति ॥ ५ ॥
स तथेति नृपः कृत्वा राघवं वाक्यमब्रवीत् ॥ प्रीतोस्मि भवतो राजन्दर्शनेन नयेन च ॥ ६ ॥
यान्येतानि तु रत्नानि मदर्थं संचितानि वै ॥ दुहित्रे तानि वै राजन्सर्वाण्येव ददामि च ॥ ७ ॥

---

अथ सामन्तराजविसर्जन–एवमित्यादि ॥ एव पूर्वोक्तप्रकारेण । सर्वोपास्यमान इत्यर्थः । प्रशासदिति शत्रन्त पदं ॥ १—२ ॥ भवान्हि गतिरव्यग्रेति । अचला प्रतिष्ठेत्यर्थः । भवता पालिता इति । कन्याप्रदानादिना परिपालितवंशा इत्यर्थ. । तेजसा तपोवीर्येण । पाविता इति च पाठः ॥ ३—४ ॥ रत्नानि अस्माभिर्दीयमानानि उत्तमवस्तूनि ॥ ५ ॥ तथेति कृत्वा तथास्त्वित्यङ्गीकृत्येत्यर्थ. ॥ ६ ॥ मदर्थं मत्प्री-

उत्पन्ना आविर्भूता । माता जगदबात्वात् । सस्यवतीवसुमतीव ॥११४॥ दीर्घजीविना चिरायुषा ॥ ११५॥ तस्यरक्षसोरावणस्य । तेनापिरावणेनापि ॥ ११६ ॥ पितॄणादत्तं तेभ्योदत्त ॥ ११७ ॥ भृशपश्यन्ति अपश्यन् । जगदीश्वरस्त्वमस्मद्दैवेनलब्धइति ॥१२०॥ पूजिता सभाजिता ॥ १२१ ॥ इतिप्रक्षिप्तेषुपञ्चम सर्ग ॥ ५ ॥

एवं सर्वोपास्यत्वेन । प्रशासत् शत्रन्तं । अभ्यस्तत्वानुमभाव ॥ १ ॥ ति० कतिपयाहस्सु गतेष्विति शेष ॥ स० कतिपयाहस्सु समासान्तविधेरनित्यत्वादुपपन्न । कतिपयेतिलुप्तसप्तम्यन्तंवा । वैदेह जनकं ॥ २ ॥ स० गति प्राप्यस्थानं । पालिता आशीर्वचनेन ॥ ३ ॥ ति० सबन्धकपुरोगमा सबन्धक सबन्ध. । पुरोगम अग्रेसर यासाता. । सबन्ध प्रीतयश्चेत्यर्थ ॥ ४ ॥ ति० भरत पृष्ठतोनुयास्यति इष्टबन्धूनामनुगमनरूपसत्कारार्थं ॥ ५ ॥

[ पा० ] १ इदमर्धं. ड. च. छ. झ. ञ. पाठेषुदृश्यते. २ क. भवतोगौरवंप्राप्ताभवता.

एवमुक्त्वा तु काकुत्स्थं जनको हृष्टमानसः ॥ प्रययौ मिथिलां श्रीमांस्तमनुज्ञाय राघवम् ॥ ८ ॥
ततः प्रयाते जनके केकयं मातुलं प्रभुः ॥ राघवः प्राञ्जलिर्भूत्वा¹ वाक्यमेतदुवाच ह ॥ ९ ॥
इदं राज्यमहं चैव भरतश्च सलक्ष्मणः ॥ आयत्तास्त्वं² हि नो राजन्गतिश्च पुरुषर्षभ ॥ १० ॥
राजाऽपि वृद्धः संतापं त्वदर्थमुपयास्यति ॥ तस्माद्गमनमद्यैव रोचते तव पार्थिव ॥ ११ ॥
लक्ष्मणेनानुयात्रेण पृष्ठतोऽनुगमिष्यते ॥ धनमादाय विपुलं रत्नानि विविधानि च ॥ १२ ॥
युधाजित्तु तथेत्याह गमनं प्रति राघवम् ॥ रत्नानि च धनं चैव त्वय्येवाक्षय्यमस्त्विति ॥ १३ ॥
प्रदक्षिणं स राजानं कृत्वा केकयवर्धनः ॥ रामेण हि कृतः पूर्वमभिवाद्य प्रदक्षिणम् ॥ १४ ॥
लक्ष्मणेन सहायेन प्रयातः केकयेश्वरः ॥ हतेऽसुरे यथा वृत्रे विष्णुना सह वासवः ॥ १५ ॥
तं विसृज्य ततो रामो वयस्यमकुतोभयम् ॥ प्रतर्दनं काशिपतिं परिष्वज्येदमब्रवीत् ॥ १६ ॥
दर्शिता भवता प्रीतिर्दर्शितं सौहृदं परम् ॥ उद्योगश्च कृतो राजन्भरतेन त्वया सह ॥ १७ ॥
तद्भवानद्य काशेय पुरीं वाराणसीं व्रज ॥ रमणीयां त्वया गुप्तां सुप्रकाशां³ सुतोरणाम् ॥ १८ ॥
एतावदुक्त्वा चोत्थाय काकुत्स्थः परमासनात् ॥ पर्यष्वजत धर्मात्मा निरन्तरमुरोगतम् ॥
विसर्जयामास तदा कौसल्यानन्दवर्धनः ॥ १९ ॥
राघवेणाभ्यनुज्ञातः काशीशोप्यकुतोभयः ॥ वाराणसीं ययौ तूर्णं राघवेण विसर्जितः ॥ २० ॥
विसृज्य तं काशिपतिं त्रिशतं पृथिवीपतीन् ॥ प्रहसन्राघवो वाक्यमुवाच मधुराक्षरम् ॥ २१ ॥
भवतां प्रीतिरव्यग्रा⁴ तेजसा परिरक्षिता ॥ धर्मश्च नियतो नित्यं सत्यं च भवतां सदा ॥ २२ ॥
युष्माकं चानुभावेन तेजसा च महात्मनाम् ॥ हतो दुरात्मा दुर्बुद्धी रावणो राक्षसाधमः ॥ २३ ॥
हेतुमात्रमहं तत्र भवतां तेजसा हतः ॥ रावणः सगणो युद्धे सपुत्रामात्यबान्धवः ॥ २४ ॥

---

तिदानार्थं ॥ ७—८ ॥ केकयं मातुलमिति युधाजितमित्यर्थः ॥ ९ ॥ आयत्ताः । त्वयीति शेषः । गतिः आपद्बन्धुरित्यर्थः ॥ १० ॥ राजा केकयः ॥ ११ ॥ अनुयात्रेण अनुयात्रोपचाररूपेण अनुयात्रानुरूपोपचारार्थं । अनुगमिष्यते । भवानिति शेषः । लक्ष्मणस्त्वनुयात्रार्थं पृष्ठतोनुगमिष्यतीतिपाठः ॥ १२—१३ ॥ रामेण पूर्वमभिवाद्य प्रदक्षिण कृतः केकयवर्धनः राजान राम प्रदक्षिणीकृत्य प्रयातः। रामस्य मूर्धाभिषिक्तत्वाज्ज्येष्ठेन मातुलेनापि रामं प्रति प्रदक्षिणादिकरणं ॥ १४ ॥ वृत्रे हते सति विष्णुना उपेन्द्रेण सह स्थितो वासवः यथा विसृजति तथा लक्ष्मणमनुयात्रार्थं विसृज्येत्यर्थः ॥ १५—१६ ॥ यस्मात्त्वया भरतेन सह मम रणसहायार्थमुद्योगः कृतः । यस्माद्भवता परमा प्रीतिर्दर्शिता पर सौहार्दं च दर्शितं । अनेनानुवादेन रावणसंहारार्थं काशीराजेन संगतमिति सिद्धम् ॥ १७ ॥ काशेय काशीदेशे भव । ढग्भाव आर्षः ॥ १८ ॥ उरोगत यथा भवति तथा निरन्तरं गाढ पर्यष्वजत ॥ १९—२० ॥ प्रहसन्निति । त्रिशतसङ्ख्याकपृथिवीपतिदर्शनजसतोषात्प्रहासः ॥ २१ ॥ भवतां तेजसा अव्यग्रा प्रतिष्ठिता प्रीतिः वनाय निर्गतस्य मे पुनश्चागत्यानुभवयोग्यतया परिरक्षिता । भवता तेजसा धर्मश्च नियतः । सत्यं

---

ति० अनुगमिष्यते भवानितिशेष ॥ १२ ॥ ति० भवतापरमाप्रीतिर्दर्शिता परमसौहृदंचदर्शित । एवमनुवादादेवोद्योगकरणं गम्यते ॥ १७ ॥ भवान्पुरी व्रजव्रजतु ॥ १८ ॥ ति० तदा ततइत्यर्थ ॥ १९ ॥ ति० परिरक्षिता मद्गुणमालोच्यनभवतांमयिप्रीति. । कितुस्वीयसत्स्वभावेनैवेत्याशय ॥ २२ ॥

[ पा० ] १ च. छ झ. ञ ठ भूत्वाविनयाद्वाक्यमब्रवीत्. २ क—घ. ज. आयत्तंत्वयिनोनाथगतिश्च. ३ क. घ—छ. झ. ञ. सुप्राकारा. ४ ख. रव्यग्राभवतापालितावयं.

भवन्तश्च समानीता भरतेन महात्मना ॥ श्रुत्वा जनकराजस्य काननात्तनयां हृताम् ॥ २५ ॥
उद्युक्तानां च सर्वेषां पार्थिवानां महात्मनाम् ॥ कालो व्यतीतः सुमहान्गमनं रोचयाम्यतः ॥२६॥
प्रत्यूचुस्तं च राजानो हर्षेण महता वृताः ॥ दिष्ट्या त्वं विजयी राम स्वराज्येऽपि प्रतिष्ठितः ॥२७॥
दिष्ट्या प्रत्याहृता सीता दिष्ट्या शत्रुः पराजितः ॥ एष नः परमः काम एषा नः प्रीतिरुत्तमा ॥२८॥
यत्त्वां विजयिनं राम पश्यामो हतशात्रवम् ॥ एतत्त्वय्युपपन्नं च यदस्मांस्त्वं प्रशंससे ॥ २९ ॥
प्रशंसार्ह न जानीमः प्रशंसां वक्तुमीदृशीम् ॥ आपृच्छामो गमिष्यामो हृदिस्थो नः सदा भवान् ॥३०॥
वर्तामहे महाबाहो प्रीत्याऽत्र महता वृताः ॥ भवेच्च ते महाराज प्रीतिरस्मासु नित्यदा ॥ ३१ ॥
बाढमित्येव राजानो हर्षेण परमन्विताः ॥ ऊचुः प्राञ्जलयः सर्वे राघवं गमनोत्सुकाः ॥ ३२ ॥

[ दिष्ट्या ते कमलवरेक्षणं सुनासं ताम्रोष्ठं मुखमतिशोभि शुक्लदन्तम् ॥
पश्यामो विजयमहाहवेषु नित्यं भ्राजन्तं निशि शरदीव पूर्णचन्द्रम् ॥ ३३ ॥
पूजिताश्च त्वया राम मानिताश्च विशेषतः ॥ गमिष्यामो महाराज स्वं स्वं देशं रघूत्तम ॥३४॥]
पूजिताश्चैव रामेण जग्मुर्देशान्स्वकान्स्वकान् ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अष्टत्रिंशः सर्गः ॥ ३८ ॥

---

## एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

रामाभ्यनुज्ञानेनस्वस्वनगरगतैस्तैस्तैराजभि स्वस्वानुगतभरतलक्ष्मणशत्रुघ्नद्वारा श्रीरामाय नानारत्नादिरूपोपायनप्रत्यर्पणम् ॥ १ ॥ रामेण सुग्रीवविभीषणादिभ्यस्तद्रत्नदानम् ॥ २ ॥ रामेण सादरोपचारलालितै सुग्रीवविभीषणादिभिरयोध्यायामेक वत्सरं सुखनिवास· ॥ ३ ॥

ते प्रयाता महात्मानः पार्थिवास्ते प्रहृष्टवत् ॥ गजवाजिसहस्रौघैः कम्पयन्तो वसुंधराम् ॥ १ ॥
अक्षौहिण्यो हि तत्रासन्राघवार्थे समुद्यताः ॥ भरतस्याज्ञयाऽनेकाः प्रहृष्टा बलवाहनाः ॥ २ ॥
ऊचुस्ते च महीपाला बलदर्पसमन्विताः ॥ न रामरावणं युद्धे पश्यामः पुरतः स्थितम् ॥ ३ ॥

---

च नियतं ॥ २२—२४ ॥ भवन्तश्च समानीता· संमिलिताः ॥ २५—२७ ॥ हतशात्रवं हतशत्रुं ॥ २८—३१ ॥ बाढमित्येवेति ॥ रामेणोक्ता इति शेषः । गमिष्याम इत्यूचुरिति पूर्वेणान्वयः ॥ ३२—३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने अष्टत्रिंशः सर्गः ॥ ३८ ॥

---

प्रहृष्टवत् प्रहृष्टाः सन्त· ॥ १ ॥ राघवार्थं इति । रामसहायार्थमित्यर्थः ॥२॥ रामरावणं रामस्य रावण ।

---

**ति०** हतशात्रव हतशत्रुसमूह ॥ एतत्त्वय्युपपन्नं सकललोकमनोरमणत्वादितिभाव ॥ २९ ॥ **ति०** प्रशंसार्ह सकललोकप्रशसार्हस्वभावयुक्त । ईदशीं भवदुक्तप्रशंसाजातीयाप्रशसावक्तुनजानीम । अतस्तामकृत्वैव । यथासदाभवान्नोहृदिस्थ । एववयमपित्वद्विषययामहत्याप्रीत्यावृतास्तवहृदियथावर्तामहे तथाअस्मासुतेप्रीतिश्चभवेत् भूयात् । **शि०** हृदिस्थ सदाभवत्वितिशेष ॥ ३०—३१ ॥ द्वेषेणहृदयस्थतामाभूदित्येतदुक्तिर्बाढमित्येवेति । रामेणोक्ताइतिशेष ॥ ३२ ॥ **ति०** पूजितास्तेचेत्यादिनावृत्तक्रियानुवाद. ॥ ३५ ॥ इत्यष्टत्रिंश सर्ग ॥ ३८ ॥

**ति०** रामरावणमिति रामशत्रुंरावणमित्यर्थ । मध्यमपदलोपीसमास ॥ **स०** रामरावण राममपिकिंचित्कालंलोकदृष्ट्या-

**[ पा० ]** १ क—घ· महतान्विता·. २ इदंश्लोकद्वयं च छ पाठयोर्दृश्यते ३ क ख. ग च छ. पूजितास्सह ४ क. ख. च. छ. पार्थिवास्सर्वतोदिश । कंपयन्तोमहीवीरा स्वपुराणिप्रहृष्टवत् ५ क—घ. ज. अक्षौहिणीसहस्रैस्तेसमुद्युक्तास्त्वनेकशः । हृष्टा प्रतिगता सर्वेराघवार्थेसमागता .

भरतेन वयं पश्चात्समानीता निरर्थकम् ॥ हता हि राक्षसाः क्षिप्रं पार्थिवैः स्युर्न संशयः ॥ ४ ॥
रामस्य बाहुवीर्येण रक्षिता लक्ष्मणस्य च ॥ सुखं पारे समुद्रस्य युध्येम विगतज्वराः ॥ ५ ॥
एताश्चान्याश्च राजानः कथास्तत्र सहस्रशः ॥ कथयन्तः स्वराज्यानि जग्मुर्हर्षसमन्विताः ॥ ६ ॥
स्वानि राज्यानि मुख्यानि ऋद्धानि मुदितानि च ॥ समृद्धधनधान्यानि पूर्णानि वसुमन्ति च ॥७॥
यथापुराणि ते गत्वा रत्नानि विविधान्यथ ॥ रामस्य प्रियकामार्थमुपहारान्नृपा ददुः ॥ ८ ॥
अश्वान्यानानि रत्नानि हस्तिनश्च मदोत्कटान् ॥ चन्दनानि च मुख्यानि दिव्यान्याभरणानि च ॥९॥
मणिमुक्ताप्रवालांस्तु दास्यो रूपसमन्विताः ॥ अजाविकांश्च विविधान्रथांस्तु विविधान्ददुः ॥१०॥
भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलाः ॥ आदाय तानि रत्नानि स्वां पुरीं पुनरागताः ॥ ११ ॥
आगम्य च पुरीं रम्यामयोध्यां पुरुषर्षभाः ॥ तानि रत्नानि चित्राणि रामाय समुपाहरन् ॥ १२ ॥
प्रतिगृह्य च तत्सर्वं रामः प्रीतिसमन्वितः ॥ सुग्रीवाय ददौ राज्ञे महात्मा कृतकर्मणे ॥ १३ ॥
विभीषणाय च ददौ तथाऽन्येभ्योपि राघवः ॥ राक्षसेभ्यः कपिभ्यश्च यैर्वृतो जयमाप्तवान् ॥१४॥
ते सर्वे रामदत्तानि रत्नानि कपिराक्षसाः ॥ शिरोभिर्धारयामासुर्बाहुभिश्च महाबलाः ॥ १५ ॥
हनूमन्तं च नृपतिरिक्ष्वाकूणां महारथः ॥ अङ्गदं च महाबाहुमङ्कमारोप्य वीर्यवान् ॥
रामः कमलपत्राक्षः सुग्रीवमिदमब्रवीत् ॥ १६ ॥
अङ्गदस्ते सुपुत्रोऽयं मन्त्री चाप्यनिलात्मजः ॥ सुग्रीव मन्त्रिते युक्तौ ममापि च हिते रतौ ॥
अर्हतो विविधां पूजां त्वत्कृते वै हरीश्वर ॥ १७ ॥
इत्युक्त्वा व्यवमुच्याङ्गाद्भूषणानि महायशाः ॥ स बबन्ध महार्हाणि तदाङ्गदहनूमतोः ॥ १८ ॥
आभाष्य च महावीर्यान्राघवो यूथपर्षभान् ॥ नीलं नलं केसरिणं कुमुदं गन्धमादनम् ॥ १९ ॥
सुषेणं पनसं वीरं मैन्दं द्विविदमेव च ॥ जांबवन्तं गवाक्षं च विनतं धूम्रमेव च ॥ २० ॥
वलीमुखं प्रजङ्घं च सन्नादं च महाबलम् ॥ दरीमुखं दधिमुखमिन्द्रजानुं च यूथपम् ॥ २१ ॥
मधुरं श्लक्ष्णया वाचा नेत्राभ्यामापिबन्निव ॥ सुहृदो मे भवन्तश्च शरीरं भ्रातरस्तथा ॥ २२ ॥
युष्माभिरुद्धृतश्चाहं व्यसनात्काननौकसः ॥ धन्यो राजा च सुग्रीवो भवद्भिः सुहृदां वरैः ॥२३॥
एवमुक्त्वा ददौ तेभ्यो भूषणानि यथार्हतः ॥ वज्राणि च महार्हाणि सस्वजे च नरर्षभः ॥ २४ ॥

वध्यघातुकसंबन्धः षष्ठ्यर्थः । राम रावणमिति पाठे युद्धे रामं रावण च युद्ध्यमानौ रामरावणावित्यर्थः ॥ ३ ॥ पश्चात् रावणवधानन्तरं ॥४—६ ॥ मुख्यानीति । प्रसिद्धानीत्यर्थः । धन जीविकाजीवरूप । वसुमन्ति महानिधिमन्ति ॥ ७ ॥ यथापुराणि यथाप्राप्तस्वस्वपुराणि । उपहारान् प्रत्युपहारान् ॥८—९ ॥ अजाविकान् चर्ममयान् । तल्पविशेषानित्यर्थ. । अजाविक च विविधमिति वा-पाठः ॥ १०—१४ ॥ शिरोभिरिति । मुकुटकुण्डलादीनीति भावः। बाहुभिरिति । अङ्गदादीनीत्यर्थः । भुजेषु चेति

रावयतीति भोसीतेक्वासीतितथात । नपश्याम । पुरत रामपुरत स्थित । नालोकितवन्त समरदर्शनदैवहीनाइतिभात्र ॥ ३ ॥ **स०** भरतेनेति । तदैवदैववशाद्गमने रामरावणसमर्ददर्शनमिव राक्षससक्षय सुघट कर्तुमस्माभिरितिवदन्त । हताइति । यदि पूर्वसमानीतावयं तर्हिपार्थिवैरस्माभिरेवराक्षसानिहता स्युरित्यन्वय ॥ ४ ॥ **ति०** उक्तानिस्वराज्यान्यनूद्यविशिनष्टि—स्वानीत्यादि ॥ **स०** मुदितानि जनद्वारा । धन स्वर्णादिधातु । वसु रत्नादि । 'वसुरत्नेस्मृतं' इतिविश्व' ॥ ७ ॥ **ति०** यथापुराणि यथापूर्वमक्षतशरीरतयापुराणिगत्वाप्रियकामार्थ इष्टकामार्थंददु. । आनुयात्रिकेभ्य । भरतलक्ष्मणशत्रुघ्नेभ्यइतिशेष ॥ ८ ॥ **ति०** अङ्कमारोप्य । बालाविवेतिशेष । अनेनभगवतास्वस्यनिरतिशयबलवत्त्वेनेश्वरत्वंसूचितं ॥ १६ ॥ **ति०** मन्त्रिते मन्त्रे ॥ १७ ॥

[ **पा०** ] १ क—घ. ज. ददु सर्वाणिरत्नानिराघवायमहात्मने. २ क—घ ज ददौयेचान्येऋक्षवानरा.. अत्र. हनुमत्प्रमुखावीराराक्षसाश्चमहाबला । तेषामपिददौरामोरत्नवस्त्राण्यनेकश. इतिश्लोकश्चाधिकोदृश्यते. ३ ङ. च. झ. ञ. ट. व्यपमुच्याङ्गात्.

ते पिबन्तः सुगन्धीनि मधूनि मधुपिङ्गलाः ॥ मांसानि च सुमृष्टानि मूलानि च फलानि च ॥२५॥
एवं तेषां निवसतां मासः साग्रो ययौ तदा ॥ मुहूर्तमिव ते सर्वे राजभक्त्या च मेनिरे ॥ २६ ॥
रामोपि रेमे तैः सार्धं वानरैः कामरूपिभिः ॥ राक्षसैश्च महावीर्यैर्ऋक्षैश्चैव महाबलैः ॥ २७ ॥
एवं तेषां ययौ मासो द्वितीयः शैशिरः सुखम् ॥ वानराणां प्रहृष्टानां राक्षसानां च सर्वशः ॥२८॥
इक्ष्वाकुनगरे रम्ये परां प्रीतिमुपासताम् ॥ रामस्य प्रीतिकरणैः कालस्तेषां सुखं ययौ ॥ २९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

## चत्वारिंशः सर्गः ॥ ४० ॥

रामेण सबहुमानपरिष्वङ्गं सुग्रीवविभीषणादीनां स्वस्वावासंप्रति प्रेषणम् ॥ १ ॥ तथा हनुमत्कण्ठे स्वकण्ठस्थमुक्ताहारार्पणपूर्वकं वरदानेनेष्टदेशं प्रतिप्रेषणम् ॥ २ ॥

तथा स तेषां वसतामृक्षवानररक्षसाम् ॥ राघवस्तु महातेजाः सुग्रीवमिदमब्रवीत् ॥ १ ॥
गम्यतां सौम्य किष्किन्धां दुराधर्षां सुरासुरैः ॥ पालयस्व सहामात्यो राज्यं निहतकण्टकम् ॥२॥
अङ्गदं च महाबाहो प्रीत्या परमया युतः ॥ पश्य त्वं हनुमन्तं च नलं च सुमहाबलम् ॥ ३ ॥
सुषेणं श्वशुरं वीरं तारं च बलिनां वरम् ॥ कुमुदं चैव दुर्धर्षं नीलं चैव महाबलम् ॥ ४ ॥
वीरं शतवलिं चैव मैन्दं द्विविदमेव च ॥ गजं गवाक्षं गवयं शरभं च महाबलम् ॥ ५ ॥
पश्य प्रीतिसमायुक्तो गन्धमादनमेव च ॥ ऋषभं च सुविक्रान्तं जाम्बवन्तं महाबलम् ॥
केसरिं शरभं शुंभं शङ्खचूडं महाबलम् ॥ ६ ॥
ये चेमे सुमहात्मानो मदर्थे त्यक्तजीविताः ॥ पश्य त्वं प्रीतिसंयुक्तो मा चैषां विप्रियं कृथाः ॥७॥
एवमुक्त्वा तु सुग्रीवमाश्लिष्य च पुनःपुनः ॥ विभीषणमुवाचाथ रामो मधुरया गिरा ॥ ८ ॥

---

पाठः ॥ १५—२५ ॥ एवं तेषां निवसतामिति । आभरणादिभिः सत्कृतानां निवसतां तेषा साग्रः पञ्च षड्दिनाधिक मासो गतः ॥ २६—२७ ॥ वसन्तेभिषिक्तेन रामेण मासानन्तरमपि अविशेषसत्कार प्राप्तानां तेषा द्वितीय. शैशिरो मासः फाल्गुनमास. सुखं गतः । अभिषेकानन्तरं सवत्सरं सुखमुषितास्त इत्यर्थ. ॥ २८ ॥ प्रीतिकरणैः समानैः ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

तेषामिति भावलक्षणे षष्ठी । तेषु वसत्स्विति यावत् ॥ १ ॥ किष्किन्धां प्रतीति शेष. ॥ २—८॥

---

ति० वसन्तेऽभिषिक्तेनरामेणमासानन्तरविशेषसत्कारप्राप्तौ शिशिर शिशिरर्तुसबन्धीद्वितीयोमास । सुखंगतइत्युक्त्यासंवत्सरपर्यन्तंतेषारामसमीपेवासउक्त इतितीर्थादय ।वस्तुतोऽधिकमासगणनयाऽमान्तमानेनाश्विनकृष्णपक्षेऽयोध्याप्रवेशेनतत्रैवतदुत्तरशुक्लपक्षेवाभिषेक । साग्रोमासइत्यनेनकार्त्तिकान्तास्थितिरुक्ता । तत शिशिरोद्वितीयोमास फाल्गुनोगतइतिहेमन्तशिशिरावर्धंशरच्चतत्रवासइतिपञ्चमासपर्यन्तंतत्रवासइतिलभ्यते इतिममभाति । पूर्वकाण्डान्तसक्षेपेणोक्तस्यैवार्थस्यात्रकाण्डेविस्तरेणोक्तिरिति बोध्यम् ॥ एवंतेषामितिभरताद्यानीतरत्नविशेषैर्विशेषसत्कारप्राप्तिपर्यन्तनिवसतातेषासाग्रा पञ्चषड्दिनाधिकामासागता ॥ स० मासश्चात्रनिषेकमारभ्य । किंतुसर्वराजनिर्गमानन्तरमितिध्येयं ॥ स्कान्देरामोपाख्यानेरामाभिषेकानन्तरंसवत्सरपर्यन्तंवासस्योक्तत्वात् । अत्रयद्वक्तव्यंतदुक्तंपुरस्तात् ॥ २६ ॥ ति० प्रीतिकरणै. समानै. ॥ २९ ॥ इत्येकोनचत्वारिंश सर्ग ॥ ३९ ॥
ति० वसतातेषामिति निर्धारणेषष्ठी ॥ १ ॥
[ पा० ] १ ङ. च. झ. ञ. ट. ऋक्षराजंचदुर्धर्षंजाम्बवन्तंमहाबलं. २ ङ. च. झ. ञ. ट. ऋषभंचसुविक्रान्तंप्लवंगंचसुपाटलं. ३ इदमर्धं ङ. च. झ. ञ. ट. पाठेषुदृश्यते

लङ्कां प्रशाधि धर्मेण धर्मज्ञस्त्वं मतो मम ॥ पुरस्य [1]राक्षसानां च स्वभ्रातुः संमतो ह्यसि ॥ ९ ॥
मा च बुद्धिमधर्मे त्वं कुर्या राजन्कथंचन ॥ [2]बुद्धिमन्तो हि राजानो ध्रुवमश्नन्ति मेदिनीम् ॥ १० ॥
अहं च नित्यशो राजन्सुग्रीवसहितस्त्वया ॥ स्मर्तव्यः परया प्रीत्या गच्छ त्वं विगतज्वरः ॥११॥
रामस्य भाषितं श्रुत्वा ऋक्षवानरराक्षसाः ॥ साधुसाध्विति काकुत्स्थं प्रशशंसुः पुनःपुनः ॥ १२ ॥
तव बुद्धिर्महाबाहो वीर्यमद्भुतमेव च ॥ माधुर्यं परमं [3]राम स्वयंभोरिव नित्यदा ॥ १३ ॥
तेषामेवं ब्रुवाणानां वानराणां च रक्षसाम् ॥ हनूमान्प्रवणो भूत्वा राघवं वाक्यमब्रवीत् ॥ १४ ॥
स्नेहो मे परमो राजंस्त्वयि तिष्ठतु नित्यदा ॥ भक्तिश्च नियता वीर भावो नान्यत्र गच्छतु ॥१५॥
यावद्रामकथा वीर चरिष्यति महीतले ॥ तावच्छरीरे [4]वत्स्यन्ति प्राणा मम न संशयः ॥ १६ ॥
यच्चैतच्चरितं दिव्यं [5]कथा ते रघुनन्दन ॥ तन्ममाप्सरसो [6]राम श्रावयेयुर्नरर्षभ ॥ १७ ॥
तच्छ्रुत्वाऽहं ततो वीर तव चर्यामृतं प्रभो ॥ उत्कण्ठां तां हरिष्यामि मेघलेखामिवानिलः ॥१८॥
एवं ब्रुवाणं रामस्तु हनूमन्तं वरासनात् ॥ उत्थाय सस्वजे स्नेहाद्वाक्यमेतदुवाच ह ॥ १९ ॥
एवमेतत्कपिश्रेष्ठ भविता नात्र संशयः ॥ चरिष्यति कथा यावदेषा लोके च मामिका ॥
तावत्ते भविता कीर्तिः शरीरेऽप्यसवस्तथा ॥ २० ॥
लोका हि यावत्स्थास्यन्ति तावत्[7]स्थास्यति मे कथा ॥ २१ ॥
एकैकस्योपकारस्य प्राणान्दास्यामि ते कपे ॥ [ [8]शेषस्येहोपकाराणां भवाम ऋणिनो वयम् ॥ २२ ॥
मदङ्गे जीर्णतां यातु यत्त्वयोपकृतं कपे ] ॥ नरः प्रत्युपकाराणामापत्स्वायाति पात्रताम् ॥ २३ ॥

---

पुरस्य पुरवर्तिप्राणिनां राक्षसादीनां स्वभ्रातुर्वैश्रवणस्य च संमतो ह्यसि परमाप्तोसि । भ्रातुर्वैश्रवणस्य चेति पाठे संमतोसीति शेषः ॥ ९ ॥ ध्रुव शाश्वत ॥ १०—१२ ॥ अद्भुत वीर्यं जगदद्भुतकर शौर्य ॥ १३—१४ ॥ स्नेहः सुहृदि प्रीतिः। भक्तिः उत्कृष्टे प्रीति. ॥ १५ ॥ तावच्छरीरे वत्स्यन्ति त्वत्कथामृतरसास्वादबलादिति भावः ॥ १६—२० ॥ एवं शब्दार्थविवृणोति—लोका हीति ॥ २१—२३ ॥

---

स० नकेवलधर्मइतिममभत । किंतु पुरस्य लङ्कास्थजनस्य सर्वराक्षसानाभ्रातुर्वैश्रवणस्यच मत' ॥ ९ ॥ ति० ध्रुवं चिरकाल ॥ स० बुद्धिमन्त धर्मबुद्धिमन्त ॥ १० ॥ ति० अहचेति । अनेनरावणवत्क्रूरबुद्धि कदापिनकार्या । तथासति सुग्रीवादयो रावणमिवत्वामपिनाशयिष्यन्तीतिव्यङ्ग्य ॥ ११ ॥ ति० अद्भुत जगदाश्चर्यभूतं । स्वयभोरिवानन्तकल्याणगुणस्यभगवतो ब्रह्मणइव ॥ स० माधुर्यं वाङ्माधुर्यमपितया ॥ १३ ॥ ति० नित्यदा सर्वकाले । स्नेहोनाम प्रियायाप्रियस्येवसदास्मृतिहेतुः । भक्तिर्नाम परलोकगतित्वेनोपास्यत्वबुद्धि । नित्यदेत्यनेन जलविनामत्स्यस्येवक्षणमपितविना जीवितुमशक्यत्वंसूचितं । अन्यत्र भावोमागच्छतु विषयान्तरइत्यर्थं ॥ १५ ॥ ति० तावद्वत्स्यन्ति त्वत्कथाश्रवणपरमामृतास्वादनबलादितिभाव । नतुतदुत्तरमित्याशय । वत्स्यन्त्वितिपाठे वसन्त्वित्यर्थं । आर्षं स्य । एतेनमुक्तिमप्यनादृत्यत्वत्कथामृतपानमेवाकाङ्क्षितमितिदर्शितं ॥ १६ ॥ ति० ते तवकथारूपयदेतद्दिव्यचरितंतदित्यन्वय. ॥ १७ ॥ ति० उत्कण्ठात्वद्दर्शनविषया । स० उत्कण्ठा कुतूहल । त्वद्दर्शनकुतूहलंत्वत्कथाश्रवणेनैवहरिष्यामि । एतेन त्वद्दर्शनापेक्षयात्वत्कथाश्रवणमेववर । तत्रमानसिकदर्शनस्यापिसिद्धत्वात् । अन्यत्रमाहात्म्यश्रवणस्याभावादितिभाव ॥ १८ ॥ ति० एवमेतदित्येवंशब्दार्थश्चरिष्यतिकथेत्यादि ॥ २० ॥ ति० एवं वद्धनूमते भगवताऽऽकारनित्यत्वंकल्पस्थायित्वरूपंदत्तमित्याभाति ॥ २१ ॥ ति० उपकाराणामध्येशेषस्येत्यर्थ । स० हे कपे हनुमन् । ते त्वत्कृतानामुपकाराणामध्ये एकैकस्योपकारस्य अहंप्राणान् ते तुभ्यं । दास्यामि । शेषस्यऋणिनोभवाम ॥ बहुवचनमद्वंशपरंपरयापिप्रत्युपकारोनैवभवतीतिसूचनाय ॥ २२ ॥ ति० प्रत्युपकाराणापात्रतानरआपत्स्वायातीत्यनेन प्रत्युपकारार्थेनउपकृतावापत्प्रार्थनाभवति । सामेकदापिमाभूदितिव्यङ्ग्यं ॥ स० कुतस्तथाप्रार्थनमित्यतआह—नरइति । नर. उपकारी ।

[ पा० ] १ क. ख. ङ—ञ. राक्षसानाचभ्रातुर्वैश्रवणस्यच. २ क. धर्मज्ञा खलुराजानो. ३ ख. रामत्वयिसत्यंप्रतिष्ठितं. ४ च. छ. स्थास्यन्ति. ङ. ज—ट. वत्स्यन्तु. ५ ङ. च झ ञ. ट कथाते. ६ ङ, झ. ञ, ट, रामश्रावयेयु . ७ घ—ट, स्थास्यन्तिमेकथा . ८ इदमर्धद्वयं. ङ, च. छ. झ. ञ. ट. पाठेषुदृश्यते.

ततोऽस्य हारं चन्द्राभं मुच्य कण्ठात्स राघवः ॥ वैडूर्यतरलं कण्ठे बबन्ध च हनूमतः ॥ २४ ॥
तेनोरसि निबद्धेन हारेण महता कपिः ॥ रराज हेमशैलेन्द्रश्चन्द्रेणाक्रान्तमस्तकः ॥ २५ ॥
श्रुत्वा तु राघवस्यैतदुत्थायोत्थाय वानराः ॥ प्रणम्य शिरसा पादौ निर्जग्मुस्ते महाबलाः ॥ २६ ॥
सुग्रीवः स च रामेण निरन्तरमुरोगतः ॥ विभीषणश्च धर्मात्मा सर्वे ते बाष्पविक्लबाः ॥ २७ ॥
सर्वे च ते बाष्पकलाः साश्रुनेत्रा विचेतसः ॥ संमूढा इव दुःखेन त्यजन्तो राघवं तदा ॥ २८ ॥
कृतप्रसादास्तेनैवं राघवेण महात्मना ॥ जग्मुः स्वं स्वं गृहं सर्वे देही देहमिव त्यजन् ॥ २९ ॥

ततस्तु ते राक्षसऋक्षवानराः प्रणम्य रामं रघुवंशवर्धनम् ॥
वियोगजाश्रुप्रतिपूर्णलोचनाः प्रतिप्रयातास्तु यथा निवासिनः ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

---

## एकचत्वारिंशः सर्गः ॥ ४१ ॥

रामेण कुबेरप्रतिप्रेषितेनपुष्पकविमानेन पुनरयोध्यामेत्यान्तरिक्षावस्थानेनाशरीरवाण्या स्वस्यतत्सेवनायकुबेरचोदनानिवेदनपूर्वक स्वपरिग्रहप्रार्थना ॥ १ ॥ रामेण पुष्पकस्य सबहुमानंकार्यकालेसंनिधानविधानेनेष्टदेशप्रतिप्रेषणम् ॥ २ ॥

विसृज्य च महाबाहुर्ऋक्षवानरराक्षसान् ॥ भ्रातृभिः सहितो रामः प्रमुमोद सुखं सुखी ॥ १ ॥
अथापराह्णसमये भ्रातृभिः सह राघवः ॥ शुश्राव मधुरां वाणीमन्तरिक्षात्प्रभाषिताम् ॥ २ ॥
सौम्य राम निरीक्षस्व सौम्येन वदनेन माम् ॥ कुबेरभवनात्प्राप्तं विद्धि मां पुष्पकं प्रभो ॥ ३ ॥

---

तरलो हारमध्यगो मणि. ॥२४॥ हेमशैलेन्द्रः मेरुः । चन्द्रेण चन्द्रकिरणैः । आक्रान्तमस्तकः आक्रान्तकर्णप्रदेश इत्यर्थः ॥ २५—२६ ॥ निरन्तरं उरोगत इति । गाढपरिष्वक्त इत्यर्थ. ॥ २७ ॥ विचेतसः वियोगखिन्नचेतस' ॥ २८ ॥ देह त्यजन् देहीव रामवियोगखिन्ना इत्यर्थ' । युद्धकाण्डान्ते वानरादीनां विसर्जनोक्तिः काण्डसमापनायात्रैव विसर्जनं तत्रोक्तमिति मन्तव्यम् ॥ २९—३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने चत्वारिंशः सर्गः ॥४०॥

---

प्रमुमोद सुखं सुखी । स्वतः सुखी रामः आश्रितदुःखनिवृत्त्या सुख प्रमुमोद । अविच्छिन्नप्रमोदमगमदित्यर्थः । अत्र प्रमुमोदेति दकारो गायत्र्यक्षरं ॥ १ ॥ अन्तरिक्षात्प्रभाषितां अन्तरिक्षगतेनोक्तां । पुष्पकाभिमानिदेवतयोक्तामित्यर्थः । अन्तरिक्षाद्विनि-

---

आपत्सु आपत्कालएव पात्रता । आयाति प्राप्नोति । यतोतइत्यर्थ ॥ २३ ॥ **ति०** हेमशैलेन्द्रोमेरु चन्द्रेणाक्रान्तमस्तक तादृशः पर्वतोयथा आमूलशिखरतत्किरणैर्व्याप्तोभवति तथा हनूमास्तद्रत्नकिरणव्याप्तोजातइत्यर्थ ॥ २४ ॥ **ति०** बाष्पकलाः कण्ठस्थबाष्परुद्धत्वेनाव्यक्तभाषिण । ततएव दु खातिशयेनसाश्रुनेत्रा. । विचेतस शून्यमनस । अत समूढाइवमूर्च्छिताइवबभूवुरितिशेष ॥ २८ ॥ **ति०** देहंत्यजन्देहीव रामवियोगखिन्नाअभूवन्नितिशेष ॥ शरीरात्माभिमानिनादेहत्यागेनेव । तेषारामविश्लेषणखेदोऽभूदित्यर्थ ॥ २९ ॥ इतिचत्वारिंश सर्ग ॥ ४० ॥

**स०** विसृज्य ग्रामप्रत्याज्ञादत्वा ॥ **शि०** ऋक्षादीन्विसृज्यप्रमुमोद ऋक्षादय स्वस्वगृहेस्वस्वदाराद्यवाप्त्यासुखंभोक्ष्यन्तइति बुध्याप्रमोदप्रापेत्यर्थ । एतेन रामस्यभक्तसुखसुखित्वव्यक्त ॥ १ ॥ **ति०** अन्तरिक्षात् अन्तरिक्षचरान्निस्सृतामित्यर्थ ॥ २ ॥ **ति०** पुष्पकंविद्धि पुष्पकाधिष्ठातृदेवतायाअयंवाद ॥ **स०** सौम्येनवदनेन अक्रूरताप्रदर्शकेन ॥ **शि०** सौम्येनवदनेन उपलक्षितस्त्वमानिरीक्षस्व ॥ ३ ॥

[ पा० ] १ क—घ हेमशैलेवचन्द्रेणा च छ. काञ्चन शैलश्चन्द्रेणा. २ क. ख. च. छ. ज. रामेणपरिष्वक्तोमहाबलः. ३ ङ. झ. ञ. ट. मन्तरिक्षान्महाप्रभु . च. छ. मन्तरिक्षगताप्रभु . ४ क—घ. ज. कैलासशिखरात्प्राप्तं.

तव शासनमाज्ञाय गतोस्मि भवनं प्रति ॥ उपस्थातुं नरश्रेष्ठ स च मां प्रत्यभाषत ॥ ४ ॥
निर्जितस्त्वं नरेन्द्रेण राघवेण महात्मना ॥ निहत्य युधि दुर्धर्षं रावणं राक्षसेश्वरम् ॥ ५ ॥
ममापि परमा प्रीतिर्हते तस्मिन्दुरात्मनि ॥ रावणे सगणे चैव सपुत्रे सहबान्धवे ॥ ६ ॥
स त्वं रामेण लङ्कायां निर्जितः परमात्मना ॥ वह सौम्य तमेव त्वमहमाज्ञापयामि ते ॥ ७ ॥
परमो ह्येष मे कामो यत्त्वं राघवनन्दनम् ॥ वहेर्लोकस्य संयानं गच्छस्व विगतज्वरः ॥ ८ ॥
सोहं शासनमाज्ञाय धनदस्य महात्मनः ॥ त्वत्सकाशमनुप्राप्तो निर्विशङ्कः प्रतीक्ष माम् ॥ ९ ॥
अदृश्यः सर्वभूतानां सर्वेषां धनदाज्ञया ॥ चराम्यहं प्रभावेण तवाज्ञां परिपालयन् ॥ १० ॥
एवमुक्तस्तदा रामः पुष्पकेण महाबलः ॥ उवाच पुष्पकं दृष्ट्वा विमानं पुनरागतम् ॥ ११ ॥
यद्येवं स्वागतं तेऽस्तु विमानवर पुष्पक ॥ आनुकूल्याद्धनेशस्य वृत्तदोषो न नो भवेत् ॥ १२ ॥
लाजैश्चैव तथा पुष्पैर्धूपैश्चैव सुगन्धिभिः ॥ पूजयित्वा महाबाहू राघवः पुष्पकं तदा ॥ १३ ॥
गम्यतामिति चोवाच आगच्छ त्वं स्मरे यदा ॥ सिद्धानां च गतौ सौम्य मा विषादेन योजय ॥
प्रतिघातश्च ते मा भूद्यथेष्टं गच्छतो दिशः ॥ १४ ॥
एवमस्त्विति रामेण पूजयित्वा विसर्जितम् ॥ अभिप्रेतां दिशं तस्मात्प्रायात्तत्पुष्पकं तदा ॥ १५ ॥
एवमन्तर्हिते तस्मिन्पुष्पके सुकृतात्मनि ॥ भरतः प्राञ्जलिर्वाक्यमुवाच रघुनन्दनम् ॥ १६ ॥
विविधात्मनि दृश्यन्ते त्वयि वीर प्रशासति ॥ अमानुषाणां सत्त्वानां व्याहृतानि मुहुर्मुहुः ॥१७॥
अनामयश्च सत्त्वानां साग्रो मासो गतो ह्ययम् ॥ जीर्णानामपि सत्त्वानां मृत्युर्नायाति राघव ॥१८॥

---

स्मृतामिति चपाठ. ॥ २—७ ॥ लोकस्य संयानमिति । लोकसचरणमित्यर्थः ॥ ८—१३ ॥ स्मरे स्मरामि । सिद्धानां च गतौ आकाशमार्गे । आत्मान विषादेन अस्मद्वियोगदुःखेन मा योजय । विमुक्तगत्या गतदुःखः सुप्रतिष्ठितः सुखमास्स्वेत्यर्थ. । सिद्धानां गतौ मा मां अविषादेन अश्रमेण योजय प्रापयेति वार्थः ॥ १४—१६ ॥ विविधात्मनि नानारूपे । चित्र इत्यर्थ. । अमानुषाणां सत्त्वानां पुष्पकादीनामित्यर्थ. ॥ १७ ॥ साग्रो मासो गत इति । अभिषेकानन्तरं साग्रो मासो गतः । तावन्मात्रेणानामयादिगुणप्रादुर्भाव इत्याश्चर्यमित्यर्थः । अनेन पुष्पकागमनं मासाभ्यन्तर एव तत्कालवृत्तान्तः भरतेन निदर्शित इत्यवगम्यते । पुनः फाल्गुनमास-

---

**स०** सचकुबेर ॥ **शि०** उपस्थातुं त्वत्समीपेनिवसितुं ॥४॥ **ति०** निर्जित अतस्तमेववहेतिशेष ॥ **स०** निर्जित रावणंहत्वा स्ववशीकृत ॥५॥ **स०** सहबान्धवे भ्रात्रादिबान्धवसहिते। सगणे सभृत्यादौ ॥६॥ **स०** ममवहनादपिपरमात्मवहनात्परमाप्रीतिर्ममेत्याह—परमइति ॥ लोकस्यसयान अश्रमेणनानास्थानगमनसाधन त्व राघवनन्दनवहेरितियदेषमेपरमोमहान्काम विगत. ज्वर । मन्मनोवैपरीत्यशङ्कारहित सन् गच्छस्व गच्छ । हेस्व भृत्य गच्छेतिवा ॥ ८ ॥ **स०** वृत्तदोष सदाचारभङ्गरूप. ॥ १२ ॥ **शि०** गतौ स्वगमने । सिद्धाना गगनस्थसिद्धान् । विषादेनमायोजयस्व स्वगमनेनसिद्धान् नपीडयेत्यर्थ ॥ अतएव यथेच्छदिशोगच्छतस्तेप्रतिघात शापेनविघातोमाभूत् ॥ १४ ॥ **स०** विसर्जितं आज्ञप्त ॥ तत्पुष्पक पुष्पमिवलघु । सञ्ज्ञायाकन् ॥ १५ ॥ **स०** विबुधात्मनि देवस्वरूपे । अमानुषाणिसत्वानि पुष्पकाद्यभिमानिदेवा । अमानुपाणि व्याहृतानि अशरीरगिर. । दृश्यन्तेश्रूयन्तेच ॥ **शि०** भरतवचनाकारमाह—विबुधेत्यादिभि । विबुधानादेवानामपिआत्मनि नियन्तरित्वयिप्रशासतिसति अमानुषाण्यपिसत्त्वानि मुहुर्मुहुर्व्याहृतानि मनुष्यवदाभाषमाणानिदृश्यन्ते । एतेनरामप्रभावस्याघटितघटनापटीयस्त्वसूचित ॥ **ति०** कानिदृश्यन्तेतदाह—अमानुपाणीति । सत्वानि पुष्पकादीनि। व्याहृतानि मत्वर्थीयाजन्त । व्याहारवन्ति । साग्रोमासइति जातावेकवचन । मासाइत्यर्थ ॥ १७ ॥ **स०** वृद्धाना जीर्णाना ॥ १८ ॥

[ **पा०** ] १ ख. ग. घ. च. छ ज. धनदंप्रति. क. धनदालयं २ क—घ. च. छ. झ. अत्यद्भुतानिदृश्यन्ते. ३ क—ड. झ. ञ. अमानुषाणिसत्वानि. ४ क. झ—ट. मर्त्यांना. ५ ठ वृद्धानामपि.

अरोगप्रसवा नार्यो वपुष्मन्तो हि मानवाः ॥ हर्षश्चाभ्यधिको राजञ्जनस्य पुरवासिनः ॥ १९ ॥
काले वर्षति पर्जन्यः पातयन्नमृतं पयः ॥ वाताश्चापि प्रवान्त्येते स्पर्शयुक्ताः सुखाः शिवाः ॥२०॥
ईदृशोऽनश्वरो राजा भवेदिति नरेश्वरः ॥ कथयन्ति पुरे राजन्पौरजानपदास्तथा ॥ २१ ॥
एता वाचः सुमधुरा भरतेन समीरिताः ॥ श्रुत्वा रामो मुदा युक्तो बभूव नृपसत्तमः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

## द्विचत्वारिंशः सर्गः ॥ ४२ ॥

कदाचनसीतयासहक्रीडावनंगतेनरामेण तांप्रति गर्भिणीत्वादीप्सितदौर्हृदनिवेदनचोदने तयातंप्रति पुनरेकवारंगङ्गातीरवर्तिमुन्याश्रमदिदृक्षानिवेदने रामेण तांप्रति तत्करणप्रतिज्ञानम् ॥ १ ॥

स विसृज्य ततो रामः पुष्पकं हेमभूषितम् ॥ प्रविवेश महाबाहुरशोकवनिकां तदा ॥ १ ॥
चन्दनागरुचूतैश्च तुङ्गकालेयकैरपि ॥ देवदारुवनैश्चापि समन्तादुपशोभिताम् ॥ २ ॥
चम्पकाशोकपुन्नागमधूकपनसासनैः ॥ शोभितां पारिजातैश्च विधूमज्वलनप्रभैः ॥ ३ ॥
लोध्रनीपार्जुननागैः सप्तपर्णातिमुक्तकैः ॥ मन्दारकदलीगुल्मलताजालसमावृताम् ॥ ४ ॥
प्रियङ्गुभिः कदम्बैश्च तथा च बकुलैरपि ॥ जम्बूभिर्दाडिमैश्चैव कोविदारैश्च शोभिताम् ॥ ५ ॥
[ बिल्वैरामलकैश्चैव तमालकुटजार्जुनैः ॥ मल्लिकाजाजिकुन्दैश्च पारिभद्रैश्च शोभिताम् ॥ ६ ॥ ]
सर्वदाकुसुमै रम्यैः फलवद्भिर्मनोरमैः ॥ दिव्यगन्धरसोपेतैस्तरुणाङ्कुरपल्लवैः ॥ ७ ॥
तथैव तरुभिर्दिव्यैः शिल्पिभिः परिकल्पितैः ॥ चारुपल्लवपुष्पाढ्यैर्मत्तभ्रमरसंकुलैः ॥ ८ ॥
कोकिलैर्भृङ्गराजैश्च नानावर्णैश्च पक्षिभिः ॥ शोभितां शतशश्चित्रां चूतवृक्षावतंसकैः ॥ ९ ॥
शातकुम्भनिभाः केचित्केचिदग्निशिखोपमाः ॥ नीलाञ्जननिभाश्चान्ये भान्ति तत्रत्यपादपाः ॥१०॥
सुरभीणि च पुष्पाणि माल्यानि विविधानि च ॥ ११ ॥
दीर्घिका विविधाकाराः पूर्णाः परमवारिणा ॥ माणिक्यवृतसोपानाः स्फटिकान्तरकुट्टिमाः ॥१२॥

---

प्राप्तेः पूर्वमुक्तत्वात् ॥ १८ ॥ वपुष्मन्त. हृष्टपुष्टवपुर्युक्ताः। सुखी सुखमिति वक्ष्यमाणसर्गकथानुवादसंग्रहः ॥ १९—२२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

अशोकवनिकां अन्तःपुरगतं लीलोद्यानं ॥ १ ॥ तुङ्गः पुन्नागविशेषः। कालेयो रक्तचन्दनवृक्षः ॥ २—७ ॥ दिव्यैः शिल्पिभिरिति । ऋतुभिरित्यर्थः। दोहलकादिभिर्वा ॥ ८ ॥ चूतवृक्षावतंसकैः चूतवृक्षाग्रस्थैरित्यर्थः ॥ ९—११ ॥ स्फाटिकान्तरकुट्टिमाः स्फटिकमयसोपानप्रान्तस्नानार्हाः निबद्धभूमयः ।

---

अरोगप्रसवा सुखप्रसवा । वपुष्मन्तोरूपिण्य ॥ १९ ॥ स० अमृतं तत्समं ॥ २० ॥ स० स्पर्शयुक्ता युक्तस्पर्शा । सुखा. सुखदा । शिवा मङ्गलरूपा । न ईदृशोराजा चिरमभवेदितिपौरा पुरे । जानपदा देशेच ॥२१॥ इत्येकचत्वारिंश सर्ग ॥४१॥

ति० सर्वदाकुसुमै नित्यंकुसुमयुक्तै । दिव्यगन्धरसोपेतै दिव्यगन्धरसपुष्पफलयुतै ॥ ६ ॥ ति० दिव्यै शिल्पिभि वृक्षारोपणादिशिल्पवद्भि ॥ ८ ॥ ति० चूतवृक्षपुष्परज अवतंसभूतंयेषातै.पक्षिभि ॥ ९ ॥ ति० माल्यानि पुष्पगुच्छा ॥

[ पा० ] १ क—घ ज. पुत्रान्नार्य प्रसूयन्ते. २ क वसुमन्तश्चमानवा.. ३ क—घ. ज युक्तःप्रमुमोदसुखीसुखं. ४ ङ. च. छ. झ. ञ. ट. चंपकागरुपुन्नाग. ५ क—घ जबूभि पाटलीभिश्च ६ ख. कोविदारकपित्थकै.. ७ अयंश्लोक. ख. पाठेदृश्यते. ८ क. ख. ग. ज. महार्हमणिसोपाना.. घ. महार्घमणिसोपानास्तीरपुष्पोपशोभिता .

फुल्लपद्मोत्पलवनाश्चक्रवाकोपशोभिताः ॥ दात्यूहशुकसंघुष्टा हंससारसनादिताः ॥ १३ ॥
तरुभिः पुष्पवद्भिश्च तीरजैरुपशोभिताः ॥ प्राकारैर्विविधाकारैः शोभिताश्च शिलातलैः ॥ १४ ॥
तत्रैव च वनोद्देशे वैडूर्यमणिसन्निभैः ॥ शाद्वलैः परमोपेतां पुष्पितद्रुमकाननाम् ॥ १५ ॥
तत्र संघर्षजातानां वृक्षाणां पुष्पशालिनाम् ॥ प्रस्तराः पुष्पशबला नभस्तारागणैरिव ॥ १६ ॥
नन्दनं हि यथेन्द्रस्य ब्राह्मं चैत्ररथं यथा ॥ तथाभूतं हि रामस्य काननं सन्निवेशनम् ॥ १७ ॥
[ नीलवैदूर्यवर्णाश्च पद्मिन्यो बहुविस्तराः ॥ हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः] ॥ १८ ॥
बह्वासनगृहोपेतां लतागृहसमावृताम् ॥ अशोकवनिकां स्फीतां प्रविश्य रघुनन्दनः ॥ १९ ॥
आसने च शुभाकारे पुष्पप्रकरभूषिते ॥ कुथास्तरणसंवीते रामः सन्निषसाद ह ॥ २० ॥
सीतामादाय हस्तेन मधु मैरेयकं शुचि ॥ पाययामास काकुत्स्थः शचीमिव पुरन्दरः ॥ २१ ॥
मांसानि च समृष्टानि फलानि विविधानि च ॥ रामस्याभ्यवहारार्थं किंकरास्तूर्णमाहरन् ॥ २२ ॥
उपानृत्यंश्च राजानं नृत्तगीतविशारदाः ॥ बालाश्च रूपवत्यश्च स्त्रियः पानवशानुगाः ॥ २३ ॥
[ अप्सरोगणसङ्घाश्च किन्नरीपरिवारिताः ॥ दक्षिणा रूपवत्यश्च स्त्रियः पानवशं गताः ॥
उपानृत्यन्त काकुत्स्थं नृत्तगीतविशारदाः ॥ २४ ॥]
मनोभिरामा रामास्ता रामो रमयतांवरः ॥ रमयामास धर्मात्मा नित्यं परमभूषितः ॥ २५ ॥
स तया सीतया सार्धमासीनो विरराज ह ॥ अरुन्धत्या सहासीनो वसिष्ठ इव तेजसा ॥ २६ ॥
एवं रामो मुदा युक्तः सीतां सुरसुतोपमाम् ॥ रमयामास वैदेहीमहन्यहनि देववत् ॥ २७ ॥
[११]तथा तयोर्विहरतोः सीताराघवयोश्चिरम् ॥ अत्यक्रामच्छुभः कालः [१२]शिशिरो भोगदः सदा ॥२८॥

अन्यथा सर्वत्रान्तरे स्फटिककुट्टिमत्वे पद्माद्युत्पत्तिविरोधात् ॥ १२—१४ ॥ परमोपेतां अत्यन्तसयुक्तां ॥ १५ ॥ संघर्षजातानां स्पर्धयैव जातानां । जालपुष्पाणामित्यर्थः । प्रस्तराः वृक्षमूलेषु शयनार्थं स्थापिताः श्लक्ष्णशिलाः ॥ १६ ॥ ब्राह्मं ब्रह्मनिर्मितं । सन्निवेशनं समीचीनसंस्थानोपेतं ॥ १७—१८ ॥ बह्वासनगृहोपेतां । अनेकावस्थानयोग्यगृहोपेतामित्यर्थः । लतागृहसमावृतां लतामयगृहसमावृतां ॥ १९ ॥ कुथास्तरणसंवीते उपर्यास्तरणावृते ॥ २० ॥ मैरेयकं धातकीगुडमिश्रवारिभिः कृतं मद्य । "मैरेयमासवे धात्रीधातकीगुडवारिभिः" इति वैजयन्ती ॥ २१—२२ ॥ उपानृत्यन्निति । उपनृत्यन्तीति वा पाठः । राजानमिति । राजानमुप राज्ञः समीपे । पानवशं पानजमदवशं ॥ २३—२७ ॥ शिशिरः शुभोत्यक्रामदिति । पुनश्च संवत्सरोतीत इत्यर्थः । वानरादिसुहृत्संल्लापादिना क्रीडावसराभावात्तैः सह एकसंवत्सरो गतः । तद्विसर्जनानन्तरं क्रीडया पुनरेकः संवत्सरो गतः । तथा

शि० माल्यानि मालाभ्योहितानिपुष्पाणि । सन्तीतिशेष ॥ ११ ॥ स० शाद्वलै करणै परमोपेतां बहुसपदुपेता ॥ १५ ॥ स० ब्राह्म चैत्ररथं तपोलब्धकुबेरवनं । सनिवेशनं समीचीनस्थानोपेतं सतावसिष्ठादीनाजपार्थनिवेशनोपेतंवा ॥ १७ ॥ बह्वासनगृहोपेता बहुभिरासनैर्गृहैश्चोपेता । लतासनसमावृता तदन्तर्गतासनोपेता ॥ १९ ॥ स० कुशास्तरणं कुशवज्जलवन्निर्मलं मृदुचास्तरणं उपरितनवस्त्रं । तेनसस्तीर्णे आस्तीर्णे ॥ २० ॥ ति० दक्षिणा कुशला । पानवशंगता. पानजमदवशगता. । शि० दक्षिणा दक्षिणदेशोद्भवा स्त्रिय ॥ २४ ॥ शि० रमयामास परस्परविहर्तुंप्रेरयामास । स० रमयामास वसनभूषणादिभिस्तोषयामास ॥ २५ ॥ ति० सीताराघवयोश्चिरमित्यनन्तर 'अत्यक्रामच्छुभ काल.शैशिरोभोगद सदा' इत्येवश्लोक. । वानराणागमनोत्तरपुनश्चसवत्सरोतीतइतिकतकव्याख्यानात् ॥ २८ ॥

[ पा० ] १ क. ख ज. नत्यूह २ क—ट. पुष्पशबलैस्तीरजै. ३ क. ख. घ. ज. द्रुमसंयुता. ४ च. छ. वनचैत्ररथं. ५ अयंश्लोक. क. ग. पाठयोर्दृश्यते. ६ झ. लतासनसमावृतां. ७ ग. पुष्पस्तबकभूषिते. क. ख. घ. ज पुष्पस्तबकशोभिते. ८ ङ—ट. कुशास्तरणसस्तीर्णे. ९ क—घ. ज. सीतासगृह्यबाहुभ्यां. १० अयंसार्धश्लोक ङ. च. छ. झ. ञ. ट. पाठेषुदृश्यते. ११ क—घ. ज. तथातुरममाणस्यतस्यैवंशैशिर.शुभ. । अत्यकामन्नरेन्द्रस्यराघवस्यमहात्मन.. १२ ङ. झ. ञ. ठ. शैशिरे.

दश वर्षसहस्राणि गतानि सुमहात्मनोः ॥ प्राप्तयोर्विविधान्भोगानतीतः शिशिरागमः ॥ २९ ॥
पूर्वाह्णे धर्मकार्याणि कृत्वा धर्मेण धर्मवित् ॥ शेषं दिवसभागार्धमन्तःपुरगतोऽभवत् ॥ ३० ॥
सीताऽपि देवकार्याणि कृत्वा पौर्वाह्णिकानि वै ॥ श्वश्रूणामकरोत्पूजां सर्वासामविशेषतः ॥ ३१ ॥
अभ्यगच्छत्ततो रामं विचित्राभरणाम्बरा ॥ त्रिविष्टपे सहस्राक्षमुपविष्टं यथा शची ॥ ३२ ॥
दृष्ट्वा तु राघवः पत्नीं कल्याणेन समन्विताम् ॥ प्रहर्षमतुलं लेभे साधुसाध्विति चाब्रवीत् ॥
अब्रवीच्च वरारोहां सीतां सुरसुतोपमाम् ॥ ३३ ॥
अपत्यलाभो वैदेहि त्वयि मे समुपस्थितः ॥ किमिच्छसि वरारोहे कामः किं क्रियतां तव ॥ ३४ ॥
स्मितं कृत्वा तु वैदेही रामं वाक्यमथाब्रवीत् ॥ तपोवनानि पुण्यानि द्रष्टुमिच्छामि राघव ॥ ३५ ॥
गङ्गातीरोपविष्टानामृषीणामुग्रतेजसाम् ॥ फलमूलाशिनां देव पादमूलेषु वर्तितुम् ॥ ३६ ॥
एष मे परमः कामो यन्मूलफलभोजिनाम् ॥ अप्येकरात्रं काकुत्स्थ निवसेयं तपोवने ॥ ३७ ॥
तथेति च प्रतिज्ञातं रामेणाक्लिष्टकर्मणा ॥ विस्रब्धा भव वैदेहि श्वो गमिष्यस्यसंशयम् ॥ ३८ ॥
एवमुक्त्वा तु काकुत्स्थो मैथिलीं जनकात्मजाम् ॥ मध्यकक्ष्यान्तरं रामो निर्जगाम सुहृद्वृतः ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

चाभिषेकानन्तरं वर्षद्वयं जातं ॥ २८—२९ ॥ शेष दिवसभागार्धं अपराह्ण इत्यर्थः ॥ ३०—३३ ॥ अपत्येति । ममायमपत्यलाभस्त्वयि समुपस्थितः । तव गर्भलक्षणं दृश्यत इत्यर्थः ॥ ३४—३७ ॥ विस्रब्धा भव । महाराजो महिर्षीं मां कथमाश्रमं प्रति नेष्यतीति शङ्कां मा कुर्वित्यर्थः ॥ ३८—३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

ति० 'दशवर्षसहस्राणिगतानिसुमहात्मनो' इतिप्रक्षिप्तमितिगम्यते । 'मानिषादप्रतिष्ठात्वमगम शाश्वती समा' इतिवाल्मीकिशापाच्च सीतात्यागोत्तरमश्वमेधप्रवृत्त्यातदन्ते 'दशवर्षसहस्राणिवाजिमेधानथाकरोत्' इतिवाल्मीक्युक्तेश्च ॥ यद्वा वर्षशब्दोदिनपर । विवाहोत्तरतावन्तिगतानि । द्वादशादधिकमयोध्याया । चतुर्दशवने । एकंपुनरयोध्यायामित्येवकिञ्चिदधिकसप्तविंशतिर्गतानीतिबोध्यं । पूर्वाह्णेद्विधाभागेनेदं । तदाह—'शेषंदिवसभागार्धमिति । अवशिष्टमर्धमित्यर्थ ॥ शि० शिशिरेआगम' अत्यन्तप्राप्तिर्यस्यसभोग यदाऽतीत तदा विविधान्भोगान्प्राप्तयो सीतारामयो दशवर्षसहस्राणि त्रिंशद्वर्षसहस्राणीत्यर्थ. । गतानि । एतेन सहस्रत्रयवर्षाणियज्ञार्थमवशिष्टानीतिफलितं ॥ 'त्रयोदशाब्दसाहस्रमितिभागवतेनतुनविरोध । तत्रत्रयोदशपरिमितवर्षाणिअब्दसहस्रचेत्यर्थ । न्यूनतादोषस्तु न तत्रदीक्षाग्रहणावधिकयागसमाप्तिकालपरिमाणबोधनस्यैवविवक्षितत्वात् । अत्रतुसामग्रीसपादनादिकालपरिमाणबोधकत्वमितिदिक् ॥ २९ ॥ स० अविशेषतइत्यनेन सीतायाअमात्सर्यंद्योतयति ॥ ३१ ॥ ति० किकाम किविषयोमनोरथ ॥ स० हेवरारोहे किमिच्छसि । तवकिंक्रियता । यत्रतवस्पृहातत्रैवममस्पृहाचेन्मोघाममयाचनेत्यत स्वस्थितिमाह—अकामइति । अहमकाम' अविषयेच्छ ॥ ३४ ॥ ति० स्मितंकृत्वा स्वावतारकृत्यपूर्णमिति ब्राह्मणशापस्यसत्यत्वकरणौचित्यंचहासेनसूचितं ॥ ३५ ॥ स० फलमूलाशिना वृक्षसबन्धिफलमूलभोजिना ॥ ३६ ॥ स० मूलफलभोजिना मूलफलमोक्षः तत्सुखभोजिना ॥ ति० अप्येकरात्रमित्यनेनचिरकालवासमनोरथोध्वनित ॥ ३७ ॥ इति द्विचत्वारिंश'सर्ग ॥ ४२ ॥

[ पा० ] १ ख. ग. ज. पौरकृत्यानिकृत्वा क. पौरकार्याणि २ ङ. झ. ञ. त्वय्ययंसमुपस्थित . क. ग. ज. ममायंसमुपस्थित ख. मामयंसमुपस्थित घ. ममायंत्वय्युपस्थित . ३ क—घ. ज. किमिच्छसिहितद्ब्रूहिकिंकर्तव्यंमयातव. ४ क—घ. ज. प्रहसन्तीतुवैदेहीरामं.

# त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

कदाचनरामेण सभायां कथाप्रसङ्गेनचारंप्रति पौरेषुस्वविषयकशुभाशुभवार्तानिवेदनचोदने भीतभीतेनतेन रावणापहृत-सीतापुनरानयनप्रकारकपौरजनकुत्सननिवेदनम् ॥ १ ॥

तत्रोपविष्टं राजानमुपासन्ते विचक्षणाः ॥ कथानां बहुरूपाणां हास्यकाराः समन्ततः ॥ १ ॥
विजयो मधुमत्तश्च काश्यपः पिङ्गलः कुटः ॥ सुराजः कालियो भद्रो दन्तवक्रः सुमागधः ॥ २ ॥
एते कथा बहुविधाः परिहाससमन्विताः ॥ कथयन्ति स्म संहृष्टा राघवस्य महात्मनः ॥ ३ ॥
ततः कथायां कस्यांचिद्राघवः समभाषत ॥ काः कथा नगरे भद्र वर्तन्ते विषयेषु च ॥ ४ ॥
मामाश्रितानि कान्याहुः पौरजानपदा जनाः ॥ किंच सीतां समाश्रित्य भरतं किंच लक्ष्मणम् ॥५॥
किंनु शत्रुघ्नमुद्दिश्य कैकेयीं किंनु मातरम् ॥ वक्तव्यतां च राजानो वैरे राज्ये व्रजन्ति च ॥ ६ ॥
एवमुक्ते तु रामेण भद्रः प्राञ्जलिरब्रवीत् ॥ स्थिताः कथाः शुभा राजन्वर्तन्ते पुरवासिनाम् ॥ ७ ॥
अमुं तु विजयं सौम्य दशग्रीववधार्जितम् ॥ भूयिष्ठं स्वपुरे पौरैः कथ्यन्ते पुरुषर्षभ ॥ ८ ॥
एवमुक्तस्तु भद्रेण राघवो वाक्यमब्रवीत् ॥ कथयस्व यथातत्त्वं सर्वं निरवशेषतः ॥ ९ ॥
शुभाशुभानि वाक्यानि यान्याहुः पुरवासिनः ॥ श्रुत्वेदानीं शुभं कुर्यां न कुर्यामशुभानि च ॥१०॥
कथयस्व च विस्रब्धो निर्भयं विगतज्वरः ॥ कथयन्ति यथा पौराः पापा जनपदेषु च ॥ ११ ॥
राघवेणैवमुक्तस्तु भद्रः सुरुचिरं वचः ॥ प्रत्युवाच महाबाहुं प्राञ्जलिः सुसमाहितः ॥ १२ ॥
शृणु राजन्यथा पौराः कथयन्ति शुभाशुभम् ॥ चत्वरापणरथ्यासु वनेषूपवनेषु च ॥ १३ ॥
दुष्करं कृतवान्रामः समुद्रे सेतुबन्धनम् ॥ अश्रुतं पूर्वकैः कैश्चिद्देवैरपि सदानवैः ॥ १४ ॥
रावणश्च दुराधर्षो हतः सबलवाहनः ॥ वानराश्च वशं नीता ऋक्षाश्च सह राक्षसैः ॥ १५ ॥
हत्वा च रावणं सङ्ख्ये सीतामाहृत्य राघवः ॥ अमर्षं पृष्ठतः कृत्वा स्ववेश्म पुनरानयत् ॥ १६ ॥

विषयेषु देशेषु ॥ ४—५ ॥ वक्तव्यतां च राजानो नवे राज्ये व्रजन्ति हीति च पाठः । नवे राज्ये सति राजानो वक्तव्यतां सम्यगसम्यग्वा कीर्तनीयतां व्रजन्ति हि ॥ ६—१५ ॥ सीतामाहृत्य तदनन्तर-

स० उपासन्ते उपासते । धात्वन्तरस्येदंरूपंवा ॥ १ ॥ स० कथाः अतीतवार्ताः ॥ ३ ॥ ति० विषयेषुदेशेष्वितिसामान्यतःप्रश्नः ॥ स० भद्रेत्येकमप्रथमंप्रत्युक्तिर्वार्तावित्तयेतस्यैवप्रस्थापनात् ॥ ४ ॥ ति० विशिष्यपृच्छति । मामाश्रितानिंकानि वाक्यान्याहुः ॥ ५ ॥ ति० दूतमुखेनस्वदेशवृत्तान्ताज्ञानेराजानःसर्वजननिन्दाद्वारानरकंप्राप्नुवन्तीत्याशयेनाह—वक्तव्यतांचेति । वने तापसाश्रमे । राज्येच धर्मादिविचारहीनाराजानोवक्तव्यतां सर्वजनकृतदुर्भाषणविषयतां । व्रजन्ति ॥ स० सर्वज्ञोप्यज्ञवद्भृगुमुखतापसशापंतद्वययायथार्थंचिकीर्षुःसीतावियोगंलोकरीत्येच्छन्नेवजनपदजनपुरजनवृत्तान्तंपृच्छतिरामइतिभावः ॥ ति० गृहीतमनुष्यरूपतयाव्यवहारानुसारेणलोकनिन्द्यंसदपिकर्मत्याज्यमितिबोधनायपृच्छतीतिबोध्यं ॥ ६ ॥ ति० विजयमिति । उद्दिश्येतिशेषः । कथ्यन्ते वार्ता इतिशेषः ॥ ८ ॥ स० निरवशेषतः दाक्षिण्यत्यागेनेतिभावः ॥ ९ ॥ स० शुभं पराविरोधि । अशुभानि पराहितानि ॥ शि० श्रुत्वा शुभं तत्संमतकार्यमित्यर्थः ॥ ति० नन्वशुभश्रवणेकिंप्रयोजनंतत्राह—शुभेत्यादि ॥१०॥ ति० ननुराजसमक्षमशुभवाक्यकथनमशक्यमित्यतआह—कथयस्वेति । निर्भयंविस्रब्धः ममकिंरामोवदिष्यतीतिभयशून्यं विश्वस्तः । विगतज्वरःएवमशुभंकथंवाच्यमितिमनस्संतापशून्यः । पापाः पापानि ॥ ११ ॥ स० शुभाशुभं 'सर्वोद्वन्द्वः—' इत्येकवद्भावउत्तरपदलोपीवासमासः ॥१३॥ स० दुष्करं इतरासाध्यं ॥ ति० पूर्वकैः राजभिर्देवैरपिकृतमित्यश्रुतं अश्रुतपूर्वं ॥१४॥ ति० पृष्ठतःकृत्वा विस्मृत्येत्यर्थः ॥ स० अमर्षं परपुरुषसंस्पर्शजं पृष्ठतःकृत्वा अलक्षीकृत्य । ललनालौल्युप्यादितिभावः ॥ १६ ॥

[ पा० ] १ झ. वने. २ ङ. झ. कान्याहुः.

कीदृशं हृदये तस्य सीतासंभोगजं सुखम् ॥ अङ्कमारोप्य तु पुरा रावणेन बलाद्धृताम् ॥ १७ ॥
लङ्कामपि पुरा नीतामशोकवनिकां गताम् ॥ रक्षसां वशमापन्नां कथं रामो न कुत्सते ॥ १८ ॥
अस्माकमपि दारेषु सहनीयं भविष्यति ॥ यथा हि कुरुते राजा प्रजा तमनुवर्तते ॥ १९ ॥
एवं बहुविधा वाचो वदन्ति पुरवासिनः ॥ नगरेषु च सर्वेषु राजञ्जनपदेषु च ॥ २० ॥
तस्यैवं भाषितं श्रुत्वा राघवः परमार्तवत् ॥ उवाच सुहृदः सर्वान्कथमेतद्ब्रवीथ माम् ॥ २१ ॥
सर्वे तु शिरसा भूमावभिवाद्य प्रणम्य च ॥ प्रत्यूचू राघवं दीनमेवमेतन्न संशयः ॥ २२ ॥
श्रुत्वा तु वाक्यं काकुत्स्थः सर्वेषां समुदीरितम् ॥ विसर्जयामास तदा वयस्याञ्छत्रुसूदनः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

## चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

रामेण सभायां सर्वजनविसर्जनपूर्वक भ्रातृषुपौरापवादनिवेदनेच्छया दूतप्रति तदानयनचोदना ॥ १ ॥ दूताहूतैर्लक्ष्मणादिभि॰ सत्वररामसमीपमेत्य तन्मुखवैवर्ण्यनिर्वर्णनेनविषण्णतया सप्रणाममुपवेशनम् ॥ २ ॥

विसृज्य तु सुहृद्वर्गं बुद्ध्या निश्चित्य राघवः ॥ समीपे द्वाःस्थमासीनमिदं वचनमब्रवीत् ॥ १ ॥
शीघ्रमानय सौमित्रिं लक्ष्मणं शुभलक्षणम् ॥ भरतं च महाभागं शत्रुघ्नमपराजितम् ॥ २ ॥
रामस्य वचनं श्रुत्वा द्वाःस्थो मूर्ध्नि कृताञ्जलिः ॥ लक्ष्मणस्य गृहं गत्वा प्रविवेशानिवारितः ॥ ३ ॥
उवाच सुमहात्मानं वर्धयित्वा कृताञ्जलिः ॥ द्रष्टुमिच्छति राजा त्वां गम्यतां तत्र मा चिरम् ॥ ४ ॥
बाढमित्येव सौमित्रिः श्रुत्वा राघवशासनम् ॥ [ [3]उत्पपातासनात्तूर्णं महाबाहुररिंदमः ॥ ]
प्राद्रवद्रथमारुह्य राघवस्य निवेशनम् ॥ ५ ॥
प्रयान्तं लक्ष्मणं दृष्ट्वा द्वाःस्थो भरतमन्तिकात् ॥ उवाच भरतं तत्र वर्धयित्वा कृताञ्जलिः ॥ ६ ॥
विनयावनतो भूत्वा राजा त्वां द्रष्टुमिच्छति ॥ भरतस्तु वचः श्रुत्वा द्वाःस्थाद्रामसमीरितम् ॥ ७ ॥

---

जातममर्षं रावणस्पर्शजं पृष्ठतः कृत्वा विसृज्येत्यर्थ. । ॥ १६ ॥ कीदृश कुत्सितमेवेत्यर्थः । तत्र हेतुः अङ्कमित्यादि ॥ १७—१८ ॥ सहनीयमिति । एवं कश्मलमित्यर्थः ॥ १९—२० ॥ परमार्तवत् परमदुःखी भूत्वा । सर्वान् सुहृद इति । भद्रव्यतिरिक्तानित्यर्थः। कथमेतदिति । भद्रोक्तमेतत् अपयशोवचनं कथ तत्त्वमतत्त्ववेति भवद्भिश्च निवेद्यतामित्यर्थः ॥ २१ ॥ एवमेतत् यथा भद्रेणोक्त एतत्तत्त्वमेव ॥ २२—२३॥

इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने त्रिचत्वारिंश. सर्गः ॥ ४३ ॥

---

निश्चित्येति । कर्तव्यमिति शेषः ॥ १—३ ॥ वर्धयित्वेति । जयाशिषेति शेषः । मा चिरं विलम्बो मा भूत् ॥ ४—५ ॥ भरतमन्तिकात् भरतस्यान्तिकमित्यर्थः । गत्वेति शेषः । कृताञ्जलिः । भरतायेति

---

स० पुनर्विवाहान्तरकरणाशक्तनिर्धनमानववत्सीतासभोगजंसुखंकीदृशंनकुत्सति नजुगुप्सते ॥ १८ ॥ स० एतदेवमितिदेवं प्रत्यूचुस्तद्धृदयज्ञा सुहृदइतिभावः ॥ २२ ॥ स० वयस्यविसर्जनमाप्तै.सहसमन्त्रणायेतिज्ञेयं ॥ २३ ॥ इतित्रिचत्वारिंश. सर्ग. ॥ ४३ ॥

स० अनिवारित भूपसमीपादागमनात् ॥ ३ ॥

[ पा० ] १ झ—ठ. कुत्सति. २ ङ. झ. ञ. कथमेतद्वदन्तुमा. क—घ ज. कथमेतन्निवेद्यता. ३ इदमर्धं क. पाठेदृश्यते.

उत्पपातासनात्तूर्णं पद्भ्यामेव ययौ बली ॥ दृष्ट्वा प्रयान्तं भरतं त्वरमाणः कृताञ्जलिः ॥ ८ ॥
शत्रुघ्नभवनं गत्वा ततो वाक्यमुवाच ह ॥ एह्यागच्छ रघुश्रेष्ठ राजा त्वां द्रष्टुमिच्छति ॥ ९ ॥
गतो हि लक्ष्मणः पूर्वं भरतश्च महायशाः ॥ श्रुत्वा तु वचनं तस्य शत्रुघ्नः परमासनात् ॥
शिरसा धरणीं[1] प्राप्य प्रययौ यत्र राघवः ॥ १० ॥
द्वाःस्थस्त्वागम्य रामाय सर्वानेव कृताञ्जलिः ॥ निवेदयामास तदा भ्रातॄन्स्वान्समुपस्थितान् ॥ ११ ॥
कुमारानागतान्श्रुत्वा चिन्ताव्याकुलितेन्द्रियः ॥ अवाङ्मुखो दीनमना द्वाःस्थं वचनमब्रवीत् ॥ १२ ॥
प्रवेशय कुमारांस्त्वं मत्समीपं त्वरान्वितः ॥ एतेषु जीवितं मह्यमेते प्राणाः प्रिया मम ॥ १३ ॥
आज्ञप्तास्तु नरेन्द्रेण कुमाराः शुक्लतेजसः[2] ॥ प्रह्वाः प्राञ्जलयो भूत्वा विविशुस्ते समाहिताः ॥ १४ ॥
ते तु दृष्ट्वा मुखं तस्य सग्रहं शशिनं यथा ॥ सन्ध्यागतमिवादित्यं प्रभया परिवर्जितम् ॥ १५ ॥
बाष्पपूर्णे च नयने दृष्ट्वा रामस्य धीमतः ॥ हतशोभं यथा पद्मं मुखं वीक्ष्य च तस्य ते ॥ १६ ॥
[ किमेतदिति[3] रामस्य चिन्ताव्याकुलचेतसः ॥ व्यथिताः शुष्कवदनाः प्रविश्य रघुनन्दनाः ॥ १७ ॥
ततोऽभिवाद्य त्वरिताः पादौ रामस्य मूर्धभिः ॥ तस्थुः समाहिताः सर्वे रामस्त्वश्रूण्यवर्तयत् ॥ १८ ॥
तान्परिष्वज्य बाहुभ्यामुत्थाप्य च महाबलः ॥ आसनेष्वासतेत्युक्त्वा ततो वाक्यं जगाद ह ॥ १९ ॥
भवन्तो मम सर्वस्वं भवन्तो जीवितं मम ॥ भवद्भिश्च कृतं राज्यं पालयामि नरेश्वराः ॥ २० ॥
भवन्तः कृतशास्त्रार्था बुद्ध्या च परिनिष्ठिताः ॥ संभूय च मदर्थोऽयमन्वेष्टव्यो नरेश्वराः ॥ २१ ॥
तथा वदति काकुत्स्थे ह्यवधानपरायणाः ॥ उद्विग्नमनसः सर्वे किंनु राजाऽभिधास्यति ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

## पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

रामेण भ्रातृषुसीताविषयकलोकापवादनिवेदनेनलक्ष्मणंप्रति स्वप्रतिसीताया.स्वस्यमुन्याश्रमनयनप्रार्थनानिवेदनपूर्वक परेद्युःप्रभाते गङ्गातीरस्थवाल्मीक्याश्रमसमीपे सीताविसर्जनचोदना ॥ १ ॥

तेषां समुपविष्टानां सर्वेषां दीनचेतसाम् ॥ उवाच वाक्यं काकुत्स्थो मुखेन परिशुष्यता ॥ १ ॥

---

शेषः ॥ ६—७ ॥ उत्पपात उत्थाय जगाम ॥ ८—१० ॥ शिरसा धरणी प्राप्य रामाय वन्दित्वेत्यर्थः ॥ ११—१२ ॥ मह्य ममेत्यर्थ. ॥ १३—१४ ॥ सग्रहं सोपरागं ॥ १५—२० ॥ कृतशास्त्रार्थाः अनुष्ठितशास्त्रार्थाः ॥ २१—२२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने चतुश्चत्वारिंशः सर्ग ॥ ४४ ॥

---

मा कुरुध्वं मनोन्यथा । मदभिप्रायाननुकूलं मा कुरुध्वमित्यर्थः । तमेवाभिप्रायमाविष्करोति—पौरा-

---

स० पद्भ्या यानागमनविलबभिया ॥ ८ ॥ स० एह्यागच्छेति उभौ भ्रातरौगतौ नत्वयाविलबोऽवलंबनीयइतिसूचयति ॥ शि० राजात्वाद्रष्टुमिच्छति इत्येहि जानीहि । अतआगच्छ । गत्यर्थाना ज्ञानार्थत्वंप्रसिद्धमेव ॥ ९ ॥ ति० मह्य मम । जीवितमेतेषु स्थितमितिशेष ॥ स० प्राणायथातथाप्रिया. ॥ १३ ॥ स० हतशोभं नीहारादिना ॥ १६ ॥ ति० भवद्भि कृतंसपादितं ॥ २० ॥ स० कृतशास्त्रार्था शिक्षितशास्त्रार्था । अन्वेष्टव्य विचारणीय ॥ ति० अन्वेष्टव्य अनुसरणीय. ॥ २१ ॥ स० राजाकिन्वभिधास्यतीत्युद्विग्नमनस ॥ २२ ॥ इतिचतुश्चत्वारिंश सर्ग ॥ ४४ ॥

स० सर्वेषा त्रयाणा ॥ १ ॥

[ पा० ] १ क—ट. वन्द्यधरणी. २ क—ट. शुक्लवासस . ३ अयंश्लोक ग. पाठेदृश्यते

सर्वे शृणुत भद्रं वो मा कुरुध्वं मनोऽन्यथा ॥ पौराणां मम सीतायां यादृशी वर्तते कथा ॥ २ ॥
पौरापवादः सुमहांस्तथा जनपदस्य च ॥ वर्तते मयि बीभत्सा सा मे मर्माणि कृन्तति ॥ ३ ॥
अहं किल कुले जात इक्ष्वाकूणां महात्मनाम् ॥ सीताऽपि सत्कुले जाता जनकानां महात्मनाम् ॥४॥
जानासि त्वं यथा सौम्य दण्डके विजने वने ॥ रावणेन हृता सीता स च विध्वंसितो मया ॥५॥
तत्र मे बुद्धिरुत्पन्ना जनकस्य सुतां प्रति ॥ अत्रोषितामिमां सीतामानयेयं कथं पुरीम् ॥ ६ ॥
प्रत्ययार्थं ततः सीता विवेश ज्वलनं तदा ॥ प्रत्यक्षं तव सौमित्रे देवानां हव्यवाहनः ॥
अपापां मैथिलीमाह वायुश्चाकाशगोचरः ॥ ७ ॥
चन्द्रादित्यौ च शंसेते सुराणां सन्निधौ पुरा ॥ ऋषीणां चैव सर्वेषामपापां जनकात्मजाम् ॥ ८ ॥
एवं शुद्धसमाचारा देवगन्धर्वसन्निधौ ॥ लङ्काद्वीपे महेन्द्रेण मम हस्ते निवेशिता ॥ ९ ॥
अन्तरात्मा च मे वेत्ति सीतां शुद्धां यशस्विनीम् ॥ ततो गृहीत्वा वैदेहीमयोध्यामहमागतः ॥१०॥
अयं तु मे महान्वादः शोकश्च हृदि वर्तते ॥ पौरापवादः सुमहांस्तथा जनपदस्य च ॥ ११ ॥
अकीर्तिर्यस्य गीयेत लोके भूतस्य कस्यचित् ॥ पतत्येवाधमाँल्लोकान्यावच्छब्दः प्रकीर्त्यते ॥ १२ ॥
अकीर्तिर्निन्द्यते देवैः कीर्तिर्लोकेषु पूज्यते ॥ कीर्त्यर्थं तु समारम्भः सर्वेषां सुमहात्मनाम् ॥ १३ ॥
अप्यहं जीवितं जह्यां युष्मान्वा पुरुषर्षभाः ॥ अपवादभयाद्भीतः किं पुनर्जनकात्मजाम् ॥ १४ ॥
तस्माद्भवन्तः पश्यन्तु पतितं शोकसागरे ॥ न हि पश्याम्यहं भूतं किंचिद्दुःखमतोऽधिकम् ॥१५॥
श्वस्त्वं प्रभाते सौमित्रे सुमन्त्राधिष्ठितं रथम् ॥ आरुह्य सीतामारोप्य विषयान्ते समुत्सृज ॥ १६ ॥
गङ्गायास्तु परे पारे वाल्मीकेस्तु महात्मनः ॥ आश्रमो दिव्यसंकाशस्तमसातीरमाश्रितः ॥ १७ ॥
तत्रैनां विजने देशे विसृज्य रघुनन्दन ॥ शीघ्रमागच्छ भद्रं ते कुरुष्व[1] वचनं मम ॥ १८ ॥

णामित्यादि। सीतायां विषये यादृशी कथा वर्तते तां कथां मत्सकाशात् शृणुतेत्यन्वय. ॥ २ ॥ का कथा वर्तत इत्यत्राह—पौरापवाद इत्यादि ॥ मयि मद्विषये बीभत्सा कुत्सा वर्तते सा मम सर्वमर्माणि कृन्तति ॥३—१०॥ महान्वाद इति। वर्तत इति शेषः। शोकश्चेति। तच्छ्रवणादिति शेषः। कोयं वाद इत्यत्राह—पौरेत्यादि ॥ ११ ॥ भूतस्य प्राणिनः। शब्दः अकीर्तिबोधकः ॥ १२—१४ ॥ भूतं उत्पन्नं ॥ १५ ॥ विषयान्ते स्वदेशाद्बहिः ॥ १६ ॥ त विशेषयति—गङ्गाया

स० पौरापवाद पौरकृतदुर्यशोवाद । तथाजनपदस्य देशस्य । चश्चापवादपदानुकर्षक । याबीभत्सा कुत्सापौरादिकृता। सामयिमेमर्माणि कृन्तति । हस्वान्तोपिकृतिधातुरस्ति । तस्येदरूपं ॥ ३ ॥ स० त्रयाणामप्येकान्तेसत्त्वेपिप्रात्यक्षिकानुभवो लक्ष्मणस्यैवेतितमेवलक्षीकृत्याहेत्याह—**जानासीति** ॥ शि० शुद्धवंशोत्पन्नत्वेनस्वशुद्धिमुक्त्वाकर्मणापिस्वशुद्धिंबोधयितुमाह—**जानासीति**। दण्डकेवने यथासीताहृता रावणश्चमयाविध्वंसित तथात्वंजानासि । धर्मपूर्वकमेवसर्वकृतमितितात्पर्यं ॥ ५ ॥ ति० कथमानयेय नकथमपि ॥ स० तत्र लङ्कायां । अत्र मद्देशे । तथापिपुरी अयोध्याकथमानयेयमितिताप्रतिबुद्धिरुत्पन्ना। परपुरुषकरस्पर्शादितिभाव ॥ ६ ॥ ति० सीतायाअपापताप्रख्यापयतिभ्रातृभ्य प्रत्ययार्थमिति । देवाना सनिधावितिशेष ॥ स० प्रत्ययार्थं आत्मशुद्धौविश्वासार्थं। देवानातवचप्रत्यक्ष । अपापा परपुरुषसंसर्गपापशून्या ॥ ७ ॥ स० बहुसाक्षिकतयापातिव्रत्यंनिश्चितमितिबहुकीर्तनं ॥ ८ ॥ ति० लङ्काद्वीपेमहेन्द्रेणेति। 'लङ्काद्वीपेतदाग्निना' इतिपाठान्तर ॥ ९ ॥ स० सर्वापेक्षयाऽधिक साक्षीममाप्यस्तीत्याह—अन्तरात्मेति ॥ १० ॥ स० तत बहुसवादान्ममसाक्षिणश्च ॥ ११ ॥ स० अकीर्तिं अपयश । कीर्ति पूज्यते। तेनतद्वन्तोलक्ष्यन्ते। अकीर्तिरित्यत्रबहुव्रीहिर्वा ॥ १३ ॥ स० पुरुषर्षभा अनेनकियदिदमायताक्ष्या कुलान्तरप्रभवायाहानमितिसूचयति । अपवादभयाद्भीतइतिपदमेकं । अपवादभयमातयन्तिते अपवादभयात । तेभ्योभीत । बहुलग्रहणात्क्विप्। आतयन्तीत्यात । अपवादभयस्यातइतिवा ॥ १४ ॥ ति० शोकसागरे अकीर्तिजे ॥ १५ ॥ ति० परेपारे गङ्गोल्लङ्घनलभ्येपारे। ति० तमसासञ्ज्ञनदीद्वय। अयोध्यासमीपेगङ्गार्वाक्तत्परपारेच । दिव्यसकाश दिव्यदेशसदृश. ॥ १७ ॥

[ पा० ] १ क—ट. सौमित्रेकुरुष्व.

न[1] चास्मिन्प्रतिवक्तव्यः सीतां प्रति कथंचन ॥ तस्मात्त्वं गच्छ सौमित्रे नात्र कार्या विचारणा ॥१९॥
अप्रीतिर्हि परा मह्यं त्वयैतत्प्रतिवारिते ॥ शापिता हि मया यूयं भुजाभ्यां जीवितेन च ॥ २० ॥
ये मां वाक्यान्तरे ब्रूयुरनुनेतुं कथंचन ॥ अहिता नाम ते नित्यं मदभीष्टविघातनात् ॥ २१ ॥
मानयन्तु भवन्तो मां यदि मच्छासने स्थिताः ॥ इतोद्य नीयतां सीता कुरुष्व वचनं मम ॥ २२ ॥
पूर्वमुक्तोऽहमनया गङ्गातीरेऽहमाश्रमान् ॥ पश्येयमिति तस्याश्च कामः संवर्त्यतामयम् ॥ २३ ॥
एवमुक्त्वा तु काकुत्स्थो बाष्पेण पिहिताननः ॥ प्र[2]विवेश स धर्मात्मा भ्रातृभिः परिवारितः ॥२४॥
शोकसंलग्नहृदयो निशश्वास यथा द्विपः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

## षट्चत्वारिंशः सर्गः ॥ ४६ ॥

लक्ष्मणेन सीतांप्रति वननयनायरामेतत्प्रार्थनास्मारणेन वनगमनायसज्जीभवनचोदना ॥ १ ॥ सीतया हर्षान्मुनिपत्नी-भ्योदित्सया नानावसनाभरणाद्यादानेनसुमन्त्रानीतरथारोहणम् ॥ २ ॥ लक्ष्मणेन सीतासुमन्त्राभ्यासहगङ्गातीरमेत्य नाविकान्प्रतिनौकानयनचोदना ॥ ३ ॥

ततो रजन्यां व्युष्टायां लक्ष्मणो दीनचेतनः ॥ सुमन्त्रमब्रवीद्वाक्यं मुखेन परिशुष्यता ॥ १ ॥
सारथे तुरगाञ्शीघ्रं योजयस्व रथोत्तमे ॥ स्वास्तीर्णं [3]राजभवनात्सीतायाश्चासनं कुरु ॥ २ ॥
सीता हि राजवचनादाश्रमं पुण्यकर्मणाम् ॥ मया नेया महर्षीणां शीघ्रमानीयतां रथः ॥ ३ ॥
सुमन्त्रस्तु तथेत्युक्त्वा युक्तं परमवाजिभिः ॥ रथं सुरुचिरप्रख्यं स्वास्तीर्णं सुखशय्यया ॥ ४ ॥
आनीयोवाच सौमित्रिं मित्राणां मानवर्धनम् ॥ रथोऽयं समनुप्राप्तो यत्कार्यं क्रियतां प्रभो ॥ ५ ॥

---

इत्यादि ॥ १७—१९ ॥ मह्यं मम । भुजाभ्यामिति वीरवचन ॥ २० ॥ वाक्यान्तरे अस्मद्वाक्यमध्ये । अनुनेतुं ये ब्रूयुस्ते शापिता इति पूर्वेणान्वयः ॥२१॥ फलितमाह—मानयन्त्विति ॥२२॥ कथमिदं नृशंसत्वं सोढुं शक्यमित्यत्राह—पूर्वमित्यादि ॥ संवर्त्यतां अनुष्ठीयतां ॥ २३ ॥ भ्रातृभिः परिवारितः प्रविवेशेति । भ्रातॄन् विसृज्य स्ववेश्म प्रविवेशेत्यर्थः ॥ २४—२५॥

इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने पञ्चचत्वारिंशः सर्ग. ॥ ४५ ॥

---

स्वास्तीर्णमिति । सीतायाश्च शुभमासनं राजभवनादानीय स्वास्तीर्णं रथ कुरु ॥ २ ॥ कुत इत्यत्राह—सीता हीत्यादि ॥ ३ ॥ सुरुचिरप्रख्य सुन्दरशोभं

---

**ति०** सीतांप्रति सीतापरित्यागमुद्दिश्य ॥ १९ ॥ **ति०** मह्यं मम । एतत्प्रतिवारिते एतस्यप्रतिवारणेइत्यर्थ । **स०** यूयंमया पादाभ्याजीवितेनचशापिता पादौसाक्षिणौ प्राणा साक्षिणइतिस्थापितशपथा । भुजाभ्यामितिक्वचित्पाठ । तत्रक्षत्रियाणा शपथविषये आयुधोपालंभनादेर्विधानाद्रामस्यधनुर्बाणप्रेमोपेतत्वात्तद्धारणस्यशयद्वयसाध्यत्वाद्भुजाभ्यामित्युक्तिर्युक्तेतिमन्तव्यं । 'भुज.पाणौचबाहौच' इतिविश्व । 'भुजाभ्यामितिपाठेपि पादाभ्यामित्येवार्थ ' इतिवदन्नागोजिभट्ट 'यदिहिप्रत्ययमनुत्पाद्यएकोऽयंभूमध्यप्रदेशइतिब्रूयात्तदापरोपि किंनब्रूयात् परस्ताद्वितस्तेरिति'इत्यादिधाटीमाटीकतेतिज्ञेय ॥ २० ॥ **ति०** ये वाक्यान्तरे अस्मद्वाक्यमध्ये मामनुनेतुंब्रूयु' ते मदभीष्टविघातनान्नित्यंममाहितानाम अहिताइतिप्रसिद्धं ॥ २१ ॥ **स०** प्रतिकूलालापाकरणे सुमुखीकर्तुं भवन्तोमांमानयन्त्वितिबहुवचनेन त्रिकपुरस्कृति । एकस्यलक्ष्मणस्यैवसहसीतयागमनानुशासनात्कुरुष्ववचनमित्येक-वचनंचयुज्यते ॥ २२ ॥ **ति०** भ्रातृभि परिवारितः प्रविवेश तान्विसृज्यस्ववेश्मेतिशेष ॥ २४ ॥ **स०** निशश्वास लोकदृष्ट्या ॥ २५ ॥ इतिपञ्चचत्वारिंश सर्ग. ॥ ४५ ॥

**[ पा० ]** १ क—ट. नचास्मिप्रति. २ ङ. झ. ञ. ट. संविवेश. क. ख. सभाविवेशधर्मात्मा. ३ क. ग घ ङ ज—ट. राजवचनात्सीतायाश्चासनंशुभं.

एवमुक्तः सुमन्त्रेण राजवेश्मनि लक्ष्मणः ॥ प्रविश्य सीतामासाद्य व्याजहार नरर्षभः ॥ ६ ॥
त्वया किलैष नृपतिर्वरं वै याचितः प्रभुः ॥ नृपेण च प्रतिज्ञातमाज्ञप्तश्चाश्रमं प्रति ॥ ७ ॥
गङ्गातीरे मया देवि ऋषीणामाश्रमाञ्शुभान् ॥ शीघ्रं गत्वा तु वैदेहि शासनात्पार्थिवस्य नः ॥
अरण्ये मुनिभिर्जुष्टे अवनेया भविष्यसि ॥ ८ ॥
एवमुक्ता तु वैदेही लक्ष्मणेन महात्मना ॥ प्रहर्षमतुलं लेभे गमनं चाप्यरोचयत् ॥ ९ ॥
वासांसि च महार्हाणि रत्नानि विविधानि च ॥ गृहीत्वा तानि वैदेही गमनायोपचक्रमे ॥ १० ॥
इमानि मुनिपत्नीनां दास्याम्याभरणान्यहम् ॥ वस्त्राणि च महार्हाणि धनानि विविधानि च ॥ ११ ॥
सौमित्रिस्तु तथेत्युक्त्वा रथमारोप्य मैथिलीम् ॥ प्रययौ शीघ्रतुरगै रामस्याज्ञामनुस्मरन् ॥ १२ ॥
अब्रवीच्च तदा सीता लक्ष्मणं लक्ष्मिवर्धनम् ॥ अशुभानि बहून्येव पश्यामि रघुनन्दन ॥ १३ ॥
नयनं मे स्फुरत्यद्य गात्रोत्कम्पश्च जायते ॥ हृदयं चैव सौमित्रे अस्वस्थमिव लक्षये ॥ १४ ॥
औत्सुक्यं परमं चापि अधृतिश्च परा मम ॥ शून्यामेव च पश्यामि पृथिवीं पृथुलोचन ॥ १५ ॥
अपि स्वस्ति भवेत्तस्य भ्रातुस्ते भ्रातृवत्सल ॥ श्वश्रूणां चैव मे वीर सर्वासामविशेषतः ॥ १६ ॥
पुरे जनपदे चैव कुशलं प्राणिनामपि ॥ इत्यञ्जलिकृता सीता देवता अभ्ययाचत ॥ १७ ॥
लक्ष्मणोर्थं तु तं श्रुत्वा शिरसा वन्द्य मैथिलीम् ॥ शिवमित्यब्रवीद्धृष्टो हृदयेन विशुष्यता ॥ १८ ॥
ततो वासमुपागम्य गोमतीतीर आश्रमे ॥ प्रभाते पुनरुत्थाय सौमित्रिः सूतमब्रवीत् ॥ १९ ॥
योजयस्व रथं शीघ्रमद्य भागीरथीजलम् ॥ शिरसा धारयिष्यामि त्र्यम्बकः[1] पर्वते यथा ॥ २० ॥
सोश्वांश्चञ्चला[2]ऽथ चतुरो रथे युङ्क्त्वा मनोजवान् ॥ आरोहस्वेति वैदेहीं सूतः प्राञ्जलिरब्रवीत् २१
सा तु सूतस्य वचनादारुरोह रथोत्तमम् ॥ सीता सौमित्रिणा सार्धं सुमन्त्रेण च धीमता ॥ २२ ॥
आससाद विशालाक्षी गङ्गां पापविनाशिनीम् ॥ अथार्धदिवसं गत्वा भागीरथ्या जलाशयम् ॥ २३ ॥
निरीक्ष्य लक्ष्मणो दीनः प्ररुदोद महास्वनः ॥ २४ ॥
सीता तु परमायत्ता दृष्ट्वा लक्ष्मणमातुरम् ॥ उवाच वाक्यं धर्मज्ञा किमिदं रुद्यते त्वया ॥ २५ ॥
जाह्नवीतीरमासाद्य चिराभिलषितं मम ॥ हर्षकाले किमर्थं मां विषादयसि लक्ष्मण ॥ २६ ॥
नित्यं त्वं रामपार्श्वेषु वर्तसे पुरुषर्षभ ॥ कच्चिद्विनाकृतस्तेन द्विरात्रं शोकमागतः ॥ २७ ॥

---

॥ ४—१३ ॥ हृदयं मनः ॥ १४ ॥ औत्सुक्यं पुण्याश्रमदर्शनविषयजं । शून्यां सुखशून्यां ॥ १५—१६ ॥ अञ्जलिकृता कृताञ्जलिः ॥ १७ ॥ तमर्थमिति । दुर्निमित्तरूप वस्त्वित्यर्थः । हृष्ट' हृष्ट इव ॥ १८—१९ ॥ शिरसा धारयिष्यामि त्र्यम्बकः पर्वते यथेति दृष्टान्ते रुद्रोपि स्नानार्थमेव गङ्गां दधारेति गम्यते ॥ २०—२२ ॥ जलाशयं जलप्रवाहं ॥ २३—२६ ॥ पार्श्वेष्विति पूजायां बहुवचनं ।

---

स० प्रतिज्ञात प्रेषयिष्यामीति । अहमाज्ञप्तश्च त्वामाश्रमंप्रापयितुमितिशेष ॥ ७ ॥ स० अवनेया रथादवतार्यप्रापणीया ॥ ८ ॥ ति० तथेत्युक्त्वा यथेष्टंप्रयच्छेत्युक्ता ॥ १२ ॥ ति० नयनं दक्षिणं ॥ १४ ॥ स० अर्थ निवृत्तिप्रायफलकमपशकुनं । शिवं तत्सर्वमङ्गल मङ्गलदेव्यास्तवेतिभाव । धृष्ट राज्ञआज्ञातोधीर । धृष्ट सइववा ॥ १८ ॥ स० त्रियंबकइत्यत्रयणागम 'त्रिया-दिकं' इत्यादिवत् । पर्वतत्र्यबकोयथेत्यपिक्कचित्पाठ । तत्रनिदर्शनद्वयं । पर्वतोहिमवान् ॥ २० ॥ स० विचारयित्वा अङ्गपरिमार्जनादिविचारंकृत्वा । आरोहस्व आरोह । शि० रथेयुक्तानश्वान्विचारयित्वा अतिचाञ्चल्यस्यकिञ्चिन्निवृत्तयेइतस्तत सचाल्य आरोहस्वेतिवैदेहीमब्रवीत् ॥ २१ ॥ इतिषट्चत्वारिंश सर्ग ॥ ४६ ॥

[ पा० ] १ ख. ङ. च. झ. ञ. त्रियंबकइवौजसा. २ झ. ञ. ट. सोश्वान्विचारयित्वातु.

ममापि दयितो रामो जीवितादपि लक्ष्मण ॥ न चाहमेवं शोचामि मैवं त्वं बालिशो भव ॥ २८ ॥
तारयस्व च मां गङ्गां दर्शयस्व च तापसान् ॥ ततो मुनिभ्यो दास्यामि वासांस्याभरणानि च ॥ २९ ॥
ततः कृत्वा महर्षीणां यथावदभिवादनम् ॥ तत्र चैकां निशामुष्य यास्यामस्तां पुरीं पुनः ॥ ३० ॥
ममापि पद्मपत्राक्षं सिंहोरस्कं कृशोदरम् ॥ त्वरते हि मनो द्रष्टुं रामं रमयतांवरम् ॥ ३१ ॥
तस्यास्तद्वचनं श्रुत्वा प्रमृज्य नयने शुभे ॥ नाविकानाह्वयामास लक्ष्मणः परवीरहा ॥ ३२ ॥
इयं च सज्जा नौश्चेति दाशाः प्राञ्जलयोऽब्रुवन् ॥ ३३ ॥
तितीर्षुर्लक्ष्मणो गङ्गां शुभां नावमुपारुहत् ॥ गङ्गां संतारयामास लक्ष्मणस्तां समाहितः ॥ ३४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

## सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

लक्ष्मणेन सीतायानौकारोपणेन गङ्गोत्तरतीरस्थवाल्मीक्याश्रमसमीपप्रापणेन तस्यांसशोकरामनियोगनिवेदनम् ॥ १ ॥

अथ नावं सुविस्तीर्णां नैषादीं राघवानुजः ॥ आरुरोह समायुक्तां पूर्वमारोप्य मैथिलीम् ॥ १ ॥
सुमन्त्रं चैव सरथं स्थीयतामिति लक्ष्मणः ॥ उवाच शोकसंतप्तः प्रयाहीति च नाविकम् ॥ २ ॥
ततस्तीरमुपागम्य भागीरथ्याः स लक्ष्मणः ॥ उवाच मैथिलीं वाक्यं प्राञ्जलिर्बाष्पसंप्लुतः ॥ ३ ॥
हृद्गतं मे महच्छल्यं यस्मादार्येण धीमता ॥ अस्मिन्निमित्ते वैदेहि लोकस्य वचनीकृतः ॥ ४ ॥
श्रेयो हि मरणं मेऽद्य मृत्युर्वा यत्परं भवेत् ॥ न चास्मिन्नीदृशे कार्ये नियोज्यो लोकनिन्दिते ॥ ५ ॥
प्रसीद च न मे पापं कर्तुमर्हसि शोभने ॥ इत्यञ्जलिकृतो भूमौ निपपात स लक्ष्मणः ॥ ६ ॥
रुदन्तं प्राञ्जलिं दृष्ट्वा काङ्क्षन्तं मृत्युमात्मनः ॥ मैथिली भृशसंविग्ना लक्ष्मणं वाक्यमब्रवीत् ॥ ७ ॥
किमिदं नावगच्छामि ब्रूहि तत्त्वेन लक्ष्मण ॥ पश्यामि त्वां न च स्वस्थमपि क्षेमं महीपतेः ॥ ८ ॥

---

शोकमागतः कश्चिदित्यन्वयः ॥ २७—३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

निषादस्य गुहस्येय नैषादी तां । समायुक्तां सज्जीकृतां ॥ १ ॥ स्थीयतामिति । गङ्गातीर एवेति शेषः ॥ २ ॥ तीरं दक्षिणतीरमित्यर्थः ॥ ३ ॥ हे वैदेहि यस्मिन्निमित्ते यत्कृत्यानुष्ठानत' अहं लोकस्य वचनीकृतः वचनीयः कृतः । यलोप आर्षः । निन्द्यः संपादितो भवेयं । अस्मिन्निमित्ते धीमता सर्वज्ञेन आर्येण यद्यस्मादह नियुक्त. तेन हेतुना मे महच्छल्यं हृद्गत ॥ ४ ॥ एव हृच्छल्य प्राप्तवतो मे मृत्युः मरण हि वा यत् यदि स्यात् । अद्य तदेव मे परं श्रेयो भवेत् । न चेत्यादि । ईदृशे लक्ष्मणो निर्घृण इति लोकनिन्द्ये अस्मिन् वक्ष्यमाणरूपे कार्ये न चाह नियोज्योस्मि नियोक्तुमर्होसि । तथा विनियुक्तस्य कार्यस्य सर्वथैव कर्तव्यत्वादिति शेषः । अतः प्रसीदेत्यादि योज्यं ॥ ५—६ ॥ मृत्युं काङ्क्षन्तं । परमहृच्छल्यवशादिति शेषः ॥ ७ ॥ नावगच्छामि एवं

---

**स०** महच्छल्य तद्गत् । नकेवलमेतावत् किंतु लोकस्यजनस्य वचनी वचनमस्यास्तीतिवचनी । मतुबर्थोनिन्दा । 'भूमनिन्दाप्रशंसासु' इत्यादे । वचनवान्कृत वाच्य कृतइतियावत् । लोकस्येतिशैषिकीवा कृद्योगलक्षणावाषष्ठी । यत्तुनागोजिभट्टेन वचनीकृत यलोपआर्ष । वचनीय कृत. निन्द्य कृत इत्युक्तं । तत्र छान्दसत्वमिव 'गर्ह्याधीनौचवक्तव्यौ' 'वक्तव्यंकुत्सितेहीनेवचनार्हेपिवाच्यवत्' इत्यमराद्युक्तेर्वचनीयशब्दस्यवक्तव्यपदलक्षणाद्वारानिन्द्यार्थोपस्थापकत्वंचकल्पनीयमित्यनृजुत्वादुपेक्ष्यं ॥ ४ ॥ **शि०** मेमरणश्रेय । यन्मृत्यु तस्मादपिपरयद्भवेत्तच्छ्रेयोवा । **ति०** एवंमहच्छल्यंप्राप्तवतोमेयन्मरणं तत्प्रागवस्थामूर्च्छा । मृत्युर्मुख्यंमरणंवायद्भवेत् तत्परश्रेयोभवेत् । नच ननु ईदृशे लोकनिन्द्येअस्मिन्वक्ष्यमाणेकार्येअहंनियोज्य. नियोक्तुमर्ह. भवामि । अथापि राज-

शापितोसि नरेन्द्रेण यत्त्वं संतापमागतः ॥ तद्ब्रूयाः सन्निधौ मह्यमहमाज्ञापयामि ते ॥ ९ ॥
वैदेह्या चोद्यमानस्तु लक्ष्मणो दीनचेतनः ॥ अवाङ्मुखो बाष्पकलं वाक्यमेतदुवाच ह ॥ १० ॥
श्रुत्वा परिषदो मध्ये ह्यपवादं सुदारुणम् ॥ पुरे जनपदे चैव त्वत्कृते जनकात्मजे ॥
रामः संतप्तहृदयो मां निवेद्य गृहं गतः ॥ ११ ॥
न तानि वचनीयानि मया देवि तवाग्रतः ॥ यानि राज्ञा हृदि न्यस्तान्यमर्षात्पृष्ठतः कृतः ॥१२॥
सा त्वं त्यक्ता नृपतिना निर्दोषा मम सन्निधौ ॥ पौरापवादभीतेन ग्राह्यं देवि न तेऽन्यथा ॥१३॥
आश्रमान्तेषु च मया त्यक्तव्या त्वं भविष्यसि ॥ राज्ञः शासनमाज्ञाय तवेदं किल दौर्हृदम् ॥१४॥
तदेतज्जाह्नवीतीरे ब्रह्मर्षीणां तपोवनम् ॥ पुण्यं च रमणीयं च मा विषादं कृथाः शुभे ॥ १५ ॥
राज्ञो दशरथस्येष्टः पितुर्मे मुनिपुङ्गवः ॥ सखा परमको विप्रो वाल्मीकिः सुमहायशाः ॥ १६ ॥
पादच्छायामुपागम्य सुखमस्य महात्मनः ॥ उपवासपरैकाग्रा वस त्वं जनकात्मजे ॥ १७ ॥
पतिव्रतात्वमास्थाय रामं कृत्वा सदा हृदि ॥ श्रेयस्ते परमं देवि तथा कृत्वा भविष्यति ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

रोदनादेर्हेतुमिति शेषः । महीपतेः रामस्य । क्षेममपि सुखमपि । न पश्यामि ॥ ८ ॥ यस्मात्त्वमेव सताप-मागत· तस्मात्त्व नरेन्द्रेणैव शापितोसि । मह्य मम । आज्ञापयामि । त इति । त्वामित्यर्थः ॥ ९—१० ॥ श्रुत्वेत्यादिश्लोकद्वयमेकान्वय ॥ त्वत्कृते अपवादं श्रुत्वा सा त्व त्यक्तेत्यन्वयः ॥ ११ ॥ कोयमपवाद इत्यत्राह—न तानीति ॥ यानि वचनानि राज्ञा अम-र्षात् हृदि न्यस्तानि तानि तवाग्रतो मया न वचनी-यानि वक्तुमशक्यानि । अतएवामर्ष. मया पृष्ठत. कृतः । नोपन्यस्त इत्यर्थ· ॥ १२ ॥ तथापि ते तव विषये । पौरापवादभीतेन राज्ञा यदादिष्ट तन्मया च ग्राह्य । नान्यथा नतु त्वयि दोषबुद्ध्येत्यर्थः ॥१३॥ ततः किमित्यत्राह—आश्रमान्तेष्विति ॥ तदेवं किल दौर्हृद गर्भ. । गर्भिण्या अभिलषितमवश्य कार्य । तस्मादप्याश्रमान्तेषु त्यक्तव्येत्यर्थः ॥ १४—१५ ॥ परमक. परमानुकम्पावान् ॥ १६—१८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमु-कुटाख्याने उत्तरकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

नियोगस्यसर्वथाकर्तव्यत्वान्नियोगकरोमीतिशेष ॥ ५ ॥ **स०** योराजा अमर्षात्पृष्ठत कोपपराधीन कृत । तेनराज्ञायानिवचनानि प्रोक्तानि तानितवाग्रत अवचनीयानि अव्यवहार्याणि। इतिमयाहृदिन्यस्तानि स्थापितानि । नागोजिभट्टस्तुराज्ञाऽमर्षाद्धृदिन्यस्तानि तानिहेदेवि तवाग्रतोनवचनीयानि नवक्तुंशक्यानि । अतएव तेषावादोमयापृष्ठत कृतइतिव्याचख्यौ । अस्मत्तद्व्याख्यानयोर्मध्येसल-भत्वालभत्वेविदाकुर्वन्तुविद्वास ॥ १२ ॥ **ति०** ननुमदीयनिर्दोषत्वंराजालंचनजानीय कितत्राह—निर्दोषेति । यद्यपित्वंमम सन्निधावग्न्यादिभिर्निर्दोषाख्यापिता । तथापिपौरापवादभीतेनसानिर्दोषापित्वत्यक्ता । अन्यथा वास्तवदोषबुद्ध्येतितेत्वयानग्राह्य । यदेवमत आश्रमान्तेषु आश्रमसमीपेषु । **स०** आश्रमान्तेषु अनेन तत्रापिनैकपोपकतातस्यसमतेतिध्वनयति । दौर्हृदं गर्भलक्षणं ॥ १४ ॥ **स०** परमक दशरथानुकपापात्रं । कन्नयमनुकंपाया । दशरथस्यराजत्वादुपपन्नमिदंमन्तव्यं ॥ १६ ॥ इतिसप्तचत्वारिंशःसर्गः ॥ ४७ ॥

## अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

लक्ष्मणमुखाद्रामनियोगश्रवणमात्रेणपतितमूर्च्छितयासीतया क्रमेणसंज्ञाधिगमेन लक्ष्मणप्रति रामायसप्रणामं स्वसंदेशनिवेदनचोदना ॥ १ ॥ लक्ष्मणे सप्रणामसान्त्वन सीतात्यागपूर्वकनौकारोहणेन गङ्गोत्तरतीरमेत्य रथारोहणेनदृष्टिपथमतिक्रान्ते सीतयाशोकादुच्चैरोदनम् ॥ २ ॥

लक्ष्मणस्य वचः श्रुत्वा दारुणं जनकात्मजा ॥ परं विषादमागम्य वैदेही निपपात ह ॥ १ ॥
सा मुहूर्तमिवासंज्ञा बाष्पपर्याकुलेक्षणा ॥ लक्ष्मणं दीनया वाचा उवाच जनकात्मजा ॥ २ ॥
मामिकेयं तनुर्नूनं सृष्टा दुःखाय लक्ष्मण ॥ धात्रा यस्यास्तथा मेऽद्य दुःखमूर्तिः प्रदृश्यते ॥ ३ ॥
किंनु पापं कृतं पूर्वं को वा दारैर्वियोजितः ॥ याऽहं शुद्धसमाचारा त्यक्ता नृपतिना सती ॥ ४ ॥
पुराऽहमाश्रमे वासं रामपादानुवर्तिनी ॥ अनुरुध्यापि सौमित्रे दुःखे च परिवर्तिनी ॥ ५ ॥
सा कथं ह्याश्रमे सौम्य वत्स्यामि विजनीकृता ॥ आख्यास्यामि च कस्याहं दुःखं दुःखपरायणा ॥६॥
किंनु वक्ष्यामि मुनिषु कर्म वा सत्कृतं च किम् ॥ कस्मिंश्चित्कारणे त्यक्ता राघवेण महात्मना ॥७॥
न खल्वद्यैव सौमित्रे जीवितं जाह्नवीजले ॥ त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते ॥ ८ ॥
यथाज्ञं कुरु सौमित्रे त्यज मां दुःखभागिनीम् ॥ निदेशे स्थीयतां राज्ञः शृणु चेदं वचो मम ॥ ९ ॥
श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण च ॥ शिरसावन्द्य चरणौ कुशलं ब्रूहि पार्थिवम् ॥ १० ॥
शिरसाऽभिनतो ब्रूयाः सर्वासामेव लक्ष्मण ॥ वक्तव्यश्चापि नृपतिर्धर्मेषु सुसमाहितः ॥ ११ ॥
जानासि च यथा शुद्धा सीता तत्त्वेन राघव ॥ भक्त्या च परया युक्ता हिता च तव नित्यशः ॥१२॥

बाष्पव्याकुलितेक्षणेत्यनेन पुनः संज्ञाप्राप्तिः सूचिता ॥ २ ॥ मामिकेयं तनुः धात्रा दुःखायैव सृष्टा । यस्मात्कारणात् यस्या मे दुःखमूर्तिः प्रदृश्यते ॥ ३—४ ॥ अनुरुध्यापि सोढ्वापि ॥ ५ ॥ विजनीकृता इष्टजनविरहिता कृता ॥ ६—७ ॥ न खल्विति । त्यजेय राजवंशस्तु भर्तुर्मे परिहास्यते इत्युत्तरार्धपाठः । अत्यागकारणमुच्यते । राजवशः राजसन्तानः । परिहास्यते विच्छिद्यते । मयि गर्भस्य विद्यमानत्वादिति शेषः । मया देहो धर्तव्य इति भाव' । यद्वा । त्यजेय राघवं वशे भर्तुर्मा परिहास्यतीति पाठः । रामकृतक्रौर्याद्द्यैव जाह्नवीजले जीवस्त्यक्तव्यः । तथापि त न त्यजेय । कुतो भर्तुर्वंशे निष्कलङ्के राघवमेकं मा परिहास्यति मा परिहसतु । व्यत्ययस्त्वार्षः । जीवितत्यागे स्त्रीहत्यामूलोपवादः रामस्य स्यादिति भाव. । अद्यैवेत्यनेन प्रसवानन्तरंतु त्याज्यमेवेत्यर्थः ॥ ८ ॥ त्वतु राजशासनं कुर्वित्याह—यथाज्ञमिति ॥ ९ ॥ चरणौ आवन्द्येति । मदर्थमिति

**ति०** दुःखमूर्ति सकलदुःखसमूह ॥ ३ ॥ **ति०** हेसौमित्रे पुरा पूर्वकाले रामपादानुवर्तिनीभूत्वा दुःखे वनवासदुःखे परिवर्तिनी परिवर्तमानापि अनुरुध्य तत्सोढ्वा आश्रमेवासमरोचयमितिशेष ॥ ५ ॥ **स०** विजनीकृता त्रायकनायकादिहीनाकृता ॥ ६ ॥ **स०** कस्मिन्कारणेत्यागहेतौसतिराघवेणत्यक्तेतिमुनिभि पृष्टा तेषु कृत अनुष्ठितं असत् पापकर्म किंनुवक्ष्यामि । अकरणस्यसाक्षिसिद्धत्वादितिभाव । अविज्ञत्वात्त्वत्त्याग किं नेत्याह—**महात्मनेति** । प्रभोइतिखेदेन लक्ष्मणस्यवा । स्वामिन्नाम सुज्ञशिरोमणे प्रभो इति रामस्यवासबोधनं ॥ ७ ॥ **स०** राज्ञआज्ञाकुरु । निदेशे नितरास्वकावासप्रदेशे अयोध्यायामितियावत् । स्थीयता यथापत्युस्तथाममनिदेशेपिकिञ्चित्स्थीयता । तमेवनिदेशंव्यनक्ति—**शृण्वित्यादिना** ॥९॥ अञ्जलिप्रग्रहेण अञ्जलिसमासज्जनेन सहितेनशिरसा । श्वश्रूणा तिसृणा । पार्थिवरामंप्रतिचरणावावन्द्यकुशलंपृष्टवतीतिब्रूहि ॥ १० ॥ **स०** धर्मेषुसुसमाहितोनृपति वक्तव्य' एवंसीताकुशलमप्राक्षीदिति ॥ ११ ॥

[ **पा०** ] १ च, वत्स्यामिमुनिभि सह. २ झ. ञ. ट. प्रभो.

अहं त्यक्ता त्वया वीर अयशोभीरुणा जने ॥ यच्च ते वचनीयं स्यादपवादसमुत्थितम् ॥
मया हि परिहर्तव्यं त्वं हि मे परमा गतिः ॥ १३ ॥
वक्तव्यश्चेति नृपतिर्धर्मेण सुसमाहितः ॥ यथा भ्रातृषु वर्तेथास्तथा पौरेषु नित्यदा ॥ १४ ॥
परमो ह्येष धर्मस्ते तस्मात्कीर्तिरनुत्तमा ॥ यत्तु पौरजनो राजन्धर्मेण समवाप्नुयात् ॥ १५ ॥
अहं तु नानुशोचामि स्वशरीरं नरर्षभ ॥ यथापवादं पौराणां तथैव रघुनन्दन ॥ १६ ॥
पतिर्हि देवता नार्याः पतिर्बन्धुः पतिर्गुरुः ॥ प्राणैरपि प्रियं तस्माद्भर्तुः कार्यं विशेषतः ॥ १७ ॥
इति मद्वचनाद्रामो वक्तव्यो मम संग्रहः ॥ [ पुनरप्याह सौमित्रिं शोकवेगसमाप्लुता ॥ ]
निरीक्ष्य माऽद्य गच्छ त्वमृतुकालातिवर्तिनीम् ॥ १८ ॥
एवं ब्रुवन्त्यां सीतायां लक्ष्मणो दीनचेतनः ॥ शिरसा वन्द्य धरणीं व्याहर्तुं न शशाक ह ॥ १९ ॥
प्रदक्षिणं च तां कृत्वा रुदन्नेव महास्वनः ॥ ध्यात्वा मुहूर्तं तामाह किं मां वक्ष्यसि शोभने ॥ २० ॥
दृष्टपूर्वं न ते रूपं पादौ दृष्टौ तवानघे ॥ कथमत्र हि पश्यामि रामेण रहितां वने ॥ २१ ॥
इत्युक्त्वा तां नमस्कृत्य पुनर्नावमुपारुहत् ॥ आरुह्य च पुनर्नावं नाविकं चाभ्यचोदयत् ॥ २२ ॥
स गत्वा चोत्तरं तीरं शोकभारसमन्वितः ॥ संमूढ इव दुःखेन रथमध्यारुहद्द्रुतम् ॥ २३ ॥
मुहुर्मुहुः परावृत्य दृष्ट्वा सीतामनाथवत् ॥ चेष्टतीं परतीरस्थां लक्ष्मणः प्रययावथ ॥ २४ ॥
दूरस्थं रथमालोक्य लक्ष्मणं च मुहुर्मुहुः ॥ निरीक्षमाणां तूद्विग्नां सीतां शोकः समाविशत् ॥ २५ ॥
सा दुःखभारावनता यशस्विनी यशोधना नाथमपश्यती सती ॥
रुरोद सा बर्हिणनादिते वने महास्वनं दुःखपरायणा सती ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

शेषः ॥ १०—१२ ॥ अयशोभीरुणैव त्वया त्यक्ता अन्यथानेत्यर्थः । वचनीयं जुगुप्सन । तन्मया परिहर्तव्यं । त्वदाज्ञया वनस्थल इति शेष' ॥ १३—१७ ॥ ऋतुकालातिवर्तिनी गर्भलक्षणवती ॥ १८—२६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने अष्टचत्वारिंशः सर्ग' ॥ ४८ ॥

---

**ति०** जनेअयशोभीरुणाजननिमित्तायशोभीरुणैवत्वयात्यक्ता । नान्यथेतिजानामीतिशेष । वचनीय निन्दा । अपवादोऽभिशाप । **स०** अयशोभीरुणा अजने वने त्यक्ता । तेकर्म अवचनीय अनिन्दनीयस्यात् । ममापवाद परपुरुषनिवासवासिनीतिसमुत्थितइत्यहंत्यक्तानान्यथेतिवक्तव्यइतिभाव ॥ १३ ॥ **स०** तववचनीयत्वंमयाहियत परिहर्तव्य सीता कृताविहितव्यापारेतिममैवापयशोभवतु नभवतुमत्सगिताप्रयुक्तमपयशस्तेइतितत्परिहृतिप्रकारोबोध्य । तत्रनिमित्तत्वहीत्यादि ॥ १३ ॥ **स०** एतादृशेपिसमयेनिदेशनादेवदेवदेव्योर्विडंबनमितिज्ञायते। **ति०** एपधर्म कस्तत्राह—यत्त्विति । धर्मेण धर्मकृतलक्षणेनयदवाप्नुयात्पुण्यं एषएव परमोधर्म । **स०** धर्मेणयत्समवाप्नुयाद्भवान्मुक्त तेनकीर्तिरनुत्तमातेइतिसबन्ध ॥ १५ ॥ **ति०** तवदुरवस्थापश्येत्यतोनचिन्ता कान्त ममेत्याह—अहत्विति । नरर्षभ अविनाशिश्रेष्ठ 'नरौताववविनाशित्वात्'इतिऋग्भाष्योक्ते. । यथापौराणामपवादंपरिहृत्य स्थितिर्भवति तथैवरघुनन्दनवर्तस्वेतिशेष ॥ १६ ॥ **ति०** मम सग्रह मयारामप्रतिवक्तव्यसदेशस्यसग्रहइत्यर्थ । **स०** सग्रह आज्ञाविज्ञापनासक्षेप ऋतुकालातिवर्तिनीमिति । पुराप्राप्तापवादस्त्वस्तु । पुन पुनरयशोनसपादनीयमितिभाव । वदसीतिवक्तव्ये वक्ष्मसीतिव्यत्यास शोकवशादितिज्ञेयम् । यद्यपिसीता मागुर्विणीलक्ष्मणोज्ञातवानितिज्ञातवती । 'राज्ञ शासनमादायतथैवकिलदौर्हृदं' इतितदुक्ते । तथापिपुनर्दार्ढ्यायतथोक्तवतीतिज्ञेय ॥ १८ ॥ **स०** हेसीते तवरूपं पादोपरितन दृष्टपूर्वं पूर्वदृष्टं न । नमनसमयेपादावेवदृष्टौ ॥ २० ॥ **ति०** अनाथवत् अनाथेव । नतुवस्तुतोऽनाथा । पूर्णचिद्घनस्वरूपत्वादितिभाव ॥ २४ ॥ **स०** यशोधरानाथं

[ **पा०** ] १ च. प्रजावादेनभीरुणा. २ झ. दपवाद समुत्थित . ३ झ यथापवाद. ४ इदमर्ध ख पाठेदृश्यते ५ झ. ठ. यशोधरानाथं.

# एकोनपञ्चाशः सर्गः ॥ ४९ ॥

मुनिकुमारकैः सीतारोदनादिकनिवेदितेनवाल्मीकिना सत्वरंसीतासमीपमेत्य ससान्त्वनमर्घ्यादिनासंपूजनपूर्वकं तस्याः स्वाश्रमप्रापणेन तापसी प्रति तत्परिरक्षणचोदना ॥ १ ॥

सीतां रुदन्तीं दृष्ट्वा तां तत्र वै मुनिदारकाः ॥ प्राद्रवन्यत्र भगवानास्ते वाल्मीकिरुग्रधीः ॥ १ ॥
अभिवाद्य मुनेः पादौ मुनिपुत्रा महर्षये ॥ सर्वं निवेदयामासुस्तस्यास्तु रुदितस्वनम् ॥ २ ॥
अदृष्टपूर्वा भगवन्कस्याप्येषा महात्मनः ॥ पत्नी श्रीरिव संमोहाद्विरौति विकृतानना ॥ ३ ॥
भगवन्साधु पश्य त्वं देवतामिव खाच्च्युताम् ॥ नद्यास्तु तीरे भगवन्वरस्त्री काऽपि दुःखिता ॥ ४ ॥
दृष्टाऽस्माभिः प्ररुदिता दृढं शोकपरायणा ॥ अनर्हा दुःखशोकाभ्यामेका दीना ह्यनाथवत् ॥ ५ ॥
न ह्येनां मानुषीं विद्मः सत्क्रियाऽस्याः प्रयुज्यताम् ॥ आश्रमस्याविदूरे च त्वामियं शरणं गता ॥
त्रातारमिच्छते साध्वी भगवंस्त्रातुमर्हसि ॥ ६ ॥
तेषां तु वचनं श्रुत्वा बुद्ध्या निश्चित्य धर्मवित् ॥ तपसा लब्धचक्षुष्मान्प्राद्रवद्यत्र मैथिली ॥ ७ ॥
तं प्रयान्तमभिप्रेत्य शिष्या ह्येनं महामतिम् ॥ तं तु देशमभिप्रेत्य किंचित्पद्भ्यां महामतिः ॥ ८ ॥
अर्घ्यमादाय रुचिरं जाह्नवीतीरमागमत् ॥ ददर्श राघवस्येष्टां सीतां पत्नीमनाथवत् ॥ ९ ॥
तां सीतां शोकभारार्तां वाल्मीकिर्मुनिपुङ्गवः ॥ उवाच मधुरां वाणीं ह्लादयन्निव तेजसा ॥ १० ॥
स्नुषा दशरथस्य त्वं रामस्य महिषी प्रिया ॥ जनकस्य सुता राज्ञः स्वागतं ते पतिव्रते ॥ ११ ॥
आयान्ती चासि विज्ञाता मया धर्मसमाधिना ॥ कारणं चैव सर्वं मे हृदयेनोपलक्षितम् ॥ १२ ॥
तव चैव महाभागे विदितं मम तत्त्वतः ॥ सर्वं च विदितं मह्यं त्रैलोक्ये यद्धि वर्तते ॥ १३ ॥
अपापां वेद्मि सीते त्वां तपोलब्धेन चक्षुषा ॥ विस्रब्धा भव वैदेहि सांप्रतं मयि वर्तसे ॥ १४ ॥
आश्रमस्याविदूरे मे तापस्यस्तपसि स्थिताः ॥ तास्त्वां वत्से यथा वत्सं पालयिष्यन्ति नित्यशः ॥ १५ ॥
इदमर्घ्यं प्रतीच्छ त्वं विस्रब्धा विगतज्वरा ॥ यथा स्वगृहमभ्येत्य विषादं चैव मा कृथाः ॥ १६ ॥

सर्वं निवेदयामासुरित्येतद्विवृणोति—अदृष्टेत्यादि ॥ ३—४ ॥ अनर्हेति । दुःखस्येति शेषः ॥ ५—११ ॥ कारणमिति । आगमनकारणमित्यर्थः ॥ १२ ॥ तव चैवेति । शुद्धभावत्वमिति शेषः । मम मया । मह्यं मम ॥ १३ ॥ मयि वर्तस इति । मत्समीपे निवसिष्यसीत्यर्थः ॥ १४—१५ ॥ यथा स्वगृहम-

पदमेक । यशश्चवराच तयो स्वामी त । यशस्विनीयशोधरा यशस्विनीषुयशोधरेतिवा । पातिव्रत्ययशोवतीतिनागोजिभट्टोव्याचख्यौ सप्रमादीतिवा लेखकहस्तदोषोवेतिबोध्य । प्रागयशोवरा इदानीमयशस्विनीतिवा । साबर्हिणनादितेवने आबर्हिणनादितेन सहितंसाबर्हिणनादित । तस्मिन्वने ॥ २६ ॥ इत्यष्टचत्वारिंश सर्ग ॥ ४८ ॥

**ति०** मुनिदारका मुनिपुत्रा । उग्रधी उग्रतपोविषयबुद्धि ॥ १ ॥ **स०** सर्वं अनृतत्वभ्रमभ्रंशार्थं ॥ २ ॥ **ति०** दु खशोकाभ्या दीनाअनाथवद्वर्तते । तामिमासाधुपश्ये । दृष्ट्वाऽनुगृहाणच ॥ ५ ॥ **ति०** एतदुत्तर ता 'तासीता'इतिश्लोक । मध्ये 'नह्येनामानुषीविद्म ' इत्यादिश्लोकचतुष्टयमर्धाधिकप्रक्षिप्तमितिकतक । तासीता मुनिपुत्रैर्दृष्ट्वाऽनुग्राह्यत्वेनोक्ताशोकग्रस्ता । तासीतातत्समीपेगत्वादृष्ट्वावाल्मीकिरुवाचेतिसोपस्कार सबन्ध ॥ १० ॥ **ति०**धर्मसमाधिना योगजधर्मलब्धध्यानपरिपाकेन । कारणच आगमनकारण । हृदयेनोपलक्षित । ध्यानेनेतिभाव ॥१२॥ **शि०** ते त्वा । अपापा अवलोकनमात्रेणपापनिवर्तिका । वेद्मि । मयि मत्समीपे । यतस्त्ववर्तसे अत विस्रब्धा रामप्रीतिविषयकविश्वासयुक्ताभव ॥ १४ ॥ **स०** तापस्य तपसिस्थितायोषित.। अनेनपुरुषस्यतवसमीपोपगते पुनरपिपूर्वतएवश्रान्ताया.कागतिरितिशङ्कानिराकृता ॥ १५ ॥ **स०** स्वगृह विदेहगेहं ॥ १६ ॥ इत्येकोनपञ्चाश सर्ग. ॥ ४९ ॥

[ **पा०** ] १ क ख ग. ङ—ट. सीतातुरुदतीदृष्ट्वातेतत्र. २ झ ठ. सर्वे ३ ङ. च छ झ ञ पश्येस्त्व. ४ नह्येनामित्यादिश्लोकचतुष्टयं झ. पाठेनदृश्यते. ५ ग. मनसावीक्ष्यचक्षुष्मान् ६ घ. विलपन्तीसुशोकार्ता. ७ झ ञ. ट. सीतेते.

श्रुत्वा तु भाषितं सीता मुनेः परममद्भुतम् ॥ शिरसा वन्द्य चरणौ तथेत्याह कृताञ्जलिः ॥ १७ ॥
तं प्रयान्तं मुनिं सीता प्राञ्जलिः पृष्ठतोऽन्वगात् ॥ १८ ॥
तं दृष्ट्वा मुनिमायान्तं वैदेह्या मुनिपत्नयः ॥ उपाजग्मुर्मुदा युक्ता वचनं चेदमब्रुवन् ॥ १९ ॥
स्वागतं ते मुनिश्रेष्ठ चिरस्यागमनं च ते ॥ अभिवादयामस्त्वां सर्वा उच्यतां किं च कुर्महे ॥२०॥
तासां तद्वचनं श्रुत्वा वाल्मीकिरिदमब्रवीत् ॥ सीतेयं समनुप्राप्ता पत्नी रामस्य धीमतः ॥ २१ ॥
स्नुषा दशरथस्यैषा जनकस्य सुता सती ॥ अपापा पतिना त्यक्ता परिपाल्या मया सदा ॥ २२ ॥
इमां भवन्त्यः पश्यन्तु स्नेहेन परमेण हि ॥ गौरवान्मम वाक्याच्च पूज्या वोऽस्तु विशेषतः ॥ २३ ॥
मुहुर्मुहुश्च वैदेहीं प्रणिधाय महायशाः ॥ स्वमाश्रमं शिष्यवृतः पुनरायान्महातपाः ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## पञ्चाशः सर्गः ॥ ५० ॥

सीताविसर्जनविषादेनरामप्रतिशोचन्तंसौमित्रिंप्रति सुमन्त्रेण रामस्य सीतायाभ्रातॄणांचविप्रयोगस्यावश्यंभावित्वस्य दशरथंप्रतिदुर्वाससापूर्वमेवोक्तत्वनिवेदनेन परिसान्त्वने लक्ष्मणेनतंप्रति विस्तरेणदुर्वासोवचनानुवदनचोदना ॥ १ ॥

दृष्ट्वा तु मैथिलीं सीतामाश्रमे संप्रवेशिताम् ॥ संतापमगमद्घोरं लक्ष्मणो दीनचेतनः ॥ १ ॥
अब्रवीच्च महातेजाः सुमन्त्रं मन्त्रसारथिम् ॥ सीतासंतापजं दुःखं पश्य रामस्य सारथे ॥ २ ॥
ततो दुःखतरं किंनु राघवस्य भविष्यति ॥ पत्नीं शुद्धसमाचारां विसृज्य जनकात्मजाम् ॥ ३ ॥
व्यक्तं दैवादहं मन्ये राघवस्य विनाभवम् ॥ वैदेह्या सारथे नित्यं दैवं हि दुरतिक्रमम् ॥ ४ ॥
यो हि देवान्सगन्धर्वानसुरान्सह राक्षसैः ॥ निहन्याद्राघवः क्रुद्धः स दैवमनुवर्तते ॥ ५ ॥
पुरा रामः पितुर्वाक्याद्दण्डके विजने वने ॥ उषित्वा नव वर्षाणि पञ्च चैव महावने ॥ ६ ॥
ततो दुःखतरं भूयः सीताया विप्रवासनम् ॥ पौराणां वचनं श्रुत्वा नृशंसं प्रतिभाति मे ॥ ७ ॥
को नु धर्माश्रयः सूत कर्मण्यस्मिन्यशोहरे ॥ मैथिलीं प्रति संप्राप्तः पौरैर्हीनार्थवादिभिः ॥ ८ ॥

---

भ्येत्येति । तथैवावतिष्ठस्वेति शेष. ॥ १६—१८ ॥ मुदा युक्ता इति । मुनिपत्नय' तापस्यः । अब्रुवन्निति । वाल्मीकिमिति शेष. ॥ १९ ॥ चिरस्यागमनमिति । प्रतीक्ष्य स्थिता वयं अभिवादयामहे । एतेन सीतायाः समाश्वासादिना विलम्बो जात इत्यवगम्यते ॥ २० —२३ ॥ प्रणिधाय तापसीना हस्ते दत्त्वा ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

मन्त्रसहायभूतः सारथिर्मन्त्रसारथिः । सीतासंतापजं सीताविरहसंतापजमित्यर्थः ॥ २—३ ॥ विनाभवं सीतावियोगेनावस्थान वैदेह्या सार्धं विनाभवमित्यर्थ । दैवात् प्राग्भवाददृष्टादित्यर्थः ॥ ४ ॥ दैवमनुवर्तते नतु तन्निरसितु शक्नोतीत्यर्थः ॥ ५—६ ॥ ततः सीताया. विप्रवासन नृशस क्रूरकृत्यमिति प्रतिभाति ॥ ७ ॥ हीनार्थवादिभि. पौरैर्हेतुभिः । मैथिली प्रति यशोहरे साध्वी वने विसृष्टवानिति अपयशस्करेऽस्मिन् कर्मणि सीतापरित्यागरूपकर्मण्यनुष्ठिते सति कोनु धर्माश्रयः धर्मपरिग्रहः रामेण

---

**ति०** पत्नींविसृज्ययस्थित । ततोविसृज्यस्थिते ॥ ३ ॥ **ति०** यत्पुरादण्डकेउषितवादु खमन्वभूत् तत्पितृवाक्यगौरवादुचितमितिशेष ॥ ६ ॥ **ति०** इदंत्वपरिपाल्यवचसापौराणावचनश्रुत्वाऽपरिमितकालत्वादु खतरसीताविप्रवासनयत्कृतवास्तन्नृशंस क्रूरकल्पमितिभाति ॥ ७ ॥ **ति०** कोनुधर्माश्रय संप्राप्तोरामेण । धर्माणासत्स्त्रीमूलत्वात्तत्त्यागेसर्वोपिधर्मोनाशितएवेत्यर्थः ।
[ पा० ] १ ग. च—ठ. परिदाय घ. परिदायमहातपा . २ क—घ. झ—ठ. दैवंपर्युपासते.

एता वाचो बहुविधाः श्रुत्वा लक्ष्मणभाषिताः ॥ सुमन्त्रः श्रद्धया प्राज्ञो वाक्यमेतदुवाच ह ॥ ९ ॥
न संतापस्त्वया कार्यः सौमित्रे मैथिलीं प्रति ॥ दृष्टमेतत्पुरा विप्रैः पितुस्ते लक्ष्मणाग्रतः ॥ १० ॥
भविष्यति दृढं रामो दुःखप्रायोपि सौख्यभाक् ॥ प्राप्स्यते च महाबाहुर्विप्रयोगं प्रियैर्ध्रुवम् ॥ ११ ॥
त्वां चैव मैथिलीं चैव शत्रुघ्नभरतावुभौ ॥ संत्यजिष्यति धर्मात्मा कालेन महता महान् ॥ १२ ॥
इदं त्वयि न वक्तव्यं सौमित्रे भरतेऽपि वा ॥ राज्ञा वो व्याहृतं वाक्यं दुर्वासा यदुवाच ह ॥ १३ ॥
महाजनसमीपे च मम चैव नरर्षभ ॥ ऋषिणा व्याहृतं वाक्यं वसिष्ठस्य च सन्निधौ ॥ १४ ॥
ऋषेस्तु वचनं श्रुत्वा मामाह पुरुषर्षभः ॥ सूत न क्वचिदेवं ते वक्तव्यं जनसन्निधौ ॥ १५ ॥
तस्याहं लोकपालस्य वाक्यं तत्सुसमाहितम् ॥ नैव जात्वनृतं कार्यमिति मे सौम्य दर्शनम् ॥ १६ ॥
सर्वथैव न वक्तव्यं मया सौम्य तवाग्रतः ॥ यदि ते श्रवणे श्रद्धा श्रूयतां रघुनन्दन ॥ १७ ॥
यद्यप्यहं नरेन्द्रेण रहस्यं श्रावितः पुरा ॥ तथाप्युदाहरिष्यामि दैवं हि दुरतिक्रमम् ॥ १८ ॥

---

सम्प्राप्तः । प्रत्युत साध्वीत्यागादधर्म एव स्यादिति भावः ॥ ८—९ ॥ दृष्टमिति । हे लक्ष्मण पुरा तव पितुरग्रतः अल्पभाग्यवान्राम. दुःखप्रायो भविष्यतीत्येतद्दृष्ट दृष्ट्वा मह्यमुक्तमित्यर्थः । फलितमाह—प्राप्स्यत इति ॥ १०—१२ ॥ इद रहस्य त्वयि भरते वा न वक्तव्य । इदंशब्दार्थमाह—राज्ञेति । राज्ञा दशरथेन । वः तदिद त्वयि भरतेपि न वक्तव्यमित्यर्थः ॥ १३ ॥ दुर्वाससो वचन कथ त्वयावगतमित्यत्राह—महाजनेति ॥ महाजनसमीपे दशरथसमीप इत्यर्थः । मम वसिष्ठस्य च सन्निधौ । ऋषिणा दुर्वाससा वाक्यं व्याहृत । त्रिभिरेवेद वृत्त ज्ञातमिति भावः ॥ १४ ॥ एव ते त्वया श्रुत रहस्यमित्यर्थः ॥ १५ ॥ समाहितं सम्यग्गुप्तं तस्य वाक्य मया जातु अनृतं न कार्यमिति मम दर्शन मतं । तस्मात् त्वयि भरते च न वक्तव्यमिति भाव. ॥ १६ ॥ न वक्तव्यमिति । राजरहस्यमिति शेषः । तवातिश्रद्धारहितस्य ॥ १७ ॥ तथाप्य-

---

स० कोनुधर्माश्रय प्राप्त 'धर्मेचार्थेच'इति सकल्पपूर्वकविवाहिताऽपवाहितेतिनधर्मोरामस्येतिभाव ॥ ८ ॥ स० दृष्टं तपस्सामर्थ्येन । श्रावितच ॥ १० ॥ ति० दृढ ध्रुवं । दु खप्राय दु खबहुल । अतोविसौख्यभाक् सौख्यवियोगभाक्चभविष्यतीतिदृष्टमित्यन्वय । यदेव अत प्राप्स्यतेचेत्यादि । शि० विसौख्यभाक् विशेषसुखभोक्तापिराम प्रियै विप्रयोगं वियोगं प्राप्स्यते । अतएव रामोपि दु खप्राय दु खिसदृश । भविष्यति । दृढ निश्चितमेतत् ॥ ११ ॥ स० महताकालेन निर्याणसकेतसमयेन । महानित्यनेन कालसबन्धिमहत्त्वरामायत्तमितिसूचयति । भरतशत्रुघ्नयोस्त्यागोवनवाससमये । त्वांमैथिलींच मैथिल्या प्रस्तुतस्त्याग । लक्ष्मणस्यस्वस्मात्पूर्वंदुर्वाससोतस्त्यागात्त्याग । यत्तुनागोजिभट्टेन 'शत्रुघ्नभरतयोस्तु मधुराराज्यगन्धर्वराज्ययो करणायप्रतिष्ठापनंत्यागइत्युक्तं । परतुतद्दुरुक्त । दु खकरत्यागप्रस्तावाननुगुणत्वात् ॥ १२ ॥ ति० राज्ञा दशरथेन । वोयुष्मान्प्रति व्याहृतं एषाकथमग्रेभावीत्येवं प्रश्नवाक्यश्रुत्वा यद्दुर्वासाउवाच । तदिद त्वयि त्वया सौमित्रे शत्रुघ्नेभरतेच नवाच्यं । स० एतावत्कालपर्यन्तकुतोनाविष्कृतमिदमित्यतआह—इदमिति । हेसौमित्रे त्वयिभरतेपिनवक्तव्यं । अस्वास्थ्यापादकत्वात् । दुर्वासायदुवाच वोयुष्मद्विषयेयद्व्याहृत राज्ञा तत्तदिद ॥ १३ ॥ ति० दुर्वासो वाक्यत्वयाकथमवगतंतत्राह—महाजनेति । महान्तोजनायस्यदशरथस्य । तस्यममचसनिधौ । स० कथकथनंदुर्वासोदशरथयोस्त्वयाश्रुतमित्यतआह—महाजनसमीपइति । महाजन पूजायोग्यो जनोराजा । तत्समीपे ममचैवसमीपे । एतेन पुरुकरुणापदतयास्वस्याप्तत्वंसूचितंभवति । वसिष्ठस्यचसनिधौ । एतावत्पर्यन्तत्रयाणामेवतदवगमइतिभाव ॥ १४ ॥ ति० पुरुषर्षभोदशरथ ॥ १५ ॥ स० तस्यलोकपालस्यदशरथस्यवाक्यंनानृतंकार्यमिति सुसमाहित सावधानचित्तोभविष्यामीतिमेदर्शनं सकल्प । स० अनृतीकरणतु यत्रक्वचित्प्रकाशनेन । मेदर्शन ज्ञानं ॥ १६ ॥ शि० यदिश्रवणेतेश्रद्धा तदाश्रूयता । एतेनातिश्रद्धालुसनिधौवक्तव्यमेवेतिराजाज्ञासूचिता । ति० यदेवमत सर्वथेति । तवाग्रेनवक्तव्यं । रहस्यश्रवणेऽत्युत्कटश्रद्धारहितस्येत्यर्थ । श्रद्धायातुवक्ष्यामीत्याह—**यदितेइति** । लक्ष्मणस्यपरमाप्तत्वाद्राजपुत्रत्वाच्च जनसनिधावेवनरेन्द्रेणप्रतिषेधाच्चदु खितदु खनिवारणायरहस्यप्रकटनेपिनदोष इतिसुमन्त्राशय ॥ स० सर्वथा अनापद्दशाया ॥ १७ ॥ ति० यद्यपिनरेन्द्रेणरहस्यमप्रकाश्यमित्युक्त । तथापि कथनयोग्येकालेएतस्यनिकटेउदाहरिष्यामि । एवज्ञा-

[ पा० ] १ ख. झ ञ. ट. दु खप्रायोविसौख्यभाक्. क. ग. दु खप्रायोऽल्पसौख्यवान् घ. दु खप्रायोऽल्पभाग्यवान्. २ झ. ठ. तत्सुसमाहित..

येनेदमीदृशं प्राप्तं दुःखं शोकसमन्वितम् ॥ न त्वया भरते वाच्यं शत्रुघ्नस्यापि सन्निधौ ॥ १९ ॥
तच्छ्रुत्वा भाषितं तस्य गम्भीरार्थपदं महत् ॥ तथ्यं ब्रूहीति सौमित्रिः सूतं वाक्यमथाब्रवीत् ॥२०॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

---

## एकपञ्चाशः सर्गः ॥ ५१ ॥

चातुर्मास्यनियमनिर्वर्तनायवसिष्ठाश्रमवासिनिसतिदुर्वाससि दशरथेनतंप्रति रामादिसंबन्धिभविष्यद्वृत्तान्तनिवेदनप्रार्थने तेनतंप्रति रामस्यभृगुशापेनसीतावियोगस्यावश्यभावित्वकथननिवेदनेन सुमन्त्रेणसौमित्रिसमाश्वासनम् ॥ १ ॥

तथा संचोदितः सूतो लक्ष्मणेन महात्मना ॥ तद्वाक्यमृषिणा प्रोक्तं व्याहर्तुमुपचक्रमे ॥ १ ॥
पुरा नाम्ना हि दुर्वासा अत्रेः पुत्रो महामुनिः ॥ वसिष्ठस्याश्रमे पुण्ये वार्षिक्यं समुवास ह ॥ २ ॥
तमाश्रमं महातेजाः पिता ते सुमहायशाः ॥ पुरोहितं महात्मानं दिदृक्षुरगमत्स्वयम् ॥ ३ ॥
स दृष्ट्वा सूर्यसंकाशं ज्वलन्तमिव तेजसा ॥ उपविष्टं वसिष्ठस्य सव्यपार्श्वे महामुनिम् ॥ ४ ॥
तौ मुनी तापसश्रेष्ठौ विनीतो ह्यभिवादयत् ॥ स ताभ्यां पूजितो राजा स्वागतेनासनेन च ॥
पाद्येन फलमूलैश्च उवास मुनिभिः सह ॥ ५ ॥
तेषां तत्रोपविष्टानां तास्ताः सुमधुराः कथाः ॥ बभूवुः परमर्षीणां मध्यादित्यगतेऽहनि ॥ ६ ॥
ततः कथायां कस्यांचित्प्राञ्जलिः प्रग्रहो नृपः ॥ उवाच तं महात्मानमत्रेः पुत्रं तपोधनम् ॥ ७ ॥
भगवन्किं प्रमाणेन मम वंशो भविष्यति ॥ किमायुश्च हि मे रामः पुत्राश्चान्ये किमायुषः ॥ ८ ॥
रामस्य च सुता ये स्युस्तेषामायुः कियद्भवेत् ॥ काम्यया भगवन्ब्रूहि वंशस्यास्य गतिं मम ॥ ९ ॥
तच्छ्रुत्वा व्याहृतं वाक्यं राज्ञो दशरथस्य च ॥ दुर्वासाः सुमहातेजा व्याहर्तुमुपचक्रमे ॥ १० ॥

---

प्रकाश्यस्यापि प्रकाशने हेतुमाह—दैवं हि दुरतिक्रममिति । हि यस्माद्दैवं प्राचीन कर्म दुरतिक्रम तस्मादित्यर्थ. ॥ १८ ॥ दुरतिक्रमे हेतु'-येनेदमिति ॥ एवं भवद्दुःखातिशयदर्शनात् श्रद्धालवे तुभ्यं मया वक्तव्यमिति भावः ॥ १९ ॥ गम्भीरार्थपदमिति । पूर्वोक्त भाषितं ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने पञ्चाश. सर्गः ॥ ५० ॥

---

पुरा वार्षिक्य वर्षासु भवं चातुर्मास्यनियममुद्दिश्योवास दुर्वासा हीति नाम्ना ॥ २—५ ॥ मध्यादित्यगते मध्यगतादित्ययुक्त इत्यर्थः । मध्याह्न इति फलितार्थः ॥ ६ ॥ प्रग्रह. सविनय इत्यर्थः ॥ ७ ॥ किंप्रमाणेन उत ततोऽप्यधिकप्रमाणेनेत्यर्थः । किमायुश्च

---

त्वादु खनकार्यमित्याह—दैवंहीति । येनदैवेनेदृशंदु खंप्राप्ततद्दैवंदुरतिक्रममितिज्ञात्वाशोकंत्यजेत्यर्थ । दैवंहिसुमहद्भूत येनेदमीदृशंप्राप्यमितिचपाठे राज्ञाप्रकाश्यत्वोक्तौहेतुर्दैवंहीत्यादि । येनदैवेनप्राचीनकर्मणाशोकसममीदृशदु खत्वयाप्राप्य प्रापणीयं । तद्दैवंहि यस्मात्सुमहद्भूत केनापिदुरशकज्ञान । अतोराज्ञाप्रकाश्यमुक्त । यदितुपूर्वंभवदादीनामग्रेउक्तंस्यात्तदास्यार्थस्यावश्यभावित्वज्ञानात्तवेदृशदुःखंनस्यादितिकतकादय । अतोनत्वयाभरतादिसन्निधौवाच्यमितिशेष । स० इदं सपत्प्रदराममपीदृशंदु खंप्राप्तं । शोकसमन्वितं शोकेन समनवो मन्त्रसहिता तैरितं सहितं दु खेनालोचकसहितमितियावत् ॥ १८ ॥ १९ ॥ स० गंभीरार्थपदं शोकपराणाझटित्यर्थोनभवेद्यथातथापदानागाभीर्यंज्ञेयं । तथ्य यथाममार्थो भवेत्तथाब्रूहि ॥ २० ॥ इतिपञ्चाश'सर्ग ॥ ५० ॥
ति० वार्षिक्यं यतीनावर्षाकालेभ्रमणनिषेधाद्वार्षिकमासचतुष्टयमेकत्रैवस्थितवानित्यर्थ ॥ २ ॥ ति० महामुनिं दुर्वासस ॥ ४ ॥ ति० प्रग्रह ऊर्ध्वबाहु । शि० प्रकृष्टोग्रहोज्ञानंयस्यस ॥ ७ ॥ ति० किंप्रमाणेन मत्पुत्रपर्यन्तं ततोऽप्यधिकंवा ॥८॥ स० काम्यया ममेच्छया ॥ ९ ॥

[ पा० ] १ क. चं. छ. झ. ञ. ट. सूतंतंवाक्यमब्रवीत्.

शृणु राजन्पुरावृत्तं तदा दैवासुरे युधि ॥ दैत्याः सुरैर्भर्त्स्यमाना भृगुपत्नीं समाश्रिताः ॥ ११ ॥
तया दत्ताभयास्तत्र न्यवसन्नभयास्तदा ॥ १२ ॥
तया परिगृहीतांस्तान्दृष्ट्वा क्रुद्धः सुरेश्वरः ॥ चक्रेण शितधारेण भृगुपत्न्याः शिरोऽहरत् ॥ १३ ॥
ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः ॥ शशाप सहसा क्रुद्धो विष्णुं रिपुकुलार्दनम् ॥ १४ ॥
यस्मादवध्यां मे पत्नीमवधीः क्रोधमूर्च्छितः ॥ तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ॥
तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् ॥ १५ ॥
[[१]एवं शापं भृगुर्दत्त्वा विष्णोः स्मृत्वा च वैभवम्]॥ शापाभि[२]हतचेताः स स्वात्मना भावितोऽभवत्॥१६॥
[ [३]पुनरेव ययौ तापमृषिर्दुर्मददुर्मदः ॥ विष्णुशक्तिमविद्वान्स प्रपेदे शापमूढताम् ॥ १७ ॥
चिरकालमसंज्ञोऽभूच्छापान्धतमसा वृतः ॥ दृष्ट्वा सप्तर्षयश्चैवं कृपां चक्रुश्च भक्तितः ॥ १८ ॥
त्यक्तशापः पुरस्तस्थौ मन्दं भृगुरथाब्रवीत् ॥ रक्षध्वं मां मुनिश्रेष्ठाः शापान्मत्पुरतः स्थिताः ॥१९॥
श्रुत्वा तु भृगुवाक्यं तमाहुश्च परमर्षयः ॥ स्तुत्यैर्ब्रह्मेशशक्राद्यैः स्तूयमानमहर्निशम् ॥
नारायणं प्रपद्यस्व स्तोत्रैरेव च सुव्रत ॥ २० ॥
भृगुणाऽऽराधितो विष्णुरागतः प्राह तं भृगुम् ॥ माभैर्भृगोऽनृतं वाक्यं न भविष्यति ते द्विज ॥
संमोचयसि पापान्मामहमेनं गृहीतवान् ॥ २१ ॥]
अर्चयामास तं देवं भृगुः शापेन पीडितः ॥ २२ ॥
[४]तपसाराऽऽधितो देवो ह्यब्रवीद्भक्तवत्सलः ॥ लोकानां [५]संहितार्थं तु तं शापं [६]ग्राह्यमुक्तवान् ॥ २३ ॥
इति शप्तो महातेजा भृगुणा पूर्वजन्मनि ॥ इहागतो हि पुत्रत्वं तव पार्थिवसत्तम ॥ २४ ॥

मे राम इति ॥८—१०॥ एव पृष्टश्चिरायुष्ट्वं दुःखोपेतं शापवशादिति वक्तु पीठिकामाह—शृणु राजन्नित्यादि ॥ ११—१४ ॥ अवध्या स्त्रीत्वादृषिपत्नीत्वाच्चेति भावः । बहुवार्षिक कालमित्यर्थ. ॥ १५ ॥ शापाभिहतचेताः पश्चात्तापपरीतचित्त इत्यर्थः । स्वात्मना भावितो भगवच्छापनिवृत्त्यर्थं स्वस्वरूपमचिन्तयदित्यर्थ. ॥ १६—२१ ॥ पुनः शापेन शापमोघभयेन पीडितः सन् भृगुस्त देवमर्चयामास ॥ २२ ॥ तं शापं मनुष्यजन्मादिप्रापकं लोकानां संहितार्थं सम्यग्रावणवधरूपहितसंपादनार्थं । ग्राह्य परिग्राह्यमेवेत्युक्तवान् ॥ २३ ॥ पूर्वजन्मनि काश्यपात् विष्णुसंज्ञकोपेन्द्रा-

ति० पुरा पूर्वस्मिन्काले । भृगुपत्नीं स्वपुरोहितमातर ॥ ११ ॥ शि० जननेदोषमाह—तत्रेति । पत्नी पत्नीमान् । पत्नीसहित इत्यर्थ । त्वंबहुवार्षिकंवियोग प्रियवियुक्तिं । भवान्प्राप्स्यते । पत्नीत्यत्रव्रीह्यादित्वादिनि । किंचग्रहणरूपधात्वर्थविहितणिच्प्रकृतिकघञन्तप्रकृतिकतद्धितान्तप्रकृतिकप्रथमान्त पत्नीति । अतएवप्रियैर्द्वुतमितिपूर्वेणनविरोध ॥ १५ ॥ शि० तु अनन्तर शापेन शापदानहेतुकतपश्च्युत्याअभिहतंचेतोयस्यसमुनि स्वात्मना स्वमनसा । भावित चिन्तान्वित । अभवत् ॥ ति० शापाभिहतचेता धर्मपक्षाश्रयदेवानुग्रहायप्रवृत्तईश्वर स्वोपास्य मयाऽप्यभिमानेनशप्त । ईश्वरत्वाद्यदितंनिरस्येत्तदामिथ्यावचनत्वेन नरकप्राप्ति स्यादितिपश्चात्तापपरीतचित्त । स्वात्मना अन्तर्यामिणाभावित स्वशापस्वीकारार्थमीश्वरप्रतितपश्चरणार्थंप्रेरितइत्यर्थ ॥ १६ ॥ ति० शापेन शापस्यमोघत्वभयेनपीडितोभृगुस्तदेवमर्चयामास ॥ २२ ॥ स० लोकानां जनाना । सप्रियार्थ रावणादिमारणेनसुखार्थं । तंशाप गृह्यं ग्राह्यं । अभीष्टसाधनत्वादब्रवीत् । उक्तवान् उक्तं उक्ति सूक्तिमान् । अब्रवीत् ओमितिशापंगृह्य स्वीकृत्य । मुक्तवान् । तंभृगुंतत्याजेतिवा । ति० किमब्रवीत्तदाह—लोकानामिति । लोकाना भूरादीना । सप्रियार्थं सम्यग्रावणवधादिरूपप्रियसपादनार्थं । तंशाप मनुष्यत्वादिप्रापकं गृह्य अङ्गीकार्यमेवस्वस्योक्तवान् ॥ २३ ॥ ति० इतिशप्त उक्तप्रकारेणशप्त । पूर्वजन्मनि कश्यपपुत्ररूपोपेन्द्रावतारे । अत्रपूर्वजन्मनिभृगुणाशप्तइत्युक्त्या तद्दृश्यर्षिशापोभावी

[ पा० ] १ इदमर्धं क पाठेदृश्यते. २ झ. ठ. हतचेतास्तु. ३ पुनरेवययावित्यादय गृहीतवानित्यन्ता.श्लोका क. च. ज. पाठेषुदृश्यन्ते ४ ज ततोऽब्रवीद्देवदेवःप्रीतिमान्भक्त. ५ झ—ठ. सप्रियार्थं. ६ झ. ञ. ट. गृह्य.

राम इत्यभिविख्यातस्त्रिषु लोकेषु मानद ॥ तत्फलं प्राप्स्यते चापि भृगुशापकृतं महत् ॥ २५ ॥
अयोध्यायाः पती रामो दीर्घकालं भविष्यति ॥ [ [1]तत्र पत्नीवियोगं च दीर्घकालं गमिष्यति ॥ ]
सुखिनश्च समृद्धाश्च भविष्यन्त्यस्य येऽनुगाः ॥ २६ ॥
दश वर्षसहस्राणि दश वर्षशतानि च ॥ रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति ॥ २७ ॥
समृद्धैश्चाश्वमेधैश्च इष्ट्वा परमदुर्जयः ॥ राजवंशांश्च [2]बहुशो बहून्संस्थापयिष्यति ॥ २८ ॥
द्वौ पुत्रौ तु भविष्येते सीतायां राघवस्य तु ॥ अन्यत्र न त्वयोध्यायां सत्यमेतन्न संशयः ॥ २९ ॥
सीतायाश्च ततः पुत्रावभिषेक्ष्यति राघवः ॥ ३० ॥
स सर्वमखिलं राज्ञो वंशस्याह गतागतम् ॥ आख्याय सुमहातेजास्तूष्णीमासीन्महामुनिः ॥ ३१ ॥
तूष्णींभूते तदा तस्मिन्राजा दशरथो मुनौ ॥ अभिवाद्य महात्मानौ पुनरायात्पुरोत्तमम् ॥ ३२ ॥
एतद्वचो मया तत्र मुनिना व्याहृतं पुरा ॥ श्रुतं हृदि च निक्षिप्तं नान्यथा तद्भविष्यति ॥ ३३ ॥
एवंगते न संतापं कर्तुमर्हसि राघव ॥ सीतार्थे राघवार्थे वा दृढो भव नरोत्तम ॥ ३४ ॥
श्रुत्वा तु व्याहृतं वाक्यं सूतस्य परमाद्भुतम् ॥ प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् ॥ ३५ ॥
ततः संवदतोरेवं सूतलक्ष्मणयोः पथि ॥ अस्तमर्के गते वासं [3]केशिन्यां तावथोषतुः ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

वतारे ॥ २४ ॥ तत्फलं पत्नीवियोगेनचिरकालवासरूप ॥२५—३० ॥ सः दुर्वासा इत्यर्थः ॥ ३१—३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

---

अत्रापिशरीरेभगवत सूचित । सपाद्मेदर्शित । 'आहूयलक्ष्मणप्राहरामोराजीवलोचन । शृणुमेवचनंगुह्यसीतासंत्यागकारणम् । वाल्मीकिनाथभृगुणाशप्तोस्मिकिलक्ष्मण । तस्मादेनात्यजाम्यद्यजनोनैवात्रकारणम् ।' इति । वाल्मीकेरपिप्राचेतसत्वाद्भृगुवंश्यत्वेनभृगुत्वमस्तीतिवदन्ति । एतच्चनिरूपितबालकाण्डेविस्तरेणास्माभिर्ग्रन्थोपक्रमेमानिषादेतिश्लोके ॥ २४ ॥ **शि०** शापेनतद्दानेनपीडितोभृगु देवविष्णु अर्चयामास । देवस्त्वब्रवीत् । तद्वचनाकारमाह—लोकानामिति । लोकाना रावणादिभ्योभीताना । सप्रियार्थतंभवदुक्तशाप गृह्य मयाग्राह्यमेवावेहीतिशेष । इति वचनंपूर्वजन्मनि जन्मन.पूर्वसमयेभृगुणाशप्तोविष्णुरुक्तवान् । इतिहेतो त्रिषुलोकेषुअभिविख्यातोविष्णु भरतइत्यर्थ । रामे रामजन्मसनिधौतवपुत्रत्वइहायोध्यायागत । तत्र प्रमाणं 'वैकुण्ठेशस्तुभरत क्षीराब्धीशस्तुलक्ष्मण । शत्रुघ्नस्तुस्वयभूमारामसेवार्थमागता 'इत्यादि । अतएवभृगुशापकृतंमहत्फलं प्राप्स्यते । रामस्तुदीर्घकाल बहुकालपर्यन्त अयोध्याधिपति प्रकटायोध्यापालकोभविष्यति । एतेन भरतोद्देश्यकभृगुशापहेतुकभरतदु खभोगार्थमपिरामस्यदण्डकारण्यविवासनंसीतात्यागश्चेतिसूचित । श्लोकत्रयमेकान्वयि ॥ २३—२५ ॥ **ति०** ब्रह्मलोकं हिरण्यगर्भस्यलोकंवैकुण्ठं । तस्यापिहिरण्यगर्भलोकैकदेशत्वमितिभाव । **स०** ब्रह्म लोकमितिपदद्वयं । ब्रह्म तदभिन्नोराम । लोकं स्वलोकंवैकुण्ठ । ब्रह्मणश्चतुर्मुखस्यलोकमितिवा । 'द्वितीययाब्रह्मसदस्यधीश्वरस्तेनार्चित ' इत्याचार्योक्ते । ब्रह्मण. स्वस्यलोकमितिवा । 'अयापरयानिजालये । तृतीयरूपेण निजपदप्रभुव्रजन्तं'इत्यादितदुत्तरतदुक्ते ॥ २७ ॥ **ति०** बहून्राजवंशान् लक्ष्मणादिपुत्रद्वारेतिभावः । एतेन रामपुत्राणामपिचिरजीवित्वमुक्तप्रायमेव । **स०** राजवंशान् इतरराजवंशान् बहून्संस्थापयिष्यति स्वस्वराज्ये । अथवा पारोक्ष्येणनिर्देशोऽयं । राज्ञस्त्ववशान् भरतादिसुतद्वारा । बहुश पूर्णसुख. ॥ २८ ॥ **स०** श्रुतं नबहि प्रकाशितं । नापिविस्मृतमित्याह—**हृदीति** ॥ ३३ ॥ इत्येकपञ्चाश सर्ग ॥ ५१ ॥

[ **पा०** ] १ इदमर्धं च. ज. पाठयोर्दृश्यते. २ क—घ. ज. काकुत्स्थोबहून् ३ क ख, ग ज. गोमत्यां

## द्विपञ्चाशः सर्गः ॥ ५२ ॥

सुमन्त्रेणसहकेशिन्यांरात्रियापनेन प्रभातेअयोध्यामागतेनलक्ष्मणेन श्रीरामे सप्रणामंवाल्मीक्याश्रमेसीताविसर्जननिवेदनपूर्वकं रामसमाश्वासनम् ॥ १ ॥

तत्र तां रजनीमुष्य केशिन्यां रघुनन्दनः ॥ प्रभाते पुनरुत्थाय लक्ष्मणः प्रययौ तदा ॥ १ ॥
ततोऽर्धदिवसे प्राप्ते प्रविवेश महारथः ॥ अयोध्यां रत्नसंपूर्णां हृष्टपुष्टजनावृताम् ॥ २ ॥
सौमित्रिस्तु परं दैन्यं जगाम सुमहामतिः ॥ रामपादौ समासाद्य वक्ष्यामि किमहं गतः ॥ ३ ॥
तस्यैवं चिन्तयानस्य भवनं शशिसन्निभम् ॥ रामस्य परमोदारं पुरस्तात्समदृश्यत ॥ ४ ॥
राज्ञस्तु भवनद्वारि सोवतीर्य रथोत्तमात् ॥ अवाङ्मुखो दीनमनाः प्रविवेशानिवारितः ॥ ५ ॥
स दृष्ट्वा राघवं दीनमासीनं परमासने ॥ नेत्राभ्यामश्रुपूर्णाभ्यां ददर्शाग्रजमग्रतः ॥ ६ ॥
जग्राह चरणौ तस्य लक्ष्मणो दीनचेतनः ॥ उवाच दीनया वाचा प्राञ्जलिः सुसमाहितः ॥ ७ ॥
आर्यस्याज्ञां पुरस्कृत्य विसृज्य जनकात्मजाम् ॥ गङ्गातीरे यथोद्दिष्टे वाल्मीकेराश्रमे शुचौ ॥ ८ ॥
तत्र तां च शुभाचारामाश्रमान्ते यशस्विनीम् ॥ पुनरप्यागतो वीर पादमूलमुपासितुम् ॥ ९ ॥
मा शुचः पुरुषव्याघ्र कालस्य गतिरीदृशी ॥ त्वद्विधा न हि शोचन्ति बुद्धिमन्तो मनस्विनः ॥१०॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ॥ संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ११
तस्मात्पुत्रेषु दारेषु मित्रेषु च धनेषु च ॥ नातिप्रसङ्गः कर्तव्यो विप्रयोगो हि तैर्ध्रुवम् ॥ १२ ॥
शक्तस्त्वमात्मनाऽऽत्मानं विनेतुं मनसैव हि ॥ लोकान्सर्वांश्च काकुत्स्थ किं पुनः शोकमात्मनः १३
नेदृशेषु विमुह्यन्ति त्वद्विधाः पुरुषर्षभाः ॥ अपवादः स किल ते पुनरेष्यति राघव ॥ १४ ॥
यदर्थं मैथिली त्यक्ता अपवादभयान्नृप ॥ सोपवादः पुरे राजन्भविष्यति न संशयः ॥ १५ ॥

---

तत्र पथीत्यर्थ ॥ १—५ ॥ नेत्राभ्यामश्रुपूर्णाभ्यामुपलक्षितमग्रजं ॥ ६—८ ॥ पादमूल तवेति शेपः ॥ ९—११ ॥ अतिप्रसङ्गः अत्यासक्ति ॥१२॥ शक्तस्त्वमात्मनात्मान विनेतु मनसैव हीति ॥ आत्मना स्वयमेव मनसैव करणेनात्मान स्वात्मान लोकांश्च विनेतुं शिक्षितु शक्तः । सांसारिकदुःखाद्वारयितुमित्यर्थ. ॥ १३ ॥ अपवाद' पुनरेष्यति प्रकारान्तरेणेति शेषः ॥ १४ ॥ तदेवोपपादयति—यदर्थमिति ॥ हे नृप परीवादभयाद्भीतेन त्वया यदर्थ यदपवादपरिहारार्थ मैथिली त्यक्ता सोपवादः पुन. प्रकारान्तरेण भविष्यति । सीतामपवादात्त्यक्त्वा पुनः शोचति । तस्मात्तस्यामतिमात्रोयं कामुकस्य रामस्यानुराग

---

**स०** केशिनीतिकेचननदीकेचनग्रामंचप्रचक्षते ॥ १ ॥ **ति०** दिवसस्यार्धमर्धदिवस ॥ २ ॥ **ति०** माशुच सीतावियोगेनेतिशेष ॥ १० ॥ **ति०** ययाबुद्ध्यामनस्विनोनशोचन्तितांबुद्धिमाह—सर्वेइति । निचया. रावणादेरिवमहत्तरैश्वर्याणि । अवश्यं क्षयान्तान्येव नाशान्तान्येव । समुच्छ्रया इन्द्रजिदादेरिव शौर्यवीर्यादिजनितौन्नत्यानि । पतनान्तान्येव । सयोगा. युवयोरिव विप्रयोगान्ता । सर्वस्यजनिमतोजीवितंमरणान्तमेव ॥ ११ ॥ **ति०** निजस्वरूपपर्यालोचनयापिशोकोनकार्यइत्याह—शक्तइति । विनेतुं शिक्षितुं । निग्रहीतु सासारिकदु खाद्वारयितुमित्यर्थ । आत्मनेत्यत्रान्त करणोपाधिर्जीवोभोक्तात्मा । आत्मानमन्त करण । मनसा अन्त करणेन । मन तद्वृत्तिविशेषरूप । अत्रमनश्शब्दोभोगोपकारणेन्द्रियोपलक्षण । हेकाकुत्स्थ सर्वलोकांश्चविनेतु अन्तर्यामिरूपेणशिक्षितुंसमर्थस्त्वमात्मन शोकनिवारयितुंसमर्थइतिकिंवक्तव्यमित्यर्थ ॥ १३ ॥ **ति०** तदेवाह—**नेदृशेष्विति।** किंचैवंशोकेक्रियमाणेऽज्ञप्रजानिबन्धनोऽनर्थउभयत पाशरज्जुरिवदुर्मोचइत्याह—अपवादइति । **स०** अपवाद प्राचीनतइतर. प्रियाप्रेषयित्वारोदितीत्यपवादएष्यति । तत काकुत्स्थ स्थगनमेवमेरोचतइतिभाव ॥ १४ ॥ **ति०** हेनृप अपवादभयाद्भीतेनत्वया यदर्थयदपवादनिवृत्तयेसीतात्यक्ता सोपवाद हेराजन् परगृहोषितांस्त्रियंत्यक्त्वासर्वदातामेवानुशोचतीतिप्रकारान्तरेणभविष्यति । यत्तुकतकेनअग्न्यादिनाशुद्धत्वेनोक्तास्वयंदृष्टशुद्धिंगर्भिणीमपिराम.प्राकृतवद्विसृष्टवानितिपुरे देवादिपुरेऽपवादोभविष्यतीतिव्याख्या-

स त्वं पुरुषशार्दूल धैर्येण सुसमाहितः ॥ त्यजैनां[1] दुर्बलां बुद्धिं संतापं मा कुरुष्व ह ॥ १६ ॥
एवमुक्तः स काकुत्स्थो लक्ष्मणेन महात्मना ॥ उवाच परया प्रीत्या सौमित्रिं मित्रवत्सलः ॥१७॥
एवमेतन्नरश्रेष्ठ यथा वदसि लक्ष्मण ॥ परितोषश्च मे वीर मम कार्यानुशासने ॥ १८ ॥
निर्वृतिश्चागता सौम्य संतापश्च निराकृतः ॥ भवद्वाक्यैः सुरुचिरैरनुनीतोस्मि लक्ष्मण ॥ १९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

## त्रिपञ्चाशः सर्गः ॥ ५३ ॥

सीताशोकेनदिनचतुष्टयंराज्यकार्याकरणेऽनूयतारामेण लक्ष्मणंप्रति राज्यकार्याविमर्शनस्यानर्थहेतुत्वेदृष्टान्ततया नृगोपाख्याननिवेदनपूर्वकं कार्यार्थिनाप्रतीक्षणचोदना ॥ १ ॥

लक्ष्मणस्य तु तद्वाक्यं निशम्य परमाद्भुतम् ॥ सुप्रीतश्चाभवद्रामो वाक्यमेतदुवाचह ॥ १ ॥
दुर्लभस्त्वीदृशो बन्धुरस्मिन्काले विशेषतः ॥ यादृशस्त्वं[2] महाबुद्धे मम सौम्य मनोनुगः ॥ २ ॥
यच्च मे हृदयं[3] किंचिद्वर्तते शुभलक्षण ॥ तन्निशामय च श्रुत्वा कुरुष्व वचनं मम ॥ ३ ॥
चत्वारो दिवसाः सौम्य कार्यं पौरजनस्य वै ॥ अकुर्वाणस्य सौमित्रे तन्मे मर्माणि कृन्तति ॥ ४ ॥
आहूयन्तां प्रकृतयः पुरोधा मन्त्रिणस्तथा ॥ कार्यार्थिनश्च पुरुषाः स्त्रियश्च पुरुषर्षभ ॥ ५ ॥
पौरकार्याणि यो राजा न करोति दिनेदिने ॥ संवृते नरके घोरे पतितो नात्र संशयः ॥ ६ ॥
श्रूयते हि पुरा राजा नृगो नाम महायशाः ॥ बभूव पृथिवीपालो ब्रह्मण्यः सत्यवाक्छुचिः ॥ ७ ॥
स कदाचिद्गवां कोटीः सवत्साः स्वर्णभूषिताः ॥ नृदेवो भूमिदेवेभ्यः पुष्करेषु ददौ नृपः ॥ ८ ॥

---

इति पुनरप्यपवादोभविष्यतीत्यर्थः ॥ १५—१७ ॥ कार्यानुशासने गङ्गातीरत्यागरूपे त्वत्कृते ॥ १८ ॥ निर्वृतिः सुखं ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

स्त्रियश्चेति । कार्यार्थिन्य इत्यनुषज्यते ॥ ५ ॥ पतितः स्वकर्मणेति शेष. । स मृतो नरके घोरे

---

तंतत्तुशोकत्यागानुपपादकतयोपेक्षितम् ॥ १५ ॥ **ति०** प्रजापालनायमामेवबोधयतीतिलक्ष्मणाशयज्ञात्वातदङ्गीकृत्योत्तरमाह—एवमेतदित्यादिश्लोकद्वयेन । हेलक्ष्मण वीरसौम्यलक्ष्मणेत्यादरेणबहुश.सबोधन । राज्यपरिपालनत्यक्त्वैवंशोकेऽपवादइत्युक्तत्वया । एतदेवमेव सत्यमेव । अतस्त्वद्वाक्यैरनुनीतोस्मि । अतोममदु खनिवृत्तिरागताजाता सन्तापश्चमयानिराकृत । अतएवममकार्यानुशासनेप्रजारक्षणकार्यस्यानुष्ठानेमेमयापरितोष प्राप्तइतिशेष· । **स०** नरश्रेष्ठेत्यनेन लोकदृष्ट्यास्वबुद्धिप्रत्यावर्तनगौरवसूचयति । लक्ष्मणेतिभ्रातृत्वेनस्वसौमुख्यकरणानुबन्ध सूच्यते। वीरेत्यनेन स्वेनसहेन्द्रजिदादिवधकरणप्रदर्शितवीर्यदाक्षिण्यमुक्तानुष्ठानहेतुतयासूचित । अत सार्थक सबोधनत्रय । निवृत्ति सीताविरह । अगता मानप्राप्ता । सासमीपेवर्ततएव । अत सतापश्चनिराकृत. ॥ १८ ॥ १९ ॥ इतिद्विपञ्चाश सर्ग ॥ ५२ ॥

**ति०** परमाद्भुतं सर्वेक्षयान्ताइत्यादिवाक्यं ॥ १ ॥ **स०** विशेषत गरुडशेषौविनादुर्लभइतिवा । समत्वाद्विपरिग्रह । शेषत्वाल्लक्ष्मणस्यैवमुक्तिर्वा ॥ २ ॥ **स०** दिवसा गताइतिशेष । पौरजनस्यकार्यं तत्सुखदु खविचारणरूपं । अकुर्वत· । तच्चतुर्दिनीगमनं । मर्माणिकृन्तति । गत ॥ ४ ॥ **ति०** सवृते वायुस्पर्शहीने । पतित भवेदितिशेष । **स०** सवृते अनुत्थाने ॥ ६ ॥ **स०** इतिहासमुखेनाप्येतत्कार्यकरणमावश्यकमित्याह—श्रूयतेहीति । ब्राह्मणपूजक ॥ ७ ॥ पुष्करेषु तदादितीर्थक्षेत्रेषु ॥ ८ ॥

[ पा० ] १ क—घ त्यजेमा २ क. ख, सदृशस्त्वंमहाबुद्धेलक्ष्मणायतलोचन. ३ क. ख. हृदयंसौम्यवर्तते.

ततः सङ्घाद्गता धेनुः सवत्सा[1] स्पर्शिताऽनघ ॥ ब्राह्मणस्याहिताग्नेश्च दरिद्रस्योञ्छवर्तिनः ॥
[ नृ[2]गस्य गोसमूहेषु ददतः पूर्वमेव सा ॥ ९ ॥ ]
स नष्टां गां क्षुधार्तो वै अन्विष्यंस्तत्रतत्रच ॥ नापश्यत्सर्वराज्येषु संवत्सरगणान्बहून् ॥ १० ॥
ततः कनखलं गत्वा जीर्णवत्सां निरामयाम् ॥ ददर्श गां स्वकां धेनुं ब्राह्मणस्य निवेशने ॥ ११ ॥
अथ तां नामधेयेन स्वकेनोवाच स द्विजः ॥ आगच्छ शबलेत्येवं सा तु शुश्राव गौः स्वरम् ॥१२॥
तस्य तु स्वरमाज्ञाय क्षुधार्तस्य द्विजस्य वै ॥ अन्वगात्पृष्ठतः सा गौर्गच्छन्तं पावकोपमम् ॥ १३ ॥
योपि पालयते विप्रः सोपि गामन्वगाद्द्रुतम् ॥ गत्वा तमृषिमाचष्ट मम गौरिति सत्वरम् ॥ १४ ॥
स्पर्शिता राजसिंहेन मम दत्ता नृगेण ह ॥ तयोर्ब्राह्मणयोर्वादो महानासीद्विपश्चितोः ॥ १५ ॥
विवदन्तौ ततोऽन्योन्यं दातारमभिजग्मतुः ॥ तौ राजभवनद्वारि न प्राप्तौ नृगशासनम् ॥ १६ ॥
अहोरात्राण्यनेकानि वसन्तौ क्रोधमीयतुः ॥ ऊचतुश्च महात्मानौ तावुभौ द्विजसत्तमौ ॥
क्रुद्धौ परमसंतप्तौ वाक्यं घोराभिसंहितम् ॥ १७ ॥
अर्थिनां कार्यसिद्ध्यर्थं यस्मात्त्वं नैषि दर्शनम् ॥ अदृश्यः सर्वभूतानां कृकलासो भविष्यसि ॥ १८ ॥
बहुवर्षसहस्राणि बहुवर्षशतानि च ॥ श्वभ्रे[3]ऽस्मिन्कृकलासो वै दीर्घकालं वसिष्यसि ॥ १९ ॥
उत्पत्स्यते हि लोकेऽस्मिन्यदूनां कीर्तिवर्धनः ॥ वासुदेव इति ख्या[4]तो लोके पुरुषविग्रहः ॥ २० ॥

पाल्यते नात्र संशय इति च पाठः ॥ ६—८ ॥ सङ्घात् राज्ञा दत्तबहुगोसङ्घात् ॥ ९—१० ॥ कनखलं कनखलाख्यग्राम ॥ ११—१४ ॥ स्पर्शिता दत्ता ॥ १५—१७ ॥ कृकलास' सरठः ॥ १८—

**स०** गता व्यूहभ्रष्टा ॥ **ति०** सङ्घात् राजदानार्थनीयमानबहुगोसङ्घात् । स्पर्शिता ब्राह्मणायदत्ता । बहुदोहिनीतिपाठान्तर । आहिताग्नेर्दरिद्रस्येत्यनेनाग्निहोत्रहविरर्थमपिधेन्वन्तराभावउक्त । उञ्छ क्षेत्रपतितान्नस्यकणशआदानं ॥ ९ ॥ **ति०** जीर्णवत्सा "सवत्सरगणान्बहून्" इत्युक्ते ॥ ११ ॥ **स०** स्वकेन स्वकृतसकेतेन । शबलेनेत्येवमुवाच । शबलेत्येवमित्यत्र दूराद्धूतेचेतिप्लुतत्वे "प्लुतप्रगृह्याअचिनित्यं" इतिप्रकृतिभावेनभाव्यमयद्यपि । तथापि बहुपरिभ्रमणश्रान्त्यास्वरोनोच्चैरायातइतिध्वनयितुप्लुताभाव । याशबला त्वमागच्छेतिसमीपोक्तिरितिवातदप्रसक्ति ॥ १२ ॥ **स०** योपि पालयते अपालयत् । स प्रत्यावृत्तपुनर्दत्तधेनुग्राही । तमृषिं स्वस्वरतोगामाकार्यनयन्तं । चष्ट आचष्ट । **ति०** योपिनृगतोलब्धदान ।तमृषिंगवानुगम्यमानमृषि ॥ कतकतीर्थौतु—तमृषिं यस्यगेहेस्थिता तमृषिं । त्वरन्स कृतगवासेधोद्विजोनृगेणस्पर्शितादत्ता इत्याचष्टेत्यनुकर्षइतिव्याचख्यतु । ममतुभाति गवानुगमनादन्वेष्टृब्राह्मणीयत्वसिद्धं । नृगतोमयालब्धेतिपरेण सोभियुक्तोन्वगादित्यत्रकर्तुरेवगत्वेत्यत्रप्रतीतेरक्षरस्वारस्यसिद्धत्वंचेति ॥ १४ ॥ **स०** वादोविवाद । महान् अपरिहार्य ॥ १५ ॥ **स०** दातार नृगं । नृगशासन स्वागमनवार्ताश्रवणवताराज्ञातावन्त प्रवेश्यावितिराज्ञआज्ञानप्राप्तौ ॥ १६ ॥ **स०** वसन्तौ उपोषणेन । 'तानीयमानातत्स्वामीदृष्ट्वोवाचममेतितम् । ममेतिप्रतिगृह्याहनृगोमेदत्तवानिति । विप्रौविवदमानौमामूचतु स्वार्थसाधकौ । भवान्दातापहर्तेतितच्छ्रुत्वामेऽभवद्भ्रम । अनुनीतावुभौविप्रौधर्मकृच्छ्रंगतेनमे । गवालक्षप्रगृह्णीतादास्याम्येषाप्रदीयताम् । भवन्तावनुगृह्णीताकिङ्करस्याविजानत । समुद्धरतमाकृच्छ्रात्पतन्तनिरयेऽशुचौ । नान्याप्रतीच्छेवैराजन्नित्युक्त्वास्वाम्यपाक्रमत् । नान्यद्गवामप्ययुतमिच्छामीत्यपरोययौ' इतिभागवतइवात्रतयो राजदर्शनकिमितिनोक्तमितिचेत्तद्दर्शनोत्तरभाविफलस्याभावादितिकेचित् । कल्पभेदेनायंकथाभेदोज्ञेयइत्यन्ये । भारतेदानधर्मेष्वेवमेवकथा 'नृगस्ततोऽब्रवीदि'त्यादिनोक्ताज्ञेया ॥ १७ ॥ **ति०** कृकलीभूत कृकलासीभूत. । **स०** दर्शनंनैपि । ततोऽदृश्य । शिर कंपउभयविषयेपिकृतइतिकृकलासोभविष्यसि ॥ १८ ॥ **स०** श्वभ्रे गर्ते । कृकलीभूत कृकंशिर लातिआधेयत्वेनेतिकृकलं । ग्रीवाऽस्त्यस्येतिसतथा । भूतोजातस्सन् । भूत परितोभुवा ऊत सबद्धइतिवा ॥ १९ ॥ **ति०** पुरुषविग्रह पुरुषशरीरसदृशशरीरः ॥ २० ॥

[ **पा०** ] १ ख घ. सवत्साबहुदोहिनी. ग. ज. सवत्साबहुदोहना. २ इदमर्धं क. घ. च. छ. पाठेपुदृश्यते. ३ क—ङ. झ. ञ. ट. श्वभ्रेत्वंकृकलीभूतोदीर्घकालंनिवत्स्यसि. ४ क—ट. ख्यातोविष्णु पुरुष.

स ते मोक्षयिता राजंस्तस्माच्छापाद्भविष्यति ॥ कृता च तेन कालेन निष्कृतिस्ते भविष्यति ॥२१॥
भारावतरणार्थं हि नरनारायणावुभौ ॥ उत्पत्स्येते महावीर्यौ कलौ युग उपस्थिते ॥ २२ ॥
एवं तौ शापमुत्सृज्य ब्राह्मणौ विगतज्वरौ ॥ तां गां हि दुर्बलां वृद्धां ददतुर्ब्राह्मणाय वै ॥ २३ ॥
एवं स राजा तं शापमुपभुङ्क्ते सुदारुणम् ॥ २४ ॥
कार्यार्थिनां विमर्दो हि राज्ञां दोषाय कल्पते ॥ तच्छीघ्रं दर्शनं मह्यमभिवर्तन्तु कार्यिणः ॥ २५ ॥
सुकृतस्य हि कार्यस्य फलं नापैति पार्थिवः ॥ तस्माद्गच्छ प्रतीक्षस्व सौमित्रे कार्यवाञ्जनः ॥२६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

## चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

नृगेणराज्ञा स्वस्यकृकलासत्वप्रापकब्राह्मणशापप्राप्त्यनन्तरं स्वपुत्रस्यराज्येऽभिषेचनपूर्वकं शिल्पिभिर्हिमवर्षातपनिवारकगर्तत्रयनिर्मापणेन तत्रप्रवेशनम् ॥ १ ॥

रामस्य भाषितं श्रुत्वा लक्ष्मणः परमार्थवित् ॥ उवाच प्राञ्जलिर्वाक्यं राघवं दीप्ततेजसम् ॥ १ ॥
अल्पापराधे काकुत्स्थ द्विजाभ्यां शाप ईदृशः ॥ महान्नृगस्य राजर्षेर्यमदण्ड इवापरः ॥ २ ॥
श्रुत्वा तु पापसंयुक्तमात्मानं पुरुषर्षभ ॥ किमुवाच नृगो राजा द्विजौ क्रोधसमन्वितौ ॥ ३ ॥
लक्ष्मणेनैवमुक्तस्तु राघवः पुनरब्रवीत् ॥ शृणु सौम्य यथापूर्वं स राजा शापविक्षतः ॥ ४ ॥
अथाध्वनि गतौ विप्रौ विज्ञाय स नृगस्तदा ॥ आहूय मन्त्रिणः सर्वान्नैगमान्सपुरोधसः ॥ ५ ॥
तानुवाच नृगो राजा सर्वाश्च प्रकृतीस्तथा ॥ दुःखेन सुसमाविष्टः श्रूयतां मे समाहितैः ॥ ६ ॥
नारदः पर्वतश्चैव मम दत्त्वा महद्भयम् ॥ गतौ त्रिभुवनं भद्रौ वायुभूतावनिन्दितौ ॥ ७ ॥

---

२० ॥ निष्कृतिः शापमोक्षः ॥ २१—२२ ॥ ब्राह्मणाय कस्मैचित् अन्यस्मा इत्यर्थः ॥ २३—२४ ॥ विमर्दः कलहः । अभिवर्तन्तु आगच्छन्तु । कार्यिणः कार्यार्थिनः । अभिवर्तन्तु काङ्क्षिण इति पाठः ॥ २५—२६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

रामस्येत्यादि ॥ १ ॥ अल्पेति ॥ अल्पेऽप्यपराधे परीक्षार्थमागतत्वात् गोदानद्वारा द्विजाभ्यां नारदपर्वताभ्यां यमदण्ड इव महान् शापो दत्तः ॥२—३॥ लक्ष्मणेनेति ॥ हे सौम्य, शापविक्षतः सन् स राजा यथा पूर्वमुवाच तच्छृण्विति योजना ॥ ४ ॥ अथेति॥ अध्वनि व्योमाध्वनि गतौ ध्यानेन अमुकाविति विज्ञायेत्यर्थः । नैगमान् पौरान् ॥ ५ ॥ तानिति ॥ श्रूयतामिति । वचनमिति शेषः ॥ ६ ॥ नारद इति ॥

---

स० तस्मात् मच्छापात् । भविष्यसि तावत्पर्यन्तंकृकलास ॥ तेन कृष्णेन ॥ २१ ॥ ति० कलौयत्किञ्चिच्चतुर्युगीस्थेकलावित्यर्थः । स० कलौयुगे । उपस्थिते सन्निहिते ॥ २२ ॥ ति० अभिवर्तन्तु अभिवर्तयन्तु । मह्य मम । कार्यिण प्रजाअधिकारिणश्च ॥ २५ ॥ ति० ननुनृगस्याप्येवमवस्थाचेदलसुकृतकर्मणेतिशङ्कावन्तलक्ष्मणंलक्षयित्वाह—सुकृतस्येति । कार्यस्य कर्तव्यस्य । सुकृतस्य प्रजापालनधर्मस्य । फलंपार्थिवोनानैति । काकु । प्राप्नोत्येवेत्यर्थ । कार्यवान् जन कआयाति तत्प्रतीक्षस्व । द्वारिस्थित्वेतिशेष ॥ २६ ॥ इतित्रिपञ्चाश सर्गः ॥ ५३ ॥

स० दीप्ततेजस अनेनसीतावीतताचिन्तातान्तिर्नेतिसूच्यते ॥ १ ॥ स० ईदृशोमहान् भगवदितराशक्यपरिहारत्वेन । शापोदत्तइतिशेष. ॥ २ ॥ ति० पापसयुक्त शापरूपपापसयुक्त ॥ ३ ॥ ति० द्विजौप्रतिकिमुवाचेतिशङ्कायातयोरदर्शनमेवाभूदित्याह—अथेति ॥ ५ ॥ स० वायुभूतौ असङ्गौ । शि० नारद पर्वतश्चऋषी मम मह्य । महद्भयं ब्राह्मणाभ्यादत्तंशापमित्यर्थ । दत्वा श्रावयित्वा । त्रिभुवनं त्रयाणा ब्रह्मादीनाभुवनंलोकंगतौ ॥ ७ ॥

कुमारोयं वसुर्नाम स देवोऽद्याभिषिच्यताम् ॥ श्वभ्रं च यत्सुखस्पर्शं क्रियतां शिल्पिभिर्मम ॥
यत्राहं संक्षयिष्यामि शापं ब्राह्मणनिस्सृतम् ॥ ८ ॥
वर्षघ्नमेकं श्वभ्रं तु हिमघ्नमपरं तथा ॥ ग्रीष्मघ्नं तु सुखस्पर्शमेकं कुर्वन्तु शिल्पिनः ॥ ९ ॥
फलवन्तश्च ये वृक्षाः पुष्पवत्यश्च या लताः ॥ विरोप्यन्तां बहुविधाश्छायावन्तश्च गुल्मिनः ॥१०॥
क्रियतां रमणीयं च श्वभ्राणां सर्वतो दिशम् ॥ सुखमत्र वसिष्यामि यावत्कालस्य पर्ययः ॥ ११ ॥
पुष्पाणि च सुगन्धीनि क्रियन्तां तेषु नित्यशः ॥ परिवार्य यथा मे स्युरध्यर्धं योजनं तथा ॥१२॥
एवं कृत्वा विधानं स संदिदेश वसुं तदा ॥ धर्मनित्यः प्रजाः पुत्र क्षत्रधर्मेण पालय ॥ १३ ॥
प्रत्यक्षं ते यथा शापो द्विजाभ्यां मयि पातितः ॥ नरश्रेष्ठ सरोषाभ्यामपराधेऽपि तादृशे ॥ १४ ॥
मा कृथास्तनुसंतापं मत्कृतेऽपि नरर्षभ ॥ कृतान्तः कुशलः पुत्र येनास्मि व्यसनीकृतः ॥ १५ ॥
प्राप्तव्यान्येव प्राप्नोति गन्तव्यान्येव गच्छति ॥ लब्धव्यान्येव लभते दुःखानि च सुखानि च ॥
पूर्वे जात्यन्तरे वत्स मा विषादं कुरुष्व ह ॥ १६ ॥
एवमुक्त्वा नृपस्तत्र सुतं राजा महायशाः ॥ श्वभ्रं जगाम सुकृतं वासाय पुरुषर्षभ ॥ १७ ॥
एवं प्रविश्यैव नृपस्तदानीं श्वभ्रं महारत्नविभूषितं तत् ॥
संपादयामास तदा महात्मा शापं द्विजाभ्यां हि रुषा विमुक्तम् ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

---

त्रिभुवन ब्रह्मलोकमित्यर्थ. ॥७॥ श्वभ्रं गर्तः ॥ ८—९ ॥ गुल्मिनः कक्षवृक्षाः ॥ १०—११ ॥ पुष्पाणि यथा अध्यर्ध योजन परिवार्य स्युः तथा क्रियन्तामित्यर्थः ॥ १२—१३ ॥ तादृशे अल्पेपीत्यर्थ ॥ १४॥ कृतान्त. ईश्वरः ॥ १५ ॥ पूर्वे जात्यन्तरे । प्राप्तव्यान्येव प्राप्नोति गन्तव्यान्येव गच्छति । लब्धव्यान्येव लभते दुःखानि च सुखानि च ॥ १६—१८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

---

**स०** सक्षयिष्यामि सक्षपयिष्यामि । **शि०** योऽयंवसुर्नाममकुमार सोद्याभिषिच्यता । यत्राहब्राह्मणनिस्सृतशापसक्षयिष्यामि तत्रयत्सुखस्पर्शश्वभ्रंगर्ततच्छिल्पिभि क्रियताकार्यता । सार्धश्लोकएकान्वयी ॥ ८ ॥ **स०** वसुं स्वापत्यं । सनिवेश्य राज्ये ॥ १३ ॥ **ति०** हेपुत्र धर्मनित्योभूत्वा प्रजा क्षत्रधर्मेणपालयेत्यादेरेवमुक्त्वेत्यनेनाष्टादशश्लोकस्थप्रथमपादेनसबन्ध । **स०** मद्दुन्माकुरुब्राह्मणादिविषयइत्याह—प्रत्यक्षमिति ॥ १४ ॥ **स०** व्यसनीकृतइतिपदद्वय । व्यसनवान्कृत ॥ १५ ॥ एवप्राप्नोतीत्यत्रप्रेहेत्याद्युक्तेर्लघु प्र पठनीय । **ति०** प्राप्तव्यानिप्राप्नोत्येवेत्यपियोजना । प्राप्तव्यानि एकत्रस्थलएवतिष्ठतोयत्नविनाप्राप्याणि । गन्तव्यानि स्वयमन्यत्रगत्वाप्राप्याणि । लब्धव्यानि स्थलएवतिष्ठतोयत्नलभ्यानि । पूर्वेजात्यन्तरे सपादितकारणानीतिशेष । सुखानिदु खानि प्राप्तव्यादीनिप्राप्नोतीत्यर्थ । अनेनदु खाद्यनुभवे नान्योमूलकितुस्वकृतकर्मैवेत्युक्त ॥ १६ ॥ **ति०** सुकृतं सुष्टकृत । **शि०** सुकृतं अतिप्रयत्नेननिर्मित ॥ १८ ॥ **शि०** सपादयामास शाप प्राप्नोत्विति प्रार्थयामासेत्यर्थ । **ति०** सपादयामास अनुभवतिस्मेत्यर्थ ॥ १९ ॥ इतिचतुष्पञ्चाश सर्ग ॥ ५४ ॥

[ **पा०** ] १ ग. पूर्वजन्मान्तरेवत्स. २ क—ड. ज. एवप्रविश्यसनृग श्वभ्रमन्तर्विभूषितम् । द्विजाज्ञाधारयामासबहुवर्षगणायुतम् ।

## पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

रामेणलक्ष्मणप्रति महदपराधस्यानर्थहेतुत्वेउदाहरणतया कथान्तरोदाहरणारभ. ॥ १ ॥ निमिनाम्नाइक्ष्वाकुवंश्येनराज्ञा स्वयाजनायस्वप्रार्थितेनवसिष्ठेन इन्द्रेणस्वस्यपूर्ववरणोक्त्यापश्चाद्याजनोक्तौविलबासहनेन गौतमवरणेनयागनिर्वर्तनम् ॥ २ ॥ पश्चादागतेनवसिष्ठेन निद्रापरवशतयास्वानभियायिननिमिप्रतिविदेहत्वशापदानम् ॥ ३ ॥ निमिनावसिष्ठप्रति स्वत.शापदानस्यानौचित्योक्त्या तस्यापिविदेहत्वशापदानम् ॥ ४ ॥

एष ते नृगशापस्य विस्तरोभिहितो मया ॥ यद्यस्ति श्रवणे श्रद्धा शृणुष्वेहापरां कथाम् ॥ १ ॥
एवमुक्तस्तु रामेण सौमित्रिः पुनरब्रवीत् ॥ तृप्तिराश्चर्यभूतानां कथानां नास्ति मे नृप ॥ २ ॥
लक्ष्मणेनैवमुक्तस्तु राम इक्ष्वाकुनन्दनः ॥ कथां परमधर्मिष्ठां व्याहर्तुमुपचक्रमे ॥ ३ ॥
आसीद्राजा निमिर्नाम इक्ष्वाकूणां महात्मनाम् ॥ पुत्रो द्वादशमो वीर्ये धर्मे च परिनिष्ठितः ॥ ४ ॥
स राजा वीर्यसंपन्नः पुरं देवपुरोपमम् ॥ निवेशयामास तदा अभ्याशे गौतमस्य तु ॥ ५ ॥
पुरस्य सुकृतं नाम वैजयन्तमिति श्रुतम् ॥ निवेशं यत्र राजर्षिर्निमिश्चक्रे महायशाः ॥ ६ ॥
तस्य बुद्धिः समुत्पन्ना निवेश्य सुमहापुरम् ॥ यजेयं दीर्घसत्रेण पितुः प्रह्लादयन्मनः ॥ ७ ॥
ततः पितरमामन्त्र्य इक्ष्वाकुं हि मनोः सुतम् ॥ वसिष्ठं वरयामास पूर्वं ब्रह्मर्षिसत्तमम् ॥ ८ ॥
अनन्तरं स राजर्षिर्निमिरिक्ष्वाकुनन्दनः ॥ अत्रिमङ्गिरसं चैव भृगुं चैव तपोधनम् ॥ ९ ॥
तमुवाच वसिष्ठस्तु निमिं राजर्षिसत्तमम् ॥ वृतोऽहं पूर्वमिन्द्रेण अन्तरं प्रतिपालय ॥ १० ॥
अनन्तरं महाविप्रो गौतमः प्रत्यपूरयत् ॥ वसिष्ठोपि महातेजा इन्द्रयज्ञमथाकरोत् ॥ ११ ॥
निमिस्तु राजा विप्रांस्तान्समानीय नराधिपः ॥ अयजद्धिमवत्पार्श्वे स्वपुरस्य समीपतः ॥
पञ्च वर्षसहस्राणि राजा दीक्षामुपागमत् ॥ १२ ॥
इन्द्रयज्ञावसाने तु वसिष्ठो भगवानृषिः ॥ सकाशमागतो राज्ञो हौत्रं कर्तुमनिन्दितः ॥ १३ ॥
तदन्तरमथापश्यद्गौतमेनाभिपूरितम् ॥ कोपेन महताऽऽविष्टो वसिष्ठो ब्रह्मणः सुतः ॥ १४ ॥
स राज्ञो दर्शनाकाङ्क्षी मुहूर्तं समुपाविशत् ॥ तस्मिन्नहनि राजर्षिर्निद्रयाऽपहृतो भृशम् ॥ १५ ॥
ततो मन्युर्वसिष्ठस्य प्रादुरासीन्महात्मनः ॥ अदर्शनेन राजर्षेर्व्याहर्तुमुपचक्रमे ॥ १६ ॥
यस्मात्त्वमन्यं वृतवान्मामवज्ञाय पार्थिव ॥ चेतनेन विनाभूतो देहस्तव भविष्यति ॥ १७ ॥
ततः प्रबुद्धो राजर्षिः श्रुत्वा शापमुदाहृतम् ॥ ब्रह्मयोनिमथोवाच संरम्भात्क्रोधमूर्च्छितः ॥ १८ ॥

---

इह राजापराधविषये ॥ १ ॥ तृप्तिः कथानां सबन्धिनीत्यर्थ. ॥ २—४ ॥ गौतमस्येति गौतमाश्रमस्येत्यर्थः ॥ ५ ॥ वैजयन्त इन्द्रप्रासाद । सादृश्यात्तद्व्यपदेशः ॥ ६—९ ॥ प्रतिपालय प्रतीक्षस्व । प्रतीक्ष त्व तदन्तरमिति च पाठ. । तदनन्तरं त्वां याजयिष्य इति शेषः ॥ १० ॥ गौतम. प्रत्यपूरयत् । वसिष्ठकर्तव्यं हौत्रमिति शेष. ॥ ११ ॥ तान् अत्र्यादीन् ॥ १२—१४ ॥ सइति । असमाप्तसत्र इतिशेषः ॥ १५—

---

**ति०** कथाना श्रवणइतिशेष ॥ २ ॥ **ति०** इक्ष्वाकूणा इक्ष्वाकुपुत्राणा । द्वादशम द्वादशसख्यापूरण । सख्यादेरपिमडार्ष. ॥ ४ ॥ **ति०** पितुरिक्ष्वाको । दीर्घसत्रं बहुकालसाध्योबहुयजमानक सत्राख्योयाग ॥ ७ ॥ **स०** पूर्वं पुरोहितत्वात् ॥ ८ ॥ **ति०** अन्तरप्रतिपालय इन्द्रयागसमाप्तिपर्यन्तावकाशंप्रतिपालय प्रतीक्षस्व । इन्द्रंयाजयित्वात्वायाजयिष्यइतिभाव । देवानामपियज्ञाधिकार प्राङ्निरूपित ॥ १० ॥ **ति०** अनन्तर वसिष्ठगमनानन्तर ॥ ११ ॥ **शि०** तस्मिन्नहनिराजर्षि निद्रयापहृतोऽभवदितिशेष ॥ १५ ॥ **शि०** ततोराजर्षेरदर्शनेनहेतुना वसिष्ठस्यमन्यु प्रादुरासीत् । अतएवव्याहर्तुंशापमितिशेष । उपचक्रमे ॥ १६ ॥ **ति०** मामवज्ञायेत्यस्य स्वपिषिचेतिशेष । चेतनेनविनाकृतोमृतइत्यर्थ । एष्यति भविष्यति ॥ १७ ॥
**[ पा० ]** १ च. निविष्टस्तत्रराज्यंतुनिमि २ ख. ङ. च. छ. झ. ञ. ट. देहस्तेपार्थिवेष्यति.

अजानतः शयानस्य क्रोधेन कलुषीकृतः ॥ मुक्तवान्मयि शापाग्निं यमदण्डमिवापरम् ॥ १९ ॥
तस्मात्तवापि ब्रह्मर्षे चेतनेन विना कृतः ॥ देहः[1] सुरुचिरप्रख्यो भविष्यति न संशयः ॥ २० ॥
इति रोषवशादुभौ तदानीमन्योन्यं शपितौ नृपद्विजेन्द्रौ ॥
सहसैव बभूवतुर्विदेहौ तत्तुल्याधिगतप्रभाववन्तौ ॥ २१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

## षट्पञ्चाशः सर्गः ॥ ५६ ॥

लक्ष्मणेनरामप्रति विदेहयोर्निमिवसिष्ठयो पुनर्देहयोगप्रकारप्रश्न॰ ॥ १ ॥ रामेणतत्कथनारंभः ॥ २ ॥ वसिष्ठेनपुनर्देहयोगाय ब्रह्माणप्रतिप्रार्थने तेनतप्रति मित्रावरुणरेत॰प्रवेशचोदना ॥ ३ ॥ वसिष्ठेन ब्रह्मवचनेनवरुणालयगमनम् ॥ ४ ॥ अत्रान्तरे मित्रंप्रतिगच्छन्त्याउर्वश्या स्वभोगाभिलाषिणंवरुणप्रति स्वस्यतस्मिन्भावनिवेदनेन देहस्यमैत्रीयत्वोक्तौ वरुणेनतदवलोकनेनस्कन्नस्यस्वतेजस कुभेस्थापनम् ॥ ५ ॥ अनन्तरमित्रेण स्वसमीपमागतामुर्वशींप्रति वरुणाभिलाषदोषाविष्करणेन मानुषस्यपुरूरवसोभार्याभवनशापदानम् ॥ ६ ॥

रामस्य भाषितं श्रुत्वा लक्ष्मणः परवीरहा ॥ उवाच प्राञ्जलिर्वाक्यं राघवं दीप्ततेजसम् ॥ १ ॥
[2]निक्षिप्तदेहौ काकुत्स्थ कथं तौ द्विजपार्थिवौ ॥ पुनर्देहेन संयोगं जग्मतुर्देवसंमतौ ॥ २ ॥
लक्ष्मणेनैवमुक्तस्तु रामश्चेक्ष्वाकुनन्दनः ॥ प्रत्युवाच महातेजा लक्ष्मणं पुरुषर्षभः ॥ ३ ॥
तौ परस्परशापेन देहावुत्सृज्य धार्मिकौ ॥ अभूतां नृपविप्रर्षी वायुभूतौ तपोधनौ ॥ ४ ॥
अशरीरः शरीरस्य कृतेऽन्यस्य महामुनिः ॥ वसिष्ठः सुमहातेजा जगाम पितुरन्तिकम् ॥ ५ ॥
सोभिवाद्य ततः पादौ देवदेवस्य धर्मवित् ॥ पितामहमथोवाच वायुभूत इदं वचः ॥ ६ ॥
भगवन्निमिशापेन विदेहत्व[3]मुपागमम् ॥ लोक[4]नाथ महादेव अण्डजोपि त्वमब्जजः ॥ ७ ॥

---

१९ ॥ चेतनेन विना कृत इति । मृत इत्यर्थ. । सुरुचिरप्रख्यः सुरुचिरकान्ति. ॥ २०—२१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूपणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

देवसमतौ देवतुल्यौ ॥ २—४ ॥ अन्यस्य शरी-

---

**स०** सुचिरप्रख्य प्राक्सुचिरप्रख्याशोभायस्यस ॥ २० ॥ **स०** शापितौ शप्तौ । नृपद्विजेन्द्रौ निमिवसिष्ठौ । तत्तुल्याधिगतप्रभाववन्तौ गतश्चासौप्रभावश्चसोस्तिययोस्तौ । स लोकविदित तुल्य परस्पर । आधिर्मनोव्यथाययोस्तौ । तौ च तौतौ च । नागोजिभट्टस्तु 'तदितिब्रह्मनाम । ब्रह्मणस्तुल्यतयाअधिगत प्राप्त य प्रभावस्तद्वन्तौ । ब्रह्मप्रभावावितियावत्' इतिव्याकुर्वन्नूशापत परस्परविदेहताप्राप्ते शोकमूलतया प्रकरणानौचित्यसपादितवानितिमन्तव्यम् । तत्तुल्याविगतप्रभाववन्तौ तल्लोकप्रसिद्धं तुल्याधिगत अधिगति. उभयो परस्परविदेहताप्राप्ति तत्कारकोय प्रभाव अन्योन्यशापप्रदानसामर्थ्य तद्वन्ताविितिवा । पक्षद्वयेपिन कर्मधारयादित्यस्यैकदेशिनेतिनिर्देशोऽनित्यत्वंज्ञापयतीतिमत्वर्थीयोपपत्तिर्बोध्या ॥ २१ ॥ इतिपञ्चपञ्चाश सर्ग ॥ ५५ ॥

**ति०** देवसमतौ देवपूजितौ । **स०** निक्षिप्य त्यक्त्वा । देवसमतौ हरिसमतौ । भगवदिच्छयैवंजातौ । हेदेव समतौ सुशरीरत्वेनसप्रतिपन्नाविितिवा ॥ २ ॥ **स०** नृपविप्रर्षी विप्रश्चासावृषिश्च । नृपश्चसचतौ । वायुभूतौ पिशाचादिवद्वातभूतौ । एवमवस्थानेकारणमाह—तपोधनाविति ॥ ४ ॥ **स०** अन्यस्य सर्वदृश्यस्य ॥ ५ ॥ **ति०** अभिवाद्याभिवादनादिअशरीरस्यापितप प्रभावाल्लिङ्गदेहेनोपपन्नं ॥ ६ ॥ **स०** अण्डज ब्रह्माण्डविग्रह ॥ ७ ॥

[ पा० ] १ झ. ठ. देहस्ससुचिरप्रख्यो २ झ. ठ निक्षिप्यदेहौ. ३ क. ख. ग. ज विदेहोस्मिकृत प्रभो. ४ च. छ. झ. ञ. देवदेवमहादेववायुभूतोहमण्डज.

सर्वेषां देहहीनानां महद्दुःखं भविष्यति ॥ लुप्यन्ते सर्वकार्याणि हीनदेहस्य वै प्रभो ॥
देहस्यान्यस्य सद्भावे प्रसादं कर्तुमर्हसि ॥ ८ ॥
तमुवाच ततो ब्रह्मा स्वयंभूरमितप्रभः ॥ मित्रावरुणजं तेजः प्रविश त्वं महायशः ॥ ९ ॥
अयोनिजस्त्वं भविता तत्रापि द्विजसत्तम ॥ धर्मेण महता युक्तः पुनरेष्यसि मे वशम् ॥ १० ॥
एवमुक्तस्तु देवेन चाभिवाद्य प्रदक्षिणम् ॥ कृत्वा पितामहं तूर्णं प्रययौ वरुणालयम् ॥ ११ ॥
तमेव कालं मित्रोपि वरुणत्वमकारयत् ॥ क्षीरोदेन सहोपेतः पूज्यमानः सुरोत्तमैः ॥ १२ ॥
एतस्मिन्नेव काले तु उर्वशी परमाप्सराः ॥ यदृच्छया समुद्देशमाययौ[1] सखिभिर्वृता ॥ १३ ॥
तां दृष्ट्वा रूपसंपन्नां क्रीडन्तीं वरुणालये ॥ आविशत्परमो हर्षो[2] वरुणं चोर्वशीकृते ॥ १४ ॥
स तां पद्मपलाशाक्षीं पूर्णचन्द्रनिभाननाम् ॥ वरुणो वरयामास मैथुनायाप्सरोवराम् ॥ १५ ॥
प्रत्युवाच ततः सा तु वरुणं प्राञ्जलिः स्थिता ॥ मित्रेणाहं वृता साक्षात्पूर्वमेव सुरेश्वर ॥ १६ ॥
वरुणस्त्वब्रवीद्वाक्यं कन्दर्पशरपीडितः ॥ इदं तेजः समुत्स्रक्ष्ये कुम्भेऽस्मिन्देवनिर्मिते ॥ १७ ॥
एवमुत्सृज्य सुश्रोणि त्वय्यहं वरवर्णिनि ॥ कृतकामो भविष्यामि यदि नेच्छसि संगमम् ॥ १८ ॥
तस्य तल्लोकपालस्य वरुणस्य सुभाषितम् ॥ उर्वशी परमप्रीता श्रुत्वा वाक्यमुवाच ह ॥ १९ ॥
काममेतद्भवत्वेवं हृदयं मे त्वयि स्थितम् ॥ भावश्चाभ्यधिकस्तुभ्यं देहो मित्रस्य तु प्रभो ॥ २० ॥

रस्य कृते अन्यशरीरप्राप्त्यर्थमित्यर्थः ॥ ५—७ ॥ सर्वकार्याणि ऐहिकामुष्मिकसकलप्रयोजनानि ॥८॥ तेजो रेतः ॥ ९ ॥ अयोनिज इति । तत्रापि मित्रावरुणतेजःप्रवेशेपि अयोनिजत्व । रेतोजन्यत्वेपि योनावप्रवेशादितिभावः । मे वश मदधीनता ॥१०—११॥ तमेव कालं तस्मिन्नेव काले । मित्र. सूर्यमूर्तिभेदः । वरुणत्वमकारयत् । केनापि हेतुना उभावपि युगपद्वरुणराज्यमकुर्वतामित्यर्थः । तथैवोत्तरत्र वक्ष्यति—मित्र वरुणत्व प्रापेति ॥ १२—१९ ॥ काममिति । मित्रत्वात्पूर्वस्थितवरुणाविरोधेन राज्यमकरोत् । एतदेव मे भवतु । मे हृदयं चित्त त्वयि स्थितमेव भवतु । अभ्यधिको भावश्च तुभ्य तव च मयीति

स० ममहीनदेहस्य हीनोगतोदेहोयस्येति हीनोदेहेनेतिवासतस्य ॥ ८ ॥ ति० मित्रावरुणज तद्विसृष्ट ॥ ९ ॥ ति० तत्रापि मित्रावरुणरेत प्रवेशेपि । मेवशं मत्पुत्रत्वेनपूर्ववत्प्रजापतित्वमपिप्राप्स्यसीतिभाव । स० अयोनिज अ॰ नारायण योनि कारणं यस्यसोऽयोनि । तस्मान्मत्जायतइतिसतथा । त्वत्पुत्रत्वगतमितिचिन्तानकार्येतिसूच्यतेऽनेन । मेवश मदधीनप्राजापत्यमप्येष्यसि । शि० त्वमाविश । तत्रआवेशेपि । त्वमयोनिजोभविता । अतएवधर्मेणयुक्तस्त्वमेवश मत्पुत्रत्वमित्यर्थ । पुनरेष्यसि । किंचमेधर्मेणयुक्तस्त्व वशं पूर्वशरीरकान्तिपुनरेष्यसि । यद्यप्युत्तरत्रकुंभेवरुणरेतस्सेकएववक्ष्यते । तथापि तदुत्तरत्रवरुणवीर्यसेकात्पूर्वमुर्वश्या सनिधौमित्रवीर्यसेकोपितस्मिन्नेवकुंभवक्ष्यतेइतिवीर्ययो समिलितत्वादुभयोरप्युभयजत्वव्यवहारउपपद्यतइतिदिक् ॥ १० ॥ ति० वरुणालय समुद्र ॥ ११ ॥ ति० तमेवकाल वसिष्ठागमनकाले । मित्र पूषार्यमादिवत्सूर्यमण्डलस्थमूर्तिभेद । सुरेश्वरै पूज्यमान सन् वरुणत्व वरुणतादात्म्य । अकारयत् भावयतिस्म । यद्वा मित्रोपिवरुणत्व वरुणाधिकारमकरोदित्यर्थ । एवंचमित्रतादात्म्यापन्नेनवरुणेनविसृष्टत्वाद्वरुणरेतोविसर्गस्यापि पूर्वमित्रवृतोर्वशीनिमित्तत्वाच्चवरुणरेतोपिमित्रावरुणरेतोभवतीति मित्रावरुणजंतेजआविवेशेत्यनेननविरोध । स० वरुणत्व तेनसहैकस्थानस्थितत्व । अकारयत् तत्स्थलमाह—क्षीरोदेनेति । सहोपेत युक्त । तत्तादात्म्यमित्यादिनागोजिभट्टादिव्याख्यानद्वन्द्वसमासप्रयुक्तानङ्द्विवचनाद्यनुपपत्तेरनुपपन्न ॥ १२ ॥ स० अप्सरेतिपाठेआकारान्तोऽयशब्द । अप्सराइतिपाठेतु महाभाष्येएकवचनान्तप्रयोगादमरस्य 'स्त्रियाबहुष्वप्सरस.' इत्यस्यापभ्रंशतासूचितेतिसाधुरप्सराइतिमन्तव्यं । तमुद्देशंवसिष्ठविशिष्टंदेश । ति० एतस्मिन्नेवकाले वरुणात्मनामित्रावस्थानकाले ॥१३॥ ति० इदंतेज तद्दर्शनक्षुभितवीर्यरूपं । देवनिर्मितेकुंभे पुत्रोत्पत्तिसमर्थतयाब्रह्मसृष्टे ॥ १७ ॥ ति० त्वयि त्वन्निमित्तमित्यर्थ । कृतकाम. कृतकामभोग ॥ १८ ॥ ति० काममधिकमेहृदयचित्त । त्वयिस्थित । तुभ्यतवचभावोधिकमयिस्थित॰ । अतएतदेवं भवतु कुंभेवीर्योत्संगोभवतु । हेप्रभो देहस्तुममपूर्ववृतस्यमित्रस्यास्तु । भावेनभोगस्त्वयासहममदेहेनभोगोमित्रेणास्त्वित्युक्तंभवति

[ पा० ] १ झ. ठ. तमुद्देशमाययौ २ क ड. झ. ञ ट. तदाविशत्परोहर्षो.

उर्वश्या एवमुक्तस्तु रेतस्तन्महदद्भुतम् ॥ ज्वलदग्निशिखाप्रख्यं तस्मिन्कुम्भे ह्युपासृजत् ॥ २१ ॥
उर्वशी त्वगमत्तत्र मित्रो वै यत्र देवता ॥ तां तु मित्रः सुसंक्रम्य उर्वशीमिदमब्रवीत् ॥ २२ ॥
मया निमन्त्रिता पूर्वं कस्मात्त्वमवसर्जिता ॥ पतिमन्यं वृतवती तस्मात्त्वं दुष्टचारिणी ॥ २३ ॥
अनेन दुष्कृतेन त्वं मत्क्रोधकलुषीकृता ॥ मनुष्यलोकमास्थाय कंचित्कालं निवत्स्यसि ॥ २४ ॥
बुधस्य पुत्रो राजर्षिः काशीराजः पुरूरवाः ॥ तमद्य गच्छ दुर्बुद्धे स ते भर्ता भविष्यति ॥ २५ ॥
ततः सा शापदोषेण पुरूरवसमभ्यगात् ॥ प्रतियाता पुरूरवं बुधस्यात्मजमौरसम् ॥ २६ ॥
तस्य जज्ञे ततः श्रीमानायुः पुत्रो महाबलः ॥ नहुषो यस्य पुत्रस्तु बभूवेन्द्रसमद्युतिः ॥ २७ ॥
वज्रमुत्सृज्य वृत्राय श्रान्तेथ त्रिदशेश्वरे ॥ शतं वर्षसहस्राणि येनेन्द्रत्वं प्रशासितम् ॥ २८ ॥

सा तेन शापेन जगाम भूमिं तदोर्वशी चारुदती सुनेत्रा ॥
बहूनि वर्षाण्यवसच्च सुभ्रूः शापक्षयादिन्द्रसदो ययौ च ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

## सप्तपञ्चाशः सर्गः ॥ ५७ ॥

कुंभस्थमित्रावरुणतेजोभ्या वसिष्ठोत्पत्ति ॥ १ ॥ सुरैर्निमिराजस्य तत्प्रार्थनयासर्वप्राणिनेत्रेषुनिवासकल्पनपूर्वकं केवलतद्देहमथनान्मिथिलराजोत्पादनम् ॥ २ ॥

तां श्रुत्वा दिव्यसंकाशां कथामद्भुतदर्शनाम् ॥ लक्ष्मणः परमप्रीतो राघवं वाक्यमब्रवीत् ॥ १ ॥
निक्षिप्तदेहौ काकुत्स्थ कथं तौ द्विजपार्थिवौ ॥ पुनर्देहेन संयोगं जग्मतुर्देवसंमतौ ॥ २ ॥
तस्य तद्भाषितं श्रुत्वा रामः सत्यपराक्रमः ॥ तां कथां कथयामास वसिष्ठस्य महात्मनः ॥ ३ ॥
यस्तु कुम्भो रघुश्रेष्ठ तेजःपूर्णो महात्मनोः ॥ तस्मिंस्तेजोमयौ विप्रौ संभूतावृषिसत्तमौ ॥ ४ ॥

---

शेषः ॥ २०—२१ ॥ कस्मात्त्वमवसर्जिता विसृष्टवती । मामिति शेषः । कस्मात्त्वमसि वर्जितेति च पाठः । सुसंक्रम्य सम्यक्परिष्वज्य । तस्याः स्वस्मिन्ननुरागाभावमालोक्येत्यर्थ. । तां तु मित्रः सुसंक्रुध्येति च पाठः ॥ २२—२३ ॥ मानुषं लोकमास्थायेत्यनेन देवरूपेणैवेति शेषः ॥ २४—२९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने षट्पञ्चाशः सर्ग. ॥ ५६ ॥

---

दिव्यसंकाशां दिव्यरूपां ॥ १ ॥ निक्षिप्तदेहौ । पुनर्देहेनेति । कुम्भे वरुणतेजोविसर्जनमुक्त तावता प्रकृष्टदेहसिद्धिप्रश्नो न दत्तोत्तर इति पुनः प्रश्न. कृत इति मन्तव्यं ॥ २ ॥ तां कथां वसिष्ठस्य देहोत्पत्तिविषयिणी कथां ॥ ३ ॥ तेजोमयौ निरवधिकते-

---

॥ २० ॥ ति० रेत तद्भावसंभोगक्षुभित ॥ २१ ॥ ति० अवसर्जिता विसृष्टवती । मामितिशेष । शि० किमर्थचान्यंपतिंवृतवती । एतेन पत्यन्तरविषयककामनाविनाऽन्यत्रगमनंनसंभवतीतिनिश्चय सूचित ॥ २३ ॥ ति० अनेनदुष्कृतेन । एकपतिमङ्गीकृत्यतत्समयेद्वितीयवरणंसाधारणस्त्रीणामपिमहद्दुष्कृतमित्यनेनबोधित । मनुष्यलोकमास्थाय । अनेनदेवरूपेणैवेतिशेष ॥ २४ ॥ शि० शापक्षयात् शापक्षयंप्राप्य ॥ २९ ॥ इतिषट्पञ्चाश सर्ग ॥ ५६ ॥

ति० निक्षिप्तदेहौ विसृष्टदेहौ ॥ २ ॥ ति० महात्मनो मित्रावरुणयो । तेज पूर्ण । अत्रैवमाख्यायिका—प्रथममुर्वशीं मित्रोदृष्ट्वातामामन्त्रितवान् । तथाचत्वन्निवासमागच्छामीत्युक्त । तदावरुणलोकस्थएवमित्रस्तद्दर्शनाद्धटस्खलितंनिजंतेज कुभे-

[ पा० ] १ क. ग. भावेनान्यंवृतवती २ घ—ञ. किमर्थदुष्टचारिणि. ३ ङ. झ. ट. प्रतिष्ठाने. ४ झ. ञ. ट. यस्य. ५ क—घ. च. छ. ज. तत कुंभोनरश्रेष्ठ. ङ. झ ञ. ट. यस्सकुंभो.

पूर्वं समभवत्तत्र ह्यगस्त्यो भगवानृषिः ॥ नाहं सुतस्तवेत्युक्त्वा मित्रं तस्मादपाक्रमत् ॥ ५ ॥
तद्धि तेजस्तु मित्रस्य उर्वश्याः पूर्वमाहितम् ॥ तस्मिन्समभवत्कुम्भे तत्तेजो यत्र वारुणम् ॥ ६ ॥
कस्य चित्त्वथ कालस्य मित्रावरुणसंभवः ॥ वसिष्ठस्तेजसा युक्तो जज्ञे चेक्ष्वाकुदैवतम् ॥ ७ ॥
तमिक्ष्वाकुर्महातेजा जातमात्रमनिन्दितम् ॥ वव्रे पुरोहितं सौम्य वंशस्यास्य भवाय नः ॥ ८ ॥
एवं त्वपूर्वदेहस्य वसिष्ठस्य महात्मनः ॥ कथितो निर्गमः सौम्य निमेः शृणु यथाभवत् ॥ ९ ॥
दृष्ट्वा विदेहं राजानमृषयः सर्व एव ते ॥ तं ततो योजयामासुर्यागदीक्षां मनीषिणः ॥ १० ॥
तं च देहं नरेन्द्रस्य रक्षन्ति स्म द्विजोत्तमाः ॥ गन्धैर्माल्यैश्च वस्त्रैश्च पौरभृत्यसमन्विताः ॥ ११ ॥
ततो यज्ञे समाप्ते तु भृगुस्तत्रेदमब्रवीत् ॥ आनयिष्यामि ते चेतस्तुष्टोसि तव पार्थिव ॥ १२ ॥
सुप्रीताश्च सुराः सर्वे निमेश्चेतस्तथाऽब्रुवन् ॥ वरं वरय राजर्षे क्व ते चेतो निरूप्यताम् ॥ १३ ॥

जस्कौ ॥ ४ ॥ तत्र कुम्भे । पूर्वं वरुणतेजोनिधानात्पूर्वं । मित्रं प्रति नाहं तव सुत इत्युक्त्वा तस्मात्कुम्भादपाक्रमत् उदतिष्ठत ॥ ५ ॥ निषेधस्य का वा प्रसक्तिरित्यत्राह—तद्धि तेज इति ॥ उर्वश्या निमित्तभूतायाः । मित्रतेजस्तस्मिन्कुम्भे पूर्वं उपरि आहित अर्पितं तस्मात्प्रतिषेधः कृत इतिभावः । यद्वा पूर्ववरणकाले उर्वश्या आहितं तेजः सखीसन्निधानात् असंभोगात्कुम्भे तत्र निक्षिप्तमिति भावः । अस्मिंस्तु पक्षे मित्रपदं मित्रावरुणपरं । सर्वथा न मित्रावरुणतेजोजोगस्त्यः किंतु कुम्भमात्रसंभवः । अतएव कुम्भसंभवः कलशीभव इत्यादिव्यवहारः । अयोनिजश्चायं कुम्भस्य मैत्रावरुणत्वात् मैत्रावरुणिरित्यपि व्यवहारः । कचित् वसिष्ठस्तु मैत्रावरुणतेजोज एवेत्याह—यस्मात्तेजस्तु मित्रस्योर्वश्या पूर्वमाहित तत्तेजो यत्र वारुणमिति। अन्ये त्वाहु. । नाहं सुतस्तवेत्यादि । पुत्रो न भवामीत्यर्थ. । उत्तरस्य प्रसक्ति दर्शयति—तद्धीति ॥ अगस्त्यस्य उत्पत्तिबीजभूत मित्रस्य तत्तेज. उर्वश्याः पूर्वमुर्वश्या निमित्ततः मित्रेण तस्मिन्कुम्भे वरुणवीर्यविसर्जनात्पूर्वमेवाहित । तस्मिन्नेवकुम्भे वारुणमपि तेज उर्वशीनिमित्तकं समभवत् । तस्मान्नैकस्य तव सुत इत्युक्त अगस्त्येन । अतएव मैत्रावरुणिरित्यगस्त्यनाम कुम्भाज्जन्यत्वात्कुम्भसंभवइत्याहुः ॥ ६ ॥ कस्य चिदिति । अगस्त्योत्पत्तेः बहुकालानन्तरमित्यर्थः । मित्रावरुणयोस्तेज आविशेति पूर्वं ब्रह्मनियोगः ॥ ७—८ ॥ अपूर्वदेहस्य नूतनदेहस्य । निर्गमः उत्पत्तिः ॥ ९—१० ॥ रक्षन्ति स्मेति तैलकटाहादाविति शेषः ॥ ११ ॥ भृगुः तत्र तस्मिन् । यज्ञसमाप्तिकाल इत्यर्थः । इद वक्ष्यमाणं । हे पार्थिव देहाभिमानिप्रत्यगात्मन् । तव तुष्टोस्मि अतस्ते चेतः जीवमानयिष्यामि देह इत्यब्रवीत्॥१२॥ तदा सुप्रीताः सर्वे सुराश्च निमेश्चेत आनयिष्याम इत्यब्रुवन् । अथ हे राजर्षे, वरं वरय ते चेतस्त्वाकृष्टा क्व निरूप्यतां क्व स्थाप्यतामिति चाब्रुवन्निति संबन्धः । क्व ते चेतो निरूप्यतामिति च पाठः ॥ १३ ॥

उत्सृज्यस्वंनिवासजगाम । पश्चाद्वरुणोपितादृष्ट्वास्खलिततेज कुंभेव्यसृजत् । ततोमित्रनिवासगतामित्रेणशप्ताचेति ॥ ४ ॥ **ति०** नाहंसुतस्तवेति । यद्यपिमित्रेणापिकुंभेरेतउत्सृष्ट । तथापि तवैकस्यपुत्रोनभवामीत्युक्त्वाऽपाक्रमत् ॥५॥ **ति०** अगस्त्योत्पत्तिहेतुभूतमित्रस्यतेज उर्वश्या पूर्वंउर्वशीनिमित्तवरुणवीर्यविसर्गात्पूर्वंआहितं । तस्मिन्कुंभे तस्मिन्नेवकुंभे वारुणंतेज समभवत् सगतमभवत् । यत्रकुंभे तत्तेज मित्रस्यतेजआसीत् । अतस्तेजोन्तरसगतादुत्पत्तेर्नैकस्यतवसुतइत्युक्तमगस्त्येन । अतएव मैत्रावरुणिरित्यगस्त्यनाम ॥ **शि०** अगस्त्यस्यप्रथमोत्पत्तौनिमित्तमाह—तदिति । यत्रवारुणतेज समभवत् प्राप्नोत् । तस्मिन्कुंभे उर्वश्यास्सनिधौमित्रस्यतेज पूर्वमाहितं । अतोगस्त्य पूर्वमभवदितितात्पर्यं ॥ ६ ॥ **ति०** तदनन्तरकस्यचित्कालस्य मित्रावरुणसभव । अत्रोपपत्तिरुक्ता । वसिष्ठोजज्ञेतेजसायुक्त मित्रावरुणयोर्दिव्यतेजसायुक्त । **स०** इक्ष्वाकुदैवत तत्कुलपुरोहित ॥ ७ ॥ **ति०** अपूर्वदेहस्य नूतनदेहवतोवसिष्ठस्य । निर्गम. उत्पत्तिप्रकार कथित । यथाऽभवद्वृत्तान्तइतिशेष । **स०** निमेर्देहनिर्गमोयथाऽभवत्तत्प्रकारश्शृणु ॥ ९ ॥ **स०** तेयाजका यज्ञ[1]दीक्षाकुलालयाजयामासु ॥ **शि०** यज्ञदीक्षा गृहीत्वेतिशेष. ॥ १० ॥ **स०** तंत्यक्तंरक्षन्तिस्म । यथादेह पूतिगन्धिर्नभवेत्तथा ररक्षुः ॥ ११ ॥ **स०** सामर्थ्यस्यसत्त्वात्तवपार्थिवेतिसबोधयामास । चेत. चेतना ॥ १२ ॥ **स०** चेत तदभिमानी ॥ १३ ॥

[ **पा०** ] १ ङ—ट. यैज्ञदीक्षा.

एवमुक्तः सुरैः सर्वैर्निमेश्चेतस्तदाब्रवीत् ॥ नेत्रेषु सर्वभूतानां वसेयं सुरसत्तमाः ॥ १४ ॥
बाढमित्येव विबुधा निमेश्चेतस्तदाऽब्रुवन् ॥ नेत्रेषु सर्वभूतानां वायुभूतश्चरिष्यसि ॥ १५ ॥
त्वत्कृते च निमिष्यन्ति चक्षूंषि पृथिवीपते ॥ वायुभूतेन चरता विश्रमार्थं मुहुर्मुहुः ॥ १६ ॥
एवमुक्त्वा तु विबुधाः सर्वे जग्मुर्यथागतम् ॥ ऋषयोऽपि महात्मानो निमेर्देहं समाहरन् ॥ १७ ॥
अरणिं तत्र निक्षिप्य मथनं चक्रुरोजसा ॥ मन्त्रहोमैर्महात्मानः पुत्रहेतोर्निमेस्तदा ॥ १८ ॥
अरण्यां मथ्यमानायां प्रादुर्भूतो महातपाः ॥ मथनान्मिथिरित्याहुर्जननाज्जनकोभवत् ॥
यस्माद्विदेहात्संभूतो वैदेहस्तु ततः स्मृतः ॥ १९ ॥
एवं विदेहराजश्च जनकः पूर्वकोऽभवत् ॥ मिथिर्नाम महातेजास्तेनायं मैथिलोऽभवत् ॥ २० ॥
[ इति सर्वमशेषतो मया कथितं संभवकारणं तु सौम्य ॥
नृपपुङ्गवशापजं द्विजस्य द्विजशापाच्च यदद्भुतं नृपस्य ॥ २१ ॥ ]
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

## अष्टपञ्चाशः सर्गः ॥ ५८ ॥

निमिराजस्यवसिष्ठेऽक्षमया शापदानकथनप्रसङ्गाद्ययातिक्षमाप्रशंसनाय तत्कथाकथनारभ ॥ १ ॥ ययातिनाम्नोराज्ञ कनिष्ठभार्यायांशर्मिष्ठायाविशेषानुरागेण रुष्टयाज्येष्ठया स्वपितरंशुक्रप्रति सक्रोधययातिनिग्रहप्रार्थने शुक्रेणपुत्रीप्रीत्यै ययातिंप्रतिवृद्धभावसभवशापदानम् ॥ २ ॥

एवं ब्रुवति रामे तु लक्ष्मणः परवीरहा ॥ प्रत्युवाच महात्मानं ज्वलन्तमिव तेजसा ॥ १ ॥
महदद्भुतमाश्चर्यं विदेहस्य पुरातनम् ॥ निवृत्तं राजशार्दूल वसिष्ठस्य निमेः सह ॥ २ ॥

---

निमेश्चेतः चेतोभिमानी प्रत्यगात्मा तदाऽब्रवीत् । किमिति, सर्वभूतानां नेत्रेषु । वैभवात् वसेयं नत्वेकस्मिन्नित्यर्थः ॥ १४ ॥ वायुभूत' नागाद्युपवायुभूत इत्यर्थः ॥ १५ ॥ त्वत्कृते त्वदवस्थाननिमित्त निमिष्यन्ति निमेषधर्मं प्राप्स्यन्ति । विश्रामार्थमिति । उन्मीलनखेदापनोदनार्थमित्यर्थः ॥ १६ ॥ देह केवलमित्यर्थः ॥ १७ ॥ मन्त्रहोमै. पुत्रीयमन्त्रहोमैः । तादृशमन्त्रपूर्वकहोमैरित्यर्थः ॥ १८ ॥ विदेहाद्विगतो देहो विदेह: तस्मात्सभूतो वैदेह' जनक.॥१९—२१॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने सप्तपञ्चाशः सर्ग' ॥ ५७ ॥

---

पुण्यश्रवणत्वेन महदद्भुतं । आश्चर्यादप्याश्चर्यमित्यर्थः । निमेः सहेति । प्रसङ्ग इति शेषः ॥ २ ॥

---

**ति०** वायुभूत वायुसदृशलघुभूतलिङ्गदेहाश्रितइत्यर्थ ॥ १५ ॥ **ति०** चक्षूंषि सर्वभूतानामितिशेष । वायुभूतेनचरतात्वया करणेनविश्रामार्थत्वत्सबन्धेनजायमानस्यखेदस्यापनोदनार्थमित्यर्थ ॥ १६ ॥ **स०** समाहरन् आनीतवन्त ॥ १७ ॥ **ति०** तत्र यज्ञभूमौ । अरणिंनिक्षिप्य निमेर्देहमेवारणिंकृत्वा ॥ १८ ॥ **ति०** विदेहात् विगतचेतोदेहात् । अयंजनकवश ॥ **स०** मथनान्मिथिल । निरुक्त्यन्तरमेतत् । जननाज्जनक । विदेहात् विगतप्राणाद्देहात्सभूतइतिविदेह' । एवंनामत्रयंलब्धवान्पुत्रइति भाव ॥ १९ ॥ २० ॥ इतिसप्तपञ्चाश सर्ग ॥ ५७ ॥

**ति०** अथलक्ष्मणस्यब्राह्मणप्रतिशापायुक्तत्वशङ्कायातादृशक्षमाशीलाअपिसन्तीत्याहप्रसगाद्राम —एवब्रुवतीति ॥ १ ॥
**स०** वसिष्ठस्ययन्निवृत्तं तन्महदद्भुतं । विदेहस्यचयन्नितरावृत्ततदप्याश्चर्यं । अथवा विदेहस्यमुनेश्चपरस्परंपुरातनंनिवृत्त तन्मह

[ पा० ] १ ग. ज. निमेर्देहतपोधना . ख घ. च निमेर्देहेतपोधना'. २ अयंश्लोक ङ. च. छ झ. ञ. ट पाठेषु दृश्यते. ३ ग. वदति. ४ ख. च. छ. झ ञ. ट. मुनेश्चह.

निमिस्तु क्षत्रियः शूरो विशेषेण च दीक्षितः ॥ न क्षमां कृतवान्राजा वसिष्ठस्य महात्मनः ॥ ३ ॥
एवमुक्तस्तु तेनायं श्रीमान्क्षत्रियपुङ्गवः ॥ उवाच लक्ष्मणं वाक्यं सर्वशास्त्रविशारदम् ॥
रामो रमयतां श्रेष्ठो भ्रातरं दीप्ततेजसम् ॥ ४ ॥
न सर्वत्र क्षमा वीर पुरुषेषु प्रदृश्यते ॥ ५ ॥
सौमित्रे दुस्सहो रोषो यथा क्षान्तो ययातिना ॥ सत्त्वानुगं पुरस्कृत्य तं निबोध समाहितः ॥ ६ ॥
नहुषस्य सुतो राजा ययातिः पौरवर्धनः ॥ तस्य भार्याद्वयं सौम्य रूपेणाप्रतिमं भुवि ॥ ७ ॥
एका तु तस्य राजर्षेर्नाहुषस्य पुरस्कृता ॥ शर्मिष्ठा नाम दैतेयी दुहिता वृषपर्वणः ॥ ८ ॥
अन्या तूशनसः पत्नी ययातेः पुरुषर्षभ ॥ न तु सा दयिता राज्ञो देवयानी सुमध्यमा ॥ ९ ॥
तयोः पुत्रौ तु संभूतौ रूपवन्तौ समाहितौ ॥ शर्मिष्ठाऽजनयत्पूरुं देवयानी यदुं तदा ॥ १० ॥
पूरुस्तु दयितो राज्ञो गुणैर्मातृकृतेन च ॥ ततो दुःखसमाविष्टो यदुर्मातरमब्रवीत् ॥ ११ ॥
भार्गवस्य कुले जाता देवस्याक्लिष्टकर्मणः ॥ सहसे हृद्गतं दुःखमवमानं च दुस्सहम् ॥ १२ ॥
आवां च सहितौ देवि प्रविशाव हुताशनम् ॥ राजा तु रमतां सार्धं दैत्यपुत्र्या बहुक्षपाः ॥ १३ ॥
यदिवा सहनीयं ते मामनुज्ञातुमर्हसि ॥ क्षम त्वं न क्षमिष्येऽहं मरिष्यामि न संशयः ॥ १४ ॥
पुत्रस्य भाषितं श्रुत्वा परमार्तस्य रोदतः ॥ देवयानी तु संक्रुद्धा सस्मार पितरं तदा ॥ १५ ॥
इङ्गितं तदभिज्ञाय दुहितुर्भार्गवस्तदा ॥ आगतस्त्वरितं तत्र देवयानी तु यत्र सा ॥ १६ ॥
दृष्ट्वा चाप्रकृतिस्थां तामप्रहृष्टामचेतनाम् ॥ पिता दुहितरं वाक्यं किमेतदिति चाब्रवीत् ॥ १७ ॥
पृच्छन्तमसकृत्तं वै भार्गवं दीप्ततेजसम् ॥ देवयानी तु संक्रुद्धा पितरं वाक्यमब्रवीत् ॥ १८ ॥
अहमग्निं विषं तीक्ष्णमपो वा मुनिसत्तम ॥ भक्षयिष्ये प्रवेक्ष्यामि न तु शक्ष्यामि जीवितुम् ॥१९॥

---

महात्मनि वसिष्ठे विषये कथ धार्मिकः निमिः अमर्ष चकारेति पृष्टवन्तं लक्ष्मण प्रति ययातिक्षमाकथनं "आम्रान्पृष्टः कोविदारानाचष्टे" इति न्याय कथं नानुसरेत् । मैव महान् दोष । चिन्तायाः अकर्तव्याभिप्रायात् । गुणवतो गुणकीर्तनस्य ॥ ३—५ ॥ यथा येन प्रकारेण । सत्त्वानुग सत्त्वगुणानुमतं । मार्गमिति शेषः । त प्रकारं निबोध ॥ ६—७ ॥ पुरस्कृता पूजिता । दैतेयी दितेः पौत्री ॥ ८ ॥ उशनसः शुक्रस्य ॥ ९—१५ ॥ इङ्गित सखेदरोषभाव ॥ १६ ॥ अप्रकृतिस्थां अस्वस्थां । अप्रहृष्टां हर्षरहितां । अचेतनां क्षुभितचित्तां ॥ १७—१८ ॥ अग्नि प्रवेक्ष्यामि विष भक्षयिष्य इति संबन्धः ॥ १९ ॥

---

दद्भुतमाश्चर्यं अत्याश्चर्यमित्यर्थ ॥ २ ॥ **ति०** नक्षमकृतवान् अनुचितमेवकृतवानित्यर्थ ॥ **स०** विशेषतोदीक्षितइत्यनेनतस्य क्षमाभावेऽनर्थश्रवणसूचयति । वसिष्ठस्य तद्विषये ॥ **शि०** दीक्षितोनिमि वसिष्ठस्यक्षमंक्षमायथाभवतितथानकृतवान् । एतेननिमिनाक्षन्तव्यमितिसूचितं ॥ ३ ॥ **शि०** राम सर्वाभिरामदाता । अतएवरमयताश्रेष्ठ राम लक्ष्मणमुवाच ॥ ४ ॥ **ति०** पौरान्वर्धयतीतिपौरवर्धन ॥ ७ ॥ **स०** सातुदेवयानीराज्ञोनदयिता । तस्या शर्मिष्ठासङ्गस्यानभिमतत्वेनतत्करणानन्तर तदुक्तदुर्वचनश्रवणेनराज्ञोवैमनस्यादितिभाव ॥ ९ ॥ **स०** तयो शर्मिष्ठादेवयान्यो । पुत्रौ पूरुयद्वाख्यौ । तुर्वस्वादीनात्रयाणा मुख्यवंशकर्तृत्वाभावादनुक्ति ॥ १० ॥ **स०** तत राज्ञ पूरौप्रीत्यतिशयदर्शनानन्तर । मातर देवयानी ॥ ११ ॥ **स०** देवस्य द्योतनादिगुणस्य । सहसे किमर्थमितिशेष ॥ १२ ॥ **ति०** मामनुज्ञातुमर्हसि । अग्निप्रवेशार्थमितिशेष ॥ १४ ॥ **स०** पितर शुक्रं । तदाश्रमगत्वाऽन्यत्रगतसस्मार । यथोक्तमादिपर्वणि—'त्वरितंसकाशकाव्यस्यप्रस्थिताव्यथितस्तदा । अनुवव्राजसम्भ्रान्त पृष्ठत सान्त्वयन्नृप । अचिरादेवसप्राप्ताकाव्यस्योशनसोन्तिकम्' इत्यादि ॥ १५ ॥ **स०** इङ्गित मनोगतं । यत्र स्वाश्रमे । तत्र 'आगत' स्वतपस्स्थलात् ॥ १६ ॥ **स०** अचेतना स्मृतिहीना । एतत् तु खचिह्नं । कि किंनिमित्त ॥ १७ ॥

**[ पा० ]** १ झ. ठ. क्षमं. २ घ. च. छ. सत्वगुण ग. ज. सत्वात्मकं. ३ ख. ज. सुतातूशनसश्चैकापत्नीयन्नाहुषस्यवै. घ. ञ. ट. सुतातूशनस'पत्नी. ग. च. छ. अन्यातूशनस पुत्रीययाते..

न मां त्वमवजानीषे दुःखितामवमानिताम् ।। वृक्षस्यावज्ञया ब्रह्मंश्छिद्यन्ते वृक्षजीविनः ।। २० ।।
अवज्ञया च राजर्षिः परिभूय च भार्गव ।। मय्यवज्ञां प्रयुङ्क्ते हि न च मां बहुमन्यते ।। २१ ।।
तस्यास्तद्वचनं श्रुत्वा कोपेनाभिपरिप्लुतः ।। व्याहर्तुमुपचक्राम भार्गवो नहुषात्मजम् ।। २२ ।।
यस्मान्मामवजानीषे नाहुष त्वं दुरात्मवान् ।। जरया परया जीर्णः शैथिल्यमुपयास्यसि ।। २३ ।।
एवमुक्त्वा दुहितरं समाश्वास्य च भार्गवः ।। पुनर्जगाम ब्रह्मर्षिर्भवनं स्वं महायशाः ।। २४ ।।

स एवमुक्त्वा द्विजपुङ्गवाग्र्यः सुतां समाश्वास्य च देवयानीम् ।।
पुनर्ययौ सूर्यसमानतेजा दत्त्वा च शापं नहुषात्मजाय ।। २५ ।।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अष्टपञ्चाशः सर्गः ।। ५८ ।।

---

## एकोनषष्टितमः सर्गः ।। ५९ ।।

शुक्रशापाज्जरांप्राप्तेनययातिना शुक्रानुग्रहबलेनैवशर्मिष्ठापुत्रेपूरौनिजजरासंक्रमणपूर्वकं तदीययौवनस्वीकारेण चिरकालं भोगानुभव ।। १ ।। ततस्तृप्तेनययातिना पूरुतोनिजजरास्वीकारपूर्वक तस्मिंस्तदीययौवनप्रत्यर्पणेन परितोषात्तस्यराज्येऽभिषेचनेनवनगमनम् ।। २ ।।

श्रुत्वा तूशनसं क्रुद्धं तदार्तो नहुषात्मजः ।। जरां परमिकां प्राप्य यदुं वचनमब्रवीत् ।। १ ।।
यदो त्वमसि धर्मज्ञो मदर्थं प्रतिगृह्यताम् ।। जरा परमिका पुत्र भोगै रंस्ये महायशः ।। २ ।।
न तावत्कृतकृत्योऽस्मि विषयेषु नरर्षभ ।। अनुभूय तथा कामं ततः प्राप्स्याम्यहं जराम् ।। ३ ।।
यदुस्तद्वचनं श्रुत्वा प्रत्युवाच नरर्षभम् ।। पुत्रस्ते दयितः पूरुः प्रतिगृह्णातु वै जराम् ।। ४ ।।
बहिष्कृतोऽहमर्थेषु सन्निकर्षाच्च पार्थिव ।। प्रतिगृह्णातु वै राजन्कः सहाश्नाति भोजनम् ।। ५ ।।
तस्य तद्वचनं श्रुत्वा राजा पूरुमथाब्रवीत् ।। इयं जरा महाबाहो मदर्थं प्रतिगृह्यताम् ।। ६ ।।
नाहुषेणैव मुक्तस्तु पूरुः प्राञ्जलिरब्रवीत् ।। धन्योस्म्यनुगृहीतोस्मि शासनेऽस्मि तव स्थितः ।। ७ ।।

---

दुःखितामवमानितां नावजानीपे न जानीषे न जानासि । अवोपसर्गो धात्वर्थमात्रे वर्तते । अन्यापदेशेनाह–वृक्षस्येति । वृक्षस्यावज्ञया छेदनादिना वृक्षजीविनः पत्रपुष्पादयश्छिद्यन्ते ।।२०।। तदेवोपपादयति–अवज्ञयेत्यादि ।। हे भार्गव । राजर्षिस्त्वय्यवज्ञया हेतुभूतया मां परिभूय मय्यवज्ञा प्रयुङ्क्ते । अवज्ञाय सराजर्षि. परिभूय च भार्गवमिति पाठे भार्गवविषयावमानबहुमानाभ्यां मय्यवज्ञानबहुमानभावं करोतीत्यर्थः ।। २१—२५ ।। इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने अष्टपञ्चाशः सर्गः ।।५८।।

---

श्रुत्वेत्यादि ।। १—४ ।। बहिष्कृत इति ।। सन्निकर्षात् समीपावस्थापनादिकृत्याच्च बहिष्कृत ।। ५—

---

**स०** यद्यप्यवपूर्वोज्ञाधातुरवज्ञानार्थ । तथापि प्रकृतेज्ञानमात्रार्थ । **शि०** ननुतवपुत्रादीनासुखिलेकितवापमानेनेत्यतआह—वृक्षस्येति । एतेन मदवमानेनैवपुत्रादयोप्यवमानिताइतिसूचित ।। २० ।। इत्यष्टपञ्चाश सर्ग ।। ५८ ।।

**ति०** जरा पलितता । उशन प्रसादादन्यत्रसक्रमयोग्याप्राप्य । यदु देवयानीपुत्रं ।। **स०** महती सहसैवोत्पन्नत्वान्महत्त्वं जराया ।। १ ।। **स०** धर्मज्ञ पित्राज्ञापरिपालनरूपधर्मज्ञ ।। **शि०** भोगै तत्साधनै स्त्रीभि रस्ये । अत परमिकामेजरा मदर्थ मद्भोगसिद्ध्येत्वयाप्रतिगृह्यता । तत्रहेतु यतस्त्वधर्मज्ञोसि ।। २ ।। **स०** अर्थेषु तद्विषयेबहिष्कृत सनिकर्षाल्लालनादेर्बहिष्कृत । यै पूर्वादिभि सहभोजन । तदन्नादिअश्नासि । पूरुमात्रंलक्षीकृत्यगृह्णात्विति वदतायैरित्युक्तिस्तल्लालनप्रकारबाहुविध्यादि-

[ पा० ] १ च. छ. झ. ञ ट. वयसाजरयाजीर्ण. २ ठ जरातुमहतीप्राप्य. ३ ग—ट. राजन्यैस्सहाश्नासि

पूरोर्वचनमाज्ञाय नाहुषः परया मुदा ॥ प्रहर्षमतुलं लेभे जरां संक्रामयच्च ताम् ॥ ८ ॥
ततः स राजा तरुणः प्राप्य यज्ञान्सहस्रशः ॥ बहुवर्षसहस्राणि पालयामास मेदिनीम् ॥ ९ ॥
अथ दीर्घस्य कालस्य राजा पूरुमथाब्रवीत् ॥ आनयस्व जरां पुत्र न्यासं निर्यातयस्व मे ॥ १० ॥
न्यासभूता मया पुत्र त्वयि संक्रामिता जरा ॥ तस्मात्प्रतिग्रहीष्यामि तां जरां मा व्यथां कृथाः ११
प्रीतश्चास्मि महाबाहो शासनस्य प्रतिग्रहात् ॥ त्वां चाहमभिषेक्ष्यामि प्रीतियुक्तो नराधिपम् ॥१२॥
एवमुक्त्वा सुतं पूरुं ययातिर्नहुषात्मजः ॥ देवयानीसुतं क्रुद्धो राजा वाक्यमुवाच ह ॥ १३ ॥
राक्षसस्त्वं मया जातः [1]पुत्ररूपो दुरासदः ॥ प्रतिहंसि ममाज्ञां यत्प्रजार्थे विफलो भव ॥ १४ ॥
पितरं गुरुभूतं मां यस्मात्त्वमवमन्यसे ॥ राक्षसान्यातुधानांस्त्वं जनयिष्यसि दारुणान् ॥ १५ ॥
न तु [2]सोमकुलोत्पन्ने वंशे स्थास्यति दुर्मतेः ॥ वंशोपि भवतस्तुल्यो दुर्विनीतो भविष्यति ॥ १६ ॥
तमेवमुक्त्वा राजर्षिः पूरुं राज्यविवर्धनम् ॥ अभिषेकेण संपूज्य आश्रमं प्रविवेश ह ॥ १७ ॥
ततः कालेन महता दिष्टान्तमुपजग्मिवान् ॥ त्रिदिवं संगतो राजा ययातिर्नहुषात्मजः ॥ १८ ॥
पूरुश्चकार तद्राज्यं धर्मेण महता वृतः ॥ प्रतिष्ठाने पुरवरे काशीराज्ये महायशाः ॥ १९ ॥
यदुस्तु जनयामास यातुधानान्सहस्रशः ॥ पुरे क्रौञ्चवने दुर्गे राजवंशबहिष्कृतः ॥ २० ॥
एष तूशनसा मुक्तः शापोत्सर्गो ययातिना ॥ धारितः क्षत्रधर्मेण यं निमिश्च न चक्षमे ॥ २१ ॥
एतत्ते सर्वमाख्यातं दर्शनं सर्वकारिणाम् ॥ अनुवर्तामहे सौम्य दोषो न स्याद्यथा नृगे ॥ २२ ॥

---

७॥ पूरोरिति ॥ जरां संक्रामयदिति । योगबलादिति शेषः ॥ ८—१० ॥ न्यासभूतेति ॥ हे पुत्र । त्वयि मया सक्रामिता जरा तस्मान्मया जात' ॥ ११—१३ ॥ राक्षस इति ॥ प्रजार्थे विफलो भवेति । प्रजया पुत्रेण पितु सकाशात्प्राप्यार्थः राज्यादिलक्षणरूपः तस्मिन्विफल उक्तप्रयोजनरहित इत्यर्थः ॥ १४—१५ ॥ नत्विति त्वयेति शेषः ॥ १६—२० ॥ ययातिवृत्तान्तप्रतिपादनस्य प्रकृतोपयोगमाह—एष तूशनसेति ॥ यमृषिशापं निमिर्न चक्षमे तादृश. शापो ययातिना धारित इत्यर्थ. ॥ २१॥ एतदिति ॥

---

तिमन्तव्य ॥ तदादिकक्ष्यीकारेगृह्णन्त्वितिपाठोवा ॥ ५ ॥ **स०** परयामुदा मुखविकाससूचितया । तस्य पूरो धन्योस्मीत्यादिवचनंआज्ञाय ज्ञात्वा । प्रहर्षं सतोषं । लेभे । परयामुदा प्रहर्षरोमाञ्चित लेभइतिवा । ता तापसशापोपयाता । सक्रामयत् समक्रामयत् । वरबलादितिशेष । योगबलादितिशेषइतिवदन्नागोजिभट्टोभारताद्यनभिज्ञइतिज्ञायते । 'पुत्रोज्येष्ठ कनिष्ठोवायो ददातिभयाद्वय । सक्रामयिष्यसिजरांयथेष्टंनहुषात्मज । मामनुध्यायभावेननचपापमवाप्स्यसि । वयोदास्यतितेपुत्रोय.सराजा भविष्यति । आयुष्मान्कीर्तिमाश्चैवबहुपुत्रस्तथैवच' इत्यादिपर्वोक्ते । पूरौजरासयोजयामास ॥ ८ ॥ **स०** दीर्घस्यकालस्य अथ अनन्तरं । जरान्यास तदभिन्नन्यास । त्वयिमयान्यस्ताजरानिर्यातयस्व प्रत्यर्पय ॥ **शि०** दीर्घस्यकालस्य अपगमेइति शेष ॥ १० ॥ **स०** व्यथामाकृथा पिताऽधुनाअतृप्तेन्द्रियोमद्दाक्षिण्याद्दातुमायातइतिव्यथा ॥ ११ ॥ **ति०** प्रजार्थे प्रजानामाधिपत्यलक्षणेप्रयोजने । विफलोभव राज्याधिपत्यरहितोभवेत्यर्थ ॥ १४ ॥ **ति०** दुर्मतेस्तवसतानेइतिशेष । योप्यराक्षसस्तव संतान । सोपिक्षत्रियमात्रमेव नतुसोमवशराजपदाभिषिक्त । भवत्तुल्यदुर्विनीतत्वादितिभाव ॥ **स०** सोमकुलोत्पन्नेवशेतत्परपरायातवदुर्मतेर्वंशोनस्थास्यति । सूर्यवशप्रविशति । नसूर्यवशप्रवेशनमेवानिष्टमित्यतआचष्टे—**दुर्विनीतइति** । यथोक्तंहरिवशे—'यायातमपिवंशस्तेसमेष्यतिचयादवम् । अत्रवशेऽनुवंशस्तेसोमस्यभविताकिल । एवमिक्ष्वाकुवंशाद्धियदुवशोविनिस्सृत । चतुर्धायदुपुत्रैश्चचतुर्भिर्भियतेपुन । सयदुर्माधवेराज्यंविसृज्ययदुपुंगवे । त्रिविष्टपंगतोराजादेहत्यक्त्वामहीतले । बभूवमाधवसुत सत्वतोनामवीर्यवान्' इत्यादिविकद्रुकसवादे । दुर्मतेस्तुसतानइतिशेष । योप्यराक्षसस्तवसतान सोपिक्षत्रियमात्रमेव नतुसोमवशराजपदाभिषिक्त । भवत्तुल्यदुर्विनीतत्वादितिभावइतिनागोजिभट्टोनेदमवलोकतइत्युपेक्षणीयवागित्यवगन्तव्यम् ॥ १६ ॥ **ति०** आश्रमं वानप्रस्थाश्रमं ॥ १७ ॥ **ति०** एतत्तेसर्वप्रजाकार्यानवलोकनेशाप केषाञ्चित्तदक्षमा केषाञ्चित्क्षमेत्यादिकंसर्वमाख्यातं । अत.कार कृत्यं तद्येषामस्तितेकारिण । तेषाकार्यापेक्षिणासर्वेषादर्शन अनुवर्तामहे अङ्गीकुर्मे । यथानृगे दोषोजातस्तथादोषोममनस्यात् नभवेत् इत्येतदर्थमित्यर्थ ॥ २२ ॥

[ पा० ] १ क—ट. क्षत्ररूपो. २ क. ख. घ च. ज. ञ. सोमकुलोद्भूते.

इति कथयति रामे चन्द्रतुल्यानने च प्रविरलतरतारं व्योम जज्ञे तदानीम् ॥
अरुणकिरणरक्ता दिग्बभौ चैव पूर्वा कुसुमरसविमुक्तं वस्त्रमाकुण्ठितेव ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

## ॥ अथाधिकपाठसर्गप्रारम्भः ॥

### प्रक्षिप्तेषु प्रथमः सर्गः ॥ १ ॥

वसिष्ठादिभिर्मन्त्रिश्रेष्ठैश्चसह प्रभातेसभांप्रविष्टेनरामेण लक्ष्मणप्रति कार्यार्थिसमाह्वानचोदना ॥ १ ॥ लक्ष्मणेन द्वारदेशवर्तिन कार्यार्थिन रामानुमत्याऽन्त.प्रवेशनम् ॥ २ ॥

ततः प्रभाते विमले कृत्वा पौर्वाह्णिकीं क्रियाम् ॥ धर्मासनगतो राजा रामो राजीवलोचनः ॥ १ ॥
राजधर्मानवेक्षन्वै ब्राह्मणैर्नैगमैः सह ॥ पुरोधसा वसिष्ठेन ऋषिणा कश्यपेन च ॥ २ ॥
मन्त्रिभिर्व्यवहारज्ञैस्तथाऽन्यैर्धर्मपारगैः ॥ नीतिज्ञैरथ सभ्यैश्च राजभिः सा समावृता ॥ ३ ॥
सभा यथा महेन्द्रस्य यमस्य वरुणस्य च ॥ शुशुभे राजसिंहस्य रामस्याक्लिष्टकर्मणः ॥ ४ ॥
अथ रामोऽब्रवीत्तत्र लक्ष्मणं शुभलक्षणम् ॥ निर्गच्छ त्वं महाबाहो सुमित्रानन्दवर्धन ॥
कार्यार्थिनश्च सौमित्रे व्याहर्तुं त्वमुपक्रम ॥ ५ ॥
रामस्य भाषितं श्रुत्वा लक्ष्मणः शुभलक्षणः ॥ द्वारदेशमुपागम्य कार्यिणश्चाह्वयत्स्वयम् ॥ ६ ॥
न कश्चिदब्रवीत्तत्र मम कार्यमिहाद्य वै ॥ नाधयो व्याधयश्चैव रामे राज्यं प्रशासति ॥ ७ ॥
पक्कसस्या वसुमती सर्वौषधिसमन्विता ॥ न बालो म्रियते तत्र न युवा नच मध्यमः ॥ ८ ॥
धर्मेण शासितं सर्वं न च बाधा विधीयते ॥ दृश्यते न च कार्यार्थी रामे राज्यं प्रशासति ॥ ९ ॥
लक्ष्मणः प्राञ्जलिर्भूत्वा रामायैवं न्यवेदयत् ॥ १० ॥
अथ रामः प्रसन्नात्मा सौमित्रिमिदमब्रवीत् ॥ भूय एव तु गच्छ त्वं कार्यिणः प्रविचारय ॥ ११ ॥
सम्यक्प्रणीतया नीत्या नाधर्मो विद्यते क्वचित् ॥ तस्माद्राजभयात्सर्वे रक्षन्तीव परस्परम् ॥ १२ ॥
बाणा इव मया मुक्ता इह रक्षन्ति मे प्रजाः ॥ तथापि त्वं महाबाहो प्रजा रक्षस्व तत्परः ॥ १३ ॥

---

कारः कृत्यमेषामस्तीति कारिणः । कार्यापेक्षिण इत्यर्थः ॥ २२—२३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

ति० विमुक्तं युक्तं ॥ २३ ॥ इत्येकोनषष्टितम सर्ग ॥५९॥

स० यद्यपितीर्थकतकाद्यस्पृष्टमितिनागोजिभट्टेनप्रक्षिप्तमितित्यक्तंगृध्रोलूकाद्याख्यानं । तथापिवीथीपाथसान्निपथगानिविष्टाना यथासेव्यतातयैतस्यापीतिवा बहुकोशेषुदर्शनेनैतत्प्रक्षेपविषयेनागोजिभट्टस्यभ्रमसभवेनवाल्मीकिवाक्यत्वाद्व्याख्यास्यते । धर्मासन यत्रोपविश्यानयो नयोग्य कर्तुं तादृशन्यायासनंगतोराम । 'धर्म पुण्येचन्यायेच' इतिविश्व ॥ १ ॥ अवेक्षन् अवेक्षमाण. । नैगमै. वेदज्ञै निकटवर्तिपुटभेदनस्थैरितिवा ॥ २ ॥ राजभि अवान्तरै ॥ ३ ॥ उपक्रम प्रारभस्व ॥ ५ ॥ कार्यिण कार्यार्थिन ॥ ६ ॥ इहाद्य ममकार्यमस्तीतिनकश्चिदब्रवीत् । सर्वस्यापिसिद्धार्थत्वादितिभाव ॥ ७ ॥ मध्यमः नम्रियते ॥ ८ ॥ एवं कार्यार्थीनेतिन्यवेदयत् ॥ १० ॥ परस्परंरक्षन्ति यथानभवेदधर्मस्तथा अन्ततोगत्वाराजकोपोभवेदितिभयात् ॥ १२ ॥ मयामुक्ताबाणायथालोकानवन्ति ॥ १३ ॥

एवमुक्तस्तु सौमित्रिर्निर्जगाम नृपालयात् ॥ अपश्यद्द्वारदेशे वै श्वानं तावदवस्थितम् ॥ १४ ॥
तमेव वीक्षमाणं वै विक्रोशन्तं मुहुर्मुहुः ॥ दृष्ट्वाऽथ लक्ष्मणस्तं वै पप्रच्छाथ स वीर्यवान् ॥ १५ ॥
किं ते कार्यं महाभाग ब्रूहि विस्रब्धमानसः ॥ लक्ष्मणस्य वचः श्रुत्वा सारमेयोऽभ्यभाषत ॥१६॥
सर्वभूतशरण्याय रामायाक्लिष्टकर्मणे ॥ भयेष्वभयदात्रे च तस्मै वक्तुं समुत्सहे ॥ १७ ॥
एतच्छ्रुत्वा तु वचनं सारमेयस्य लक्ष्मणः ॥ राघवाय तदाख्यातुं प्रविवेशालयं शुभम् ॥ १८ ॥
निवेद्य रामस्य पुनर्निर्जगाम नृपालयात् ॥ वक्तव्यं यदि ते किंचित्तत्त्वं ब्रूहि नृपाय वै ॥
लक्ष्मणस्य वचः श्रुत्वा सारमेयोऽभ्यभाषत ॥ १९ ॥
देवागारे नृपागारे द्विजवेश्मसु वै तथा ॥ वह्निः शतक्रतुश्चैव सूर्यो वायुश्च तिष्ठति ॥ २० ॥
नात्र योग्यास्तु सौमित्रे योनीनामधमा वयम् ॥ प्रवेष्टुं नात्र शक्ष्यामो धर्मो विग्रहवान्नृपः ॥ २१ ॥
सत्यवादी रणपटुः सर्वभूतहिते रतः ॥ षाड्गुण्यस्य पदं वेत्ति नीतिकर्ता स राघवः ॥ २२ ॥
सर्वज्ञः सर्वदर्शी च रामो रमयतांवरः ॥ २३ ॥
स सोमः स च मृत्युश्च स यमो धनदस्तथा ॥ वह्निः शतक्रतुश्चैव सूर्यो वै वरुणस्तथा ॥ २४ ॥
तस्य त्वं ब्रूहि सौमित्रे प्रजापालः स राघवः ॥ अनाज्ञप्तस्तु सौमित्रे प्रवेष्टुं नेच्छयाम्यहम् ॥ २५ ॥
आनृशंस्यान्महाभागः प्रविवेश महाद्युतिः ॥ नृपालयं प्रविश्याथ लक्ष्मणो वाक्यमब्रवीत् ॥ २६ ॥
श्रूयतां मम विज्ञाप्यं कौसल्यानन्दवर्धन ॥ यन्मयोक्तं महाबाहो तव शासनजं विभो ॥
श्वा वै ते तिष्ठते द्वारि कार्यार्थी समुपागतः ॥ २७ ॥
लक्ष्मणस्य वचः श्रुत्वा रामो वचनमब्रवीत् ॥ संप्रवेशय वै क्षिप्रं कार्यार्थी योऽत्र तिष्ठति ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे प्रथमः सर्गः ॥ १ ॥

---

## प्रक्षिप्तेषु द्वितीयः सर्गः ॥ २ ॥

श्रीरामेण कार्यनिवेदनंचोदितेनशुना तंप्रत्यनपराधेपि निजमूर्धनि सर्वार्थसिद्धनामकभिक्षुकृतदण्डप्रहारनिवेदनम् ॥१॥ रामेण निजदूतानीतयतिंप्रति सारमेयशिरस्ताडनहेतुप्रश्नः ॥ २ ॥ भिक्षुणा तंप्रति क्षुधातुरतयाक्रुद्धेनस्वेन रथ्यास्थितेदूरानपसारिणिसारमेये दण्डप्रहरणाङ्गीकरणपूर्वकं स्वस्यसमुचितशिक्षाप्रार्थना ॥ ३ ॥ वसिष्ठादिभि सह शिक्षाविचारपरेसति रामे तत्प्रतिशुना तस्यकालञ्जरपुरेदेवालये कुलपतित्वेऽभिषेचनरूपशिक्षाविधानोक्ति ॥ ४ ॥ रामेण भिक्षो कुलपतित्वेऽभिषेचनपूर्वकं गजस्कंधारोपणेनकालञ्जरप्रापणम् ॥ ५ ॥ शिक्षार्हेभिक्षौ वरदानविस्मितामात्यादीन्प्रति शुना रामचोदनया स्वस्यसारमेयत्वप्राप्तेर्जन्मान्तरीयस्वीयकुलपतित्वहेतुकत्वोक्ति. ॥ ६ ॥

श्रुत्वा रामस्य वचनं लक्ष्मणस्त्वरितस्तदा ॥ श्वानमाहूय मतिमान्राघवाय न्यवेदयत् ॥ १ ॥
दृष्ट्वा समागतं श्वानं रामो वचनमब्रवीत् ॥ विवक्षितार्थं मे ब्रूहि सारमेय न ते भयम् ॥ २ ॥

---

श्वानं अपश्यत् ॥ १४ ॥ वीक्षमाण स्वविचारकर्तारं ॥ १५ ॥ विस्रब्धमानस विश्वस्तमना. ॥ १६ ॥ भयेषु तत्साधनेषु आयातेषु अभयदात्रे ॥ १७ ॥ तत्वं यथार्थं । तत् त्वं ब्रूहीतिवा ॥ १९ ॥ देवागारे देवालये ॥ २० ॥ अत्रप्रवेष्टुंनयोग्या । तत्रहेतु योनीनामधमा. नीचा । धर्मएव विग्रहवान् शरीरभृत् ॥ २१ ॥ सर्वज्ञ सामान्यत । सर्वदर्शी विशेषज्ञ ॥ २३ ॥ इच्छयामि इच्छामि ॥ २५ ॥ आनृशस्यात् दीनानुकंपित्वात् ॥ २६ ॥ तवशासनजं बहि केपिकार्यिण सन्तिकिंविचारयेत्ये-तदनन्तरजं ॥ मयोक्तं कोपिकार्यार्थीवर्ततेचेदायात्विति ॥ २७ ॥ योवाकोवा अवश्यंक्षिप्रमन्त प्रवेशय ॥ २८ ॥ इति सत्यधर्मतीर्थीये प्रक्षिप्तसर्गव्याख्यानेप्रथम सर्ग ॥ १ ॥

आहूय आकारयित्वा । आगतन्यवेदयत् ॥ १ ॥ तेभयंन नविद्यते । नते यस्मिन्कस्मिंश्चित् नते नम्रेजने तद्विषये अभय-

[ पा० ] १ ङ. च. छ. झ. ञ. सर्वसत्वहितेरत . २ ङ. रुद्रोवै.

अथापश्यत तत्रस्थं रामं श्वा भिन्नमस्तकः ॥ [ ततो दृष्ट्वा स राजानं सारमेयोऽब्रवीद्वचः ॥ ३ ॥
राजैव कर्ता भूतानां राजा चैव विनाशकः ॥ ] राजा सुप्तेषु जागर्ति राजा पालयति प्रजाः ॥४॥
राजा कर्ता च गोप्ता च सर्वस्य जगतः पिता ॥ राजा कालो युगं चैव राजा सर्वमिदं जगत् ॥५॥
नीत्या सुनीतया राजा धर्मं रक्षति रक्षिता ॥ यदा न पालयेद्राजा क्षिप्रं नश्यन्ति वै प्रजाः ॥६॥
धारणाद्धर्म इत्याहुर्धर्मेण विधृताः प्रजाः ॥ यस्माद्धारयते सर्वं त्रैलोक्यं सचराचरम् ॥ ७ ॥
धारणाद्धि द्विषां चैव धर्मेणारञ्जयन्प्रजाः ॥ तस्माद्धारणमित्युक्तं स धर्म इति निश्चयः ॥ ८ ॥
एष राजन्परो धर्मः फलवान्प्रेत्य राघव ॥ न हि धर्माद्भवेत्किंचिद्दुष्प्रापमिति मे मतिः ॥ ९ ॥
दानं दया सतां पूजा व्यवहारेषु चार्जवम् ॥ एष राम परो धर्मो रक्षणात्प्रेत्य चेह च ॥ १० ॥
त्वं प्रमाणं प्रमाणानामसि राघव सुव्रत ॥ विदितश्चैव ते धर्मः सद्भिराचरितस्तु वै ॥ ११ ॥
धर्माणां त्वं परं धाम गुणानां सागरोपमः ॥ अज्ञानाच्च मया राजन्नुक्तस्त्वं राजसत्तम ॥
प्रसादयामि शिरसा न त्वं क्रोद्धुमिहार्हसि ॥ १२ ॥
शुनकस्य वचः श्रुत्वा राघवो वाक्यमब्रवीत् ॥ किं ते कार्यं करोम्यद्य ब्रूहि विस्रब्ध माचिरम् ॥१३॥
रामस्य वचनं श्रुत्वा सारमेयोऽब्रवीदिदम् ॥ धर्मेण राष्ट्रं विन्देत धर्मेणैवानुपालयेत् ॥ १४ ॥
धर्माच्छरण्यतां याति राजा सर्वभयापहः ॥ इदं विज्ञाय यत्कृत्यं श्रूयतां मम राघव ॥ १५ ॥
भिक्षुः सर्वार्थसिद्धश्च ब्राह्मणावसथे वसन् ॥ तेन दत्तः प्रहारो मे निष्कारणमनागसः ॥ १६ ॥
एतच्छ्रुत्वा तु रामेण द्वास्थः संप्रेषितस्तदा ॥ आनीतश्च द्विजस्तेन सर्वसिद्धार्थकोविदः ॥ १७ ॥
अथ द्विजवरस्तत्र रामं दृष्ट्वा महाद्युतिः ॥ किं ते कार्यं मया राम तद्ब्रूहि त्वं ममानघ ॥ १८ ॥
एवमुक्तस्तु विप्रेण रामो-वचनमब्रवीत् ॥ त्वया दत्तः प्रहारोऽयं सारमेयस्य वै द्विज ॥
किं तवापकृतं विप्र दण्डेनाभिहतो यतः ॥ १९ ॥
क्रोधः प्राणहरः शत्रुः क्रोधो मित्रमुखो रिपुः ॥ क्रोधो ह्यसिर्महातीक्ष्णः सर्वं क्रोधोपकर्षति ॥२०॥
तपते यजते चैव यच्च दानं प्रयच्छति ॥ क्रोधेन वै संहरति तस्मात्क्रोधं विसर्जयेत् ॥ २१ ॥
इन्द्रियाणां प्रदुष्टानां हयानामिव धावताम् ॥ कुर्वीत धृत्या सारथ्यं संहृत्येन्द्रियगोचरम् ॥ २२ ॥
मनसा कर्मणा वाचा चक्षुषा च समाचरेत् ॥ श्रेयो लोकस्य चरतो न द्वेष्टि न च लिप्यते ॥२३॥

---

मितिवा ॥ २ ॥ तत्रस्थं सुप्सुपेतिसमास ॥ ३ ॥ सुप्तेषुजनेषुराजा जागर्ति । सर्पत्सर्पादितोयथाव्ययानस्यात्तथा जागर्ति । प्रजा पालयति पोषयति ॥ ४ ॥ सुनीतया सम्यक्प्रजाप्रतिनीतया तत्समाननादिविषयतयाप्रापितया नीत्या राजनीत्या । रक्षिता धर्मंरक्षति सएवराजा ॥ ६ ॥ धारणाद्धर्मइत्याहु श्रुतिस्मृतय । किंकर्मकतदित्यतआह—**धर्मेणविधृताःप्रजाइति** ॥ ७ ॥ धर्मात्किंचिद्दुष्प्रापंनेतिमेमति ॥ ९ ॥ किंलक्षण सइत्यतआह—दानमिति । आर्जव अकौटिल्यं ॥ १० ॥ प्रमाणाना प्रमाणं साक्षिरूप । ते त्वया ॥ ११ ॥ धर्माणा त्वंपरधाम मुख्याश्रय । गुणानासागरोपम तै समुद्रसम ॥ वर्मोऽवश्यंराज-सुवर्तितव्य । सचैतादृशइत्यज्ञप्रतीवसुज्ञप्रतिवचनंचाज्ञानात् ॥ एतदागोगमयितव्यमितित्वाशिरसाप्रसादयामि । इह मह्यं ॥ १२ ॥ विस्रब्ध विश्वस्तहेश्वन् ॥ १३ ॥ क्षमापनानन्तरमपिपुनर्धर्मेणेत्यादिवचन जातिचापलात्स्वाभिप्रेतप्रभवनौत्सुक्याति-शयवशाद्वा पुनर्वचनं ॥ १४ ॥ ब्राह्मणावसथे ब्राह्मणगेहे वसन् सर्वार्थसिद्ध नाम्ना । भिक्षु सन्यासी । यस्तेन अनागस कदापिकमपिनापराध्यत । पूर्वनकृतमागोस्तुकृतमिदानीमित्यतआह—निष्कारणमिति ॥ १६ ॥ नाम्नासर्वसिद्धार्थश्चासौको-विदश्च ॥ १७ ॥ प्रहारइतिसामान्यतउक्तंविशदयति—**दण्डेनेति** ॥ १९ ॥ मित्रमुख मित्रवद्दृश्यमान ॥ २० ॥ तपते तपति । हरति हारयति ॥ २१ ॥ दुष्टानामतएवधावताहयानामिवेन्द्रियाणा । सारथ्यकुर्वीत । कथमिन्द्रियगोचरविषयंसहृत्यप्रत्याहार कुर्वीतेत्यर्थ. ॥ २२ ॥ मनसाकर्मणावाचाचक्षुषाचलोकस्यश्रेय.समाचरेत् । एवचरत. चरन्तंकोपिनद्वेष्टि । स्वयंचपापादिनान

[ पा० ] १ ङ च. छ. झ. ञ. पाठेषुअयंश्लोक प्रदृश्यते.

न तत्कुर्यादसिस्तीक्ष्णः सर्पो वा व्याहतस्तथा ।। अरिर्वा नित्यसंक्रुद्धो यथाऽऽत्मा दुरनुष्ठितः ।।२४।।
विनीतविनयस्यापि प्रकृतिर्न विधीयते ।। प्रकृतिं गूहमानस्य निश्चये प्रकृतिर्ध्रुवम् ।। २५ ।।
एवमुक्तः स विप्रो वै रामेणाक्लिष्टकर्मणा ।। द्विजः सर्वार्थसिद्धस्तु अब्रवीद्रामसन्निधौ ।। २६ ।।
मया दत्तः प्रहारोऽयं क्रोधेनाविष्टचेतसा ।। भिक्षार्थमटमानेन काले विगतभैक्षके ।। २७ ।।
रथ्यास्थितः स्वयं श्वा वै गच्छ गच्छेति भाषितः ।। अथ स्वैरेण गच्छंस्तु रथ्यान्ते वि[1]षमं स्थितः २८
क्रोधेन क्षुधयाऽऽविष्टस्तदा दत्तोस्य राघव ।। प्रहारो राजराजेन्द्र शाधि मामपराधिनम् ।।
त्वया शस्तस्य राजेन्द्र नास्ति मे नरकाद्भयम् ।। २९ ।।
अथ रामेण संपृष्टाः सर्व एव सभासदः ।। किं कार्यमस्य वै ब्रूत दण्डो वै कोनु पात्यताम् ।।
सम्यक्प्रणिहिते दण्डे प्रजा भवति रक्षिता ।। ३० ।।
भृग्वङ्गिरसकुत्साद्या वसिष्ठश्च सकाश्यपः ।। धर्मपालकमुख्याश्च सचिवा नैगमास्तथा ।।
एते चान्ये च बहवः पण्डितास्तत्र संगताः ।। ३१ ।।
अवध्यो ब्राह्मणो दण्डैरिति शास्त्रविदो विदुः ।। ब्रुवते राघवं सर्वे राजधर्मेषु निष्ठिताः ।। ३२ ।।
अथ ते मुनयः सर्वे राममेवाब्रुवंस्तदा ।। ३३ ।।
राजा शास्ता हि सर्वस्य त्वं विशेषेण राघव ।। त्रैलोक्यस्य भवाञ्छास्ता देवो विष्णुः सनातनः ३४
एवमुक्ते तु तैः सर्वैः श्वा वै वचनमब्रवीत् ।। ३५ ।।
यदि तुष्टोसि मे राम यदि देयो वरो मम ।। प्रतिज्ञातं त्वया वीर किं करोमीति विश्रुतम् ।। ३६ ।।
प्रयच्छ ब्राह्मणस्यास्य कौलपत्यं [2]धराधर ।। [3]कौलंचरे महाराज कौलपत्यं प्रदीयताम् ।। ३७ ।।
एतच्छ्रुत्वा तु रामेण कौलपत्येऽभिषेचितः ।। प्रययौ ब्राह्मणो हृष्टो गजस्कन्धेन सोर्चितः ।। ३८ ।।
अथ ते रामसचिवाः स्मयमाना वचोऽब्रुवन् ।। वरोऽयं दत्त एतस्य नायं शापो महाद्युते ।। ३९ ।।
एवमुक्तस्तु सचिवै रामो वचनमब्रवीत् ।। न यूयं नीतितत्त्वज्ञाः श्वा वै जानाति कारणम् ।। ४० ।।
अथ पृष्टस्तु रामेण सारमेयोऽब्रवीदिदम् ।। अहं कुलपतिस्तत्र आसं शिष्टान्नभोजनः ।। ४१ ।।

---

लिप्यते । यद्वा चरतोलोकस्यजङ्गमस्यश्रेय समाचरेत् । एववर्तमान कमपिनद्वेष्टि नलिप्यतेच ।। २३ ।। दुरनुष्ठित दुरनुष्ठानवान् । आत्मा मन यथाऽनिष्टकुर्यात् तथासर्पादयोनेत्यर्थ ।।२४।। विनीतविनयस्य गतविनयस्यापिपुंस प्रकृति नविधीयतेविधातुमशक्या स्वभावस्यानपायादितिभाव । प्रकृतिंस्वभावं । गूहमानस्य आच्छादयत ।निश्चये निर्णयकालेध्रुवंप्रकृतिरेवस्पष्टाभवति । वेषधारिवदौपाधिकसर्वविलोपेपिनापैतिप्रकृतिरितिभाव ।। २५ ।। अयंप्रहारोमयादत्त । अयमित्यनेन शिरस्स्फोटच्योतत्क्षतजले-नप्रात्यक्षिकत्वमभिप्रैति । अटमानेन अटता । विगतभैक्षके भिक्षाणासघोभैक्षं । अचित्तेतिठगपवादेन'भिक्षादिभ्योऽण्'इत्यनेनाण् ।। तदेव भैक्षकं विगत भैक्षकयस्यसतस्मिन् ।। २७ ।। गच्छगच्छेतिमयाभाषित । स्वैरेण स्वेच्छानुसृत्या । गच्छन् रथ्यान्तेवीथीप्रान्तभागे । विषम वक्रतयामन्मार्गप्रतिबन्धकतयास्थित ।। २८ ।। क्रोधेन भिक्षानुपलब्धिजेन । एवमपराधि-नंमाशाधि । ब्राह्मणशिक्षाकथमयाकर्तुंयोग्येतिनमति कार्या । तयैवमेहितमित्यभिहितीकरोति—**त्वयेति** । अनेनममेयहननमतिर्न प्रकृति कोपपराधीनतयैवतवशासनेनान्यथयितुंशक्येति सूचितंभवति । नरकाद्भयनास्ति । अत्रैवशिक्षायाजातत्वादितिभाव ।। २९ ।। दण्डत्वनिश्चित्यतत्प्रकारपृच्छति—**कोन्विति** ।। ३० ।। अङ्गिरश्शब्दपर्यायोङ्गिरसशब्दः ।। ३१ ।। शास्त्रविदइतिबहु-वचनेनानेकविवेकिसमतिमाह । सर्वे राजधर्मज्ञा ब्रुवते अब्रुवन् ।। ३२ ।। राममेव अव्यवधानेन ।। ३३ ।। सर्वस्य स्वराज्य-गतस्य । विशेषेणेत्युक्तविवरितुमाह—त्रैलोक्यस्येत्यादिना ।। तत्रनिमित्तमाह—देवोविष्णुरिति ।। ३४ ।। यदितुष्टोसि यदिवरो ममममदेय हेवीर त्वयाप्रतिज्ञातकिंकरोमीति । नैकान्ते जातेयप्रतिज्ञेत्याह । विश्रुतं प्रसिद्ध ।। ३६ ।। अस्यब्राह्मणस्यकौलपत्य देवागाराधिपत्य । प्रयच्छ प्रदेहि । कालञ्जरे देशविशेषे ।। ३७ ।। गजस्कन्धेनप्रययौ ।। ३८ ।। पृष्ट किमर्थमत्यर्थमेतत्कुल-पतित्वमर्थितत्वयात्वंवदेत्युक्त । सारमेयोऽब्रवीत् । तत्र कालञ्जरे ।। ४१ ।।

[ पा० ] १ झ. विषम.. २ ङ. च. छ. झ ञ. नराधिप. ३ च. छ. झ. ञ. कालञ्जरे.

देवद्विजातिपूजायां दासीदासेषु राघव ॥ संविभागी शुभरतिर्देवद्रव्यस्य रक्षिता ॥ ४२ ॥
विनीतः शीलसंपन्नः सर्वसत्त्वहिते रतः ॥ सोहं प्राप्त इमां घोरामवस्थामधमां गतिम् ॥ ४३ ॥
एवं क्रोधान्वितो विप्रस्त्यक्तधर्मोऽहिते रतः ॥ क्रुद्धो नृशंसः परुष अविद्वांश्चाप्यधार्मिकः ॥ ४४ ॥
कुलानि पातयत्येव सप्त सप्त च राघव ॥ तस्मात्सर्वास्ववस्थासु कौलपत्यं न कारयेत् ॥ ४५ ॥
यमिच्छेन्नरकं नेतुं सपुत्रपशुबान्धवम् ॥ देवेष्वधिष्ठितं कुर्याद्गोषु च ब्राह्मणेषु च ॥ ४६ ॥
ब्रह्मस्वं देवताद्रव्यं स्त्रीणां बालधनं च यत् ॥ दत्तं हरति यो भूय इष्टैः सह विनश्यति ॥ ४७ ॥
ब्राह्मणद्रव्यमादत्ते देवानां चैव राघव ॥ सद्यः पतति घोरे वै नरके वीचिसंज्ञिते ॥ ४८ ॥
मनसाऽपि हि देवस्वं ब्रह्मस्वं च हरेत्तु यः ॥ निरयान्निरयं चैव पतत्येव नराधमः ॥ ४९ ॥
तच्छ्रुत्वा वचनं रामो विस्मयोत्फुल्ललोचनः ॥ श्वाऽप्यगच्छन्महातेजा यत एवागतस्ततः ॥ ५० ॥
मनस्वी पूर्वजात्या स जातिमात्रोपदूषितः ॥ वाराणस्यां महाभागः प्रायं चोपविवेश ह ॥ ५१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे द्वितीयः सर्गः ॥ २ ॥

---

## प्रक्षिप्तेषु तृतीयः सर्गः ॥ ३ ॥

गृध्रोलूकाख्यानम् ॥ १ ॥

अथ तस्मिन्वनोद्देशे रम्ये पादपशोभिते ॥ नदीकीर्णे गिरिवरे कोकिलानेककूजिते ॥ १ ॥
सिंहव्याघ्रसमाकीर्णे नानाद्विजगणावृते ॥ गृध्रोलूकौ प्रवसतो बहुवर्षगणानपि ॥ २ ॥
अथोलूकस्य भवनं गृध्रः पापविनिश्चयः ॥ ममेदमिति कृत्वाऽसौ कलहं तेन चाकरोत् ॥ ३ ॥
राजा सर्वस्य लोकस्य रामो राजीवलोचनः ॥ तं प्रपद्यावहे शीघ्रं यस्यैतद्भवनं भवेत् ॥ ४ ॥
इति कृत्वा मतिं तौ तु निश्चयार्थं सुनिश्चिताम् ॥ गृध्रोलूकौ प्रपद्येतां कोपाविष्टौ ह्यमर्षितौ ॥ ५ ॥
रामं प्रपद्य तौ शीघ्रं कलिव्याकुलचेतसौ ॥ तौ परस्परविद्वेषात्स्पृशतश्चरणौ तदा ॥ ६ ॥
अथ दृष्ट्वा नरेन्द्रं तं गृध्रो वचनमब्रवीत् ॥ सुराणामसुराणां च प्रधानस्त्वं मतो मम ॥ ७ ॥
बृहस्पतेश्च शुक्राच्च विशिष्टोसि महाद्युते ॥ परावरज्ञो भूतानां कान्त्या चन्द्र इवापरः ॥ ८ ॥
दुर्निरीक्ष्यो यथा सूर्यो हिमवांश्चैव गौरवे ॥ सागरश्चासि गाम्भीर्ये लोकपालो यमो ह्यसि ॥ ९ ॥
क्षान्त्या धरण्या तुल्योसि शीघ्रत्वे ह्यनिलोपमः ॥ गुरुस्त्वं सर्वसंपन्नः कीर्तियुक्तश्च राघव ॥ १० ॥

---

सविभागी विभज्यदायी ॥ ४२ ॥ इमामवस्था अधमागतिं प्राप्त ॥ ४३ ॥ सप्तसप्तचकुलानिपातयति ॥ ४५ ॥ सपुत्रपशुबान्धवंयंनरकंनेतुमिच्छेत् तंदेवेष्वधिष्ठितंकुर्यात् । गोषुब्राह्मणेषुचाधिष्ठितंकुर्यात् ॥ ४६ ॥ स्त्रीणाद्रव्यमिति । देवताद्रव्यमित्यत आकृष्टमन्वेति । शब्दानुशासनमित्यस्मादेकदेशोत्कीर्तनेनकेतेशब्दाइतियथा ॥ दत्त देवनिवेदनार्थं ॥ ४७ ॥ वीचिसज्ञके वीचिरितिसज्ञायस्यतस्मिन् ॥ ४८ ॥ निरयात् नरकात् निरय नरकान्तर ॥ ४९ ॥ जातिमात्रोपदूषित जातिमात्रेणैवोपदूषित नतुदोषैः । कुतइत्यतआह—मनस्वीति । वाराणस्यांमहाभाग श्वा प्रायमुपविवेश ॥ ५१ ॥ इतिप्रक्षिप्तसर्गव्याख्याने सत्यधर्मतीर्थीयेद्वितीय सर्ग ॥ २ ॥

कोकिलानेके अनेककोकिला तै कूजिते ॥ १ ॥ प्रवसत वसत. ॥ २ ॥ तेन उलूकेन ॥ ३ ॥ अमर्षितौ परस्परासहिष्णू ॥ ५ ॥ कलि कलह. ॥ ६ ॥ मत समत ॥ ७ ॥ विशिष्ट श्रेष्ठ ॥ ८ ॥ गाभीर्येसागर तत्सम ॥ ९ ॥ शीघ्रत्वे त्वरित-

[ पा० ] १ झ. ठ. व्रीचिसज्ञके. २ झ. ञ. सागरश्चैव.

अमर्षी दुर्जयो जेता सर्वास्त्रविधिपारगः ॥ शृणुष्व मम वै राम विज्ञाप्यं नरपुङ्गव ॥ ११ ॥
ममालयं पूर्वकृतं बाहुवीर्येण राघव ॥ उलूको हरते राजंस्तत्र त्वं त्रातुमर्हसि ॥ १२ ॥
एवमुक्ते तु गृध्रेण उलूको वाक्यमब्रवीत् ॥ १३ ॥
सोमाच्छतक्रतोः सूर्याद्धनदाद्वा यमात्तथा ॥ जायते वै नृपो राम किंचिद्भवति मानुषः ॥
त्वं तु सर्वमयो देवो नारायण इवापरः ॥ १४ ॥
या च ते सौम्यता राजन्सम्यक्प्रणिहिता विभो ॥ समं चरसि चान्विष्य तेन सोमांशको भवान् ॥१५॥
क्रोधे दण्डे प्रजानाथ दाने पापभयापहः ॥ दाता हर्तासि गोप्तासि तेनेन्द्र इव नो भवान् ॥१६॥
अधृष्यः सर्वभूतेषु तेजसा चानलोपमः ॥ अभीक्ष्णं तपसे लोकांस्तेन भास्करसन्निभः ॥ १७ ॥
साक्षाद्वित्तेशतुल्योसि अथवा धनदाधिकः ॥ वित्तेशस्यैव पद्मा श्रीर्नित्यं ते राजसत्तम ॥ १८ ॥
धनदस्य तु कोपेन धनदस्तेन नो भवान् ॥ समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥ १९ ॥
शत्रौ मित्रे च ते दृष्टिः समतां याति राघव ॥ धर्मेण शासनं नित्यं व्यवहारे विधिक्रमात् ॥ २० ॥
यस्य क्रुध्यसि वै राम तस्य मृत्युर्विधावति ॥ गीयसे तेन वै राम यम इत्यतिविक्रमः ॥ २१ ॥
यश्चैष मानुषो भावो भवतो नृपसत्तम ॥ आनृशंस्यपरो राजा सत्त्वेषु क्षमयाऽन्वितः ॥ २२ ॥
दुर्बलस्य त्वनाथस्य राजा भवति वै बलम् ॥ अचक्षुषोत्तमं चक्षुरगतेः स गतिर्भवान् ॥ २३ ॥
अस्माकमपि नाथस्त्वं श्रूयतां मम धार्मिक ॥ ममालयप्रविष्टस्तु गृध्रो मां बाधते नृप ॥
त्वं हि देव मनुष्येषु शास्ता वै नरपुङ्गवः ॥ २४ ॥
एतच्छ्रुत्वा तु वै रामः सचिवानाह्वयत्स्वयम् ॥ २५ ॥
धृष्टिर्जयन्तो विजयः सिद्धार्थो राष्ट्रवर्धनः ॥ अशोको धर्मपालश्च सचिवः सुमहाबलः ॥ २६ ॥
एते रामस्य सचिवा राज्ञो दशरथस्य च ॥ नीतियुक्ता महात्मानः सर्वशास्त्रविशारदाः ॥
श्रीतिमन्तः कुलीनाश्च नये मन्त्रे च कोविदाः ॥ २७ ॥
तानाहूय स धर्मात्मा पुष्पकादवतीर्य च ॥ गृध्रोलूकविवादं तं पृच्छति स्म रघूत्तमः ॥ २८ ॥
कति वर्षाणि वै गृध्र तवेदं निलयं कृतम् ॥ एतन्मे कारणं ब्रूहि यदि जानासि तत्त्वतः ॥ २९ ॥

---

गतौ ॥ १० ॥ प्रकृतमनुसरति । विज्ञाप्यश्शृणुष्वेति ॥ ११ ॥ पूर्वकृत । हरते हरति ॥ १२ ॥ सर्वमय सर्वप्रधान ॥ १४ ॥ या ते सौम्यता शान्तता सम्यक्प्रणिहिता स्थिता । तयासमचरसीतिसोमांशक ॥ १५ ॥ क्रोधे रोषकरणे । दण्डे शिक्षाया । पापभयापह पापभयोभयनाशक । तेनकारणेन ॥ १६ ॥ तपसे तपसि ॥ १७ ॥ वित्तेशतुल्य कुबेरसदृश ॥ स्वोत्प्रेक्षित स्वयमेवप्रतिक्षिपति—**अथवेति** । कुतआधिक्यमित्यतआह—वित्तेशस्येति । पद्मा रमा । यथानित्यावियुक्तात्वया तथा श्री सपदपि । ते त्वया । त्वदधीनावा । वित्तेशस्येति । धनदस्यकोपेन । 'अर्केचेन्मधुविन्देतकिमर्थंपर्वतंव्रजेत्' इत्युक्ते भूमावेवभवान्धनदइतिदूरस्थेकुबेरेरोषेणनोस्माभि कृतइतिभाव । धनदस्योपरिकोपेनेतिवा ॥ १८—१९ ॥ समता तत्रतत्रतत्त्वेन तत्त्वेन नत्वेकरूपेण । नित्यंधर्मेणशासन तन्मार्गप्रवर्तनं । व्यवहारेविधिक्रमात् तत्तदाश्रमवर्णाद्युपदिष्टविध्यनुसारात् ॥ २० ॥ यस्य य । क्रुध्यसि कर्षयसि तस्यत मृत्युर्विधावति । तेनकारणेनयमइतिगीयसे । तत्कार्यकारित्वादितिभाव ॥ २१ ॥ सत्त्वेषु प्राणिषु । आनृशंस्यपरइतिभवतोऽयमानुषोभाव । नतुकर्मायत्त । करुणापारवश्येनराजतयाधरणाववतरणमितिभाव ॥ २२ ॥ दुर्बलस्य राजाबल । अचक्षुष चक्षूरहितस्य चक्षु तत्स्थानीय । सन्धिरार्ष । अत्तममितिवा पदं । अदित्याश्चर्यार्थकमव्यय । अत्याश्चर्यावहमित्यर्थः । अगते गतिहीनस्य । गतिर्गतिद ॥ २३ ॥ जगन्नाथत्वादस्माकंतिरश्चामपित्वंनाथ । ममालय भुजबलार्जितं देवमनुष्येषुशास्ता । हेदेवेतिवा ॥ २४ ॥ तन्नामेवतेपरम्परागताइत्यप्याह—**धृष्टिरित्यादिना** ॥ २६ ॥ पुष्पकाद्विमानादवतीर्य पृच्छतिस्म मन्त्रिसन्निधौ ॥ २८ ॥ इदंनिलयं कृतं । लिङ्गव्यत्ययआर्षोवा तस्मात्तन्त्रत्वाद्वा । इदनिलय अयंनिल-

[ पा० ] १ रुष्यसीति क. पाठेदृश्यते. २ क. रामजातिषु. ३ ङ. च. छ झ ञ सुमन्त्रश्चमहा. ४ ङ. च. छ झ. ञ. ह्रीमन्तश्चकुलीनाश्च.

एतच्छ्रुत्वा तु वै गृध्रो भाषते राघवं स तम् ॥ ३० ॥
इयं वसुमती राम मनुष्यैः परितो यदा ॥ उत्थितैरावृता सर्वा तदाप्रभृति मे गृहम् ॥ ३१ ॥
उलूकश्चाब्रवीद्रामं पादपैरुपशोभिता ॥ यदेयं पृथिवी राजंस्तदाप्रभृति मे गृहम् ॥ ३२ ॥
एतच्छ्रुत्वा तु रामो वै सभासद उवाच ह ॥ ३३ ॥
न सा सभा यत्र न सन्ति वृद्धा न ते वृद्धा ये न वदन्ति धर्मम् ॥
नासौ धर्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनानुविद्धम् ॥ ३४ ॥
ये तु सभ्याः सदा ज्ञात्वा तूष्णीं ध्यायन्त आसते ॥ यथाप्राप्तं न ब्रुवते ते सर्वेऽनृतवादिनः ॥३५॥
जानन्न वाऽब्रवीत्प्रश्नान्कामात्क्रोधाद्भयात्तथा ॥ सहस्रं वारुणान्पाशानात्मनि प्रतिमुञ्चति ॥ ३६ ॥
तेषां संवत्सरे पूर्णे पाश एकः प्रमुच्यते ॥ तस्मात्सत्येन वक्तव्यं जानता सत्यमञ्जसा ॥ ३७ ॥
एतच्छ्रुत्वा तु सचिवा राममेवाब्रुवंस्तदा ॥ उलूकः शोभते राजन्न तु गृध्रो महामते ॥ ३८ ॥
त्वं प्रमाणं महाराज राजा हि परमा गतिः ॥ राजमूलाः प्रजाः सर्वा राजा धर्मः सनातनः ॥३९॥
शास्ता नृणां नृपो येषां ते न गच्छन्ति दुर्गतिम् ॥ वैवस्वतेन मुक्तास्तु भवन्ति पुरुषोत्तमाः ॥४०॥
सचिवानां वचः श्रुत्वा रामो वचनमब्रवीत् ॥ श्रूयतामभिधास्यामि पुराणे यदुदाहृतम् ॥ ४१ ॥
द्यौः सचन्द्रार्कनक्षत्रा सपर्वतमहावना ॥ सलिलार्णवसंपूर्णं त्रैलोक्यं सचराचरम् ॥
एक एव तदा ह्यासीद्युक्तो मेरुरिवापरः ॥ ४२ ॥
पुरा भूः सह लक्ष्म्या च विष्णोर्जठरमाविशत् ॥ तां निगृह्य महातेजाः प्रविश्य सलिलार्णवम् ॥
सुष्वाप देवो भूतात्मा बहून्वर्षगणानपि ॥ ४३ ॥
विष्णौ सुप्ते तदा ब्रह्मा विवेश जठरं ततः ॥ ४४ ॥
रुद्धस्रोतं तु तं ज्ञात्वा महायोगी समाविशत् ॥ नाभ्यां विष्णोः समुत्पन्ने पद्मे हेमविभूषिते ॥४५॥
स तु निर्गम्य वै ब्रह्मा योगी भूत्वा महाप्रभुः ॥ सिसृक्षुः पृथिवीं वायुं पर्वतान्समहीरुहान् ॥४६॥
तदन्तरे प्रजाः सर्वाः समनुष्यसरीसृपाः ॥ जरायुजोण्डजाः सर्वाः ससर्ज स महातपाः ॥ ४७ ॥
ततः श्रोत्रमलोत्पन्नः कैटभो मधुना सह ॥ दानवौ तौ महावीर्यौ घोररूपौ दुरासदौ ॥ ४८ ॥
दृष्ट्वा प्रजापतिं तत्र क्रोधाविष्टौ बभूवतुः ॥ वेगेन महता तत्र स्वयंभुवमधावताम् ॥ ४९ ॥
दृष्ट्वा स्वयंभुवा मुक्तो रावो वै विकृतस्तदा ॥ तेन शब्देन संप्राप्तौ दानवौ हरिणा सह ॥ ५० ॥
अथ चक्रप्रहारेण सूदितौ मधुकैटभौ ॥ मेदसा प्लाविता सर्वा पृथिवी च समन्ततः ॥ ५१ ॥

---

योयस्मिंस्तत्स्थलकृतमितिवा ॥ २९ ॥ सगृध्र ॥ ३० ॥ परितउत्थितै सर्वैरावृतावसुमती । तदाप्रभृति तदारभ्य । मेगृहमित्यब्रवीत् ॥ ३१ ॥ तदाप्रभृत्येतद्दिनपर्यन्तंमेगृहमित्युलूकोऽब्रवीत् ॥ ३२ ॥ येधर्मंनवदन्ति नतेवृद्धाभवन्ति । वयोप्रयोजकमितिभाव । सत्यंभूतहितंप्रोक्तमितिसत्ययत्रनास्ति सधर्मोनभवति । धर्म कर्तव्यइतिननिलीनोविप्रोबोधनीय । छलेनानुविद्धं सव्याजं नसत्यं ॥ ३४ ॥ ज्ञात्वापिध्यायन्तस्तूष्णीमासते । यथाप्राप्तंव्यक्तंवक्तव्यत्वेनप्राप्तकालमपिनब्रुवते ते अवादिनोप्यनृतवादिन मिथ्याकथकफलभाज ॥ ३५ ॥ प्रश्नानुत्तरयितुजानन्नपिकामाद्द्रव्यलोभात् । क्रोधादेकस्मिन् । भयात् द्वितीयः कितनुयादितिभीते । वारुणान् तत्सबन्धिन पाशान् । सहस्र तत्सख्यान् । आत्मनि स्वस्मिन् । स्वयंमुञ्चति स्वयमेवात्मानपाशबद्धकरोति ॥ ३६ ॥ सवत्सरे एकस्मिन् पूर्णे तेषांसहस्रसख्याकपाशानामध्येएक पाशःप्रमुच्यते ॥ ३७ ॥ उलूक शोभते यथार्थभाषित्वान्नविच्छविरितिभाव ॥ ३८ ॥ निष्कर्षस्यदुष्करत्वाज्झटितिकथमुक्तमित्यन्ततोगत्वात्वमेवनिर्णायकइत्याहुरित्याह—त्वमिति । सनातनोधर्मोराजा तत्प्रवर्तकइत्यर्थ ॥ ३९ ॥ दुर्गतिं ते नगच्छन्ति । वैवस्वतेनमुक्ता यमत्यक्ता ॥ ४० ॥ लक्ष्म्या सहभू भूदेवी । अर्णवशब्दोरूढ. ॥ ४३ ॥ रुद्धस्रोतं निरुद्धमार्गं ॥४५॥ निर्गम्य निस्सृत्य ॥ ४६ ॥ श्रोत्रमलोत्पन्न मलेनतत्कालसृष्टेन ॥ ४८ ॥ प्रजापतिं विधि ॥ ४९ ॥ रावोध्वनि मुक्त कृत । भीतिमतेव । सह मिलित्वा ॥ ५० ॥ मेदसा तद्देह-

भूयो विशोधिता तेन हरिणा लोकधारिणा ॥ शुद्धां वै मेदिनीं तां तु वृक्षैः सर्वामपूरयत् ॥
ओषध्यः सर्वसस्यानि निष्पद्यन्त पृथग्विधाः ॥ ५२ ॥
मेदोगन्धात्तु धरणी मेदिनीत्यभिसंज्ञिता ॥ तस्मान्न गृध्रस्य गृहमुलूकस्येति मे मतिः ॥ ५३ ॥
तस्माद्गृध्रस्तु दण्ड्यो वै पापो हर्ता परालयम् ॥ पीडां करोति पापात्मा दुर्विनीतो महानयम् ॥५४॥
अथाशरीरिणी वाणी अन्तरिक्षात्प्रबोधिनी ॥ मा वधी राम गृध्रं तं पूर्वदग्धं तपोबलात् ॥ ५५ ॥
काले गौतमदग्धोऽयं प्रजानाथो धनेश्वरः ॥ ब्रह्मदत्तस्तु नाम्नैष शूरः सत्यव्रतः शुचिः ॥ ५६ ॥
गृहं त्वस्यागतो विप्रो भोजनं प्रत्यमार्गत ॥ साग्रं वर्षशतं चैव भोक्तव्यं नृपसत्तम ॥ ५७ ॥
ब्रह्मदत्तः स वै तस्य पाद्यमर्घ्यं स्वयं नृपः ॥ हार्दं चैवाकरोत्तस्य भोजनार्थं महाद्युतेः ॥
मांसमस्याभवत्तत्र आहारे तु महात्मनः ॥ ५८ ॥
अथ क्रुद्धेन मुनिना शापो दत्तोस्य दारुणः ॥ गृध्रस्त्वं भव वै राजन्मामैनं ह्यथ सोब्रवीत् ॥५९॥
[ प्रसादं कुरु धर्मज्ञ अज्ञानान्मे महाव्रत ॥ शापस्यान्तं महाभाग क्रियतां वै ममानघ ॥ ६० ॥
तदज्ञानकृतं मत्वा राजानं मुनिरब्रवीत् ॥ ६१ ॥ ]
उत्पत्स्यति कुले राज्ञां रामो नाम महायशाः ॥ इक्ष्वाकूणां महाभागो राजा राजीवलोचनः ॥
तेन स्पृष्टो विपापस्त्वं भविता नरपुङ्गवः ॥ ६२ ॥
स्पृष्टो रामेण तच्छ्रुत्वा नरेन्द्रः पृथिवीपतिः ॥ गृध्रत्वं त्यक्तवान्राजा दिव्यगन्धानुलेपनः ॥
पुरुषो दिव्यरूपोऽभूदुवाचेदं च राघवम् ॥ ६३ ॥
साधु राघव धर्मज्ञ त्वत्प्रसादादहं विभो ॥ विमुक्तो नरकाद्घोराच्छापस्यान्तः कृतस्त्वया ॥ ६४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अधिकपाठे तृतीयः सर्गः ॥ ३ ॥

---

## षष्टितमः सर्गः ॥ ६० ॥

कदाचन भद्रासनमलंकुर्वाणेरामभद्रे सुमन्त्रेणतंप्रति च्यवनमुखमुनिगणस्य तद्दिदृक्षयाद्वारदेशावस्थाननिवेदनम् ॥ १ ॥ रामेण स्वचोदनयासुमन्त्रप्रवेशितानांमुनीनासत्कारपूर्वकं तान्प्रति तत्कार्यकरणप्रतिज्ञानपूर्वकं कार्यप्रश्न. ॥ २ ॥ मुनिभिस्तत्प्रतिज्ञामात्रान्निजकार्यनिष्पत्तिनिर्धारणेन हर्षाद्रामप्रशसनम् ॥ ३ ॥

तयोः संवदतोरेवं रामलक्ष्मणयोस्तदा ॥ वासन्तिकी निशा प्राप्ता न शीता न च घर्मदा ॥ १ ॥

---

तयोरित्यादि ॥ वासन्तिकी वसन्ते भवा । एवं | प्रतिदिवस संवदतोर्धर्मसवाद कुर्वतोः । तत्पूर्वं प्रजा-

---

प्रभवेन ॥ ५१ ॥ निष्पद्यन्तनिष्पादिता । पृथग्विधाः नानाभूता ॥ ५२ ॥ मेदोगन्धात् मेदसोगन्धात्। प्राग्धरणी मेदस्सबन्धान्मेदिनीतिनामवती ॥ तस्माद्गृध्रस्यगृहन । ' मनुष्यैरुत्थितैर्यदा । तदाप्रभृतिमेगृह'मितिगृध्रवचनेन 'पादैरुपशोभिता । यदेयंपृथिवीरामतदाप्रभृतिमेगृहं ' इत्युलूकवचनेनचगृध्रतोपिपूर्वतत्रोलूकनिकेतनमिति तस्मात्पौर्वापर्यान्नगृध्रगृहमितिमेमति· ॥ ५३ ॥ परालयं उलूकालयं ॥ महान्दुर्विनीत. । महत्त्वंयोग्यतया दुर्विनीतावन्वेति ॥ ५४ ॥ प्रबोधिनी रामज्ञानजननीव । तपोबलात् तापसतपोबलात् । पूर्वदग्धदग्धपूर्व । तपोबलात् दुर्योनिनिर्गमकलदृर्शनसाधनतपोबलादितिवा ॥ ५५ ॥ ब्रह्मदत्तइतिनाम्नाविश्रुत । प्रजानाथोराजा । कालगौतमोविप्र । तेनकुपितेनदग्ध ॥ ५६ ॥ अमार्गत विचचार । साग्रं समग्रं ॥ ५७ ॥ हार्द अभिप्रेतं । मास दैवेच्छयापतितं ॥ ५८ ॥ हेराजंस्त्वंगृध्रोभव । अथशापप्रदानानन्तरं । सराजा एनंमुनिं मामेत्यब्रवीत् ॥ ५९ ॥ मे मयाअज्ञानादेतत्कृतं अतःप्रसादंकुर्वित्यब्रवीत् ॥ ६० ॥ अज्ञानकृत मन पूर्वमकृतं ॥ ६१ ॥ राज्ञा अंशुमद्वंश्याना । तेन रामेण ॥ ६२ ॥ नरकात् हीनजाते ॥६४॥ इतिप्रक्षिप्तसर्गव्याख्यानेसत्यधर्मतीर्थीयेतृतीय सर्ग ॥ ३ ॥

ति० एवंसवदतो· प्रतिदिवसधर्मसवादंकुर्वतो । तत्पूर्वप्रजारक्षणंकुर्वतोरितियावत् ॥ स० शीतान शीतमस्याअस्तीति

[ पा० ] १ क. गृहमस्यागतोविप्रोभोजनंप्रतिगौतम.. २ इदमर्धत्रयं ड. च. छ. झ. ञ. पादेषुदृश्यते

ततः प्रभाते विमले कृतपौर्वाह्णिकक्रियः ॥ अभिचक्राम काकुत्स्थो दर्शनं पौरकार्यवित् ॥ २ ॥
ततः सुमन्त्रस्त्वागम्य राघवं वाक्यमब्रवीत् ॥ एते प्रतिहता राजन्द्वारि तिष्ठन्ति तापसाः ॥ ३ ॥
भार्गवच्यवनं चैव पुरस्कृत्य महर्षयः ॥ दर्शनं ते महाराज्ञश्चोदयन्ति कृतत्वराः ॥
प्रीयमाणा नरव्याघ्र यमुनातीरवासिनः ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा रामः प्रोवाच धर्मवित् ॥ प्रवेश्यन्तां महाभागा भार्गवप्रमुखा द्विजाः ॥ ५ ॥
राज्ञस्त्वाज्ञां पुरस्कृत्य द्वाःस्थो मूर्ध्नि कृताञ्जलिः ॥ प्रवेशयामास तदा तापसान्सुदुरासदान् ॥६॥
शतं समधिकं तत्र दीप्यमानं स्वतेजसा ॥ प्रविष्टं राजभवनं तापसानां महात्मनाम् ॥ ७ ॥
ते द्विजाः पूर्णकलशैः सर्वतीर्थाम्बुसत्कृतैः ॥ गृहीत्वा फलमूलं च रामस्याभ्याहरन्बहु ॥ ८ ॥
प्रतिगृह्य तु तत्सर्वं रामः प्रीतिपुरस्कृतः ॥ तीर्थोदकानि सर्वाणि फलानि विविधानि च ॥ ९ ॥
उवाच च महाबाहुः सर्वानेव महामुनीन् ॥ इमान्यासनमुख्यानि यथार्हमुपविश्यताम् ॥ १० ॥
रामस्य भाषितं श्रुत्वा सर्व एव महर्षयः ॥ बृसीषु रुचिराख्यासु निषेदुः काञ्चनीषु ते ॥ ११ ॥
उपविष्टानृषींस्तत्र दृष्ट्वा परपुरञ्जयः ॥ प्रयतः प्राञ्जलिर्भूत्वा राघवो वाक्यमब्रवीत् ॥ १२ ॥
किमागमनकार्यं वः किं करोमि समाहितः ॥ आज्ञाप्योऽहं महर्षीणां सर्वकामकरः सुखम् ॥ १३ ॥
इदं राज्यं च सकलं जीवितं च हृदि स्थितम् ॥ सर्वमेतद्द्विजार्थं मे सत्यमेतद्ब्रवीमि वः ॥ १४ ॥
तस्य तद्वचनं श्रुत्वा साधुकारो महानभूत् ॥ ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ॥ १५ ॥
ऊचुश्च ते महात्मानो हर्षेण महताऽऽवृताः ॥ उपपन्नं नरश्रेष्ठ तवैव भुवि नान्यतः ॥ १६ ॥
बहवः पार्थिवा राजन्नतिक्रान्ता महाबलाः ॥ कार्यस्य गौरवं मत्वा प्रतिज्ञां नाभ्यरोचयन् ॥ १७ ॥

---

रक्षणं कुर्वतोरिति शेषः । वासन्तिकी निशा प्राप्तेति । कालान्तर इति शेषः । एतेन वसन्ते समानीता देवी पुनर्वसन्ते त्यक्तेति सूचयति । इदं च कालवचनमृषिकार्योचितत्वप्रदर्शनार्थं ॥ १-२ ॥ द्वारि प्रतिहताः निरुद्धा इत्यर्थः ॥ ३ ॥ भृगोर्गोत्रापत्यं भार्गवः स चासौ च्यवनश्च तं । महाराज्ञः महाराजस्य । दर्शनं प्रति अस्मदादीन् चोदयन्ति प्रेरयन्ति । महाराज्ञश्चोदयन्तीति च पाठः ॥ ४ ॥ भार्गवप्रमुखाः च्यवनप्रमुखाः ॥ ५—६ ॥ समधिकं अधिकसहितं ॥ ७—१२ ॥ किं करोमि किं कुर्यां । सर्वकामकरः सर्वाभीष्टसाधकः ॥ १३—१४ ॥ साधुकारः साधु साध्विति संभाषणं ॥ १५ ॥ नान्यतः नान्यस्य॥१६॥ कार्यस्य गौरवं मत्वा ततः पूर्वं करिष्यामीति प्रतिज्ञां नाभ्यरोचयन् न कुर्वन्ति । अशक्यनियोगापत्तिभ-

---

सातथा ॥ १ ॥ **ति०** दर्शनमभिचक्राम प्रजादृश्यन्तेयत्रस्थानेतत्स्थानंदर्शनं । अभिचक्राम जगाम ॥ **स०** दर्शनं स्वकर्मकंप्रजाकर्तृकमुद्दिश्य अभिचक्राम सभामितिशेषः ॥ २ ॥ **स०** लवावस्थानेकोपोदयःस्यादतस्त्वरस्वेत्याह—**तापसाइति** ॥ **शि०** अप्रतिहताः अनिवारिताअपि । यमुनातीरवासिनएतेमहर्षयोद्वारितिष्ठन्ति । चोदयन्ति स्वागमनबोधनार्थंप्रेरयन्ति ॥ ३—४ ॥ **स०** सर्वतीर्थांबुसत्कृतैः सर्वतीर्थांबूनिसत्कृतानियेषुतैःपूर्णकलशैःसहिताः ॥ **शि०** रामस्य रामाय ॥ **स०** फलमूलं फलसहितंमूलं ॥ ८ ॥ प्रीतिपुरस्कृतः अनेननदौर्लभ्याज्जग्राहरामः किंतुतापसस्नेहवशात् ॥ ९ ॥ **ति०** उपविश्यतां एषुभवद्भिरितिशेषः ॥ १० ॥ **स०** समाहितः भवत्कार्यैकमानसः । महर्षीणांयुष्माकमहमाज्ञाप्यः । सर्वकामकरइतिसुखमाज्ञाप्यः ॥ १३ ॥ **स०** हृदिस्थितमेतदितिसत्यंब्रवीमि । जिह्वोपरितनंवचनंन किंतुमनःपूर्वकमितिभावः ॥ १४ ॥ **शि०** उपपन्नं युक्तं एवंवचनमितिशेषः ॥ १६ ॥ **स०** कार्यस्यगौरवं गुरुतां । अशक्यत्वमितियावत् । मत्वामहाबलाअप्यतिक्रान्ताः प्रतिज्ञामपि नाभ्यरोचयन् ॥ १७ ॥

[ पा० ] १ क—घ. कृत्वापौर्वाह्णिकींक्रियां. २ क. ग. पुरवासिनां. ३ ग. घ. च. ज. ञ. निवारिताराजन्. ४ घ. च. झ. ञ. ट. मूर्ध्नाकृताञ्जलिः.

त्वया पुनर्ब्राह्मणगौरवादियं कृता प्रतिज्ञा ह्यनवेक्ष्य कारणम् ॥
ततश्च कर्ता ह्यसि नात्र संशयो महाभयात्रातुमृषींस्त्वमर्हसि ॥ १८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे षष्टितमः सर्गः ॥ ६० ॥

---

## एकषष्टितमः सर्गः ॥ ६१ ॥

च्यवनेन रामंप्रति स्वकार्यनिवेदनोपक्रम ॥ १ ॥ मधुनामकेनासुरवरेण तपस्तोषितान्महादेवाच्छूलदानपूर्वक यावच्छूलधारण सपुत्रस्यस्वस्यावध्यत्ववरसपादनम् ॥ २ ॥ लवणनाम्नोनिजतनयस्यदौश्शील्यनिर्विण्णेनमधुना लवणेशूलार्पणपूर्वक वरुणालयप्रवेश. ॥ ३ ॥ शूललाभदृप्तेनलवणेन रावणेनेवत्रैलोक्यपीडनारभः ॥ ४ ॥ एवच्यवनेन रामप्रतिलवणासुरदौश्शील्यनिवेदनपूर्वक तस्माल्लोकरक्षणप्रार्थना ॥ ५ ॥

एवं ब्रुवद्भिर्ऋषिभिः काकुत्स्थो वाक्यमब्रवीत् ॥ किं कार्यं ब्रूत मुनयो भयं तावदपैतु वः ॥ १ ॥
तथा ब्रुवति काकुत्स्थे भार्गवो वाक्यमब्रवीत् ॥ भयानां शृणु यन्मूलं देशस्य च नरेश्वर ॥ २ ॥
पूर्वं कृतयुगे राजन्दैतेयः सुमहाबलः ॥ लोलापुत्रोऽभवज्ज्येष्ठो मधुर्नाम महाऽसुरः ॥ ३ ॥
ब्रह्मण्यश्च शरण्यश्च बुद्ध्या च परिनिष्ठितः ॥ सुरैश्च परमोदारैः प्रीतिस्तस्यातुलाऽभवत् ॥ ४ ॥
स मधुर्वीर्यसंपन्नो धर्मे च सुसमाहितः ॥ बहुवर्षसहस्राणि रुद्रप्रीत्याऽकरोत्तपः ॥ ५ ॥
रुद्रः प्रीतोऽभवत्तस्मै वरं दातुं ययौ च सः ॥ बहुमानाच्च रुद्रेण दत्तस्तस्याद्भुतो वरः ॥ ६ ॥
शूलं शूलाद्विनिष्कृष्य महावीर्यं महाप्रभम् ॥ ददौ महात्मा सुप्रीतो वाक्यं चैतदुवाच ह ॥ ७ ॥
त्वयाऽयमतुलो धर्मो मत्प्रसादकरः कृतः ॥ प्रीत्या परमया युक्तो ददाम्यायुधमुत्तमम् ॥ ८ ॥
यावत्सुरैश्च विप्रैश्च न विरुध्येर्महासुर ॥ तावच्छूलं तवेदं स्यादन्यथा नाशमेष्यति ॥ ९ ॥
यश्च त्वामभियुञ्जीत युद्धाय विगतज्वरः ॥ तं शूलो भस्मसात्कृत्वा पुनरेष्यति ते करम् ॥ १० ॥
एवं रुद्राद्वरं लब्ध्वा भूय एव महासुरः ॥ प्रणिपत्य महादेवं वाक्यमेतदुवाच ह ॥ ११ ॥
भगवन्मम वंशस्य शूलमेतदनुत्तमम् ॥ भवेत्तु सततं देव सुराणामीश्वरो ह्यसि ॥ १२ ॥
तं ब्रुवाणं मधुं देवः सर्वभूतपतिः शिवः ॥ प्रत्युवाच महातेजा नैतदेवं भविष्यति ॥ १३ ॥
मा भूत्ते विफला वाणी मत्प्रसादकृता शुभा ॥ भवतः पुत्रमेकं तु शूलमेतद्गमिष्यते ॥ १४ ॥
यावत्करस्थः शूलोयं भविष्यति सुतस्य ते ॥ अवध्यः सर्वभूतानां शूलहस्तो भविष्यति ॥ १५ ॥

---

यादिति शेषः ॥ १७—१८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने षष्टितम. सर्गः ॥ ६० ॥

---

लोलायाः पुत्रो लोलापुत्रः ॥ ३—६ ॥ शूलाच्छूलं विनिष्कृष्येति । स्वशूलाच्छक्तिमाकृष्य सृष्ट्वेत्यर्थः ॥ ७—८ ॥ नाश अदर्शन ॥ ९—१३ ॥ मत्प्रसादकृता मत्प्रसादजसंतोषजनितेत्यर्थः ॥ १४—

---

**स०** कारणं अस्मदागमनकारणं । शक्यमशक्यमित्यनवेक्ष्य अपरीक्ष्य ॥ १८ ॥ इतिषष्टितम सर्ग ॥ ६० ॥

**ति०** एवंब्रुवद्भि भयत्राणमितिशेष । ऋषिभि प्रेरितइतिशेष । किंकार्यं किंजन्यभयत्राणंकार्यमित्यर्थ । **स०** ऋषिभिः बोधितोराम ॥ १ ॥ देशस्यच चादस्माकभयानायन्मूलंतच्छृणु ॥ २ ॥ **स०** शूलात् स्वायुधात् । शूलं तदंशं । निष्कृष्य उत्कृत्य ॥ ७ ॥ **ति०** यतस्त्वयामत्प्रसादकरोधर्मे कृत अतआयुधददामि ॥ ८ ॥ **शि०** शूलस्थितेरवधिमाह—**यावदिति** ॥ ९ ॥ **ति०** भविष्यति प्राप्स्यति ॥ १३ ॥

**[ पा० ]** १ क. ग. च छ. ज ञ. कुरुष्वकर्ता. २ ज. ब्रुवाणेष्वृषिषुक्ता ३ क च. ब्रूतभवतांभयंनाशयितास्म्यहं ४ क घ. ज. मत्प्रसादात्कृत'शुभ . झ. ञ. ट. मत्प्रसादकर.शुभ.. च. छ. मत्प्रसादकृत शुभ . ५ क—घ. ज. मत्प्रसादात्कृता.

एवं मधुर्वरं लब्ध्वा देवात्सुमहदद्भुतम् ॥ भवनं सोसुरश्रेष्ठः कारयामास सुप्रभम् ॥ १६ ॥
तस्य पत्नी महाभागा प्रिया कुम्भीनसीति या ॥ विश्वावसोरपत्यं सा ह्यनलायां महाप्रभा ॥१७॥
तस्याः पुत्रो महावीर्यो लवणो नाम दारुणः ॥ बाल्यात्प्रभृति दुष्टात्मा पापान्येव समाचरत् ॥१८॥
तं पुत्रं दुर्विनीतं तु दृष्ट्वा क्रोधसमन्वितः ॥ मधुः स शोकमापेदे न चैनं किंचिदब्रवीत् ॥ १९ ॥
स विहाय त्विमं लोकं प्रविष्टो वरुणालयम् ॥ शूलं निवेश्य लवणे वरं तस्मै न्यवेदयत् ॥ २० ॥
स प्रभावेन शूलस्य दौरात्म्येनात्मनस्तथा ॥ संतापयति लोकांस्त्रीन्विशेषेण च तापसान् ॥ २१ ॥
एवंप्रभावो लवणः शूलं चैव तथाविधम् ॥ श्रुत्वा प्रमाणं काकुत्स्थ त्वं हि नः परमा गतिः ॥२२॥
बहवः पार्थिवा राम भयार्तैर्ऋषिभिः पुरा ॥ अभयं याचिता वीर त्रातारं न च विद्महे ॥ २३ ॥
ते वयं रावणं श्रुत्वा हतं सबलवाहनम् ॥ त्रातारं विद्महे तात नान्यं भुवि नराधिपम् ॥
तत्परित्रातुमिच्छामो लवणाद्भयपीडितान् ॥ २४ ॥

इति राम निवेदितं तु ते भयजं कारणमुत्थितं च यत् ॥
विनिवारयितुं भवान्क्षमः कुरु तं काममहीनविक्रम ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

## द्विषष्टितमः सर्गः ॥ ६२ ॥

च्यवनादिभिर्लवणासुरदुर्वृत्तनिवेदितेनरामेण लवणमारणेनियोज्यविचारणे तत्प्रति भरतेन निजनियोजनप्रार्थना ॥ १ ॥ शत्रुघ्नेन हेतूक्तिपूर्वकस्वनियोजनयाचने रामेण तदङ्गीकारेणलवणमारणनिर्धारणेन शत्रुघ्नप्रति लवणराज्येऽभिषेकस्वीकार-चोदना ॥ २ ॥

तथोक्ते तानृषीन्रामः प्रत्युवाच कृताञ्जलिः ॥ किमाहारः किमाचारो लवणः क्व च वर्तते ॥ १ ॥
राघवस्य वचः श्रुत्वा ऋषयः सर्व एव ते ॥ ततो निवेदयामासुर्लवणो ववृधे यथा ॥ २ ॥
आहारः सर्वसत्त्वानि विशेषेण च तापसाः ॥ आचारो रौद्रता नित्यं वासो मधुवने तथा ॥ ३ ॥
हत्वा बहुसहस्राणि सिंहव्याघ्रमृगद्विपान् ॥ मानुषांश्चैव कुरुते नित्यमाहारमाह्निकम् ॥ ४ ॥
ततोन्तराणि सत्त्वानि खादते स महाबलः ॥ संहारे समनुप्राप्ते व्यादितास्य इवान्तकः ॥ ५ ॥
तच्छ्रुत्वा राघवो वाक्यमुवाच स महामुनीन् ॥ घातयिष्यामि तद्रक्षो ह्यपगच्छतु वो भयम् ॥ ६ ॥

---

१६ ॥ कुम्भीनसी माल्यवत्पुत्र्याः अनलाया' सुता रावणस्वसा पूर्वं मधुना हृतेति विभीषणेन रावण प्रत्युक्ता । हिः प्रसिद्धौ ॥ १७—१९ ॥ वरं न्यवेदयत् यावच्छूल तव हस्ते तावदवध्यस्त्व तवेत्येवरूपं वरवृत्तान्त ॥ २०—२५ ॥ इति श्रीगोविन्दराज-विरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्त-रकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

---

अथ शत्रुघ्नस्य लवणासुरवधार्थं प्रेषणं—तथेत्यादि ॥ १ ॥ यथा ववृधे यादृगाहारादिना वर्धते स्म तथा

---

ति० त्वप्रमाण यथोचितकरणइतिशेष । स० श्रुत्वाकर्तुं प्रमाण समर्थ ॥ २२ ॥ स० हेराम भयज भयाज्जायतइतितत्तथा । 'पञ्चम्यामजातौ' इतिड । नागोजिभट्टस्तु भयजं भयजनकमितिव्याकुर्वन्कारणपदवैयर्थ्यसोढुप्रवृत्तइतिमन्तव्यं ॥ २५ ॥ इत्येकषष्टितम सर्ग ॥ ६१ ॥

ति० तथोक्तइति । परित्राणमिच्छामइत्युक्ते ॥१॥ ति० ततोन्तराणि अन्यान्यपीत्यर्थ. ॥ ५ ॥

[ पा० ] १ क—घ. ज. ड खसमन्वित . २ क. ज. दौरात्म्यादात्मन .

प्रतिज्ञाय तथा तेषां मुनीनामुग्रतेजसाम् ॥ स भ्रातॄन्सहितान्सर्वानुवाच रघुनन्दनः ॥ ७ ॥
को हन्ता लवणं वीरः कस्यांशः स विधीयताम् ॥ भरतस्य महाबाहोः शत्रुघ्नस्य च धीमतः ॥ ८ ॥
राघवेणैवमुक्तस्तु भरतो वाक्यमब्रवीत् ॥ अहमेनं वधिष्यामि ममांशः स विधीयताम् ॥ ९ ॥
भरतस्य वचः श्रुत्वा धैर्यशौर्यसमन्वितम् ॥ लक्ष्मणावरजस्तस्थौ हित्वा सौवर्णमासनम् ॥ १० ॥
शत्रुघ्नस्त्वब्रवीद्वाक्यं प्रणिपत्य नराधिपम् ॥ कृतकर्मा महाबाहुर्मध्यमो रघुनन्दनः ॥ ११ ॥
आर्येण हि पुरा शून्या [1]त्वयोध्या परिपालिता ॥ संतापं हृदये कृत्वा आर्यस्यागमनं प्रति ॥ १२ ॥
दुःखानि च बहूनीह ह्यनुभूतानि पार्थिव ॥ शयानो दुःखशय्यासु [2]नन्दिग्रामेऽवसत्पुरा ॥ १३ ॥
फलमूलाशनो भूत्वा जटी चीरधरस्तथा ॥ अनुभूयेदृशं दुःखमेष राघवनन्दनः ॥
प्रेष्ये मयि स्थिते राजन्न भूयः क्लेशमाप्नुयात् ॥ १४ ॥
तथा ब्रुवति शत्रुघ्ने राघवः पुनरब्रवीत् ॥ एवं भवतु काकुत्स्थ क्रियतां मम शासनम् ॥ १५ ॥
राज्ये त्वामभिषेक्ष्यामि मधोस्तु नगरे शुभे ॥ निवेशय महाबाहो भरतं यद्यवेक्षसे ॥ १६ ॥
शूरस्त्वं कृतविद्यश्च समर्थश्च निवेशने ॥ १७ ॥
[ [3]नगरं यमुनाजुष्टं तथा जनपदाञ्शुभान् ॥ ] [4]यो हि शत्रुं समुत्पाद्य पार्थिवस्य पुनः क्षये ॥
न विधत्ते नृपं तत्र नरकं स हि गच्छति ॥ १८ ॥
स त्वं हत्वा मधुसुतं लवणं पापनिश्चयम् ॥ राज्यं प्रशाधि धर्मेण वाक्यं मे यद्यवेक्षसे ॥ १९ ॥
उत्तरं च न वक्तव्यं शूर वाक्यान्तरे मम ॥ बालेन पूर्वजस्याज्ञा कर्तव्या नात्र संशयः ॥ २० ॥
अभिषेकं च काकुत्स्थ प्रतीच्छस्व मयोद्यतम् ॥ वसिष्ठप्रमुखैर्विप्रैर्विधिमन्त्रपुरस्कृतम् ॥ २१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

निवेदयामासुः ॥२—७॥ कस्यांश इति पृष्ट्वा स्वयमेव निश्चिनोति भरतस्येति ॥८—९॥ आसनं हित्वा आसनादुत्थायेत्यर्थ. ॥ १०—१५ ॥ निवेशय अत्रैव नगर इति शेषः । अथवा तत्रैव तिष्ठेति भाव । अवेक्षसे अक्लेशनीयत्वेनेति शेष. ॥ १६ ॥ निवेशने नूतनगृहनिर्माण इत्यर्थः ॥ १७ ॥ मधोस्तु नगरे त्वामभिषेक्ष्यामीत्यत्र हेतुमाह—यो हीति ॥ नृपं तत्रेति । उत्पाटितवंशनृपराज्य इत्यर्थ'॥१८—१९॥ उत्तर च न वक्तव्यमिति ॥ त्वत्समीप एव मया वस्तव्यमित्यादिकमित्यर्थः ॥ २० ॥ विधिना मन्त्रेण च पुरस्कृत ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

---

**स०** स्वस्यमुख्यत्वात्तन्मात्रवधव्यापारायोगात् लक्ष्मणस्येन्द्रजिदादिमारणोदारकीर्तित्वादायस्तत्वाच्चभ्रातृद्वन्द्वस्याप्रतिद्वन्द्वताकामयानोनामनिर्देशेनपृच्छति—**भरतस्येति** । भरतस्यवाश शत्रुघ्नस्यवेतिकस्याशोभागोविधीयतामित्युवाच ॥ ८ ॥ **स०** कृतकर्मा कृतसेव ॥ ११ ॥ **स०** दु खशय्यासु दु खजनककेवलस्थलादिशय्यासु ॥ १३ ॥ **ति०** प्रेष्ये विशिष्यभरतस्यनियोज्ये ॥ १४ ॥ **स०** यमुनाजुष्ट तत्तीरवर्ति ॥ १८ ॥ इतिद्विषष्टितम सर्ग ॥ ६२ ॥

**[ पा० ]** १ क. च. ज त्वयोध्यारक्षितापुरी २ च झ. ट नन्दिग्रामेमहायशा क. ग. घ. नन्दिग्रामेमहामना. ३ इदमर्ध च. झ. ञ. ट. पाठेषुदृश्यते क—घ, ज. नगरमधुनाजुष्टं. ४ च—ट. योहिवंशसमुत्पाद्य. ख. घ. योहिवंशंसमुत्पाट्य.

## त्रिषष्टितमः सर्गः ॥ ६३ ॥

ज्येष्ठेसत्यपि स्वाज्ञायाअनुल्लंङ्घयतया कथंचिदभिषेकमङ्गीकृतवत शत्रुघ्नस्य रामेण लवणराज्येऽभिषेचनम् ॥ १ ॥ तथा शत्रुघ्नप्रति निजशरप्रभावप्रशंसनेन तद्दानपूर्वक लवणमारणोपायोपदेश ॥ २ ॥

**एवमुक्तस्तु रामेण परां व्रीडामुपागमत् ॥ शत्रुघ्नो वीर्यसंपन्नो मन्दं मन्दमुवाच ह ॥ १ ॥**
**अधर्मं विद्म काकुत्स्थ ह्यस्मिन्नर्थे नरेश्वर ॥ कथं तिष्ठत्सु ज्येष्ठेषु कनीयानभिषिच्यते ॥ २ ॥**
**अवश्यं करणीयं च शासनं पुरुषर्षभ ॥ तव चैव महाभाग शासनं दुरतिक्रमम् ॥ ३ ॥**
**त्वत्तो मया श्रुतं वीर श्रुतिभ्यश्च मया श्रुतम् ॥ नोत्तरं हि मया वाच्यं मध्यमे प्रतिजानति ॥ ४ ॥**
**व्याहृतं दुर्वचो घोरं हन्तास्मि लवणं मृधे ॥ तस्येयं[1] मे दुरुक्तस्य दुर्गतिः पुरुषर्षभ ॥ ५ ॥**
**उत्तरं हि न वक्तव्यं ज्येष्ठेनाभिहिते[2] पुनः ॥ अधर्मसहितं चैव परलोकविवर्जितम्[3] ॥ ६ ॥**
**सोहं द्वितीयं काकुत्स्थ न वक्ष्यामि[4] तवोत्तरम् ॥ मा द्वितीयेन दण्डो वै निपतेन्मयि मानद ॥ ७ ॥**

अथ रामेण स्वसन्निधावेव मधुराज्ये शत्रुघ्नमभिषिच्य लवणवधोपायोपदेशपूर्वक तद्वधार्थं दिव्यास्त्रप्रदानं—एवमित्यादि ॥ १ ॥ विद्म वेद्मीत्यर्थ. । अस्मिन्नित्युक्तविवृणोति—कथमित्यादि । तिष्ठत्सु ज्येष्ठेष्विति गुरुवैषम्यमार्षम् । कथमभिषिच्यते न कथमपि । अधर्म एवेत्यर्थः ॥ २ ॥ तव शासन चावश्य करणीयमित्यर्थः ॥ ३ ॥ मध्यमे भ्रातरि भरत इत्यर्थः । घोर लवण हन्तास्मीति प्रतिजानति सति । हि यस्मात् । मया उत्तर ज्येष्ठवच उल्लङ्घ्य न वाच्यं वक्तु न योग्यं ॥ ४ ॥ तथाप्यहं मृधे युद्धे लवण हन्तास्मीति दुर्वचो व्याहृतं तस्यास्य मे दुरुक्तस्येयं दुर्गति' दुष्टकार्यस्य प्राप्तिः । तच्च ज्येष्ठातिक्रमेण आत्माभिषेचनं ॥ ५ ॥ उक्तमर्थं व्यावर्तयति—उत्तर हीत्यादि । ज्येष्ठेन भरतेनाभिहिते सति ततः परमुत्तरं न वक्तुमुचितमेव । किंचाधर्मसहितमपि । अतएव परलोकविवर्जितमपि । तव शासन च दुरतिक्रममिति शेष' ॥ ६ ॥ फलितमाह—सोहमित्यादि ॥ भरतोक्तेः प्रथम कृतोत्तरवचनः सोह हे काकुत्स्थ तव ज्येष्ठस्योत्तरं द्वितीय न वक्ष्यामि । तत्र हेतुमाह—मेति । द्वितीयेन ज्येष्ठप्रत्युत्तरेण दण्डो मयि मा निपतेत् । भरते जिगमिषत्यह गमिष्यामीत्युत्तरेण प्रथमेन राज्याभिषेकापत्तिरूपो दण्डः पतित.। त्वया अभिषेक प्रतीच्छेत्युक्ते तदनङ्गीकारोत्तरेण द्वितीयेन मयि दण्डो मा निपतेदिति भावः ॥ ७ ॥

**स०** अखण्डभूमण्डलाधिपतिपुरतस्त्वाविनाज्येष्ठयो सतोश्चपुरान्तरेऽभिषेचनंममकथमितिव्रीडामुपागमत् । अतएवरामं सत्प्यबहुवचनप्रयोग ॥ १ ॥ **ति०** तवशासनंचावश्यकरणीय । यतस्तवशासनवेदशासनवद्दुरतिक्रमअतिक्रमितुमशक्य । एवंचोभयत.पाशारज्जुरियमेजातेत्यर्थ ॥ **स०** शासन श्रुतिकृतंज्येष्ठेषुसत्सुकनीयसानाभिषेकोविवेकिभि कार्यइतिलक्षणं । अवश्यंकरणीयं । तवचशासन राज्याभिषेकसपादनरूपदुरतिक्रम । ज्येष्ठाज्ञावज्ञानस्यानौचित्यादित्युभयत पाशारज्जुर्जातेतिभाव । एवमर्थएवचशब्द समुच्चेयान्तरसमुच्चायकइतिज्ञेय उत्तरश्लोकश्चानुकूलितोभवति ॥ ३ ॥ **ति०** ज्येष्ठेविद्यमानेकनिष्ठाभिषेकोऽधर्म तथाज्येष्ठवाक्याकरणचाधर्मइतित्वयाकथमवगततत्राह—**त्वत्तइति** । सद्गुरोस्त्वत्त श्रुतिभ्यश्चममैवश्रवणमितिभाव । एवमधर्मसकटप्राप्तिरपिमेस्वदोषमूलेत्याह—**नोत्तरंहीति** । मध्यमेभ्रातरि भरते । घोरलवणहन्तास्मीतिप्रतिजानतिसतिहियस्मात्मयाज्येष्ठवचनमुल्लङ्घ्योत्तरनवाच्य नवक्तुंयोग्य । तद्वचस्तिरस्काररूपत्वात् । **स०** इदकथमवगतभवतेत्यतआह—त्वत्तइति । त्वत्त. वक्तु । श्रुतिभि करणै मयाश्रुतं । मध्यमेभरतेप्रतिजानति हन्ताहंलवणमितिप्रतिज्ञाकुर्वतिसति मध्येउत्तरमयानवाच्य । अमया अज्ञानेनदुर्वचोव्याव्हतमित्युत्तरेणान्वय ॥ ४ ॥ **ति०** तथापिमृधेयुद्धेघोरलवणहन्तास्मीत्येतद्दुर्वचोव्याहृत । तस्यास्यदुरुक्तस्य फलभूतेयंदुर्गति ज्येष्ठातिक्रमहेतुनानिरयप्रापकाभिषेकप्राप्ति' । तत्प्रापकत्वाद्वाक्यातिक्रमप्राप्तिर्वाजातेतिशेष ॥ ५ ॥ **ति०** अतिपीडावशादुक्तमेवपुनर्वदति—**उत्तरंहीति** । ज्येष्ठेनभरतेनत्वयावाऽभिहिते उत्तरनवक्तव्य वक्तुमनर्हमेव । किंचतन्मूलकं त्वयाधर्मसहितंअतएव परलोकविवर्जितं । अभिषेकशासनंकृतं । तच्चदुरतिक्रममितिशेष ॥ ६ ॥ **ति०** यदेवमत सोहंभरतोक्तेः प्रथमंकृतोत्तरवचन हेकाकुत्स्थतवज्येष्ठस्योक्ते अभिषेकंप्रतीच्छेत्यस्या द्वितीयमुत्तरमितिहेतोर्नवक्ष्यामि । कुतस्तत्राह—माद्वितीत-

[ **पा०** ] १ च. छ. झ. ञ. ट. तस्यैवं. २ ज. नाभिहितेसति. ३ क विगर्हितं. ४ च. झ. ञ. ट. वक्ष्यामीतिचोत्तर.

कामकारो ह्यहं राजंस्तवास्मि पुरुषर्षभ ॥ अधर्मं जहि काकुत्स्थ मत्कृते रघुनन्दन ॥ ८ ॥
एवमुक्ते तु शूरेण शत्रुघ्नेन महात्मना ॥ उवाच रामः संहृष्टो भरतं लक्ष्मणं तथा ॥ ९ ॥
संभारानभिषेकस्य आनयध्वं समाहिताः ॥ अद्यैव पुरुषव्याघ्रमभिषेक्ष्यामि राघवम् ॥ १० ॥
पुरोहितं च काकुत्स्थं नैगमानृत्विजस्तथा ॥ मन्त्रिणश्चैव तान्सर्वानानयध्वं ममाज्ञया ॥ ११ ॥
राज्ञः शासनमाज्ञाय तथाऽकुर्वन्महारथाः ॥ अभिषेकसमारम्भं पुरस्कृत्य पुरोधसम् ॥
प्रविष्टा राजभवनं[1] राजानो ब्राह्मणास्तथा ॥ १२ ॥
तथाऽभिषेको ववृधे शत्रुघ्नस्य महात्मनः ॥ संप्रहर्षकरः श्रीमान्राघवस्य पुरस्य च ॥ १३ ॥
अभिषिक्तस्तु शत्रुघ्नो बभौ चादित्यसंनिभः ॥ अभिषिक्तः पुरा स्कन्दः सेन्द्रैरिव[2] मरुद्गणैः ॥१४॥
अभिषिक्ते तु शत्रुघ्ने रामेणाक्लिष्टकर्मणा ॥ पौराः प्रमुदिताश्चासन्ब्राह्मणाश्च बहुश्रुताः ॥ १५ ॥
कौसल्या च सुमित्रा च मङ्गलं केकयी तथा ॥ चक्रुस्ता राजभवने याश्चान्या राजयोषितः ॥ १६ ॥
ऋषयश्च महात्मानो यमुनातीरवासिनः ॥ हतं लवणमाशंसुः शत्रुघ्नस्याभिषेचनात् ॥ १७ ॥
ततोऽभिषिक्तं शत्रुघ्नमङ्कमारोप्य राघवः ॥ उवाच मधुरां वाणीं तेजस्तस्याभिपूरयन् ॥ १८ ॥
अयं शरस्त्वमोघस्ते दिव्यः परपुरंजयः ॥ अनेन लवणं सौम्य हन्तासि रघुनन्दन ॥ १९ ॥
सृष्टः शरोऽयं काकुत्स्थ यदा शेते महार्णवे ॥ स्वयम्भूरजितो देवो यं नापश्यन्सुरासुराः ॥
अदृश्यः सर्वभूतानां तेनायं तु शरोत्तमः ॥ २० ॥
सृष्टः क्रोधाभिभूतेन विनाशार्थं[3] दुरात्मनोः ॥ मधुकैटभयोर्वीर विघाते[4] वर्तमानयोः ॥
स्रष्टुकामेन लोकांस्त्रींस्तौ चानेन हतौ युधि ॥ २१ ॥
तौ हत्वा जनभोगार्थं कैटभं तु मधुं तथा ॥ अनेन शरमुख्येन ततो लोकांश्चकार सः ॥ २२ ॥
नायं मया शरः पूर्वं रावणस्य वधार्थिना ॥ मुक्तः शत्रुघ्न भूतानां महांस्त्रासो भवेदिति ॥ २३ ॥

फलितमाह्—कामकार इति ॥ अहं तव कामकारोस्मि अभीष्टनियोगकर्तास्मि । मत्कृते मदनुष्ठितराज्याभिषेकस्वीकारे । अधर्मं ज्येष्ठातिक्रमेण राज्यप्राप्तिनिमित्तं । काकुत्स्थेत्यत्रापि प्राधान्याल्लोकस्य अधर्मं अधर्मबुद्धिं । जहि परिहर ॥ ८ ॥ सहृष्ट इति । कृताभिषेकनियोगत्वादिति भावः । अभिषेकस्य सभारान् अभिषेकोपकरणानि । लक्ष्मण भरत तथेति प्राधान्यात् सुमन्त्रादीनपीत्यर्थः । अन्यथाऽऽनयध्वमिति बहुवचनं विरुध्येत ॥ ९—१७ ॥ तेजः शत्रुसंहारोचितबलवीर्यं ॥ १८ ॥ अय मया दीयमानः ॥ १९॥ अमोघत्वे हेतुमाह—सृष्ट इत्यादि ॥ २० ॥ विघाते सृष्टिविघ्ने वर्तमानयो. तत्परयोरित्यर्थ. । सृष्टः क्रोधाभिभूतेन विनाशे सर्वरक्षसाम् । मधुकैटभयोर्वीर विघाते सर्वरक्षसामिति च पाठ. ॥ २१—२२ ॥ नायमिति॥अनेन शरेण महान् त्रासो भवेदित्यलक्ष्यविषये महास्त्रप्रयोगे तदीयांश्च सर्वान् लक्षीकृत्य

येनेति । यथाभरतेजिगमिषति अहगमिष्यामीत्युत्तरेणप्रथमेनराज्याभिषेकापत्तिरूपोदण्ड पतित । यस्येदानींत्वयाऽभिषेकं प्रतीच्छेत्युक्ते तदनङ्गीकारोत्तरेणद्वितीयेनममदण्डो मानिपतेदिति ॥ ७ ॥ **ति०** एवमुक्ते स्वातन्त्र्यंविहायाभिषेकाङ्गीकारवाक्ये उक्ते ॥ ९ ॥ **ति०** आनयध्वमितिबहुवचनसुमन्त्राद्यभिप्रायेण ॥ १० ॥ **ति०** अभिषेकसभारंभ अभिषेकोपकरणवन्तं पुरोधसपुरस्कृत्य ॥ १२ ॥ **ति०** अयशर दीयतइतिशेष ॥ १९ ॥ **ति०** शरस्यामोघत्वेहेतुमाह—सृष्टइति । स्वयभू जन्मरहित । अजितोविष्णु यदाप्रलयकाले महार्णवेशेते यंतदा सुराअसुराश्चनापश्यन् । कैमुतिकन्यायेन सर्वभूतादृश्य । महार्णवेशयनंचवायुरूपेण । 'प्रजापतिर्वायुर्भूत्वाचरेत्' इतिश्रुतेरितिकतक । तेनविष्णुनासाक्षादयंशरोत्तम सृष्ट ॥ २० ॥ **स०** रावणस्यवधार्थिनामयाऽयशर पूर्वनमुक्त । एतस्यतत्रविनियोगेएतद्वध्यस्यलवणस्यतथैवावस्थानेलोकानालवणमुखेनमहा-

[ पा० ] १ क. ग. घ. भवनंपुरन्दरपुरोपमं. च. छ. ज भवनंपुरन्दरगृहोपमं. २ ग—ङ. झ. ञ. ट. सेन्द्रैरिवदिवौकसै.- ३ ख. घ. ज. विनाशेसर्वरक्षसा. ४ झ. ञ. ट. विघातेसर्वरक्षसा.

यच्च तस्य महच्छूलं त्र्यम्बकेण महात्मना ॥ दत्तं शत्रुविनाशाय मधोरायुधमुत्तमम् ॥ २४ ॥
स तं निक्षिप्य भवने पूज्यमानं पुनःपुनः ॥ दिशः सर्वाः समासाद्य प्राप्नोत्याहारमुत्तमम् ॥ २५ ॥
यदा तु युद्धमाकाङ्क्षन्कश्चिदेनं समाह्वयेत् ॥ तदा शूलं गृहीत्वा तं भस्म रक्षः करोति हि ॥ २६ ॥
स त्वं पुरुषशार्दूल तमायुधविनाकृतम् ॥ अप्रविष्टं पुरं पूर्वं द्वारि तिष्ठ धृतायुधः ॥ २७ ॥
अप्रविष्टं च भवनं युद्धाय पुरुषर्षभ ॥ आह्वयेथा महाबाहो ततो हन्तासि राक्षसम् ॥ २८ ॥
अन्यथा क्रियमाणे तु अवध्यः स भविष्यति ॥ यदि त्वेवंकृते वीर विनाशमुपयास्यति ॥ २९ ॥
एतत्ते सर्वमाख्यातं शूलस्य च विपर्ययः ॥ श्रीमतः शितिकण्ठस्य कृत्यं हि दुरतिक्रमम् ॥ ३० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

## चतुष्षष्टितमः सर्गः ॥ ६४ ॥

शत्रुघ्नेन रामाज्ञयामहर्षिपुरस्कारेण सेनाप्रस्थापनपूर्वकं पश्चान्मासानन्तरं लवणविजयायप्रस्थानम् ॥ १ ॥

एवमुक्त्वा च काकुत्स्थं प्रशस्य च पुनः पुनः ॥ पुनरेवापरं वाक्यमुवाच रघुनन्दनः ॥ १ ॥
इमान्यश्वसहस्राणि चत्वारि पुरुषर्षभ ॥ रथानां द्वे सहस्रे च गजानां शतमुत्तमम् ॥ २ ॥

---

नाशयेदिति भावः । अनेन रावणादपि बलीयान् लवण इति सूचित । महान् ह्रासो भवेदिति च पाठः ॥ २३ ॥ गृहीतशूलस्य तस्य दुर्जयत्वात्तदग्रहणाय पुरप्रवेशनिरोधमुपदिशति—यच्च तस्येत्यादि ॥ मधोर्दत्तमित्यन्वय. ॥ २४—२५ ॥ युद्धमाकाङ्क्षन्निति । अनेन सहेति शेषः ॥ २६ ॥ तमायुधविनाकृत आयुधविवर्जितमुपलक्ष्येति शेष॰ ॥ २७—२८ ॥ यदि त्वेव कृत इति । यदा त्वेवमुक्तरीत्या कृतमनुष्ठित भवति तदा त्वेव कृते सति सः अवश्य विनाशमुपयास्यति ॥ २९ ॥ विपर्ययः परिहार इत्यर्थः । श्रीमत इति । कृत्यमाज्ञापन । अत्र कश्चिज्जल्पति—अत्र रामेण दुरतिक्रमत्वं शूलिन उक्तमिति विष्णोरप्यधिको रुद्र इति तन्न । अवतारमर्यादया तादृशोक्तिसंभवाद्यथा ब्रह्मास्त्रबन्धने दुरतिक्रमो ब्रह्मणो महिमेत्यादि । यद्वा दुरतिक्रमं कृत्य भगवतैव तस्य बहुमन्तव्यत्वादिति भाव॰ ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

अथ शत्रुघ्नप्रस्थापन—एवमित्यादि ॥ १—२ ॥

---

न्हासोभवेदतोऽयंनमुक्तइतिभाव । यद्वा रावणस्यववार्थिनामयापूर्वनायशरोमुक्त । सोक्तुर्ममबलाविक्येनरावणमात्रपर्याप्तिविनाभूतानामहान्हासोभवेदित्यर्थं । तवन्यूनबलत्वेनलवणमात्रपर्याप्तत्वमुपपन्नमितिभाव । नागोजिभट्टेनतत्रहेतुर्लोकानाह्रासो भवेदिति । अल्पलक्ष्येमहास्त्रप्रयोगेतन्मात्रहननेनेननशाम्यति । किंतुभूतानिसहरति । अतोभूतदययानक्षिप्तइतिभाव । अनेन रावणादपिमहाबलत्वेनलवणस्यदिव्यशरपर्याप्तविषयत्वमुक्तमितिव्याख्यात । तत्रलवणस्यरावणापेक्षयाधिक्येरामेणैतादृशेकर्मणि भिन्नोदरजस्यानुजस्यस्वानुवर्तिनोधर्माध्यक्षेणप्रेषणनयुज्यते । स्वयमेवगन्तुमौचित्यात् । पूर्वंरावणभीतेर्मधोर्दूरगमनस्यभार्यामुखत दत्ताभीतेस्तेनसहदिग्विजयानुगतिकथनस्यैतदर्थविरोधित्वात् ॥ एतदर्थमूलस्यावश्यवक्तव्यस्यानुक्तत्वाच्च ॥२३॥ **ति०** अथ निकुंभिलायासमाप्तयागस्येन्द्रजितइवगृहीतशूलस्यतस्यदुर्जयत्वान्निकुंभिलानिरोधमिवपुरप्रवेशनिरोधमुपदिशति—**यच्चतस्येत्यादि** । मधोर्दत्तमित्यन्वय ॥ २४ ॥ **स०** पुर शूलालयमितियावत् ॥ २७ ॥ **ति०** विपर्यय परिहार । ननुकिमनेननिर्बन्धेनबाणेनशूलछित्वातमपिहनिष्यामितत्राह—**श्रीमतइति** । कृत्य शूलमाहात्म्य । दुरतिक्रम अतिक्रमितुमशक्य । शक्तोऽप्यनुल्लङ्घितं चेत्यर्थ । ईश्वरकृतमर्यादापालनार्थमेवास्मदवतारादितिभाव ॥ ३० ॥ इतित्रिषष्टितम सर्ग ॥ ६३ ॥

**स०** प्रशस्य प्रशसनंचगमनबुद्ध्युत्तेजनार्थं ॥ १ ॥

[ **पा०** ] १ ज तच्चनिक्षिप्य. २ ज भस्मकुर्यात्सराक्षस

अन्तरा पण्यवीथ्यश्च नानापण्योपशोभिताः ॥ अनुगच्छन्तु काकुत्स्थं तथैव नटनर्तकाः ॥ ३ ॥
हिरण्यस्य सुवर्णस्य नियुतं पुरुषर्षभ ॥ आदाय गच्छ शत्रुघ्न पर्याप्तधनवाहनः ॥ ४ ॥
बलं च सुभृतं वीर हृष्टपुष्टमनुद्धतम् ॥ संभाषासंप्रदानेन रञ्जयस्व नरोत्तम ॥ ५ ॥
न ह्यर्थास्तत्र तिष्ठन्ति न दारा न च बान्धवाः ॥ सुप्रीतो भृत्यवर्गश्च यत्र तिष्ठति राघव ॥ ६ ॥
ततो हृष्टजनाकीर्णां प्रस्थाप्य महतीं चमूम् ॥ एक एव धनुष्पाणिर्गच्छ त्वं मधुनो वनम् ॥ ७ ॥
यथा त्वां न प्रजानाति गच्छन्तं युद्धकाङ्क्षिणम् ॥ लवणस्तु मधोः पुत्रस्तथा गच्छेरशङ्कितम् ॥८॥
न तस्य मृत्युरन्योस्ति कश्चिद्धि पुरुषर्षभ ॥ दर्शनं योऽभिगच्छेत स वध्यो लवणेन हि ॥ ९ ॥
स हि ग्रीष्मेऽपयाते तु वर्षारात्र उपागते ॥ हन्यास्त्वं लवणं सौम्य स हि कालोऽस्य दुर्मतेः ॥१०॥
महर्षींस्तु पुरस्कृत्य प्रयान्तु तव सैनिकाः ॥ यथा ग्रीष्मावशेषेण तरेयुर्जाह्नवीजलम् ॥ ११ ॥
तत्र स्थाप्य बलं सर्वं नदीतीरे समाहितः ॥ अग्रतो धनुषा सार्धं गच्छ त्वं लघुविक्रमः ॥ १२ ॥
एवमुक्तस्तु रामेण शत्रुघ्नस्तान्महाबलान् ॥ सेनामुख्यान्समानीय ततो वाक्यमुवाच ह ॥ १३ ॥
एते वो गणिता वासा यत्र तत्र निवत्स्यथ ॥ स्थातव्यं चाविरोधेन यथा बाधा न कस्यचित् ॥१४॥
तथा तांस्तु समाज्ञाप्य प्रस्थाप्य च महद्बलम् ॥ कौसल्यां च सुमित्रां च कैकेयीं चाभ्यवादयत् ॥१५॥

अन्तरा मध्ये निवासस्थले नानापण्यैरुपशोभिता'। नानावर्णोपशोभिता' । इति पाठे वर्णा. ब्राह्मणादयः। आपणवीथ्यस्तत्प्रवर्तकाः ॥ ३ ॥ पर्याप्तधनवाहन इत्यत्र धनं पश्चादय ॥ ४ ॥ सुभृतं सुसपूर्णं । सभाषाया' सम्यग्वचनस्य सप्रदानेन उक्त्या ॥ ५ ॥ यत्र प्रदेशे तिष्ठसि स्थास्यसि । तत्र वनप्रदेशे अर्था न सन्ति अतः सर्वं गृहीत्वा गन्तव्यमित्यर्थः ॥ ६ ॥ प्रस्थाप्य संस्थाप्य । मासमात्रोषितः अयोध्यायां पथि एक एव गच्छ ॥ ७ ॥ एव हि पूर्वजेन संमन्त्रितो लवणवधार्थं सेनया सह शत्रुघ्नो यातीति वार्तापरिहारार्थं केवल बलमेवाग्रे मुनिभिः सह गच्छतु । तच्च ग्रीष्मावशेषेण शनै. शनैर्गङ्गाया. परतीरे विशतु । ब्राह्मणैः समुद्योजितं बल श्रुत्वा स विश्वस्य वर्तते । तत्रान्तरे त्वमस्मान्नगरात् केवलं ब्राह्मणान्गृहीत्वा अज्ञात गत्वा त जहीति । अशङ्कित त्वदागतिशङ्कारहितं यथा भवति तथा ॥ ८ ॥ मृत्युर्मारकः । अन्यः अशङ्किततया तदुपरोधकव्यतिरिक्त. । नास्ति । एतदेवोपपादयति—दर्शनमित्यादि ॥ ९ ॥ वसन्ते प्रस्थितस्यापि न स युद्धकाल इत्याह—स हीत्यादि ॥ वर्षारात्रे वर्षाकाले । समासान्त आर्ष' । स हि काल इति । वर्षासु राजान' केपि युद्धाय न निर्गच्छन्तीति निर्भयो निःशूल एव चरति । अतः स एवास्य वधावसर इति भावः ॥ १० ॥ तर्हीदानीं निर्गमने किं प्रयोजनमित्यत्राह—महर्षीनिति ॥ ११ ॥ तत्र जाह्नवीपरतीरे । अग्रतः परमार्ग इत्यर्थः । धनुषा सार्धं नान्येन बलेनेत्यर्थः ॥ १२—१३ ॥ एते प्रसिद्धा इत्यर्थः । वः युष्माक । वासा गणिताः । यत्र यत्र गणिते वासे निवत्स्यथ तत्र तत्राविरोधेनैव स्थातव्यं

**ति०** अन्तरा नगरमध्यवर्तिन्योयाआपणवीथ्य वीथिस्थावणिज । नानाविधै'पण्यै' क्रयविक्रयार्हद्रव्यै उपशोभितायुक्ताअनुगच्छन्तु । नानावर्णोपशोभिताइतिपाठे नानावर्णै ब्राह्मणादिभि उपशोभिताइत्यर्थइतिकनक । पण्येतिपाठएवयुक्त । नटा. वाक्यार्थाभिनयकर्तार । नर्तका पदार्थाभिनयकर्तार' । **स०** नटा वेण्याद्युपरिनटनकर्तार । नर्तका भूम्युपरिनर्तका ॥ ३ ॥ **ति०** सुवर्णस्य उत्कृष्टवर्णस्य । नियुत लक्षमित्येके । दशलक्षमित्यन्ये । पर्याप्तधनवाहन जीवनपर्याप्तवन युद्धपर्याप्तवाहन इत्यर्थ ॥ ४ ॥ **ति०** किमेवंबलादरेणतत्राह—नह्यर्थाइति । यत्ररिपुसकटेभृत्यास्तिष्ठन्ति तत्रार्थादयोनतिष्ठन्तीत्येतेसर्वेआदतव्याइत्यर्थ ॥ ६ ॥ **ति०** ननुकिसेनयातर्हिलवणेनयोत्स्यामि नेत्याह—**अतइति** । अत अयोध्याया । इदानीमेवमहतीचमूं प्रस्थाप्यएकएवत्वमधुनोवनं मधोर्वनंगच्छ । अयंभाव सुखेनजाह्नवीतरणायग्रीष्मकालएवप्रस्थायजाह्नवीमुत्तीर्यकिंचित्कालतत्र स्थित्वातद्बलतत्रेवसस्थाप्यस्वयमेकएवमधुवनंप्राप्यवर्षाप्रादुर्भावेलवणजहीति ॥ ७ ॥ **ति०** दर्शनमिति । युद्धाकाङ्क्षीसमायातीतितत्कर्तृकज्ञानविषयोयोभवेदित्यर्थ' ॥ ९ ॥ इतिचतुष्षष्टितम.सर्ग ॥ ६४ ॥

[ पा० ] १ ख. ग. घ. नानावर्णोपशोभिता . २ झ. ठ. अतो.

रामं प्रदक्षिणीकृत्य शिरसाऽभिप्रणम्य च ॥ रामेण चाभ्यनुज्ञातः शत्रुघ्नः शत्रुतापनः ॥ १६ ॥
लक्ष्मणं भरतं चैव प्रणिपत्य कृताञ्जलिः ॥ पुरोहितं वसिष्ठं च शत्रुघ्नः प्रयतात्मवान् ॥
प्रदक्षिणमथो कृत्वा निर्जगाम महाबलः ॥ १७ ॥
[1]प्रस्थाप्य सेनामथ सोग्रतस्तदा गजेन्द्रवाजिप्रवरौघसंकुलाम् ॥
[2]उवास मासं तु नरेन्द्रपार्श्वतस्त्वथ प्रयातो रघुवंशवर्धनः ॥ १८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे चतुष्षष्टितमः सर्गः ॥ ६४ ॥

---

## पञ्चषष्टितमः सर्गः ॥ ६५ ॥

मार्गवशाद्वाल्मीक्याश्रमंगतेनशत्रुघ्नेन तत्प्रतिसप्रणाम तत्रत्ययाज्ञियचिह्नदर्शनेन तत्कर्तृप्रश्न. ॥ १ ॥ तेन तंप्रति कल्माषपादनामकसौदासवृत्तकथनपूर्वकं तत्प्रदेशस्य तद्यज्ञभूमित्वोक्तिः ॥ २ ॥ शत्रुघ्नेन वाल्मीक्यनुज्ञया पर्णशाला-प्रवेशः ॥ ३ ॥

प्रस्थाप्य तु बलं सर्वं मासमात्रोषितः पथि ॥ एक एवाशु शत्रुघ्नो जगाम त्वरितं तदा ॥ १ ॥
द्विरात्रमन्तरे शूर उष्य राघवनन्दनः ॥ वाल्मीकेराश्रमं पुण्यमगच्छद्वासमुत्तमम् ॥ २ ॥
सोभिवाद्य महात्मानं वाल्मीकिं मुनिसत्तमम् ॥ कृताञ्जलिरथो भूत्वा वाक्यमेतदुवाच ह ॥ ३ ॥
भगवन्वस्तुमिच्छामि गुरोः कृत्यादिहागतः ॥ श्वः प्रभाते गमिष्यामि प्रतीचीं [3]वारुणीं दिशम् ॥४॥
शत्रुघ्नस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः ॥ प्रत्युवाच महात्मानं स्वागतं ते महायशः ॥ ५ ॥
स्वमाश्रममिदं सौम्य राघवाणां कुलस्य हि ॥ आसनं पाद्यमर्घ्यं च निर्विशङ्कः प्रतीच्छ मे ॥ ६ ॥
प्रतिगृह्य तदा पूजां फलमूलं च भोजनम् ॥ भक्षयामास काकुत्स्थस्तृप्तिं च परमां गतः ॥ ७ ॥
स भुक्त्वा फलमूलं च महर्षिं तमुवाच ह ॥ [4]इयं यज्ञविभूतिस्ते कस्याश्रमसमीपतः ॥ ८ ॥
तत्तस्य भाषितं श्रुत्वा वाल्मीकिर्वाक्यमब्रवीत् ॥ शत्रुघ्न शृणु यस्येदं बभूवायतनं पुरा ॥ ९ ॥
युष्माकं पूर्वको राजा सुदासस्तस्य भूपतेः ॥ पुत्रो वीरसहो नाम वीर्यवानतिधार्मिकः ॥ १० ॥
स बाल एव सौदासो मृगयामुपचक्रमे ॥ चञ्चूर्यमाणं ददृशे स शूरो राक्षसद्वयम् ॥ ११ ॥

---

॥ १४—१८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने चतुष्षष्टितमः सर्गः ॥ ६४ ॥

---

रामेण यथाज्ञप्तगमन सग्रहेणोक्त्वा अयोध्यातो द्विरात्रगमनानन्तरवृत्तमाह——भगवन्निति ॥ वारुणी वरुणपालितां । दारुणादिशमिति पाठे दारुणां लवणाधिष्ठितत्वादितिभावः ॥ ४ ॥ प्रहस्येति । अनिवेदितमपि शत्रुघ्नागमननिमित्त ज्ञातव्यमित्यभिप्रायः ॥ ५ ॥ राघवाणां कुलस्य स्वं स्वभूत ॥ ६—७ ॥ इय यज्ञविभूतिस्ते कस्याश्रमसमीपत इति । तवाश्रमसमीपतः इयं वर्तमाना यज्ञविभूतिः यदस्य समृद्धिः । कस्य यजमानस्य ॥ ८ ॥ आयतनं यज्ञायतन ॥ ९—१० ॥ चञ्चूर्यमाणं मुहुर्मुहुश्चरन्त । चरतेर्य-

---

**स०** मासमात्रोषित अयोध्यायामितिशेष ॥ १ ॥ **स०** अन्तरे अयोध्यावाल्मीक्याश्रमयोर्मध्ये । द्विरात्रमुष्य । वास सायकालेनिवासयोग्यं ॥ २ ॥ **स०** लवणवधायतद्वञ्चनार्थमयमेकाकीगच्छतीतिमुने परिज्ञानात्प्रहास. । हेमहायश तेलयास्वागत ॥ ५ ॥ **स०** भोजनं भुज्यतइतिभोजनं फलंचूतादि ॥ ७ ॥ **ति०** पूर्वायज्ञविभूतीयमित्यार्ष.सधि । आश्रमसमीपत 'पूर्वा पूर्वप्रदेशेदृश्यमाना पुरातनीचेयंयज्ञविभूति यूपादियज्ञोपकरणसमृद्धिःकस्य यजमानस्येत्यर्थ ॥ ८ ॥ **ति०** यस्य यजमानस्य

[ पा० ] १ ङ. च झ. ञ. ट निर्याप्य २ च छ. झ. ञ. ट. उपास्यमान.सनरेन्द्रपार्श्वत.प्रतिप्रयातो. ३ च. छ. झ. ट. दारुणादिशं ४ झ ञ. ट. पूर्वायज्ञविभूतीय.

शार्दूलरूपिणौ घोरौ मृगान्बहुसहस्रशः ॥ भक्षमाणावसन्तुष्टौ पर्याप्तिं नैव जग्मतुः ॥ १२ ॥
स तु तौ राक्षसौ दृष्ट्वा निर्मृगं च वनं कृतम् ॥ क्रोधेन महताऽविष्टो जघानैकं महेषुणा ॥ १३ ॥
विनिपात्य तमेकं तु सौदासः पुरुषर्षभः ॥ विज्वरो विगतामर्षो हतं रक्षो ह्युदैक्षत ॥ १४ ॥
निरीक्षमाणं तं दृष्ट्वा सहायं तस्य रक्षसः ॥ सन्तापमकरोद्घोरं सौदासं चेदमब्रवीत् ॥ १५ ॥
यस्मादनपराधं त्वं सहायं मम जघ्निवान् ॥ तस्मात्तवापि पापिष्ठ प्रदास्यामि प्रतिक्रियाम् ॥ १६ ॥
एवमुक्त्वा तु तद्रक्षस्तत्रैवान्तरधीयत ॥ कालपर्याययोगेन राजा मित्रसहोऽभवत् ॥ १७ ॥
राजा तु यजते यज्ञमस्याश्रमसमीपतः ॥ अश्वमेधं महायज्ञं तं वसिष्ठोऽभ्यपालयत् ॥ १८ ॥
तत्र यज्ञो महानासीद्बहुवर्षगणायुतः ॥ समृद्धः परया लक्ष्म्या देवयज्ञसमोऽभवत् ॥ १९ ॥
अथावसाने यज्ञस्य पूर्ववैरमनुस्मरन् ॥ वसिष्ठरूपी राजानमिति होवाच राक्षसः ॥ २० ॥
अस्य यज्ञस्य जातोन्तो सामिषं भोजनं मम ॥ दीयतामिह शीघ्रं वै नात्र कार्या विचारणा ॥२१॥
तच्छ्रुत्वा व्याहृतं वाक्यं रक्षसा ब्रह्मरूपिणा ॥ भक्ष्यसंस्कारकुशलमुवाच पृथिवीपतिः ॥ २२ ॥
हविष्यं सामिषं स्वादु यथा भवति भोजनम् ॥ तथा कुरुष्व शीघ्रं वै परितुष्येद्यथा गुरुः ॥ २३ ॥
शासनात्पार्थिवेन्द्रस्य सूदः संभ्रान्तमानसः ॥ स राक्षसः पुनस्तत्र सूदवेषमथाकरोत् ॥ २४ ॥
स मानुषमथो मांसं पार्थिवाय न्यवेदयत् ॥ इदं स्वादु हविष्यं च सामिषं चान्नमाहृतम् ॥ २५ ॥
स भोजनं वसिष्ठाय पत्न्या सार्धमुपाहरत् ॥ मदयन्त्या नरव्याघ्र सामिषं रक्षसा हृतम् ॥ २६ ॥
ज्ञात्वा तदामिषं विप्रो मानुषं भाजनं गतम् ॥ क्रोधेन महताऽऽविष्टो व्याहर्तुमुपचक्रमे ॥ २७ ॥

---

डन्ताच्छानच् । "उत्परस्यातः" इत्युत्त्व ॥११–१२॥ निर्मृगं कृतं वनं च दृष्ट्वेत्यनुकर्षः ॥ १३—१४ ॥ निरीक्षमाण स्वसहायभूतं द्वितीयरक्षो निरीक्षमाणं प्रथमरक्षो दृष्ट्वा ॥ १५—१६ ॥ कालपर्याययोगेन बहुकालातिवाहजकर्मयोगेन । युक्तोऽभवत् ॥ १७ ॥ अस्याश्रमसमीपत इति । अस्याश्रमस्येत्यविभक्तिकनिर्देश' ॥ १८—२१ ॥ भक्ष्यसंस्कारकुशलमुवाचेति । भोजनार्थमिति शेष. ॥२२—२५॥ मदयन्त्या राज॰

---

इदमायतनबभूव तच्छृणु ॥ ९ ॥ ति० तस्यहतस्यरक्षस सहाय सहायभूतमात्मान । निरीक्षमाणंतंराजानदृष्ट्वासतापमकरोत् ॥ १५ ॥ ति० कालपर्याययोगेन बहुकालानन्तरप्राप्यराज्यप्रापककर्मवशेनमित्रसहोराजाभवत् । वीर्यसहस्यैवमित्रसहइतिनामान्तरं ॥ शि० कालपर्याययोगेन कालक्रमवशात् राजाऽभवत् । एतेनपुत्रंराज्येसस्थाप्यसौदासोऽपरलोकचित्तोऽभवदिति सूचितं ॥ १७ ॥ ति० अस्याश्रमसमीपत अस्येतिषष्ठ्याअलुग्वा आश्रमेतिलुप्तषष्ठीकंपदंवा ॥ १८ ॥ ति० गणायुतइत्यत्राङ्प्रश्लेष. ॥ १९ ॥ स० पूर्ववैर द्वयोर्द्वीपिनोरेकमारणजं । वसिष्ठरूपी तदाकार' ॥ २० ॥ स० हेयज्ञावसान यज्ञस्यावसानं यस्ययेनवातत्सबुद्धि । समापितसवन राजन् । अन्तेतवसमीपएव नतुपारोक्ष्येण । 'अन्त प्रान्तेन्तिके' इतिविश्व । सामिष भोजनं शुद्धमाससहित ॥ २१ ॥ स० ब्रह्मरूपिणा ब्राह्मणवेषवता । सस्कारकुशलान् सूदान् सूपकारिण ॥ २२ ॥ स० भोजनंस्वादुयथाभवतितथासामिष हविष्यकुरुत ॥ २३ ॥ शि० सभ्रान्तमानस गुरुकर्तृकाभक्ष्यभक्षणेच्छाश्रवणेनोद्विग्नचित्तोऽभवदितिशेष ॥ स० सूदस्तदधिपति । तद्रक्ष वसिष्ठाकारविशिष्टमेवरक्ष । तत्रसूदवेषंपाककाराकारमकरोत् ॥ २४ ॥ स० ससूद सामिष मासमिश्रितं । स्वादुहविष्यमन्नमाहृतमितिन्यवेदयत् ॥ मुख्यसूदेसभ्रान्तेतत्रतत्रगच्छतिस्वय तद्वेषंतद्वेषाद्धृत्वैतन्न्यवेदयदितिभाव ॥ महानसेसूदवेषंगृहीत्वामुख्यसूदेनपाकसमयेमानुषंमासप्राक्षिपदितिशेषइतिव्याख्यात॰ वान्नागोजिभट्ट । तत्रापरिचितचरस्यमहानसान्त प्रवेश कथं कथतरामानुषमासनयनं कथंतमातत्रप्रक्षेपइतिनसौघट्य । यदि मायिकत्वात्सर्वंयुज्यतइतितर्हियुज्यतामस्मद्व्याख्यानरीत्येतिसतोष्टव्य ॥ २५ ॥ ति० राजापिसामिषंमानुषमप्यमानुषंतद्धविष्यमित्येवंविज्ञायपत्न्यासार्धवसिष्ठायोपाहरत् ॥ २६ ॥

[ पा० ] १ ख. ग. घ. ज. ञ भक्षयानावसतुष्टौ. २ झ. ठ अथयज्ञावसानान्ते. ३ क. ख. च. छ. झ. ञ. ट. सूदान्सस्कारकुशलानुवाच ४ क. ख च—ट. कुरुत. ५ च. छ. सूदा सभ्रान्तमानसा.. ६ ग. च—ट. तच्चरक्ष.पुन॰. ७ क. ग—च. ज—ट. भोजनागतं.

यस्मात्त्वं भोजनं राजन्ममैतद्दातुमिच्छसि ॥ तस्माद्भोजनमेतत्ते भविष्यति न संशयः ॥ २८ ॥
ततः क्रुद्धस्तु सौदासस्तोयं जग्राह पाणिना ॥ वसिष्ठं शप्तुमारेभे भार्या चैनमवारयत् ॥ २९ ॥
राजन्प्रभुर्यतोऽस्माकं वसिष्ठो भगवानृषिः ॥ प्रतिशप्तुं न शक्तस्त्वं देवतुल्यं पुरोधसम् ॥ ३० ॥
ततः क्रोधमयं तोयं तेजोबलसमन्वितम् ॥ व्यसर्जयत धर्मात्मा ततः पादौ सिषेच च ॥ ३१ ॥
तेनास्य राज्ञस्तौ पादौ तदा कल्माषतां गतौ ॥ तदाप्रभृति राजाऽसौ सौदासः सुमहायशाः ॥
कल्माषपादः संवृत्तः ख्यातश्चैव तथा नृपः ॥ ३२ ॥
स राजा सह पत्न्या वै प्रणिपत्य मुहुर्मुहुः ॥ पुनर्वसिष्ठं प्रोवाच यदुक्तं ब्रह्मरूपिणा ॥ ३३ ॥
तच्छ्रुत्वा पार्थिवेन्द्रस्य रक्षसा विकृतं च तत् ॥ पुनः प्रोवाच राजानं वसिष्ठः पुरुषर्षभम् ॥ ३४ ॥
मया रोषपरीतेन यदिदं व्याहृतं वचः ॥ नैतच्छक्यं वृथा कर्तुं प्रदास्यामि च ते वरम् ॥ ३५ ॥
कालो द्वादशवर्षाणि शापस्यान्तो भविष्यति ॥ मत्प्रसादाच्च राजेन्द्र व्यतीतं न स्मरिष्यसि ॥ ३६ ॥
एवं स राजा तं शापमुपभुज्यारिसूदनः ॥ प्रतिलेभे पुना राज्यं प्रजाश्चैवान्वपालयत् ॥ ३७ ॥
तस्य कल्माषपादस्य यज्ञस्यायतनं शुभम् ॥ आश्रमस्य समीपेऽस्य यन्मां पृच्छसि राघव ॥ ३८ ॥
तस्य तां पार्थिवेन्द्रस्य कथां श्रुत्वा सुदारुणाम् ॥ विवेश पर्णशालायां महर्षिमभिवाद्य च ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

पत्न्या ॥ २६—३२ ॥ ब्रह्मरूपिणा वसिष्ठरूपधरेण यदुक्त तद्वचो वसिष्ठ प्रति प्रोवाच ॥ ३३ ॥ तत् पार्थिवेन्द्रस्य प्रणिपातवाक्य रक्षोविकृत च श्रुत्वा । रक्षसाधिकृतमिति पाठे अधिकृत राजद्वेषमाश्रित्य कृत ॥ ३४—३५ ॥ व्यतीत न स्मरिष्यसि । मया हठाच्छप्त न मनसि कुर्वित्यर्थः ॥ ३६—३७ ॥ कल्माषपाद इति तस्य नामान्तरं । शापानन्तरं मित्रसह' कुपित' सन् वसिष्ठं शप्तुं जलमाददे । स्वयमेव मां नियुज्य कथ पुन. स्वयमेव कुप्यतीति । तदा तद्भार्या समागत्य सर्वथा गुरुर्न प्रतिशापार्ह इति प्रतिषिद्धवती । ततो राजा तद्वच साध्विति मत्वा शापाय गृहीत जल स्वपादे प्रक्षिप्तवान । तदाप्रभृति कल्माषपादनामाभवत् । कल्माष कोपगृहीतशापजलकृतनीलरूपता ॥ ३८—३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने पञ्चषष्टितम. सर्गः ॥ ६५ ॥

---

स० एतत्तेभोजनभविष्यति मानुषमासाशिराक्षसजन्मेतिभाव ॥ २८ ॥ स० प्रभु कुलगुरु ॥ ३० ॥ स० पादौ स्वपादौ ॥ ३१ ॥ स० कल्माषता कृष्णवर्णता । क्रोधमन्त्रणतप्तत्वादपा ॥ ३२ ॥ पार्थिवेन्द्रस्यविषयेरक्षसा स्ववेषधारिणा । विकृतं विरुद्धंकृतं ॥ ३४ ॥ स० द्वादशवर्षाणि काल तदात्मागतश्चेच्छापस्यान्त पूर्ववदवस्थानभविष्यति । अतीतंनस्मरिष्यसि राक्षसत्वावस्थायामतीतराजत्व पुनाराजत्वप्राप्त्यनन्तररक्षस्त्वचनस्मरिष्यसि । अत्रैवादिपर्वोक्ता शक्तिशापब्राह्मणशापादिकथाऽनुसधेया । अत्रराजाज्ञाविनासूदरूपिणारक्षसामानुषामिषवसिष्ठायदत्तमिति । भारतेतु—तस्यौचद्विजसत्तमइति । सद्विजो ब्रह्मजान्य । तथैव 'ततोर्धरात्रउत्थायसूदमानाय्यसत्वरम् । उवाचराजासस्मृत्यब्राह्मणस्यप्रतिश्रुतम् । गच्छायुष्मन्वनोद्देशेब्राह्मणो माप्रतीक्षते । अन्नार्थात्वितमन्नेनसमासेनोपपादय । एवमुक्तस्तत सूद सोनासाद्यामिषक्कचित् । निवेदयामासतदानेतितस्मैव्यथान्वित । राजातुरक्षसाविष्ट सूदमाहगतव्यथ । अप्स्वेनंनरमासेनभोजयेतिपुन पुन ।' इतिराज्ञआज्ञयैवमानुषमासदानोक्तेरतद्दानएतादृशशापदानानौचित्याच्चकल्पभेदेनार्थव्यवस्थाकल्पनीया । एकरक्षस्त्वविषयएवबहुशाप ॥ ३६ ॥ स० पौरोहित्यार्द्विशापोपिदत्तइत्याहप्रतिलेभइति ॥ ३७ ॥ स० महर्षि वाल्मीकि ॥ ३९ ॥ इतिपञ्चषष्टितम सर्ग ॥ ६५ ॥

## षट्षष्टितमः सर्गः ॥ ६६ ॥

शत्रुघ्नस्य पर्णशालाप्रवेशरात्रौ सीतया कुमारद्वयप्रसवः ॥ १ ॥ वाल्मीकिना सीतासुतयोर्जातकर्मकरणपूर्वकं क्रमेण कुशलवाविति नामकरणं च ॥ २ ॥ शत्रुघ्नेन सीतायाअपत्योत्पत्तिश्रवणहर्षेण रात्रियापनपूर्वकं प्रभाते वाल्मीकेरभ्यनुज्ञया निर्गमः ॥ ३ ॥ तथा यमुनातीरमेत्य तत्रऋषिगणैः सह तेभ्यः कथाश्रवणेन सुखनिवासः ॥ ४ ॥

यामेव रात्रिं शत्रुघ्नः पर्णशालामुपाविशत् ॥ तामेव रात्रिं सीताऽपि प्रसूता दारकद्वयम् ॥ १ ॥
ततोऽर्धरात्रसमये बालका मुनिदारकाः ॥ वाल्मीकेः प्रियमाचख्युः सीतायाः प्रसवं शुभम् ॥ २ ॥
भगवन्रामपत्नी सा प्रसूता दारकद्वयम् ॥ ततो रक्षां महातेजः कुरु भूतविनाशिनीम् ॥ ३ ॥
तेषां तद्वचनं श्रुत्वा महर्षिः समुपागमत् ॥ बालचन्द्रप्रतीकाशौ देवपुत्रौ महौजसौ ॥ ४ ॥
जगाम तत्र हृष्टात्मा ददर्श च कुमारकौ ॥ भूतघ्नीं चाकरोत्ताभ्यां रक्षां रक्षोविनाशिनीम् ॥ ५ ॥
कुशमुष्टिमुपादाय लवं चैव तु स द्विजः ॥ वाल्मीकिः प्रददौ ताभ्यां रक्षां भूतविनाशिनीम् ॥६॥
यस्तयोः पूर्वजो जातः स कुशैर्मन्त्रसत्कृतैः ॥ निर्मार्जनीयस्तु तदा कुश इत्यस्य नाम तत् ॥ ७ ॥
यश्चावरो भवेत्ताभ्यां लवेन स समाहितः ॥ निर्मार्जनीयो वृद्धाभिर्लव इत्येव नामतः ॥ ८ ॥
एवं कुशलवौ नाम्ना तावुभौ यमजातकौ ॥ मत्कृताभ्यां च नामभ्यां ख्यातियुक्तौ भविष्यतः ॥९॥
तां रक्षां जगृहुस्ताश्च मुनिहस्तात्समाहिताः ॥ अकुर्वंश्च ततो रक्षां तयोर्विगतकल्मषाः ॥ १० ॥
तथा तां क्रियमाणां च वृद्धाभिर्जन्म नाम च ॥ संकीर्तनं च रामस्य सीतायाः प्रसवौ शुभौ ॥११॥

यामेवेत्यादि ॥ यस्यां रात्र्यामित्यर्थः । दारकद्वयं पुत्रद्वय । प्रसूता प्रसूतवती ॥ १—२ ॥ भूतविनाशिनी बालग्रहविनाशिनीं ॥ ३—५ ॥ लवं चैवेति । अधःप्रदेशलूनकुशमुष्ट्येकदेशमित्यर्थः । कुशमुष्ट्यग्राधोभागाभ्या क्रमाज्ज्येष्ठकनिष्ठयोः प्रमार्जनमिति द्रष्टव्यं ॥ ६ ॥ निर्मार्जनीयः निर्मार्जनार्हो यतो जातः ततः कुश इति नामाकरोदिति शेषः ॥ ७ ॥ ताभ्यां तयोः कुमारयोर्मध्य इत्यर्थः । लवेन लूनकुशमुष्ट्यधोभागेन । वृद्धाभिर्मार्जनीय इति । सूतिकागृहमध्ये ऋषिप्रवेशाभावात् ॥ ८ ॥ ख्यातियुक्तौ भविष्यत इति । यमजातकौ यमलौ ॥ ९ ॥ ततः अनन्तरं । समाहितास्ता वृद्धाः मुनिहस्तात्तां मुनिना दीयमानां रक्षां च जगृहुः । पुत्रयोः प्रदानार्थमिति शेषः । रक्षामकुर्वन्निति । वृद्धा इति शेषः ॥ १० ॥ जन्म च नाम चेति । यद्यपि जातकर्म पुत्रजन्मदिवसे कर्तव्यं न तु नामकरणं तथाप्येवंनामकौ भविष्यत इति ऋषिवचनात्तच्छ्रवणमात्रमिति मन्तव्य । सकीर्तनं च रामस्येति । रामपत्नीप्रसूतेति मुनिदारकवचःश्रव-

**स०** दारकद्वयं यमलरूपं ॥ १ ॥ **स०** बालका ऋषिपुत्रा । मुनिदाराएवमुनिदारका मुनिपत्न्यश्च ॥ २ ॥ भूतविनाशिनीं चतुष्षष्टिबालग्रहविनाशिनीं ॥ ३ ॥ **स०** देवपुत्रौ देवस्यरामदेवस्यपुत्रौ । देवयो वह्नीन्द्रयो पुत्रौ अंशभूतौ । **ति०** देवपुत्रौ तत्सदृशौ । द्रष्टुमितिशेष ॥ ४ ॥ **ति०** रक्षामकरोदित्युक्त तत्प्रकारमाह—**कुशमुष्टिमिति** । कुशमुष्टिलवंचोपादाय रक्षाप्रददौ । लूनकुशानामग्रभाग कुशमुष्टिरित्युच्यते । तेषामधोभागोलवइति । तत्रकतिपयसाग्रकुशान्गृहीत्वामध्येद्विधाछित्त्वातदग्राधोभागाभ्याक्रमाज्ज्येष्ठकनिष्ठयो प्रमार्जनफलकंतद्रूपरक्षादानंवृद्धानांस्त्रीणांहस्तेइतिबोध्य ॥ ६ ॥ **स०** तयोर्जातयोर्मध्ये य पूर्वज रामदेहादितिशेष । स कुशै सामैर्दर्भै निर्मार्जनीयोयतोजात. अतस्तस्यकुशइतितन्नाम । अत्रेदंबोध्य । यदागर्भाधानसमयेयोनिपुष्पंविशद्वीर्यंद्विधा विभक्तमादिपश्चाद्धावेनप्रविशतितदायमौभवत । तयोश्चपितृत प्रवेशक्रमविपर्ययेणमातृत प्रसव. । तथाचोक्तंपिण्डसिद्धिस्मृतौ 'यदाविशेद्द्विधाभूतयोनिपुष्पंपरिक्षरत् । द्वौतदाभवतोगर्भौसूतिर्वेशविपर्ययात्' इति । तथाचात्रसीतायाःप्रथमतोजातोलवएव । अनन्तरंकुशोजातइतिसएवाग्रजइति ॥ ७ ॥ **स०** अवर रामाद्गर्भाधानसमयेपश्चाद्गर्भंप्रविष्ट इत्यर्थ ॥ लवेन लूनदर्भमुष्टिना ॥ **ति०** सलवइतिनामतोभविष्यतीतिशेष । जातकर्मणएवाद्यदिवसेकर्तव्यता नतुनामकरणस्या-

[ पा० ] १ क. घ. ङ. च. ज—ट पर्णशालासमाविशत्. ख ग पर्णशालामुपागमत्. २ ख. ङ झ. ञ. ट. वृद्धाभिर्गोत्रनामच. च. छ. रक्षातागोत्रमामच. क. ग. घ. ज. रक्षागोत्रंचनामच.

अर्धरात्रे तु शत्रुघ्नः शुश्राव सुमहत्प्रियम् ॥ पर्णशालां ततो गत्वा मातर्दिष्ट्येति चाब्रवीत् ॥ १२ ॥
तथा तस्य प्रहृष्टस्य शत्रुघ्नस्य महात्मनः ॥ व्यतीता वार्षिकी रात्रिः श्रावणी लघुविक्रमा ॥ १३ ॥
प्रभाते सुमहावीर्यः कृत्वा पौर्वाह्णिकीं क्रियाम् ॥ मुनिं प्राञ्जलिरामन्त्र्य ययौ पश्चान्मुख पुनः ॥१४॥
स गत्वा यमुनातीरं सप्तरात्रोषितः पथि ॥ ऋषीणां पुण्यकीर्तीनामाश्रमे वासमभ्ययात् ॥ १५ ॥
स तत्र मुनिभिः सार्धं भार्गवप्रमुखैर्नृपः ॥ कथाभिरभिरूपाभिर्वासं चक्रे महायशाः ॥ १६ ॥

सकाञ्चनाद्यैर्मुनिभिः समेतो रघुप्रवीरो रजनीं तदानीम् ॥
कथाप्रकारैर्बहुभिर्महात्मा विरामयामास नरेन्द्रसूनुः ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

## सप्तषष्टितमः सर्गः ॥ ६७ ॥

शत्रुघ्नेन च्यवनंप्रति लवणतच्छूलशक्तिप्रश्न ॥ १ ॥ इन्द्रेण निजार्धासनाकाङ्क्षिणमांधातारप्रति भुविलवणासुरजेतृतया तदनर्हत्वोक्तौ तेनलवणासुरमेत्य युद्धप्रवर्तनम् ॥ २ ॥ लवणनिसृष्टेनशूलेन ससैन्यमाधातृभस्मीकरणपूर्वकं पुनर्लवणकर प्रत्यागमनम् ॥ ३ ॥ च्यवनेनैवशूलशक्तिवर्णनपूर्वक शत्रुघ्नप्रति शूलशून्यतासमये तेनसह युद्धविधानम् ॥ ४ ॥

अथ रात्र्यां प्रवृत्तायां शत्रुघ्नो भृगुनन्दनम् ॥ पप्रच्छ च्यवनं विप्रं लवणस्य यथा बलम् ॥ १ ॥
शूलस्य च बलं ब्रह्मन्के च पूर्वं विनाशिताः ॥ अनेन शूलमुख्येन द्वन्द्वयुद्धमुपागताः ॥ २ ॥
तस्य तद्वचनं श्रुत्वा शत्रुघ्नस्य महात्मनः ॥ प्रत्युवाच महातेजाश्च्यवनो रघुनन्दनम् ॥ ३ ॥

---

णात् । वाल्मीकेः पर्णशालां गत्वा सामान्यतो दिष्ट्या दृष्टेति सूचयन्मुनिं प्रति हर्षेणाह—अर्धरात्र इत्यादिना ॥ अनेन सीता विसृष्टेति रामादित्रयव्यतिरिक्तैर्न ज्ञातमिति सूचित ॥ ११—१२ ॥ वर्षासु भवा वार्षिकी तत्रापि श्रावणी श्रावणमासवर्तिनी काचिद्रात्रिरिति । लघुविक्रम इत्यग्रेण सबन्धः । लघुविक्रमेति पाठे शीघ्रगमनेति रात्रिविशेषणं ॥१३॥ मुनि वाल्मीकिं ॥ १४—१५ ॥ मुनिभिः सार्धमित्यनेन सेना गङ्गातीर एव स्थापितेति सूचितम् ॥ १६—१७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

---

प्रवृत्तायां आगतायामित्यर्थः । पप्रच्छ शूलवृत्तान्तमिति शेष ॥ १ ॥ अनेन द्वन्द्वयुद्धमुपागताः के पूर्वं शूलेन निपातिता इति पप्रच्छेति योजना । ब्रह्मन्नित्यारभ्य प्रश्नवचनं । अनेनेति लवणः परामृश्यते । अनेन लवणबल शूलबल च पृष्ट भवति ॥ २—३ ॥

---

पीतिभविष्यतीतिशेषपूरणं ॥ ८ ॥ ति० तत तच्छ्रवणानन्तर । पर्णशाला सीताया प्रसवपर्णशालागत्वामातर्दिष्ट्यादैवयोगेन तेपुत्रजन्मेतिशेष । इत्यब्रवीदित्यर्थ इतिकतक । 'पर्णशालागतोरात्रौदिष्ट्यादिष्ट्येतिचाब्रवीत्' इतिपाठे स्वपर्णशालास्थ सर्वमिदश्रुत्वास्वात्मन्येवभाग्यभाग्यमित्यब्रवीदित्यर्थ । आद्यपाठेपि वाल्मीकिदत्तपर्णशालापूर्वमेवगत्वास्थित । तत श्रवणानन्तर मातर्भाग्येनेदतवपुत्रजन्मेतिस्वात्मन्येवाब्रवीदित्यर्थोवक्तुंशक्य. । रामानुज्ञाविनारामत्यक्तसभाषणस्यानौचित्यादितितीर्थ ॥ स० पर्णशाला स्वावासोटजगत्वामुनिनिलयात् ॥ १२ ॥ स० पौर्वाह्णिकीं जातसूतककालोचिता ॥ पश्चान्मुख पश्चिमदिगभिमुख. ॥ १४ ॥ ति० स तत्र यमुनातीरे १ यत्तुगङ्गातीरइतिकतकस्तत्पूर्वापरसदर्भविरुद्धं ॥ १६ ॥ स० काञ्चनेतिच्यवननामान्तर । विरामयामास गमयामास ॥ १७ ॥ इतिपट्षष्टितम सर्ग. ॥ ६६ ॥

शि० लवणस्यबल च्यवनं यथा यथावत् पप्रच्छ ॥ १ ॥ स० यथाशूलस्यबलंतथालवणस्यबलंचपप्रच्छ ॥ २ ॥

[ पा० ] १ क. ग. च.-छ ज. ट. व्यतीताया.

असङ्ख्येयानि कर्माणि यान्यस्य रघुनन्दन ॥ इक्ष्वाकुवंशप्रभवे यद्वृत्तं तच्छृणुष्व मे ॥ ४ ॥
अयोध्यायां पुरा राजा युवनाश्वसुतो बली ॥ मान्धातेति स विख्यातस्त्रिषु लोकेषु वीर्यवान् ॥ ५ ॥
स कृत्वा पृथिवीं कृत्स्नां शासने पृथिवीपतिः ॥ सुरलोकमितो जेतुमुद्योगमकरोन्नृपः ॥ ६ ॥
इन्द्रस्य च भयं तीव्रं सुराणां च महात्मनाम् ॥ मान्धातरि कृतोद्योगे देवलोकजिगीषया ॥ ७ ॥
अर्धासनेन शक्रस्य राज्यार्धेन च पार्थिवः ॥ वन्द्यमानः सुरगणैः प्रतिज्ञामध्यरोहत ॥ ८ ॥
तस्य पापमभिप्रायं विदित्वा पाकशासनः ॥ सान्त्वपूर्वमिदं वाक्यमुवाच युवनाश्वजम् ॥ ९ ॥
राजा त्वं मानुषे लोके न तावत्पुरुषर्षभ ॥ अकृत्वा पृथिवीं वश्यां देवराज्यमिहेच्छसि ॥ १० ॥
यदि वीर समग्रा ते मेदिनी निखिला वशे ॥ देवराज्यं कुरुष्वेह सभृत्यबलवाहनः ॥ ११ ॥
इन्द्रमेवं ब्रुवाणं तं मान्धाता वाक्यमब्रवीत् ॥ क मे शक्र प्रतिहतं शासनं पृथिवीतले ॥ १२ ॥
तमुवाच सहस्राक्षो लवणो नाम राक्षसः ॥ मधुपुत्रो मधुवने न तेऽज्ञां कुरुतेऽनघ ॥ १३ ॥
तच्छ्रुत्वा विप्रियं घोरं सहस्राक्षेण भाषितम् ॥ व्रीडितोऽवाङ्मुखो राजा व्याहर्तुं न शशाकह ॥ १४ ॥
आमन्त्र्य तु सहस्राक्षं ह्रिया किंचिदवाङ्मुखः ॥ पुनरेवागमच्छ्रीमानिमं लोकं नरेश्वरः ॥ १५ ॥
स कृत्वा हृदयेऽमर्षं सभृत्यबलवाहनः ॥ आजगाम मधोः पुत्रं वशे कर्तुमरिन्दमः ॥ १६ ॥
स काङ्क्षमाणो लवणं युद्धाय पुरुषर्षभः ॥ दूतं संप्रेषयामास सकाशं लवणस्य हि ॥ १७ ॥
स गत्वा विप्रियाण्याह बहूनि मधुनः सुतम् ॥ वदन्तमेवं तं दूतं भक्षयामास राक्षसः ॥ १८ ॥
चिरायमाणे दूते तु राजा क्रोधसमन्वितः ॥ अर्दयामास तद्रक्षः शरवृष्ट्या समन्ततः ॥ १९ ॥
ततः प्रहस्य तद्रक्षः शूलं जग्राह पाणिना ॥ वधाय सानुबन्धस्य मुमोचायुधमुत्तमम् ॥ २० ॥
तच्छूलं दीप्यमानं तु सभृत्यबलवाहनम् ॥ भस्मीकृत्वा नृपं भूयो लवणस्यागमत्करम् ॥ २१ ॥
एवं स राजा सुमहान्हतः सबलवाहनः ॥ शूलस्य तु बलं सौम्य अप्रमेयमनुत्तमम् ॥ २२ ॥
श्वः प्रभाते तु लवणं वधिष्यसि न संशयः ॥ अगृहीतायुधं क्षिप्रं ध्रुवो हि विजयस्तव ॥ २३ ॥
लोकानां स्वस्ति चैव स्यात्कृते कर्मणि च त्वया ॥ २४ ॥

---

अस्य शूलस्य यानि शत्रुसहारकर्माणि तान्यसख्येयानि । तत्र प्रसिद्धमेक दर्शयति—इक्ष्वाकुवंशप्रभव इति । यद्वृत्त यद्व्यापार । तच्छृणुष्व ॥ ४—७ ॥ शक्रस्यार्धासनेन अर्धराज्येन च युक्तः पार्थिवो राजा भूत्वा सुरगणैर्वन्द्यमानः स्थास्य इति प्रतिज्ञां कृत्वा दिवमध्यारोहत ॥ ८—९ ॥ तावत् प्रथमतः । मानुप एव लोके सर्वात्मना न राजासि स त्व पृथिवीमेव वश्यामकृत्वा कथमिह देवराज्यमिच्छसि ॥ १०—१२ ॥ तेज्ञामिति सन्धिरार्षः । ते आज्ञां ॥ १३—१८॥ चिरायमाणे विलम्ब कुर्वाणे ॥१९—२२॥ अथ श्रुतशूलबल प्रति स्वविजयसन्देहनिवृत्तय आह—श्वः

---

**स०** इक्ष्वाकुवशप्रभवे माधातरि ॥ ४ ॥ **स०** इत भूलोकात् ॥ ६ ॥ **शि०** भय अभवदितिशेष ॥ ७ ॥ **स०** पापमभिप्राय स्वरपहरणाभिप्राय ॥ ९ ॥ **स०** निखिला खिलानभवतीतिनिखिलानिश्छिद्रा । समग्रावशेयदिभवेत्तदा इहराज्यकुरुष्व ॥ ११ ॥ **शि०** आज्ञाशब्दाकारलोपआर्षे । ज्ञाशब्दस्यैवाज्ञेत्यर्थोवा ॥ १३ ॥ **स०** व्रीडित अतएवावाङ्मुख ॥ १४ ॥ **स०** मर्ष सहन ॥ १६ ॥ **शि०** युद्धायलवणंकाङ्क्षमाण.स वायुवेग सराजालवणस्यसकाश समीपदूतसप्रेषयामास । सोवायु परदेशदूरगमनमित्यादिनासशब्दस्यवायुपरत्व ॥ १७ ॥ **स०** मधुन मधो ॥ १८ ॥ **स०** सानुबन्धस्य मावातु ॥ २० ॥ **शि०** शूलस्यबल अप्रमेयमित्रिद्धीनिशेष ॥ २२ ॥ **स०** शूलबलाकलनसजातभीतिर्नभवेरितिशत्रुघ्नप्रोत्साहयति—श्वइति । रामोदीरितप्रकारकमेवाहागृहीतायुधमिति ॥ २३ ॥

[ पा० ] १ ग. घ च. छ. ज. ञ. नचाज्ञा २ क—ज ञ. ट. लवणस्यग .

एतत्ते सर्वमाख्यातं लवणस्य दुरात्मनः ॥ शूलस्य च बलं घोरमप्रमेयं नरर्षभ ॥
विनाशश्चैव मान्धातुर्यत्नेनाभूच्च पार्थिव ॥ २५ ॥
त्वं श्वः प्रभाते लवणं महात्मन्वधिष्यसे नात्र तु संशयो मे ॥
शूलं विना निर्गतमामिषार्थे ध्रुवो जयस्ते भविता नरेन्द्र ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

## अष्टषष्टितमः सर्गः ॥ ६८ ॥

लवणासुरे आहारसपादनायनगराद्बहिर्गतेसति शत्रुघ्नेन धनुष्पाणिनासता नगरद्वार्यवस्थानम् ॥ १ ॥ आहारादानेन पुनरागतलवणप्रति युद्धायाह्वानम् ॥ २ ॥ लवणेनायुधानयनावधिविलंबयाचने शत्रुघ्नेन तदनङ्गीकार ॥ ३ ॥

कथां कथयतां तेषां जयं चाकाङ्क्षतां शुभम् ॥ व्यतीता रजनी शीघ्रं शत्रुघ्नस्य महात्मनः ॥ १ ॥
ततः प्रभाते विमले तस्मिन्काले स राक्षसः ॥ निर्गतस्तु पुराद्वीरो भक्ष्याहारप्रचोदितः ॥ २ ॥
एतस्मिन्नन्तरे वीरः शत्रुघ्नो यमुनां नदीम् ॥ तीर्त्वा मधुपुरद्वारि धनुष्पाणिरतिष्ठत ॥ ३ ॥
ततोर्धदिवसे प्राप्ते क्रूरकर्मा स राक्षसः ॥ आगच्छद्बहुसाहस्रं प्राणिनां भारमुद्वहन् ॥ ४ ॥
ततो ददर्श शत्रुघ्नं स्थितं द्वारि धृतायुधम् ॥ तमुवाच ततो रक्षः किमनेन करिष्यसि ॥ ५ ॥
ईदृशानां सहस्राणि सायुधानां नराधम ॥ भक्षितानि मया रोषात्कालमाकाङ्क्षसे नु किम् ॥ ६ ॥
आहारश्चाप्यसंपूर्णो ममायं पुरुषाधम ॥ स्वयं प्रविष्टोऽद्य मुखं कथमासाद्य दुर्मते ॥ ७ ॥
तस्यैवं भाषमाणस्य हसतश्च मुहुर्मुहुः ॥ शत्रुघ्नो वीर्यसंपन्नो रोषादश्रूण्यवासृजत् ॥ ८ ॥
तस्य रोषाभिभूतस्य शत्रुघ्नस्य महात्मनः ॥ तेजोमया मरीच्यस्तु सर्वगात्रैर्विनिष्पतन् ॥ ९ ॥
उवाच च सुसंक्रुद्धः शत्रुघ्नस्तं निशाचरम् ॥ योद्धुमिच्छामि दुर्बुद्धे द्वन्द्वयुद्धं त्वया सह ॥ १० ॥
पुत्रो दशरथस्याहं भ्राता रामस्य धीमतः ॥ शत्रुघ्नो नित्यशत्रुघ्नो वधाकाङ्क्षी तवागतः ॥ ११ ॥

---

प्रभात इत्यादि ॥ २३—२६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने सप्तषष्टितमःसर्गः ॥ ६७ ॥

---

भक्ष्याहारप्रचोदितः भक्ष्यस्याहारः आहरणं तेन प्रचोदितः ॥ २—४ ॥ अनेन आयुधेन ॥ ५—७ ॥ रोषादिति । दुःखानन्दाभ्यामिव रोषादप्यश्रु जायते ॥ ८ ॥ गात्रैः विनिष्पतन्निति । गात्रेभ्योविनिष्पत-

---

**स०** माधातुर्यत्नेन स्वप्रयत्नेनेन्द्रयत्नेनवा ॥ २५ ॥ **स०** तद्विनातदागमनंकथमित्यत कथयति—आमिषार्थइति ॥ २६ ॥ इतिसप्तषष्टितम सर्ग ॥ ६७ ॥

**स०** अतिष्ठत अतिष्ठत् ॥३॥ **स०** कालेन मृत्युना ॥ ६ ॥ **शि०** ममानीतोयमाहार असपूर्ण परिपूर्णतृप्तिकारकोन । अत स्वयमासाद्यप्राप्यममुखप्रविष्टस्त्वंकथनिवर्तसइतिशेष ॥ ७ ॥ **स०** तेजोमया तेजोमय्य । मरीच्योमरीचय करा । 'भानु. करोमरीचि स्त्रीपुंसयो ' इत्यमरः ॥ स्त्रीपुसाधिकारेत्रुटिमसिमरीचयइतिलिङ्गानुशासनं ॥ सर्वगात्रै सर्वाङ्गै । विनिष्पतन् विन्यप.. तनम् ॥ ९ ॥ **स०** द्वन्द्वयुद्धं योद्धुंकर्तु । अद्वन्द्वयुद्धंनिशाचरमित्यन्वय । त्वयासहयोद्धुमिच्छामीत्युवाच ॥ १० ॥ **स०** शत्रुघ्न योगेनापि ॥ ११ ॥

[ पा० ] १ झ. यत्नेना. २ क. क्रूरकर्मासराक्षस॰. घ. कृतकर्मासराक्षस . ३ ड. च, छ. झ. ञ. ट. वीरउत्तीर्ययमुना. ४ च, छ, झ ञ. ट त्कालेनानुगतोह्यसि. ५ क. च. छ. कथंयास्यसिदुर्मते.

तस्य मे युद्धकामस्य द्वन्द्वयुद्धं प्रदीयताम् ॥ शत्रुस्त्वं सर्वजीवानां[1] न मे जीवन्गमिष्यसि ॥ १२ ॥
तस्मिंस्तथा ब्रुवाणे तु राक्षसः प्रहसन्निव ॥ प्रत्युवाच नरश्रेष्ठं दिष्ट्या प्राप्तोसि दुर्मते ॥ १३ ॥
मम मातृष्वसुर्भ्राता रावणो राक्षसाधिपः ॥ हतो रामेण दुर्बुद्धे स्त्रीहेतोः पुरुषाधम ॥ १४ ॥
तच्च सर्वं मया क्षान्तं रावणस्य कुलक्षयम् ॥ अवज्ञां पुरतः कृत्वा मया यूयं विशेषतः ॥ १५ ॥
निहताश्च हि मे[2] सर्वे परिभूतास्तृणं यथा ॥ भूताश्चैव भविष्याश्च यूयं च पुरुषाधमाः ॥ १६ ॥
तस्य ते युद्धकामस्य युद्धं दास्यामि दुर्मते ॥ तिष्ठ त्वं च मुहूर्तं तु यावदायुधमानये ॥
ईप्सितं यादृशं तुभ्यं सज्जये यावदायुधम् ॥ १७ ॥
तमुवाचाथ शत्रुघ्नः क्व मे जीवन्गमिष्यसि ॥ शत्रुर्यदृच्छया[3] दृष्टो न मोक्तव्यः कृतात्मना ॥ १८ ॥
यो हि विक्लवया बुद्ध्या प्रसरं शत्रवे ददौ[4] ॥ स हतो मन्दबुद्धित्वाद्यथा कापुरुषस्तथा ॥ १९ ॥
तस्मात्सुदृष्टं कुरु जीवलोकं शरैः शितैस्त्वां विविधैर्नयामि ॥
यमस्य गेहाभिमुखं हि पापं रिपुं त्रिलोकस्य च राघवस्य ॥ २० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

## एकोनसप्ततितमः सर्गः ॥ ६९ ॥

शत्रुघ्नेन युद्धे लवणासुरवध. ॥ १ ॥

तच्छ्रुत्वा भाषितं तस्य शत्रुघ्नस्य महात्मनः ॥ क्रोधमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥ १ ॥
पाणौ पाणिं विनिष्पिष्य दन्तान्कटकटाप्य च ॥ लवणो रघुशार्दूलमाह्वयामास चासकृत् ॥ २ ॥
तमाह्वयन्तं[5] सौमित्रिर्लवणं घोरदर्शनम् ॥ शत्रुघ्नो देवशत्रुघ्न इदं वचनमब्रवीत् ॥ ३ ॥
न शत्रुघ्नस्तथा जातो यथाऽन्ये निर्जितास्त्वया ॥ तदद्य बाणाभिहतो व्रज त्वं यमसादनम् ॥ ४ ॥

---

न्नित्यर्थः ॥ ९—११ ॥ मे मत्तो जीवन्न गमिष्यसि ॥ १२—१३ ॥ मम मातृष्वसुरिति ॥ अयमर्थः पूर्वमुक्तः ॥ १४ ॥ मयावज्ञां पुरत' कृत्वा यूय विशेषत. क्षान्ता इति सबन्धः । मया पूर्वं विशेषत इति पाठान्तरं ॥ १५ ॥ भूताश्च भविष्याश्च वर्तमानाश्च पुरुषा. सर्वेपि मे मया निहताः । केचित्परे तृण यथा भवति तथा परिभूताश्च । अलक्षीकृताश्च ॥ १६ ॥ यादृश तुभ्यमीप्सितं तादृशं युद्धं दास्यामि । सज्जये यावदायुधमिति । आयुध गृहीत्वा सज्जयिष्ये तावत्तिष्ठेत्यर्थः ॥ १७ ॥ त आयुध जिघृक्षुमित्यर्थः ॥ १८ ॥ प्रसरं अवकाश । शूलग्रहणार्थमित्यर्थः ॥ १९—२० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने अष्टषष्टितमः सर्ग. ॥ ६८ ॥

---

अथ लवणवधः तच्छ्रुत्वेत्यादि ॥ १—

---

ति० ममातृष्वसुर्भ्राता कुम्भीनसीसबन्धत शूर्पणखाऽस्यमातृष्वसा । तद्भ्रातारावण ॥ १४ ॥ स० कुलक्षयं कुलस्यक्षयो येनतत् । सर्वकर्मक्षान्तं । सापिक्षमा नाक्षमत्वेनेत्याह—अवज्ञापुरतइति । कियानयंरामइतिपुरतोऽवज्ञाकृत्वाअलक्षीकृत्य । विशेषतइत्यनेनयुष्मन्मूलपुरुषमाधातृघातकस्ययुष्मद्वध सुकरएव । ततोऽलक्षीकरणीयमितिसूचयति । क्षान्ताइत्यनुकर्ष ॥ १५ ॥ स० आनये आनयिष्यामि ॥ १७ ॥ इत्यष्टषष्टितम सर्ग ॥ ६८ ॥

स० आहारयत् स्वीकृतवान् ॥ १ ॥ ति० कटकटाप्य कटकटाशब्दवत कृत्वा ॥ २ ॥ स० भूताभविष्याश्चमयानिहता इतितेनोक्तस्योत्तरंवक्ति—नशत्रुघ्नइति । यदात्वयातेनिहता तदा न जात शत्रुघ्न । अनेन तद्विलक्षणलक्षणवत्तास्वस्यसूचयति

[ पा० ] १ झ. ठ. सर्वभूताना २ च छ झ. ञ ट तेसर्वे ३ क. ग—ट. स्वयमेवागत.शत्रुर्नमोक्तव्य . ४ ङ. च. छ. झ. ञ. ट. दिशेत. ५ क. घ—ट. तंब्रुवाणंतथावाक्यंलवण.

ऋषयोप्यद्य पापात्मन्मया त्वां निहतं रणे ॥ पश्यन्तु विप्रा विद्वांसस्त्रिदशा इव रावणम् ॥ ५ ॥
त्वयि मद्बाणनिर्दग्धे पतितेऽद्य निशाचर ॥ पुरे जनपदे चापि क्षेममेव भविष्यति ॥ ६ ॥
अद्य मद्बाहुनिष्क्रान्तः शरो वज्रनिभाननः ॥ प्रवेक्ष्यते ते हृदयं पद्ममंशुरिवार्कजः ॥ ७ ॥
एवमुक्तो महावृक्षं लवणः क्रोधमूर्च्छितः ॥ शत्रुघ्नोरसि चिक्षेप स च तं शतधाऽच्छिनत् ॥ ८ ॥
तद्दृष्ट्वा विफलं कर्म राक्षसः पुनरेव तु ॥ पादपान्सुबहून्गृह्य शत्रुघ्नायासृजद्बली ॥ ९ ॥
शत्रुघ्नश्चापि तेजस्वी वृक्षानापततो बहून् ॥ त्रिभिश्चतुर्भिरेकैकं चिच्छेद नतपर्वभिः ॥ १० ॥
ततो बाणमयं वर्षं व्यसृजद्राक्षसोरसि ॥ शत्रुघ्नो वीर्यसंपन्नो विव्यथे न स राक्षसः ॥ ११ ॥
ततः प्रहस्य लवणो वृक्षमुद्यम्य वीर्यवान् ॥ शिरस्यभ्यहनच्छूरं स्रस्ताङ्गः स मुमोह वै ॥ १२ ॥
तस्मिन्निपतिते वीरे हाहाकारो महानभूत् ॥ ऋषीणां देवसङ्घानां गन्धर्वाप्सरसां तथा ॥ १३ ॥
तमवज्ञाय तु हतं शत्रुघ्नं भुवि पातितम् ॥ रक्षो लब्धान्तरमपि न विवेश स्वमालयम् ॥ १४ ॥
नापि शूलं प्रजग्राह तं दृष्ट्वा भुवि पातितम् ॥ ततो हत इति ज्ञात्वा तान्भक्षान्समुदावहत् ॥१५॥
मुहूर्ताल्लब्धसंज्ञस्तु पुनस्तस्थौ धृतायुधः ॥ शत्रुघ्नो वै पुरद्वारि ऋषिभिः संप्रपूजितः ॥ १६ ॥
ततो दिव्यममोघं तं जग्राह शरमुत्तमम् ॥ ज्वलन्तं तेजसा घोरं पूरयन्तं दिशो दश ॥ १७ ॥
वज्राननं वज्रवेगं मेरुमन्दरसंनिभम् ॥ नतं पर्वसु सर्वेषु संयुगेष्वपराजितम् ॥ १८ ॥
असृक्चन्दनदिग्धाङ्गं चारुपत्रं पतत्रिणम् ॥ दानवेन्द्राचलेन्द्राणामसुराणां च दारणम् ॥ १९ ॥
तं दीप्तमिव कालाग्निं युगान्ते समुपस्थिते ॥ दृष्ट्वा सर्वाणि भूतानि परित्रासमुपागमन् ॥ २० ॥
सदेवासुरगन्धर्वं मुनिभिः साप्सरोगणम् ॥ जगद्धि सर्वमस्वस्थं पितामहमुपस्थितम् ॥ २१ ॥
उवाच देवदेवेशं वरदं प्रपितामहम् ॥ कच्चिल्लोकक्षयो देव संप्राप्तो वा युगक्षयः ॥ २२ ॥
नेदृशं दृष्टपूर्वं च न श्रुतं प्रपितामह ॥ देवानां भयसंमोहो लोकानां संक्षयं प्रति ॥ २३ ॥
तेषां तद्वचनं श्रुत्वा ब्रह्मा लोकपितामहः ॥ भयकारणमाचष्ट लोकानामभयङ्करः ॥
उवाच मधुरां वाणीं शृणुध्वं सर्वदेवताः ॥ २४ ॥
वधाय लवणस्याजौ शरः शत्रुघ्नधारितः ॥ तेजसा तस्य संमूढाः सर्वे स्म सुरसत्तमाः ॥ २५ ॥
एष पूर्वस्य देवस्य लोककर्तुः सनातनः ॥ शरस्तेजोमयो वत्स येन वै भयमागतम् ॥ २६ ॥

---

९ ॥ एकैकमिति । वृक्षमिति शेषः ॥ १०—१३ ॥ लब्धान्तरमपि शूलग्रहण प्रति लब्धावकाशमपीत्यर्थः ॥ १४—१८ ॥ असृक्चन्दनदिग्धाङ्गं असृग्रूपैश्चन्दनैः लिप्तदेहं । पतत्रिण बाण । दानवेन्द्ररूपाः

---

॥ ४ ॥ स० क्षेमं अस्त्वीत्युक्ते ॥ ६ ॥ ति० वज्रनिभानन वज्रायुधसमाग्रभाग । अंशु किरण ॥ ७ ॥ स० सच शत्रुघ्नोपि ॥ ८ ॥ स० विफलं कार्यानाधायक ॥ ९ ॥ स० राक्षसोनविव्यथे व्यथानाप ॥ ११ ॥ स० स्रस्ताङ्ग गलिताङ्गसन्धि ॥ १२ ॥ स० वीरे शत्रुघ्ने ॥ १३ ॥ ति० पूरयन्तंदिशोदश स्वतेजसेतिशेष ॥ १७ ॥ स० मेरुमन्दरसनिभ गौरवेण ॥ १८ ॥ स० परित्रास भीतिं ॥ २० ॥ स० मुनिभि असहेत्युक्तावपि 'वृद्धोयूने'तिवल्लभ्यतेसहेति । जगत् । पितामहं विधातार । उपस्थितं ॥ २१ ॥ स० प्रपितामहं ऊचु. देवादय । लोकानासंक्षय नाश उद्दिश्य देवानामपिभयसमोहोभीतिहेतुक समोहोजात । शि० प्रपितामहं ब्रह्माणं ऊचु आगतामुनिप्रभृतयइतिशेष । तदाकारमाह । लोकानासक्षयंप्रति लोकाविनङ्क्ष्यन्तीतिसभावनयादेवानाभयसमोहोस्तीतिशेष ॥ २२ ॥ स० अभयङ्कर. खशान्त ॥ २४ ॥ ति० शत्रुघ्नधारित· तेनधृतइत्यर्थ. ॥ २५ ॥ स० तस्यशरस्यतेजसासर्वेसुरसत्तमामूढा । इयन्महत्त्वंत्वंवदकुत शरस्येत्यतआह—एषइति । अपूर्वस्य नविद्यतेपूर्वोयस्यसोपूर्व अनादि । तस्यदेवस्यपूर्वस्येतियावत् । सनातन । एषोपूर्वस्येति पूर्वस्यलोककर्तु देवस्य

[ पा० ] १ क—घ. ट. वृक्षमुत्पाट्य. २ क—ट. ऊचुश्चदेवदेवेशं. ३ क—घ. ज—ट. देवानामभयंकरः. ४ झ. ट. एषोपूर्वस्येति.

एष वै कैटभस्यार्थे मधुनश्च महाशरः ॥ सृष्टो महात्मना तेन वधार्थे दैत्ययोस्तयोः ॥ २७ ॥
एक एव प्रजानाति विष्णुस्तेजोमयं शरम् ॥ एषा एव तनुः पूर्वा विष्णोस्तस्य महात्मनः ॥ २८ ॥
इतो गच्छत पश्यध्वं वध्यमानं महात्मना ॥ रामानुजेन वीरेण लवणं राक्षसोत्तमम् ॥ २९ ॥
तस्य ते देवदेवस्य निशम्य वचनं सुराः ॥ आजग्मुर्यत्र युध्येते शत्रुघ्नलवणावुभौ ॥ ३० ॥
तं शरं दिव्यसंकाशं शत्रुघ्नकरधारितम् ॥ ददृशुः सर्वभूतानि युगान्ताग्निमिवोत्थितम् ॥ ३१ ॥
आकाशमावृतं दृष्ट्वा देवैर्हि रघुनन्दनः ॥ सिंहनादं भृशं कृत्वा ददर्श लवणं पुनः ॥ ३२ ॥
आहूतश्च पुनस्तेन शत्रुघ्नेन महात्मना ॥ लवणः क्रोधसंयुक्तो युद्धाय समुपस्थितः ॥ ३३ ॥
आ कर्णात्स विकृष्याथ तद्धनुर्धन्विनां वरः ॥ तं[1] मुमोच महाबाणं लवणस्य महोरसि ॥ ३४ ॥
उरस्तस्य विदार्याशु प्रविवेश रसातलम् ॥ ३५ ॥
गत्वा रसातलं दिव्यः शरो विबुधपूजितः ॥ पुनरेवागमत्तूर्णमिक्ष्वाकुकुलनन्दनम् ॥ ३६ ॥
शत्रुघ्नशरनिर्भिन्नो लवणः स निशाचरः ॥ पपात सहसा भूमौ वज्राहत इवाचलः ॥ ३७ ॥
तच्च शूलं महत्तेन हते लवणराक्षसे ॥ पश्यतां सर्वदेवानां रुद्रस्य वशमन्वगात् ॥ ३८ ॥

एकेषुपातेन भृशं[2] निपात्य लोकत्रय[3]स्यापि रघुप्रवीरः ॥
विनिर्बभावुत्तमचापबाणस्तमः प्रणुद्येव सहस्ररश्मिः ॥ ३९ ॥
ततो हि देवा ऋषिपन्नगाश्च प्रपूजिरे ह्यप्सरसश्च सर्वाः ॥
दिष्ट्या जयो दाशरथेर्[4]वाप्तस्त्यक्त्वा भयं सर्प इव प्रशान्तः ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

अचलेन्द्राः तेषां दारणं ॥ १९—२६ ॥ तेन भगवतेत्यर्थः ॥ २७ ॥ महात्मनस्तस्य विष्णोरेषा शरमयी तनुरेव पूर्वा प्राचीनमूर्तिः । एषा एवेत्यसधिरार्षः ॥ २८ ॥ वध्यमानं लवणमिति संबन्धः ॥ २९—४० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकोनसप्ततितम. सर्गः ॥ ६९ ॥

---

एषशर । आर्ष सन्धिरितिनागोजिभट्टव्याख्यानत्वास्माकीनगमनिकायामनिर्वाहाश्रयणीयार्षत्वविनाक्लिष्टायासभवन्त्यामुपेक्षणीय ॥ २६ ॥ शि० कैटभस्यमधुनश्चार्थे निवृत्त्यर्थं । एषशर महात्मनाविष्णुनासृष्ट । दैत्ययो मधुकैटभयो वधार्थे येनशर सृष्ट सएषएवविष्णु. तेजोमयशरंप्रजानाति । मशकार्थेधूमइत्यादाविवार्थशब्दोनिवृत्तिपर ॥ २७ ॥ ति० तमेवतेजोमयशरंएको विष्णुरेवप्रजानाति तदपरमूर्तित्वात् ॥ स० यदिरामोऽजानानस्तर्ह्यहितंशत्रुहत्यैशत्रुघ्नायेतरासुसावारणंबाणंकथंदत्तवानित्यतआह—एषाएवेति । असन्धिरार्ष । तस्यमहात्मनोविष्णोपूर्वा या तनु सैषा रामतनु । अतोज्ञानंदानंरामीयसभवतीतिभाव । एतादृशासदृशशरधारणसामर्थ्यंदुर्बलस्यशत्रुघ्नस्यकथमायातमित्यतोवाह—एषेति । पूर्वाविष्णोस्तनुरेषाएतच्छत्रुघ्नान्तर्गता । आज्ञयातदावेशेनचैतद्धारणमितिमन्तव्यं । 'सकर्षणाद्यैस्त्रिभिरेवरूपैराविष्टआसीत्रिषुतेषुविष्णु' इत्याचार्योक्ते । पूर्वातनुर्यथातथा एषाबाणमयीतनु । तत्सनिधानात्तनुत्ववचनमितिवा ॥ २८ ॥ इत एतत्स्थानात् । मत्कृततन्मूलोपदेशन स्वस्थमनस्कत्वादितिवा । पश्यध्वं पश्यत ॥ २९ ॥ स० धारितमित्यनेन तद्धारणस्वातन्त्र्यंरामस्यैवेतिसूचयति ॥ ३१ ॥ स० देवै कौतुकावलोकनमिलितैर्विश्वकर्त्राश्वस्तै ॥ ३२ ॥ शि० सोवायुवेग । सशत्रुघ्न ॥ ३४ ॥ स० विबुधपूजित देवपूजित । हेतुरयं पुनरागमने ॥ ३६ ॥ स० लवणराक्षसे तन्नामकराक्षसे । तदवविकृत्वस्येवशिवोक्तेरितिभाव ॥ ३८ ॥ स० एकेषुपातेन भयं भयदं । भयंच ॥ ३९ ॥ स० दाशरथे तेन । सर्पइवविद्यमान लवण । लोकोपद्रवकरत्वात् । प्रशान्त मृत ॥ ४० ॥ इत्येकोनसप्ततितम सर्ग ॥ ६९ ॥

[ पा० ] १ झ. ठ. समुमोच. २ झ. ठ. भयं. ३ घ—ट. त्रयस्यास. ४ घ. रवाप्तोलोकाश्चसर्वैप्रवदन्तितुष्टा'. क. रवाप्तस्त्यक्त्वाभयंसर्वमिदंप्रशान्तं.

## सप्ततितमः सर्गः ॥ ७० ॥

शत्रुघ्नेन लवणासुरेहते देवै. शत्रुघ्नप्रशंसनपूर्वकं तस्मैवरदानेन स्वावासगमनम् ॥ १ ॥ मधुपुर्यांप्रजापालनंकृतवताश-त्रुघ्नेन द्वादशेवर्षे श्रीरामदिदृक्षया अयोध्यागमननिर्धारणम् ॥ २ ॥

हते तु लवणे देवाः सेन्द्राः साग्निपुरोगमाः ॥ ऊचुः सुमधुरां वाणीं शत्रुघ्नं शत्रुतापनम् ॥ १ ॥
दिष्ट्या ते विजयो वत्स दिष्ट्या लवणराक्षसः ॥ हतः पुरुषशार्दूल वरं वरय सुव्रत ॥ २ ॥
वरदास्तु महाबाहो सर्व एव समागताः ॥ विजयाकाङ्क्षिणस्तुभ्यममोघं दर्शनं हि नः ॥ ३ ॥
देवानां भाषितं श्रुत्वा शूरो मूर्ध्नि कृताञ्जलिः ॥ प्रत्युवाच महाबाहुः शत्रुघ्नः प्रयतात्मवान् ॥४॥
इयं मधुपुरी रम्या मधुरा देवनिर्मिता ॥ निवेशं प्राप्नुयाच्छीघ्रमेष मेऽस्तु वरः परः ॥ ५ ॥
तं देवाः प्रीतमनसो बाढमित्येव राघवम् ॥ भविष्यति पुरी रम्या शूरसेना न संशयः ॥ ६ ॥
ते तथोक्त्वा महात्मानो दिवमारुरुहुस्तदा ॥ शत्रुघ्नोपि महातेजास्तां सेनां समुपानयत् ॥ ७ ॥
सा सेना शीघ्रमागच्छच्छ्रुत्वा शत्रुघ्नशासनम् ॥ निवेशनं च शत्रुघ्नः श्रावणेन समारभत् ॥ ८ ॥
सा पुरा दिव्यसंकाशा वर्षे द्वादशमे शुभे ॥ निविष्टा शूरसेनानां विषयश्चाकुतोभयः ॥ ९ ॥
क्षेत्राणि सस्ययुक्तानि काले वर्षति वासवः ॥ अरोगवीरपुरुषा शत्रुघ्नभुजपालिता ॥ १० ॥
अर्धचन्द्रप्रतीकाशा यमुनातीरशोभिता ॥ शोभिता गृहमुख्यैश्च चत्वरापणवीथिकैः ॥
चातुर्वर्ण्यसमायुक्ता नानावाणिज्यशोभिता ॥ ११ ॥
यच्च तेन पुरा शुभ्रं लवणेन कृतं महत् ॥ तच्छोभयति शत्रुघ्नो नानावर्णोपशोभितम् ॥ १२ ॥
आरामैश्च विहारैश्च शोभमानां समन्ततः ॥ शोभितां शोभनीयैश्च तथाऽन्यैर्देवमानुषैः ॥ १३ ॥
तां पुरीं दिव्यसङ्काशां नानापण्योपशोभिताम् ॥ नानादेशागतैश्चापि वणिग्भिरुपशोभिताम् ॥१४॥
तां समृद्धां समृद्धार्थः शत्रुघ्नो भरतानुजः ॥ निरीक्ष्य परमप्रीतः परं हर्षमुपागमत् ॥ १५ ॥
तस्य बुद्धिः समुत्पन्ना निवेश्य मधुरां पुरीम् ॥ रामपादौ निरीक्षेऽहं वर्षे द्वादश आगते ॥ १६ ॥
ततः स साममरपुरोपमां पुरीं निवेश्य वै विविधजनाभिसंवृताम् ॥
नराधिपो रघुपतिपाददर्शने दधे मतिं रघुकुलवंशवर्धनः ॥ १७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

---

मधुरा मनोहरा । निवेश राजधानीत्व ॥५॥ शूरा सेना यस्यां सा शूरसेना ॥ ६—७ ॥ श्रावणेन श्रावणमासालम्बनेन । निवेशनं स्थापनं । समारभत् समारभते स्म ॥८॥ द्वादशमे द्वादश इत्यर्थः । पुरा पूर्वं । प्रथमे द्वादशे वर्षे सा पुरी निविष्टा । शूरसेनानां राज्ञां विषयो देशश्चाकुतोभयो जातः ॥ ९—१० ॥ अर्धचन्द्रप्रतीकाशा अर्धचन्द्राकारसंस्थाना ॥ ११ ॥ यत्पुरा तेन लवणेन कृतं तदेव शुभ्रं सुधाधवलं कृत्वा शोभयति स्म ॥१२—१५॥ रामपादाविति । द्वादशवर्षातिक्रमे भ्रातृदर्शनस्य दुष्टत्वादिति भावः ॥१६—

---

**स०** सेन्द्रा. इन्द्रसहिता । साग्निपुरोगमा अग्निश्चासौपुरोगमश्चतेनसहिता । पुनरग्निपुरस्करणंबाणस्यलवणमारकस्यतेजोमयत्वाद्युक्तमितिमन्तव्यं । तेजोमयशरमितिपूर्वमुक्ते. ॥ १ ॥ **स०** वरय अस्मत्त ॥ २ ॥ **ति०** तुभ्यं तव ॥ ३ ॥ **ति०** मधुरा मनोहरा । निवेश सपौरजानपदमहाबलसेनानिवेशभूतमहाराजधानीत्वप्राप्नुयात् ॥ ५ ॥ **स०** ता यमुनातीरेस्थापितां ॥ ७ ॥ **स०** अर्धचन्द्रप्रतीकाशा किञ्चित्कुञ्चितसस्थानवती । चत्वरापणवीथिकैः गृहमुख्यैः । चत्वरापणैः सहिताश्चतावीथिकाश्च । ता.सन्त्येष्वित्यर्शआद्यच् । चातुर्वर्ण्येतिस्वार्थेष्यङ् । वणिजएववाणिजा । तत्समूहोवा ॥११॥ **स०** पण्यैः व्यवहारार्हैर्वस्तुभि । 'अवद्यपण्य—' इतिस्मरणाद्यत् ॥ १४ ॥ **स०** निवेश्यस्थितस्यतस्य ॥ १६ ॥ **स०** रघुकुला+यारघुतद्भार्या+यांनातोयोवंशः

[ पा० ] १ ख. ग. सहेन्द्रा साप्सरोगणा . २ ख. चत्वरैश्चसमन्तत..

## एकसप्ततितमः सर्गः ॥ ७१ ॥

श्रीरामदिदृक्षयाऽयोध्यांप्रतिप्रस्थितवताशत्रुघ्नेन मार्गवशाद्वाल्मीक्याश्रममेत्य तदभिवादनम् ॥ १ ॥ वाल्मीकिना तम्प्रति लवणमारणप्रशंसनपूर्वकं तन्मूर्धाघ्राणनेन सपरिवारस्यतस्यातिथ्यकरणम् ॥ २ ॥ भुक्त्वा सुखोपविष्टेनसपरिवारेण शत्रुघ्नेनाश्रमान्तरे कुशलवकृताद्भुततरश्रीरामायणगानश्रवणम् ॥ ३ ॥ तच्छ्रवणविस्मितपरिजनैस्तत्तत्त्वजिज्ञासया वाल्मीकिंप्रति तत्प्रश्नप्रार्थितेनशत्रुघ्नेन तान्प्रति तस्यानौचित्यकथनेन वाल्मीक्यनुज्ञया स्वावासगमनम् ॥ ४ ॥

ततो द्वादशमे वर्षे शत्रुघ्नो रामपालिताम् ॥ अयोध्यां चकमे गन्तुमल्पभृत्यबलानुगः ॥ १ ॥
ततो मन्त्रिपुरोगांश्च बलमुख्यान्निवर्त्य च ॥ जगाम हयमुख्यैश्च रथानां च शतेन सः ॥ २ ॥
स गत्वा गणितान्वासान्सप्ताष्टौ रघुनन्दनः ॥ वाल्मीक्याश्रममागत्य वासं चक्रे महायशाः ॥ ३ ॥
सोभिवाद्य ततः पादौ वाल्मीकेः पुरुषर्षभः ॥ पाद्यमर्घ्यं तथाऽऽतिथ्यं जग्राह मुनिहस्ततः ॥ ४ ॥
बहुरूपाः सुमधुराः कथास्तत्र सहस्रशः ॥ कथयामास स मुनिः शत्रुघ्नाय महात्मने ॥ ५ ॥
उवाच च मुनिर्वाक्यं लवणस्य वधाश्रितम् ॥ सुदुष्करं कृतं कर्म लवणं निघ्नता त्वया ॥ ६ ॥
बहवः पार्थिवाः सौम्य हताः सबलवाहनाः ॥ लवणेन महाबाहो युध्यमाना महाबलाः ॥ ७ ॥
स त्वया निहतः पापो लीलया पुरुषर्षभ ॥ जगतश्च भयं तत्र प्रशान्तं तव तेजसा ॥ ८ ॥
रावणस्य वधो घोरो यत्नेन महता कृतः ॥ इदं तु सुमहत्कर्म त्वया कृतमयत्नतः ॥ ९ ॥
प्रीतिश्चास्मिन्परा जाता देवानां लवणे हते ॥ भूतानां चैव सर्वेषां जगतश्च प्रियं कृतम् ॥ १० ॥
तच्च युद्धं मया दृष्टं यथावत्पुरुषर्षभ ॥ सभायां वासवस्याथ उपविष्टेन राघव ॥ ११ ॥
ममापि परमा प्रीतिर्हृदि शत्रुघ्न वर्तते ॥ उपाघ्रास्यामि ते मूर्ध्नि स्नेहस्यैषा परा गतिः ॥ १२ ॥
इत्युक्त्वा मूर्ध्नि शत्रुघ्नमुपाघ्राय महामुनिः ॥ आतिथ्यमकरोत्तस्य ये च तस्य पदानुगाः ॥ १३ ॥
स भुक्तवान्नरश्रेष्ठो गीतमाधुर्यमुत्तमम् ॥ शुश्राव रामचरितं तस्मिन्काले यथाक्रमम् ॥ १४ ॥

---

१७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने सप्ततितमः सर्गः ॥ ७० ॥

लवणस्य वधाश्रित वृत्तान्तमितिशेषः ॥६—१०॥ सभायामिति । युद्धं द्रष्टुमागतायामिति शेषः ॥११॥ परा गतिः परमप्रयोजनं ॥ १२—१३ ॥ गीतमाधु-

---

सतति तंवर्धयतीतिसतथा ॥ रघो. कुलगोत्रंतस्ययोवंशस्तद्गोत्रापत्यं । तद्वर्धन रघुदेहजोवशोरघुवंश । 'कुलंगृहेगृहिण्याच' इतिससारावर्त । 'सजातीयगणेगोत्रेदेहे' इतिविश्व ॥ १७ ॥ इतिसप्ततितम सर्ग ॥ ७० ॥

**ति०** अल्पभृत्या बलानिचअनुगा अनुयायिनोयस्यस ॥ **स०** अल्पभृत्यबलानुग' मध्येमार्गसस्यादिनाशभयाद्विनाज्ञासर्वसेनानयनस्यानौचित्याद्वाल्पेत्युक्ति ॥ १ ॥ **ति०** बलमुख्यान् बलप्रधानान् ॥ **स०** मन्त्रिपुरोगाश्च अमात्यादीन् । बलमुख्यान् सेनानायकान् । निवर्त्य ग्रामंप्रतिपरावर्तयित्वा । हयमुख्येनरथानाशतेनेत्यन्वय । **शि०** हयामुख्यायस्मिंस्तेनरथानाशतेन ॥२॥ **ति०** गणितान्वासान् पूर्वमेवैतावद्भिर्वासैर्वाल्मीक्याश्रमंयास्यामीतिसख्यातान् । वाल्मीकेरयंवाल्मीकः । सचासावाश्रमस्तं ॥ **शि०** स. शत्रुघ्न । गणितान् ज्ञातान् । सप्तवासान् निवासस्थानानिगत्वा वाल्मीकाश्रममागत्य आष्टौ अकारेणएकेनयुक्ता अष्टौ नवदिनानीत्यर्थः । वासचक्रे । अकारच्छेदस्तु वक्ष्यमाणरामायणश्रवणविध्यनुरोधेन ॥ ३ ॥ **ति०** लवणस्यवधाश्रितं कथालापमितिशेष. । नकृतंतवपूर्वकैरितिपाठे तवपूर्वकै मान्धात्रादिभिर्यन्नकृतंतत्त्वयाकृतमित्यर्थ । **स०** सुदुष्कर रामकृपाविना ॥ ६ ॥ **ति०** तत्र तन्निमित्तं ॥ ८ ॥ **ति०** सुमहत्कर्म रावणवधादपिमहत्दुष्कर । इदंकर्मलवणवधकर्म त्वयाऽयत्नतोलीलयैवकृतं । **शि०** महता रामेण अयत्नेन ईषद्यत्नत । रावणस्यवध कृत' । त्वयापीदंलवणहननंसुमहत्कर्म अयत्नत कृत ॥ ९ ॥ **ति०** वासवसभायामुपविष्टेनापिमया तद्युद्धंयथावद्दृष्टं । दिव्यचक्षुषेतिशेष । दृष्टमित्यस्य श्रुतमित्यर्थोवा ॥ **शि०** वासवसभायामुपविष्टेनमया तद्युद्धयथावद्दृष्ट । एतेन इन्द्रोपियुद्धदर्शनार्थमागतइतिसूचितं ॥ ११ ॥ **ति०** मूर्ध्न्याघ्राणं परागति परकार्यस्नेहस्य ॥ १२ ॥ **स०** तस्यतेषाच ॥ १३ ॥ **ति०** गीतस्यमाधुर्ययत्रतादृशरामचरितंतस्मिन्कालेपूर्वकालेयथारामेणकृतंतादृश-

[ **पा०** ] १ घ. गतेद्वादशमे. २ क —घ. ज. युध्यमानादुरात्मना.

तन्त्रीलयसमायुक्तं त्रिस्थानकरणान्वितम् ॥ संस्कृतं लक्षणोपेतं समतालसमन्वितम् ॥
शुश्राव रामचरितं तस्मिन्काले पुरा कृतम् ॥ १५ ॥
तान्यक्षराणि सत्यानि यथावृत्तानि पूर्वशः ॥ श्रुत्वा पुरुषशार्दूलो विसंज्ञो बाष्पलोचनः ॥ १६ ॥
स मुहूर्तमिवासंज्ञो विनिश्वस्य मुहुर्मुहुः ॥ तस्मिन्गीते यथावृत्तं वर्तमानमिवाशृणोत् ॥ १७ ॥
पदानुगाश्च ये राज्ञस्तां श्रुत्वा गीतिसंपदम् ॥ अवाङ्मुखाश्च दीनाश्च आश्चर्यमिति चाब्रुवन् ॥ १८ ॥
परस्परं च ये तत्र सैनिकाः संबभाषिरे ॥ किमिदं क्व च वर्तामः किमेतत्स्वप्नदर्शनम् ॥ १९ ॥
अर्थो यो नः पुरा दृष्टस्तमाश्रमपदे पुनः ॥ शृणुमः किमिदं स्वप्नो गीतबन्धं श्रितो भवेत् ॥ २० ॥
विस्मयं ते परं गत्वा शत्रुघ्नमिदमब्रुवन् ॥ साधु पृच्छ नरश्रेष्ठ वाल्मीकिं मुनिपुङ्गवम् ॥ २१ ॥
शत्रुघ्नस्त्वब्रवीत्सर्वान्कौतूहलसमन्वितान् ॥ सैनिका न क्षमोऽस्माकं परिप्रष्टुमिहेदृशः ॥ २२ ॥
आश्चर्याणि बहूनीह भवन्त्यस्याश्रमे मुनेः ॥ न तु कौतूहलाद्युक्तमन्वेष्टुं तं महामुनिम् ॥ २३ ॥
एवं तद्वाक्यमुक्त्वा च सैनिकान्रघुनन्दनः ॥ अभिवाद्य महर्षिं तं स्वं निवेशं ययौ तदा ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

---

## द्विसप्ततितमः सर्गः ॥ ७२ ॥

वाल्मीक्यभ्यनुज्ञयाऽयोध्यांगतेनशत्रुघ्नेन श्रीरामप्रति साभिवादनं लवणमारणादिविषयकतदाज्ञापरिपालननिवेदनम् ॥ १ ॥ श्रीरामेण स्ववियोगासहिष्णुतया पुनर्मधुरागमनमनभिरोचयमानस्यशत्रुघ्नस्य ससान्त्वनं पुनर्मधुरानगरप्रेषणम् ॥ २ ॥

तं शयानं नरव्याघ्रं निद्रा नाभ्यागमत्तदा ॥ चिन्तयन्तमनेकार्थं रामगीतमनुत्तमम् ॥ १ ॥

---

र्यमिति । आश्रमान्तरे गायतो. कुशलवयोरिति शेषः ॥ १४ ॥ तन्त्रीलयसमायुक्तं तन्त्री वीणा । लयस्तालमान । त्रिस्थानकरणान्वितं हृदयकण्ठमुखलक्षणवर्णोत्पत्तिस्थानेन करणेन अन्वित सयुक्तं । संस्कृतं संस्कृतशब्दरूप । लक्षणं व्याकरणलक्षण । समतालेन गानोचिततालशब्देन च समन्वित । रामचरितं रामचरितविषयं ॥ १५ ॥ पूर्वशः पूर्वस्मिन्काले । यथावृत्तानि यथाप्रवृत्तान्यनुभवसिद्धानि । अक्षराणि गीताक्षराणि ॥ १६ ॥ तस्मिन्गीते वर्तमानमिव स्थित ॥ १७ ॥ अवाङ्मुखाश्च दीनाश्चेति । एव रामचरित्रगायकोस्माभिर्न दृष्ट इत्यवाङ्मुखत्वादि ॥ १८–१९ ॥ पुरा दृष्टः अपरोक्षदृष्टः । तमर्थमाश्रमपदे आश्रमस्थाने शृणुमः । किंन्विदं आश्रमासंभावितमित्यर्थः ॥ २०–२२ ॥ अन्वेष्टुं अवगन्तु प्रष्टु चेत्यर्थः ॥ २३—२४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकसप्ततितमः सर्गः ॥ ७१ ॥

राघवं रघुगोत्रापत्य । रघुनन्दनं रघुकुलनन्दनं ।

---

मेवकाव्यनिबद्धंशुश्राव ॥ १४ ॥ **स०** समतालसमन्वित समतालेनकास्यतालशब्देनसमन्वितं ॥ १५ ॥ **स०** तान्यक्षराणि सत्यानि सत्यभूतार्थकाक्षरघटितवाक्यानि । यथावृत्तानि रामचरितानुसारीणि । पूर्वश आनुपूर्व्येण ॥ १६ ॥ **ति०** तस्मिन्गीते यथावृत्तमतीतमपि वर्तमानमिवाशृणोत् । रसावेशादतीताअप्यर्था प्रत्यक्षवद्भान्तीतिभाव ॥ १७ ॥ **स०** वर्ताम वर्तामहे ॥ अङ्गस्मरणाभावात् ॥ १९ ॥ **ति०** साधुपृच्छेति । किंकर्तृकंगानमितीतिशेष ॥ २१ ॥ **स०** ईदृशोर्थ इहएतद्दशायापरिप्रष्टुंनक्षम नयोग्य. । एकमाश्चर्यंचेत्किमितिपृच्छेच्छामहानुभावप्रभावाद्विविधानिआश्चर्याणिभवन्तिसन्तिकतमंप्रति प्रश्न कर्तव्यइतिभाव ॥ २२ ॥ **स०** कौतूहलात् महात्मसनिधौ अन्वेष्टुं विचारयितुं । नयुक्तं । स्वयमेवदयाकुलावदेच्चेद्दैवतो भवतुनवयक्षमा प्रश्नइतिभाव ॥ २३ ॥ इत्येकसप्ततितमःसर्ग ॥ ७१ ॥

**स०** अनेकार्थं रामगीतं रामकथाप्रबन्धं । **शि०** अनेके अनेकविधत्वेनप्रतिभासमाना अर्थायस्मिंस्तत् । चिन्तयानं

**[ पा० ]** १ ख. ग. घ. वर्तन्तमिवतत्सर्वतस्मिन्गीतेप्रशुश्रुवान् २ च. छ. गीतबन्धमनुत्तमं. झ. ञ. ट. गीतबन्धनमुत्तम. ३ क. ङ. च. छ झ. ञ. ट. चिन्तयानमनेकार्थं.

तस्य शब्दं सुमधुरं तन्त्रीलयसमन्वितम् ॥ श्रुत्वा रात्रिर्जगामाशु शत्रुघ्नस्य महात्मनः ॥ २ ॥
तस्यां निशायां व्युष्टायां कृत्वा पौर्वाह्णिकक्रमम् ॥ उवाच प्राञ्जलिर्वाक्यं शत्रुघ्नो मुनिपुङ्गवम् ॥३॥
भगवन्द्रष्टुमिच्छामि राघवं रघुनन्दनम् ॥ त्वयानुज्ञातुमिच्छामि सहैभिः संशितव्रतैः ॥ ४ ॥
इत्येवंवादिनं तं तु शत्रुघ्नं शत्रुतापनम् ॥ वाल्मीकिः संपरिष्वज्य विससर्ज च राघवम् ॥ ५ ॥
सोभिवाद्य मुनिश्रेष्ठं रथमारुह्य सुप्रभम् ॥ अयोध्यामगमत्तूर्णं राघवोत्सुकदर्शनः ॥ ६ ॥
स प्रविष्टः पुरीं रम्यां श्रीमानिक्ष्वाकुनन्दनः ॥ प्रविवेश महाबाहुर्यत्र रामो महाद्युतिः ॥ ७ ॥
स रामं मन्त्रिमध्यस्थं पूर्णचन्द्रनिभाननम् ॥ पश्यन्नमरमध्यस्थं सहस्रनयनं यथा ॥ ८ ॥
अभिवाद्य महात्मानं ज्वलन्तमिव तेजसा ॥ उवाच प्राञ्जलिर्वाक्यं रामं सत्यपराक्रमम् ॥ ९ ॥
यथाज्ञप्तं महाराज सर्वं तत्कृतवानहम् ॥ हतः स लवणः पापः पुरी चास्य निवेशिता ॥ १० ॥
द्वादशैते गता वर्षास्त्वां विना रघुनन्दन ॥ नोत्सहेयमहं वस्तुं त्वया विरहितो नृप ॥ ११ ॥
स मे प्रसादं काकुत्स्थ कुरुष्वामितविक्रम ॥ मातृहीनो यथा वत्सो न चिरं प्रवसाम्यहम् ॥ १२ ॥
एवं ब्रुवाणं शत्रुघ्नं परिष्वज्येदमब्रवीत् ॥ मा विषादं कृथाः शूर नैतत्क्षत्रियचेष्टितम् ॥ १३ ॥
नावसीदन्ति राजानो विप्रवासेषु राघव ॥ प्रजा नः परिपाल्या हि क्षत्रधर्मेण राघव ॥ १४ ॥
काले काले तु मां वीर ह्ययोध्यामवलोकितुम् ॥ आगच्छ त्वं नरश्रेष्ठ गन्तासि च पुरं तव ॥ १५ ॥
ममापि त्वं सुदयितः प्राणैरपि न संशयः ॥ अवश्यं करणीयं च राज्यस्य परिपालनम् ॥ १६ ॥
तस्मात्त्वं वत्स काकुत्स्थ सप्तरात्रमिहावस[1] ॥ ऊर्ध्वं गन्तासि मधुरां सभृत्यबलवाहनः ॥ १७ ॥
रामस्यैतद्वचः श्रुत्वा धर्मयुक्तं मनोगतम् ॥ शत्रुघ्नो दीनया वाचा बाढमित्येव चाब्रवीत् ॥ १८ ॥
सप्तरात्रं च काकुत्स्थो राघवस्य यथाज्ञया ॥ उष्य तत्र महेष्वासो गमनायोपचक्रमे ॥ १९ ॥
आमन्त्र्य तु महात्मानं रामं सत्यपराक्रमम् ॥ भरतं लक्ष्मणं चैव महारथमुपारुहत् ॥ २० ॥

त्वयानुज्ञातमिति तवानुज्ञामित्यर्थः । एभिरिति । | मुनिभिरिति शेषः ॥ ४—१२ ॥ क्षत्रियचेष्टितं क्षत्रि-

क सिद्धान्तार्थइतिचिन्ताविशिष्टं । शयानंतंशत्रुघ्नं निद्रानाभ्यागमत् ॥ १ ॥ **ति०** तस्य रामगीतस्य ॥ **स०** श्रुत्वाचिन्तयतः रात्रिराशुजगाम ॥ २ ॥ **ति०** पौर्वाह्णिकक्रम शौचस्नानार्घ्यसन्ध्यावन्दनब्रह्मयज्ञानुष्ठानरूपंपूर्वाह्णसबन्ध्याचारक्रम ॥ **स०** पौर्वाह्णिकक्रमं क्रमोपेतंपौर्वाह्णिकशौचादि ॥ ३ ॥ **स०** त्वया तव । अनुज्ञात अनुज्ञा । एभि सह त्वयाऽनुज्ञात आज्ञप्तंमा अहमिच्छामीतिवा ॥ ४ ॥ **स०** राघवोत्सुकदर्शन राघवस्यदर्शनोत्सुक शत्रुघ्नस्यरामपदतामरससदर्शनपारवश्यंद्योतयितुमु-त्सुकदर्शनइतिव्यत्यस्याभ्यधान्मुनि. । यद्वा दृश्यतेऽनेनेतिदर्शनंचक्षु । रामे तद्विषये उत्सुकं दर्शनं यस्यसवा ॥ ६ ॥ **स०** यत्रमहाद्युतीरामस्तत्सदोविवेश ॥ ७ ॥ **स०** सहस्रनयनयथातथापश्यन्सशत्रुघ्नोभिवाद्योवाच ॥ ८ ॥ ९ ॥ **ति०** अस्यपुरीनिवे-शिता सर्वप्रजानिवेशनेनप्रतिष्ठापिता ॥ **स०** अस्यपुरी पूर्वं दुरात्मावासतोनसदुपयोगिन्यासीत् । इदानीनिवेशिता प्रतिष्ठापिता नानाजनसहिताकृता ॥ १० ॥ **स०** त्वाविनास्थितस्यममद्वादशैतानिवर्षाणिजातानि ॥ ११ ॥ **स०** स. त्व ॥ १२ ॥ **स०** क्षत्रियचेष्टित क्षत्रियजात्युचितव्यापार ॥ १३ ॥ **स०** विप्रवासेषु बहुतिथप्रवासेषु ॥ हि यत प्रजा परिपाल्याइति हिप्रसिद्धि. ततोनक्षत्रियाअवसीदन्ति । राघवनावसीदन्ति राघवप्रजा परिपाल्याइत्यनुशास्यव्यापारद्वयानुरूप्येणराघवेतिद्विरभिधानं ॥१४॥ **स०** वृश्चिकभयात्पलायमानस्याशीविषमुखेनिपातनीत्याद्वादशसंवत्सरीविरहंसोढुमनीशानस्यपुन प्रवासकुरु कुरुप्रजारक्षणमित्यु-पदेशोनशोभतइत्यतस्तंस्वाभिमततदभिमतानुच्छित्त्यासमाधत्ते—**कालेकालेत्विति** । तवपुर मधुरा ॥ १५ ॥ **स०** सप्तरात्रं सख्यपूर्वकत्वादच् । द्वितीयाचकालाध्वनोरत्यन्तसयोगइत्यत्यन्तसयोगे ॥ १७ ॥ **ति०** यथाज्ञया यथावत्कृतयाज्ञया । **स०** उष्य वासकृत्वा ॥१९॥ **स०** ग्रामेरामेस्वामिनिसतिविनाप्रयोजनमिवाज्ञाचवाहनारोहोऽनुचित. स्नेहविशेषेणगन्तव्यचेतिपश्चाभ-रतेनलक्ष्मणेनचानुगत. आशु पुरींजगाम ॥ २१ ॥ इतिद्विसप्ततितम.सर्ग. ॥ ७२ ॥

[ पा० ] १ क.—ट. वसकाकुत्स्थसप्तरात्रंमयासह.

दूरंमाभ्यामनुगतो लक्ष्मणेन महात्मना ॥ भरतेन च शत्रुघ्नो जगामाशु पुरं ततः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

## त्रिसप्ततितमः सर्गः ॥ ७३ ॥

कदाचनकेनचिज्जनपदवासिनावृद्धद्विजेन मृतपुत्रादानेन राजद्वारमेत्य निजबालपुत्रमृते. राजदोषमूलकत्वाक्रोशनपूर्वकं दु.खादुच्चैरोदनम् ॥ १ ॥

प्रस्थाप्य तु स शत्रुघ्नं भ्रातृभ्यां सह राघवः ॥ प्रमुमोद सुखी राज्यं धर्मेण परिपालयन् ॥ १ ॥
ततः कतिपयाहस्सु वृद्धो जानपदो द्विजः ॥ मृतं बालमुपादाय राजद्वारमुपागमत् ॥ २ ॥
रुदन्बहुविधा वाचः स्नेहदुःखसमन्विताः ॥ असकृत्पुत्र पुत्रेति वाक्यमेतदुवाच ह ॥ ३ ॥
किंनु मे दुष्कृतं कर्म पुरा देहान्तरे कृतम् ॥ यदहं पुत्रमेकं त्वां पश्यामि निधनं गतम् ॥ ४ ॥
अप्राप्तयौवनं बालं पञ्चवर्षसहस्रकम् ॥ अकाले कालमापन्नं मम दुःखाय पुत्रक ॥ ५ ॥
अल्पैरहोभिर्निधनं गमिष्यामि न संशयः ॥ अहं च जननी चैव तव शोकेन पुत्रक ॥ ६ ॥
न स्मराम्यनृतं ह्युक्तं न च हिंसां स्मराम्यहम् ॥ सर्वेषां प्राणिनां पापं कृतं नैव स्मराम्यहम् ॥ ७ ॥
केनाद्य दुष्कृतेनायं बाल एव ममात्मजः ॥ अकृत्वा पितृकार्याणि गतो वैवस्वतक्षयम् ॥ ८ ॥
नेदृशं दृष्टपूर्वं मे श्रुतं वा घोरदर्शनम् ॥ मृत्युरप्राप्तकालानां रामस्य विषये यथा ॥ ९ ॥
रामस्य दुष्कृतं किंचिन्महदस्ति न संशयः ॥ यथा हि विषयस्थानां बालानां मृत्युरागतः ॥ १० ॥

---

यविचारः ॥ १३—२१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

अथ मृतबालकब्राह्मणस्य राजद्वारि विलापः —प्रस्थाप्येत्यादि ॥ १—२ ॥ असकृत् पुत्र पुत्रेति स्नेहसमन्विता बहुविधा वाचः रुदन् विलपन् । रुदन् बहुविधं विप्र इति च पाठः ॥ ३—४ ॥ कालमापन्नं कालवशं गतं ॥ ५—६ ॥ न स्मरामि । अकृतत्वादेवेति भावः ॥ ७—८ ॥ विषये देशे । यथा सर्वानुभवादितः पूर्वं नेदृशं दृष्टपूर्वं ॥ ९ ॥ अद्य

---

ति० भ्रातृभ्या लक्ष्मणभरताभ्या । स० ससुखी प्रशस्तसुखवान्नाम । सुखस्यप्राशस्त्यचस्वरूपता ॥ १ ॥ ति० कतिपयाहस्सु गतेष्वितिशेष ॥ २ ॥ ति० स्नेहेन पुत्रस्नेहेनतन्मरणदु खेनचसमन्वित ॥ स० स्नेहदु खसमन्वित स्नेह पुत्रेममताविशेष । तन्निमित्तयद्दु खतेनसमन्वित ॥ शि० रुदन् उच्चारयन् ॥ ३ ॥ स० कुमारान्तरदर्शनेनैतद्दु खविस्मरणयोग्यतापि ममनास्तीत्याह—एकमिति ॥ ४ ॥ ति० किंचहेपुत्रक अप्राप्तयौवनंममदु खाय । अकालेकालमापन्नपश्यामीत्यनुषङ्ग । पञ्चवर्षसहस्रकं वर्षशब्दोत्रदिनपर । 'सहस्रसवत्सरंसत्रमुपासीत' इतिवत् । तेनषोडशवर्षमित्यर्थइत्येके । तेनकिंचिन्न्यूनचतुर्दशवर्षमित्यर्थइत्यन्ये ॥ ५ ॥ स० अहंगमिष्यामि । जननीमातागमिष्यति । गमिष्यामीतिदु खसमयत्वात्पुत्रव्यत्यासात्पुरुषव्यत्यासोवा ॥ ६ ॥ स० तवपातकित्वात्पोतघातोजातइत्यतआह—**नेति** । सर्वेषाप्राणिनाविषये अनृत हिसा च पापं । एतदितरजन्मान्तरे पापमुपार्जितवतामेतर्हिगर्हितकृतौसस्कारवशान्मतिरुदेयादेव नोदिता । अतोदेहान्तरेपिनाघटिष्ट दुरिष्टमितिज्ञायते । अतइदमनुचितमितिभाव ॥ ७ ॥ स० पितृकार्याणि ममश्राद्धादीनि ॥ ८ ॥ शि० अप्राप्तकालानामीदृशमृत्यु दृष्टपूर्वन । श्रुतमपिन । सामान्येनपुसकं ॥ ९ ॥ ति० तस्माद्राजदोषादेवेदंबालमरणमित्याह—रामस्येति । स० रामस्यबहुज्ञस्यकथंदुष्कृतमित्यतआह—चित्किमिति । चित् ज्ञानं । कि किफला । सत्यप्यप्रयोजिकेतिभाव. । दशानामपत्यानास्थानेस्थितएकोमृतइतिदु खंविपुलमितिद्योतयितुंबालानामितिबहुवचनं ॥ १० ॥

[ पा० ] १ क ग. च. छ झ ञ ट. दूरंपश्चामनुगतो. ख. घ. दूरं ताभ्यामनुगतो. २ झ. ठ. समन्वित . ३ क.— च. ञ. पञ्चवर्षसमन्वितं. ४ ड. झ. ञ. विषयेह्यय.

न ह्यन्यविषयस्थानां बालानां मृत्युतो भयम् ॥ त्वं राजञ्जीवयस्वैनं बालं मृत्युवशं गतम् ॥ ११ ॥
राजद्वारि मरिष्यामि पत्न्या सार्धमनाथवत् ॥ ब्रह्महत्यां ततो राम समुपेत्य सुखी भव ॥ १२ ॥
भ्रातृभिः सहितो राजन्दीर्घमायुरवाप्स्यसि ॥ उषिताः स्म सुखं राज्ये तवास्मिन्सुमहाबल ॥ १३ ॥
इदं तु पतितं ह्यस्मात्तव राम वशे स्थिताः ॥ कालस्य वशमापन्नाः स्वल्पं हि न हि नः सुखम् ॥१४॥
संप्रत्यनाथो विषय इक्ष्वाकूणां महात्मनाम् ॥ रामं नाथमिहासाद्य बालान्तकरणं ध्रुवम् ॥ १५ ॥
राजदोषैर्विपद्यन्ते प्रजा ह्यविधिपालिताः ॥ असद्वृत्ते तु नृपतावकाले म्रियते जनः ॥ १६ ॥
यद्वा पुरेष्वयुक्तानि जना जनपदेषु च ॥ कुर्वते न च रक्षाऽस्ति तदा कालकृतं भयम् ॥ १७ ॥
सुव्यक्तं राजदोषो हि भविष्यति न संशयः ॥ पुरे जनपदे चापि ततो बालवधो ह्ययम् ॥ १८ ॥
एवं बहुविधैर्वाक्यैरुपरुध्य मुहुर्मुहुः ॥ राजानं दुःखसंतप्तः सुतं तमुपगूहते ॥ १९ ॥
[ नृपवरमिति निन्दयन्द्विजात्मा सुजनसमूहसमावृतोऽभ्यशान्तः ॥
मृतशिशुमुपगूहयन्स्वमूर्त्या व्यलपदहो सुतशोकमभ्यगच्छत् ॥ २० ॥ ]

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

## चतुःसप्ततितमः सर्गः ॥ ७४ ॥

मृतपुत्रकब्राह्मणरोदनरवश्राविणारामेणवसिष्ठाद्यानयनपूर्वकंतान्प्रतिबालमरणकारणप्रश्न ॥ १ ॥ तत्रनारदेनरामंप्रतियुगचतुष्टयसबन्धिचातुर्वर्ण्यधर्मनिरूपणपूर्वक येनकेनापिस्ववर्णविरुद्धधर्माचरणेतस्यएतादृशाकालमरणादिरूपानर्थहेतुत्वोक्त्या प्रकृते तादृशविरुद्धधर्माचरणरतस्यकस्याप्यन्वेषणेनतद्दण्डनेसतिमृतबालकस्यपुनरुज्जीवनोक्ति. ॥ २ ॥

तथा तु करुणं तस्य द्विजस्य परिदेवनम् ॥ शुश्राव राघवः सर्वं दुःखशोकसमन्वितम् ॥ १ ॥

---

तु रामस्य दुष्कृतमित्यादि ॥ १० ॥ त्व राजन्नित्यादिना आभिमुख्येन वाद. ॥ ११ ॥ सुखी भवेत्यादिव्यङ्ग्योक्तिः ॥ १२ ॥ उषिता स्म । एतावत्कालमिति शेषः ॥ १३ ॥ तव वशे राज्ये नोस्माक स्वल्पमपि सुख न ॥ १४ ॥ अन्त करोतीत्यन्तकरण । कर्तरि ल्युट्। बालान्तकरण राममासाद्य महात्मनामिक्ष्वाकूणा विषय सप्रत्यनाथो जातः । रक्षकसुराजरहितो जात इत्यर्थः ॥ १५ ॥ कथमित्थ कथ्यत इत्यत्राह—राजदोषैरित्यादि ॥ १६ ॥ अयुक्तानि अनुचितकृत्यानि । न च रक्षास्ति अनुचितकृत्यनिवारणं यदा नास्ति तदैव कालकृत भयं नान्यथेत्यर्थः ॥ १७ ॥ सुव्यक्तमिति तस्मादेव ह्ययमकालवधः ॥ १८ ॥ राजानमुपरुध्य ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

स० बालाहत्याप्रयुक्तोपायाता ब्राह्मीचब्रह्माचब्रह्माणौ तद्धननब्रह्महत्या । तासमुपेत्यस्थितस्त्वसुखीभव । दु खस्यैवसुखमिति सतापोक्ति ॥ १२ ॥ स० सुखमुषिता स्म । एतावत्पर्यन्त ॥ १३ ॥ स० यस्मात् हेराम तववशेस्थितानस्मानुद्दिश्य इदमेकं बालकमरण पतित दैवादितिवयंकालस्यवशमापन्ना । सर्वस्वःपुत्रएवास्माकमितिन सुखंनहीत्यन्वय ॥ १४ ॥ ति० असद्वृत्ते धर्मेणप्रजापालनहीने ॥ १६ ॥ स० राजानमुपरुध्य प्रतोद्य । उपगूहति आलिलिङ्गे ॥ शि० राजानमुपरुध्य तत्सन्निधिप्राप्य ॥ १९ ॥ इतित्रिसप्ततितम सर्ग ॥ ७३ ॥

स० करुणं करुणयतीतितथा । दु खशोकसमन्वितं श्रोतुर्वक्तुश्चेत्युभयविवक्षयादु खशोकेत्युक्ति । 'सदु खेनचसतप्त'

[ पा० ] १ च. झ. ञ. सराजन् २ ग —ट. पतिततस्मात्तवरामवशेस्थितान्. ३ च. छ बालानानिवनंध्रुव. ४ अयं श्लोक· घ. ज. पाठयोर्दृश्यते.

स दुःखेन च सन्तप्तो मन्त्रिणस्तानुपाह्वयत् ॥ वसिष्ठं वामदेवं च भ्रातरौ सहनैगमान् ॥ २ ॥
ततो द्विजा वसिष्ठेन सार्धमष्टौ प्रवेशिताः ॥ राजानं देवसंकाशं वर्धस्वेति ततोऽब्रुवन् ॥ ३ ॥
मार्कण्डेयोथ मौद्गल्यो वामदेवश्च काश्यपः ॥ कात्यायनोथ जाबालिर्गौतमो नारदस्तथा ॥
एते द्विजर्षभाः सर्वे आसनेषूपवेशिताः ॥ ४ ॥
महर्षीन्समनुप्राप्तानभिवाद्य कृताञ्जलिः ॥ मन्त्रिणो नैगमांश्चैव यथार्हमनुकूलतः ॥ ५ ॥
तेषां समुपविष्टानां सर्वेषां दीप्ततेजसाम् ॥ राघवः सर्वमाचष्टे द्विजोऽयमुपरोधते ॥ ६ ॥
तस्य तद्वचनं श्रुत्वा राज्ञो दीनस्य नारदः ॥ प्रत्युवाच शुभं वाक्यमृषीणां सन्निधौ नृपम् ॥ ७ ॥
शृणु राजन्यथाऽकाले प्राप्तो बालस्य संक्षयः ॥ श्रुत्वा कर्तव्यतां राजन्कुरुष्व रघुनन्दन ॥ ८ ॥
पुरा कृतयुगे राजन्ब्राह्मणा वै तपस्विनः ॥ अब्राह्मणस्तदा राजन्न तपस्वी कथंचन ॥ ९ ॥
तस्मिन्युगे प्रज्वलिते ब्रह्मभूते त्वनावृते ॥ अमृत्यवस्तदा सर्वे जज्ञिरे दीर्घदर्शिनः ॥ १० ॥
ततस्त्रेतायुगं नाम मानवानां वपुष्मताम् ॥ क्षत्रिया यत्र जायन्ते पूर्वेण तपसाऽन्विताः ॥ ११ ॥
वीर्येण तपसा चैव तेऽधिकाः पूर्वजन्मनि ॥ मानवा ये महात्मानस्तत्र त्रेतायुगे युगे ॥ १२ ॥
ब्रह्म क्षत्रं च तत्सर्वं यत्पूर्वमपरं च यत् ॥ युगयोरुभयोरासीत्समवीर्यसमन्वितम् ॥ १३ ॥
अपश्यंस्तु न ते सर्वे विशेषमधिकं ततः ॥ स्थापनं चक्रिरे तत्र चातुर्वर्ण्यस्य संमतम् ॥ १४ ॥

---

राघवः द्विजोयं उपरोधत इति सर्वमाचष्टे ॥६—७ ॥ हे राजन् अकाले अयं बालसंक्षयः यथा येन प्रकारेण प्राप्तः तच्छृणु । ततस्तस्य प्रतिक्रियायाः कर्तव्यतां श्रुत्वा तत्कुरुष्व ॥ ८ ॥ प्रतिज्ञातमर्थमुपपादयितुं पीठिकामाह—पुरेत्यादि ॥ त्रेतायुगे अनर्हस्य शूद्रस्य तपश्चरणमधर्मः । तेनायं बालवध इति वक्तुं चतुर्युगधर्माः क्रमेण चोच्यन्ते । कृतयुगे ब्राह्मणा एव तपस्विनो भवन्ति । अनशनप्रभृतिकायक्लेशकारिणो भवन्ति। ततस्तस्मादब्राह्मण. ब्राह्मणव्यतिरिक्तवर्णः कथचन तपस्वी न भवति । नित्यनैमित्तिककर्ममात्रपर एव भवति ॥ ९ ॥ प्रज्वलिते तपसा दीप्ते। ब्रह्मभूते ब्राह्मणवर्णप्रधाने। अनावृते अज्ञानावरणरहिते । तस्मिन्युगे कृतयुगे । सर्वे एव तदा अमृत्यवः मरणहेत्वधर्मलेशस्याप्यभावात् मरणरहिताः । अज्ञानानावृतत्वाद्दीर्घदर्शिनः अतीतानागतज्ञाश्च भवन्ति ॥ १० ॥ ततः कृतयुगावसाने । वपुष्मतां दृढशरीराणां । मानवानां मनुवंशक्षत्रियाणां संबन्धि त्रेतायुग नाम भवति । तत्प्रधानत्वात्तत्संबन्धित्व । तत्र त्रेतायां । क्षत्रियाः पूर्णेन तपसान्विता जायन्ते॥११॥ त्रेतायुगे तपस्विनो जाताः क्षत्रिया. कृतयुगे तपस्विभिर्ब्राह्मणैः किं तुल्याः नेत्याह—वीर्येणेति ॥ अत्र त्रेतायुगे युगे । त्रेतायुगाख्ये युगे । महात्मानो ये मानवाः सन्ति तदपेक्षया पूर्वजन्मनि पूर्वस्मिन् कृतयुगे ये मानवास्ते तपसा वीर्येण चाधिकाः ॥ १२ ॥ त्रेतायुगब्राह्मणास्तुल्या एवेत्याह—ब्रह्मेति ॥ उभयोर्युगयोः कृतत्रेतयोः। कृते यद्ब्रह्म पूर्वमुत्कृष्टं यच्च त्रेतायामपकृष्टं क्षत्र तदुभय त्रेताया समप्रधानमासीत् ॥ १३ ॥ एतदेवाह—अपश्यन्निति ॥ सर्वे जनाः । ततः क्षत्रियात् । ब्राह्मणस्याधिक विशेषं तु नापश्यन्। अपश्यन्तस्तु ते सर्वे इति पाठः। तत्स्थापनमाचार-

---

इत्यनुवादस्वारस्यात् ॥ 'दु खमात्मनोवाधकादिनिमित्तं । शोक पुत्रवियोगजस्ताभ्यासमन्वित' इतिव्याख्यानान्नागोजिभट्टोनतत्स्वारस्यग्राहीतिज्ञातव्यं ॥ १ ॥ **ति०** नैगमा पौरा । तत्सहितान् ॥ २ ॥ **स०** वसिष्ठेनसहाष्टौद्विजा । वसिष्ठोनवमइति यावत् । प्रवेशिता. दौवारिकै ॥ वर्धस्वेतिवृद्धिव्यक्तिर्विवक्षिता ॥ ३ ॥ अष्टकनामाचष्टे—मार्कण्डेयइति ॥ ४ ॥ **ति०** अयं द्विजउपरोधति उपरुणद्धि । राजद्वारमितिशेष । सर्वराजदोषमूलमेवबालमरणंवदतीत्यादिकंचसर्वमाचष्टे ॥ ६ ॥ **ति०** अयत्रेताकालिकक्षत्रियाणाकृतकालिकब्राह्मणेभ्योन्यूनता । त्रेताकालिकब्राह्मणैस्तुसमतेत्याह—ब्रह्मक्षत्रमिति । उभयोर्युगयोर्मध्ये कृतयुगेब्रह्मपूर्वंतपोवीर्याभ्यामुत्कृष्टक्षत्रचावरत्वताभ्या तपोवीर्याभ्यान्यूनमासीत् तत्सर्वब्रह्मक्षत्ररूपमुभयत्रेतायासमवीर्यसमन्वितमासीत् । कृतेक्षत्रियाणातपस्यनधिकारात्तद्युगीयेभ्योब्राह्मणेभ्यस्तेषान्यूनता । त्रेतायातूभयोरपितपोधिकाराद्रुभावपितपोवीर्या-

[ पा० ] १ ग. ङ —ट. मुपरोधति. २ झ. ञ. ट. मवरंचयत.

तस्मिन्युगे प्रज्वलिते धर्मभूते ह्यनावृते ॥ अधर्मः पादमेकं तु पातयत्पृथिवीतले ॥ १५ ॥
अधर्मेण हि संयुक्तस्तेजो मन्दं भविष्यति ॥ १६ ॥
आमिषं यच्च पूर्वेषां राजसं च मलं भृशम् ॥ अनृतं नाम तद्भूतं पादेन पृथिवीतले ॥ १७ ॥
अनृतं पातयित्वा तु पादमेकमधर्मतः ॥ ततः प्रादुष्कृतं पूर्वमायुषः परिनिष्ठितम् ॥ १८ ॥
पतिते त्वनृते तस्मिन्नधर्मे च महीतले ॥ शुभान्येवाचरल्लोकः सत्यधर्मपरायणः ॥ १९ ॥
त्रेतायुगे च वर्तन्ते ब्राह्मणाः क्षत्रियाश्च ये ॥ तपोतप्यन्त ते सर्वे शुश्रूषामपरे जनाः ॥ २० ॥
स धर्मः परमस्तेषां वैश्यशूद्रं समागमत् ॥ पूजां च सर्ववर्णानां शूद्राश्चक्रुर्विशेषतः ॥ २१ ॥

---

भेदं वेदोदित चक्रिरे । चातुर्वर्ण्यस्येत्यत्र स्वार्थेष्यञ् । कृतयुगे तपस्तदभावाभ्यामुभयोर्वैलक्षण्य स्पष्ट । त्रेतायुगे उभयोरपि तपस्साम्यात् वैलक्षण्यकरमाचारभेदमकल्पयन्नित्यर्थ. । एवं वैश्यशूद्रयोरपि वेदपुराणोक्ताचारव्यवस्थां महान्तोकल्पयन्नित्यर्थ. ॥ १४ ॥ धर्मभूते यज्ञादिधर्मप्रधाने । अनावृते अधर्मावरणरहिते । तस्मिन् त्रेतायुगे प्रवृत्ते अधर्मः पाद चतुर्थांश पातयदपातयत् वर्तयामास । त्रेतायुगपुरुषाः कृतयुगपुरुषवद्विमलज्ञानरहिततया ब्रह्मज्ञानाधिकारशून्याः वर्णाश्रमधर्मानेवाचरन् । अतो विमलज्ञानाभावादधर्मः पादमवतीर्ण इत्यर्थः ॥ १५ ॥ एवमीषत्पापसंबन्धात्तदातनानां जनानां प्रभाव: पूर्वयुगपुरुषेभ्यः क्षीणोभूदित्याह—अधर्मेणहीति ॥ भविष्यतीति भूते लट् ॥ १६ ॥ एवं त्रेतायुगजनाना प्रभावस्याल्पत्वेन सत्यसंकल्पत्वाकृष्टपच्यत्वादिसिद्ध्यभावात् कृष्यादिकमेव जीवनोपायोभूदित्याह—आमिषमिति ॥ सर्वेषां कृतयुगब्राह्मणानां राज्ञा च भृश मलं मलवन्निन्द्यमानमामिषं जीवनोपायः अनृतं कृषिः नाम प्रसिद्धं यदस्ति तत्पृथिवीतले पादेन भूत स्थित । कृतयुगपुरुषतुल्यवैभवाभावेनाकृष्टपच्यत्वाद्यभावात् त्रेतायुगपुरुषाणामनृतमेव जीवनोपायोभूदित्यर्थ. । 'सेवा श्ववृत्तिरनृत कृषिरुञ्छशिल त्वृतं' इत्यमरः ॥ १७ ॥ एवमायुषः क्षयोप्यभूदित्याह—अनृतमिति ॥ अधर्मतः अधर्मस्तदेकं पादमनृतलक्षणं जीवनोपायं पातयित्वा निक्षिप्य । ततस्तेनैव पातेन पूर्व प्रथममायुषः परिनिष्ठितं विनाशः प्रादुष्कृतं प्रादुर्भूतं । कृतयुगपुरुषापेक्षया त्रेतायुगपुरुषा न्यूनायुषोऽभवन्नित्यर्थः ॥ १८ ॥ एवमनुभावस्यायुषःक्षये प्रवृत्ते सति भीता. सन्तः त्रेतायुगपुरुषाः शुभाचरणे निरता आसन्नित्याह—पतिते त्विति ॥ अधर्मे अधर्मजायुःक्षये । पातिते त्वनृते तस्मिन्नधर्मेणेति च पाठः ॥१९॥ शुभाचारे भेदमेव दर्शयति—त्रेतेति ॥ शुश्रूषां पूर्ववर्णपरिचर्या । अपरे वैश्यशूद्राः । अकुर्वन्निति शेष: ॥२०॥ शुश्रूषावत् पूर्वोक्तकृष्यादिकमपि वैश्यशूद्रयो:

---

न्यासमावितिभाव । अर्थात्कृतयुगब्राह्मणेभ्यस्त्रेतायुगब्राह्मणानामपिन्यूनत्वमुक्त ॥ १३ ॥ । ति० प्रज्वलिते तेनैवधर्मेणप्रदीप्तेसति । अधर्म हिंसानृतासतोषविग्रहरूपचतुष्पात् ॥ १५ ॥ ति० अधर्मेणेति । यतस्तेनसयुक्तोलोकोवर्णाश्रमाधिकृतोभवति ततस्तस्यतेजोमन्दंभविष्यति ॥ १६ ॥ ति० एवचतेषाकृष्यादिकमेवजीवनो पायइत्याह—आमिषमिति । पूर्वेषाकृतयुगस्थाना भृशमत्यर्थ मलंमलवत्त्याज्यंयद्राजसरजोगुणमूलमामिषंजीवनोपायरूपंकृष्याद्यासीत्तदनृत नाम । 'सेवाश्ववृत्तिरनृतंकृषि' इतिकोशात् । तद्रूपेणपादेनपृथिवीतलेभूतंप्राप्त । अधर्मेणेतिशेष । कृतेत्वकृष्टपच्याहाराइतिभावइतितीर्थ । कतकस्तु—अपिचपूर्वेषास्वस्ववश्यानायच्चामिषंपुरदेशगृहक्षेत्रादि तदुद्दिश्यराजसरजोगुणमूलद्वेषलक्षणंभवति । त्रेतायामितिशेष । 'कामएषक्रोधएषरजोगुणसमुद्भव' इत्युक्ते । कोनामाधर्मस्यपादस्तत्राह—अनृतमिति । येनपृथिवीक्षिप्तेनपादेनतत्प्रागुक्तद्वेषरूपंमलभूतं तदनृतंनाम । देहात्मताधीरूपमिथ्याज्ञानात्मक सर्वानर्थमूलोऽहङ्कारमथ प्रथम पादइत्यर्थइत्याह ॥ १७ ॥ स० उक्तरूपमेकपादमेदिन्यापातयित्वाधर्मतोधर्मेण । पूर्वमायुषइतिपदमेक । पूर्वा मा मितिर्यस्य तच्चतदायुश्चतस्मात् । ततस्तस्यायुष परिनिष्ठित ह्रसनंप्रादुष्कृतं । कालबलाद्ध्रसदायुरादिकालोकाइतिभाव ॥ १८ ॥ स० आयुर्व्ययोपायापायव्यापारोपदेशप्रकारमाह—पातितइति । अधर्मेणतस्मिन्ननृते उक्तलक्षणानृतपादेमहीतलेपातितेसतितत्प्रयुक्तायुर्व्ययपरिहारायाशुभान्येवयज्ञदानतपोरूपकर्माण्येवाचरल्लोकोधर्माधिकृतोभवति । त्रेतायायज्ञादिभिरन्त करणशुद्धिरितिभाव. ॥ १९ ॥ स० तेषामध्येवैश्यशूद्र समाहारद्वन्द्व । स्वधर्म शुश्रूषारूप । आगमत् अगच्छत् । सर्ववर्णाना त्रैवर्णिकाना शूद्राः विशेषत.पूजाचक्रु । वैश्यानातु 'कृषिगोरक्षवाणिज्यंवैश्यस्यापिस्वभावजम् ।

[ पा० ] १ झ. ठ. स्वधर्मं .

एतस्मिन्नन्तरे तेषामधर्मे चानृते च ह ॥ ततः पूर्वे भृशं ह्रासमगमन्नृपसत्तम ॥ २२ ॥
ततः पादमधर्मः स द्वितीयमवतारयत् ॥ ततो द्वापरसंज्ञाऽस्य युगस्य समजायत ॥ २३ ॥
तस्मिन्द्वापरसंज्ञे तु वर्तमाने युगक्षये ॥ अधर्मश्चानृतं चैव ववृधे पुरुषर्षभ ॥ २४ ॥
तस्मिन्द्वापरसंख्याते तपो वैश्यान्समाविशत् ॥ त्रिभ्यो युगेभ्यस्त्रीन्वर्णान्क्रमाद्वै तप आविशत् ॥२५॥
त्रिभ्यो युगेभ्यस्त्रीन्वर्णान्धर्मश्च परिनिष्ठितः ॥ न शूद्रो लभते धर्मं युगतस्तु नरर्षभ ॥ २६ ॥
हीनवर्णो नृपश्रेष्ठ तप्यते सुमहत्तपः ॥ २७ ॥
भविष्यच्छूद्रयोन्यां वै तपश्चर्या कलौ युगे ॥ अधर्मः परमो राजन्द्वापरे शूद्रजन्मनः ॥ २८ ॥
स वै विषयपर्यन्ते तव राजन्महातपाः ॥ अद्य तप्यति दुर्बुद्धिस्तेन बालवधो ह्ययम् ॥ २९ ॥
यो ह्यधर्ममकार्यं वा विषये पार्थिवस्य तु ॥ करोति चाश्रीमूलं तत्पुरे वा दुर्मतिर्नरः ॥
क्षिप्रं च नरकं याति स च राजा न संशयः ॥ ३० ॥
अधीतस्य च तप्तस्य कर्मणः सुकृतस्य च ॥ षष्ठं भजति भागं तु प्रजा धर्मेण पालयन् ॥
षड्भागस्य च भोक्ताऽसौ रक्षते न प्रजाः कथम् ॥ ३१ ॥

---

परमधर्मोभूदित्याह—स धर्म इति ॥ स्वधर्मः परम इति च पाठ । पूजां चेति । वैश्यानां हि शुश्रूषा । अतोपि कृष्यादिकमेव परमो धर्मोभूत्। शूद्राणा कृष्यादिभ्योपि शुश्रूषैव विशिष्टो धर्मोभूदित्यर्थः ॥ २१ ॥ एव त्रेतायुगे लोकस्थितिमुक्त्वा तदवस्थानकालस्थितिमाह्—एतस्मिन्निति । एतस्मिन्नन्तरे त्रेतायुगावसानकाले । अधर्मे अधर्मकार्ये आयुषः क्षये । अनृते कृष्याद्युपाये च प्रवृत्ते सति क्षीणायुषो वृत्तिकार्शिताश्च । पूर्वे त्रेतायुगस्थाः ह्रास विनाशमगमन् ॥२२॥ अधर्मः स त्रेतायुगप्रसारितैकपाद॰ ॥ २३ ॥ अधर्मस्याभिवृद्धिर्नाम त्रेतायुगपुरुषेभ्योल्पायुष्य । अनृतस्याभिवृद्धिस्तु प्रयासबाहुल्येन कृषेःसफलत्व ॥ २४ ॥ तपः वैश्यान् समाविशत् । वैश्यास्तपोधिकारिणोऽभवन्नित्यर्थः ॥ २५ ॥ एव युगत्रयधर्मानभिधाय प्रकृतं वक्तु तत्रोपयुक्तमर्थ सक्षिप्याह्—त्रिभ्य इति । हेतौ पञ्चमी ॥ २६ ॥ प्रकृत बालवधहेतुमाह्—हीनेति ॥ २७ ॥ भविष्यदिति ॥ इकारलोपश्छान्दसः । तपश्चर्या तपश्चरणाधिकारः । शूद्राणां तपश्चर्या कलियुगएव धर्मो भविष्यति । अस्मिन्युगे त्वधर्म इत्याह्—अधर्म इति । रामराज्यस्य त्रेतायुगत्वेपि, अधर्मः परमो राजन् द्वापरे शूद्रजन्मन इत्युक्ते॰, किमुत त्रेतायामित्यर्थः ॥२८—३०॥ कथमन्येषु पापं

---

परिचर्यात्मककर्मशूद्रस्यापिस्वभावजम्' इतिमानान्तरावगमितक्रियात्रार्थादुक्तेतिबोध्यम् ॥ २१ ॥ **स०** अधर्मस्याधर्मे द्वितीयपाद र्ममतारूपंमद्यामवतारयत्अवातारयत् । द्वौपरौयत्रसद्वापर । ' ष्यष्टन सख्यायाः ' इत्यस्याविवक्षितत्वात्पृषोदरादित्वात्साधु ॥ कृतत्रेताद्वापरइत्येतस्यतृतीयत्वेपीदनिर्वचनेनद्वापरताज्ञेया । द्वापरसख्या द्वापरइत्याख्या । समजायत । लोकाएवमाचक्रिरइति भाव ॥ २३ ॥ **स०** तपोवैश्यान्तसमाविशत् । त्रिभ्योयुगेभ्य । पञ्चमी । क्रमात्त्रीन्वर्णास्तपआवेशनंयुगत्रिकहेतुकमितिभाव । पञ्चमीसप्तम्यर्थेवा । त्रिषुयुगेषु । चतुर्थीसप्तम्यर्थेवा ॥ २५ ॥ **ति०** तथात्रिषुयुगेषुत्रीन्वर्णानवलंब्यधर्म तपोरूप परिनिष्ठितोऽभूत् । धर्म तपोलक्षण । शूद्र युगत युगत्रयेपिनलभते ॥ **स०** त्रीन्वर्णानुद्दिश्यप्रतिष्ठित । चतुर्थइत्ययशूद्रोयुगतोधर्मं तपआदिकंनलभते । तद्योग्योनेत्यर्थ ॥ २६ ॥ **ति०** किंतुहीनवर्ण शूद्र कदाचित्सुमहत्तपस्तप्यते ॥ २७ ॥ **ति०** कदातत्राह—भविष्यदिति । भविष्यत्कालवर्तिन्याशूद्रयोन्याशूद्रजातौकलौयुगेतपश्चर्याभविष्यति । नायंकालस्तद्योग्यइतिभाव ॥ **स०** तपो नापशूद्रं । अतस्तप्यतिसइतिजातइयाननर्थइतिवदति—अधर्मइति ॥ **ति०** यदेवमतोद्वापरेपिशूद्रजन्मनस्तपोधारणंपरमोऽधर्मं किमुताद्यत्रेताया ॥ २८ ॥ सशूद्रो वै निश्चयेनतवविषयपर्यन्ते देशसमीपेमहातपाभूत्वादुर्बुद्धिरद्यतपति । तेनैवहेतुनाऽयंबालवधोजात ॥ २९ ॥ **ति०** उक्तमेवदाढ्यार्यपुनराह—योहीति । योहिदुर्मति पार्थिवस्यविषयेदेशेपुरेवा अधर्मविहितधर्मलोप । अकार्यं निषिद्धकृत्यंवाकरोति । तदेवपुरेराज्येवाअश्रीमूलअलक्ष्मीमूलंभवति । तदनिवारयन्सराजाक्षिप्रंनरकंयाति । इहामुत्र चपरमकश्मलप्राप्नोतिनात्रसशय ॥ ३० ॥ **स०** अधीतस्यप्रजाकृतस्य । एवमुत्तरत्रापि । राजेतिशेष ॥ **ति०** षड्भागस्येति । रक्षार्थधनधान्यपुण्यादिषड्भागवेतनभोक्ताकथनरक्षेत् । न्यायेनरक्षायाधर्मादिषड्भागप्राप्तिवदरक्षणे अधर्मभागप्राप्तिरपीतिभाव ।

[ पा० ] १ क. ङ घ. छ. झ. ट. न्द्वापरसख्येतु. २ च. छ. करोतिराजशार्दूलपुरेवा.

स त्वं पुरुषशार्दूल मार्गस्व विषयं स्वकम् ॥ दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर ॥ ३२ ॥
एवं चेद्धर्मवृद्धिश्च नृणां चायुर्विवर्धनम् ॥ भविष्यति नरश्रेष्ठ बालस्यास्य च जीवितम् ॥ ३३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

## पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

नारदवचनश्रवणहृष्टेनरामेण लक्ष्मणप्रतिब्राह्मणबालककलेबरस्यतैलद्रोण्यानिधापनेनरक्षणचोदनपूर्वकं स्मरणमात्रसंनिहितपुष्पकविमानारोहणेनक्रमेण प्रतीच्यादिदिक्चतुष्टयेदुष्कृतकारिणोऽन्वेषण ॥ १ ॥ दक्षिणस्यादिशि शैवलशैलोत्तरपार्श्ववर्तिसरस्तीरेऽधोमूर्धतयातपस्यतः कस्यचिदवलोकनम् ॥ २ ॥ तथातप्रतितदीयवर्णस्यतदभिलषिततप.फलस्यचप्रश्नः ॥ ३ ॥

नारदस्य तु तद्वाक्यं श्रुत्वाऽमृतमयं तदा ॥ प्रहर्षमतुलं लेभे लक्ष्मणं चेदमब्रवीत् ॥ १ ॥
गच्छ सौम्य द्विजश्रेष्ठं समाश्वासय सुव्रतम् ॥ बालस्य तु शरीरं तत्तैलद्रोण्यां निधापय ॥ २ ॥
गन्धैश्च परमोदारैस्तैलैश्चापि सुगन्धिभिः ॥ यथा न क्षीयते बालस्तथा सौम्य विधीयताम् ॥ ३ ॥
यथा शरीरो बालस्य गुप्तः सन्क्लिष्टकर्मणः ॥ विपत्तिः परिभेदो वा न भवेच्च तथा कुरु ॥ ४ ॥
एवमादिश्य काकुत्स्थो लक्ष्मणं शुभलक्षणम् ॥ मनसा पुष्पकं दध्यावागच्छेति महायशाः ॥ ५ ॥
इङ्गितं स तु विज्ञाय पुष्पको हेमभूषितः ॥ आजगाम मुहूर्तेन समीपं राघवस्य वै ॥ ६ ॥
सोऽब्रवीत्प्रणतो भूत्वा अयमस्मि नराधिप ॥ वश्यस्तव महाबाहो किंकरः समुपस्थितः ॥ ७ ॥
भाषितं रुचिरं श्रुत्वा पुष्पकस्य नराधिपः ॥ अभिवाद्य महर्षींस्तान्विमानं सोऽध्यरोहत ॥ ८ ॥
धनुर्गृहीत्वा तूणी च खड्गं च रुचिरप्रभम् ॥ निक्षिप्य नगरे वीरौ सौमित्रिभरतावुभौ ॥ ९ ॥
प्रायात्प्रतीचीं हरितं विचिन्वंश्च ततस्ततः ॥ उत्तरामगमच्छ्रीमान्दिशं हिमवता वृताम् ॥ १० ॥
अपश्यमानस्तत्रापि स्वल्पमप्यथ दुष्कृतम् ॥ पूर्वामपि दिशं सर्वामथापश्यन्नराधिपः ॥ ११ ॥
प्रविशुद्धसमाचारामादर्शतलनिर्मलाम् ॥ पुष्पकस्थो महाबाहुस्तदा पश्यन्नराधिपः ॥ १२ ॥
दक्षिणां दिशमाक्रामत्ततो राजर्षिनन्दनः ॥ शैवलस्योत्तरे पार्श्वे ददर्श सुमहत्सरः ॥ १३ ॥

---

कुर्वाणेषु राज्ञो नरकप्राप्तिस्तत्राह—षड्भागस्येति ॥ ३१ ॥ तत्र यत्नं निराकरणयत्न ॥ ३२—३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

नारदस्येत्यादि ॥ १—३ ॥ उक्तार्थस्य विवरणं— यथेत्यादि ॥ बालस्य शरीर इति लिङ्गव्यत्ययः । विपत्तिः स्वरूपनाशः । भेदः सन्धिबन्धादिविनिर्मुक्तिः ॥ ४—५ ॥ स त्विति । पुष्पकाधिष्ठातृचेतन इत्यर्थः ॥ ६—९ ॥ हरित दिश विचिन्वन्निति । शूद्रतपस्विनमिति शेषः ॥ १० ॥ अपश्यमानः अपश्यन् ॥ ११—१२ ॥ शैवलाख्यस्य विन्ध्यसमीपव-

---

स० षड्सुभाग'षड्भाग । षष्ठोभागइत्यर्थ ॥ ३१ ॥ स० यत्नंतन्मार्गणे अनन्तरमारणे ॥३२॥ इतिचतुस्सप्ततितम सर्ग ॥७४॥
स० अमृतमयं मृतजीवनसाधनत्वात् ॥ शि० इदमब्रवीच्च । रामइतिशेष ॥ १ ॥ स० बाल तत्कलेबर ॥ ३ ॥ शि० क्लिष्टकर्मण विनष्टक्रियस्य । मृतस्येत्यर्थ ॥ ४ ॥ स० आगच्छेतितदभिमानिदेवतामुद्दिश्योक्ति ॥ ५ ॥ शि० स धर्मविरोधिविधातक । स राम ॥ ८ ॥ स० सौमित्रिभरतौ लक्ष्मणभरतौ । भरतमातृनामग्रहणेकविमन सचुकोचलज्जितमितिवा भरतद्वारातदूर्ध्वगतिरितिवाभरतेत्युक्ति ॥ ९ ॥ शि० तत्र पश्चिमोत्तरयो ॥ ११ ॥ शि० प्रविशुद्धसमाचारा अतएवआदर्श-

[ पा० ] १ झ ठ. सन्क्लिष्टकर्मण . २ झ.—ठ. महर्षीन्सविमानं. ३ घ. शैलस्यचोत्तरे. च. छ. सशैलस्योत्तरे.

तस्मिन्सरसि तप्यन्तं तापसं सुमहत्तपः ॥ ददर्श राघवः श्रीमाँल्लम्बमानमधोमुखम् ॥ १४ ॥
राघवस्तमुपागम्य तप्यन्तं तप उत्तमम् ॥ उवाच स तदा वाक्यं धन्यस्त्वमसि सुव्रत ॥ १५ ॥
कस्यां योन्यां तपोवृद्ध वर्तसे दृढविक्रम ॥ कौतूहलात्त्वां पृच्छामि रामो दाशरथिर्ह्यहम् ॥ १६ ॥
कोर्थो मनीषितस्तुभ्यं स्वर्गलाभः परोथ वा ॥ वराश्रयो यदर्थं त्वं तपस्यसि सुदुष्करम् ॥
यमाश्रित्य तपस्तप्तं श्रोतुमिच्छामि तापस ॥ १७ ॥
ब्राह्मणो वाऽसि भद्रं ते क्षत्रियो वाऽसि दुर्जयः ॥ वैश्यस्तृतीयवर्णो वा शूद्रो वा सत्यवाग्भव ॥१८॥
इत्येवमुक्तः स नराधिपेन ह्यवाक्छिरा दाशरथाय तस्मै ॥
उवाच जातिं नृपपुङ्गवाय यत्कारणे चैव तपःप्रयत्नः ॥ १९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

## षट्सप्ततितमः सर्गः ॥ ७६ ॥

सशरीरतयादेवत्वप्राप्तयेतपस्यता शंबुकनाम्नाशूद्रेण रामंप्रति स्वीयवर्णविशेषस्य स्वीयतप फलकामनायाश्चनिवेदने रामेण तच्छिरश्छेदनम् ॥ १ ॥ शम्बुकवधहृष्टैरिन्द्रादिभि राममेत्य सप्रशंसन वरवरणचोदनेरामेण तान्प्रतिमृतब्राह्मणबालस्यपुनर्जीवितलाभवरणम् ॥ २ ॥ तै रामंप्रतिशूद्रशिरश्छेदसमकालमेवविप्रबालस्य पुनर्जीवितलाभनिवेदनपूर्वकमगस्त्याश्रमगमनम् ॥ ३ ॥ रामेणाप्यगस्त्याश्रममेत्य तत्प्रणामपूर्वक तदीयातिथ्यस्वीकरणम् ॥ ४ ॥ अगस्त्येनरामप्रशंसनपूर्वकं तस्मै दिव्याभरणसमर्पणेरामेणतप्रतितस्यतदाभरणलाभप्रकारप्रश्न ॥ ५ ॥

तस्य तद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मणः ॥ अवाक्छिरास्तथा भूत्वा वाक्यमेतदुवाच ह ॥ १ ॥
शूद्रयोन्यां प्रसूतोस्मि शम्बुको नाम नामतः ॥ देवत्वं प्रार्थये राम सशरीरो महायशः ॥ २ ॥
न मिथ्याऽहं वदे राम देवलोकजिगीषया ॥ शूद्रं मां विद्धि काकुत्स्थ तप उग्रं समास्थितम् ॥ ३ ॥
भाषतस्तस्य शूद्रस्य खड्गं सुरुचिरप्रभम् ॥ निष्कृष्य कोशाद्विमलं शिरश्चिच्छेद राघवः ॥ ४ ॥
तस्मिञ्शूद्रे हते देवाः सेन्द्राः साग्निपुरोगमाः ॥ साधु साध्विति काकुत्स्थं प्रशशंसुर्मुहुर्मुहुः ॥ ५ ॥
पुष्पवृष्टिर्महत्यासीद्दिव्यानां सुसुगन्धिनाम् ॥ पुष्पाणां वायुमुक्तानां सर्वतः प्रपपात ह ॥ ६ ॥

---

र्तिगिरेः ॥ १३—१६ ॥ तुभ्यं तव । वराश्रयः तपःप्रीतदेवतावरलभ्यो मनीषितोभीष्टोर्थः स्वर्भोगो वा अन्यो वा । यमाश्रित्य ॥ १७ ॥ सत्यवाग्भव सत्य कथयेत्यर्थः ॥ १८—१९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

तस्येत्यादि ॥ १—३ ॥ तस्य शिर इत्यन्वयः ॥ ४—५ ॥ पुष्पवृष्टिः पपातेतिशेषः । पुष्पवृष्टिश्च महतीति पाठे तस्यैव प्रपञ्चनं दिव्यानामित्यादि ।

---

तलवन्निर्मला । पूर्वामितिशेष ॥ स० आदर्शतलनिर्मला तादृशजनोपेता ॥ १२ ॥ स० कस्यायोन्याजातौ ॥ १६ ॥ इति पञ्चसप्ततितम सर्ग. ॥ ७५ ॥

स० अवाक्छिरा तथाभूत लंबमानएव ॥ १ ॥ स० सशरीरएव देवत्वं महादेवत्वं । निर्णये 'इच्छन्माहेश्वरंपदं' इत्युक्ते ॥ २ ॥ ति० मिथ्यावचनाभावेहेतु देवलोकजिगीषया ॥ ३ ॥ शि० विमल मलससर्गराहित्यंयथाभवतितथाचिच्छेद । नचैतत्तपश्चर्यायाविरुद्धत्वेनपरमात्मदर्शनपरमपुरुपार्थप्रापकरामशस्त्रकरणकहननंचविरुद्धं । निषिद्धाचरणस्यनिषिद्धफलकत्वादितिवाच्य । तस्यपरमपुरुषार्थप्रापकसत्यावलंबित्वेनविरोधाभावात् । एतेनशीघ्रपरमात्मप्राप्त्यर्थमेवविरुद्धाचरणमप्यनेनकृतमितिबोध्यं । एतेनतस्यार्तप्रपन्नत्वव्यक्त । तत्प्रणामाद्यकरणेन प्रणामादिकरणेऽतिदयालूरामोनहनिष्यतीतितन्निश्चयोव्यक्त.

[ पा० ] १ झ. ञ. ट. तपस्यन्यैःसुदुश्चरम् २ ङ. च छ. झ. ठ. यत्कारणंचैव. ३ झ.—ट भूतो. ४ ङ.—ट. प्रजातोस्मितपउग्रंसमास्थित.. ५ ङ.—ट. काकुत्स्थशंबुकोनामनामत .

सुप्रीताश्चाब्रुवन्रामं देवाः सत्यपराक्रमम् ॥ सुरकार्यमिदं सौम्य सुकृतं ते महामते ॥ ७ ॥
गृहाण च वरं सौम्य यत्त्वमिच्छस्यरिन्दम ॥ स्वर्गभाङ्ग हि शूद्रोऽयं त्वत्कृते रघुनन्दन ॥ ८ ॥
देवानां भाषितं श्रुत्वा राघवः सुसमाहितः ॥ उवाच प्राञ्जलिर्वाक्यं सहस्राक्षं पुरन्दरम् ॥ ९ ॥
यदि देवाः प्रसन्ना मे द्विजपुत्रः स जीवतु ॥ दिशन्तु वरमेतं मे ईप्सितं परमं मम ॥ १० ॥
ममापचाराद्यातोसौ ब्राह्मणस्यैकपुत्रकः ॥ अप्राप्तकालः कालेन नीतो वैवस्वतक्षयम् ॥ ११ ॥
तं जीवयत भद्रं वो नानृतं कर्तुमर्हथ ॥ द्विजस्य संश्रुतोर्थो मे जीवयिष्यामि ते सुतम् ॥ १२ ॥
राघवस्य तु तद्वाक्यं श्रुत्वा विबुधसत्तमाः ॥ प्रत्यूचू राघवं प्रीता देवाः प्रीतिसमन्वितम् ॥ १३ ॥
निर्वृतो भव काकुत्स्थ सोस्मिन्नहनि बालकः ॥ जीवितं प्राप्तवान्भूयः समेतश्चापि बन्धुभिः ॥ १४ ॥
यस्मिन्मुहूर्ते काकुत्स्थ शूद्रोयं विनिपातितः ॥ तस्मिन्मुहूर्ते बालोसौ जीवेन समयुज्यत ॥ १५ ॥
स्वस्ति प्राप्नुहि भद्रं ते साधु याम नरर्षभ ॥ अगस्त्यस्याश्रमपदं द्रष्टुमिच्छाम राघव ॥ १६ ॥
तस्य दीक्षा समाप्ता हि ब्रह्मर्षेः सुमहाद्युतेः ॥ द्वादशं हि गतं वर्षं जलशय्यां समासतः ॥ १७ ॥
काकुत्स्थ तद्गमिष्यामो मुनिं समभिनन्दितुम् ॥ त्वं चाप्यागच्छ भद्रं ते द्रष्टुं तमृषिसत्तमम् ॥१८॥
स तथेति प्रतिज्ञाय देवानां रघुनन्दनः ॥ आरुरोह विमानं तं पुष्पकं हेमभूषितम् ॥ १९ ॥
ततो देवाः प्रयातास्ते विमानैर्बहुविस्तरैः ॥ रामोप्यनु जगामाशु कुम्भयोनेस्तपोवनम् ॥ २० ॥
दृष्ट्वा तु देवान्संप्राप्तानगस्त्यस्तपसांनिधिः ॥ अर्चयामास धर्मात्मा सर्वांस्तानविशेषतः ॥ २१ ॥
प्रतिगृह्य ततः पूजां संपूज्य च महामुनिम् ॥ जग्मुस्ते त्रिदशा हृष्टा नाकपृष्ठं सहानुगैः ॥ २२ ॥
गतेषु तेषु काकुत्स्थः पुष्पकादवरुह्य च ॥ ततोभिवादयामास ह्यगस्त्यमृषिसत्तमम् ॥ २३ ॥
सोभिवाद्य महात्मानं ज्वलन्तमिव तेजसा ॥ आतिथ्यं परमं प्राप्य निषसाद नराधिपः ॥ २४ ॥
तमुवाच महातेजाः कुम्भयोनिर्महातपाः ॥ स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोसि राघव ॥ २५ ॥
त्वं मे बहुमतो राम गुणैर्बहुभिरुत्तमैः ॥ अतिथिः पूजनीयश्च मम नित्यं हृदि स्थितः ॥ २६ ॥

---

प्रपपातेति वृष्टिरिति शेषः ॥ ६—७ ॥ सुरकार्यमेवाह—स्वर्गभागिति । हि यस्माच्छूद्रः तपसा स्वर्गं नार्हः सोऽसौ त्वत्कृततपोनिवर्तनेन स्वर्गभाक् न कृतः । तस्मादेव देवकार्यं कृतमित्यर्थः ॥ ८—१० ॥ वैवस्वतक्षयं यमगृहम् ॥ ११ ॥ द्विजस्येति । ते तव सुत जीवयिष्यामीत्ययमर्थो मे मया द्विजस्य सश्रुतः प्रतिज्ञातः ॥ १२—१३ ॥ अस्मिन्नहनि त्वया शूद्रशिरश्छेददिवसे । वरं विनापि स्वयमेव जीवित प्राप्तवानित्यर्थः ॥ १४—१५ ॥ यामेति लोडुत्तमबहुवचनम् ॥ १६—२० ॥ अविशेषतः अपक्षपातत इत्यर्थः ॥ २१—२५ ॥ हृदि स्थित इति । परब्रह्मभू-

---

॥ ४ ॥ ति० एतवरमेदिशन्तु । एतद्वरदानमेवममेप्सितमित्यन्वयान्नममेतिपुनरुक्त ॥ स० मेप्रसन्ना मद्विषयेप्रसादसुमुखायदि तर्हिवरमेतंदिशन्तुभवन्त । इदमेवममपरममीप्सितमित्यन्वय । ब्राह्मणपुत्रविषयविषादातिशयेनोक्त्याविक्यवा । "परिहासप्रलापादिष्वनर्थावाक्" इत्यादे ॥ १० ॥ स० ममापचारात् अविचाररूपात् ॥ ११ ॥ स० भद्रंवइत्यनेनस्वतेजसैवतेषा तदुज्जीवनक्षमतासूचयति ॥ १२ ॥ स० विबुधसत्तमा ज्ञानिश्रेयांस । देवा ॥ १३ ॥ ति० उक्तमेवार्थमहश्शब्दविवक्षितार्थप्रदर्शनेनप्रकाशयन्ति—यस्मिन्मुहूर्तइति ॥ १५ ॥ स० देवानापुरत प्रतिज्ञाय ॥ १९ ॥ स० अनु देवाननु ॥ २० ॥ स० गतेषुतेषुदेवेषु । अनेनव्योमयानानामनवनिसबन्धात्किंचित्त्वराधिकेतिवा साक्षात्सुरसपर्या पर्यायतोभवत्वहक्षत्रधर्मेरत इतिपश्चाद्गच्छामीतिमन्दंमन्दंजगामरामइतिवासूच्यते ॥ २३ ॥ ति० उत्तमैर्बहुभिर्गुणैस्त्वबहुमत मान्य । अतिथित्वाच्चपूज्य. । विशेषतश्चत्वंमेपूज्यइत्याह—ममहृदिस्थितइति । अन्तर्यामिस्वरूपत्वादितिभाव । अतएवसदास्मरणविषयतयापिहृदिस्थित ।

[ पा० ] १ ङ—ट. राम सत्यपराक्रम , २ झ ञ. ट. वरमेतन्मे ३ ग. घ. च. छ. झ. ञ. ट. ममापचाराद्बालोसौ.

सुरा हि कथयन्ति त्वामागतं शूद्रघातिनम् ॥ ब्राह्मणस्य तु धर्मेण त्वया जीवापितः सुतः ॥ २७ ॥
उष्यतां चेह रजनीं सकाशे मम राघव ॥ प्रभाते पुष्पकेण त्वं गन्तासि पुरमेव हि ॥ २८ ॥
त्वं हि नारायणः श्रीमांस्त्वयि सर्वं प्रतिष्ठितम् ॥ त्वं प्रभुः सर्वभूतानां पुरुषस्त्वं सनातनः ॥२९॥
इदं चाभरणं सौम्य निर्मितं विश्वकर्मणा ॥ दिव्यं दिव्येन वपुषा दीप्यमानं स्वतेजसा ॥
प्रतिगृह्णीष्व काकुत्स्थ मत्प्रियं कुरु राघव ॥ ३० ॥
दत्तस्य हि पुनर्दाने सुमहत्फलमुच्यते ॥ भरणे हि भवाञ्शक्तः सेन्द्राणां मरुतामपि ॥ ३१ ॥
त्वं हि शक्तस्तारयितुं सेन्द्रानपि दिवौकसः ॥ [1]तस्मात्प्रदास्ये विधिवत्तत्प्रतीच्छ नराधिप ॥
दिव्यमाभरणं चित्रं प्रदीप्तमिव भास्करम् ॥ ३२ ॥
अथोवाच महात्मानमिक्ष्वाकूणां महारथः ॥ रामो मतिमतां श्रेष्ठः क्षत्रधर्ममनुस्मरन् ॥ ३३ ॥
प्रतिग्रहोऽयं भगवन्ब्राह्मणस्याविगर्हितः ॥ [ क्षत्रियेण कथं विप्र प्रतिग्राह्यं भवेत्ततः ॥ ३४ ॥
प्रतिग्रहोहि विप्रेन्द्र क्षत्रियाणां सुगर्हितः ॥ ] गृह्णीयां क्षत्रियोऽहं वै कथं ब्राह्मणपुङ्गव ॥
ब्राह्मणेन विशेषेण दत्तं तद्वक्तुमर्हसि ॥ ३५ ॥
एवमुक्तस्तु रामेण प्रत्युवाच महानृषिः ॥ ३६ ॥
आसन्कृतयुगे राम ब्रह्मभूते पुरायुगे ॥ अपार्थिवाः प्रजाः सर्वाः सुराणां तु शतक्रतुः ॥ ३७ ॥
ताः प्रजा देवदेवेशं राजार्थं समुपाद्रवन् ॥ ३८ ॥
सुराणां स्थापितो राजा त्वया देव शतक्रतुः ॥ [3]प्रयच्छ नो हि लोकेश पार्थिवं नरपुङ्गवम् ॥ ३९ ॥
[4]तस्मै पूजां प्रयुञ्जाना धूतपापाश्चरेमहि ॥ न वसामो विना राज्ञा एष नो निश्चयः परः ॥ ४० ॥

तत्वान्मम हृदये सदा स्थित इत्यर्थः ॥ २६ ॥ जीवापितः जीवनं प्रापितः । पुगार्षः । अत्र त्वयेत्यत्र येति गायत्र्यक्षरं त्रयोविंशमित्याहुः ॥ २७—३० ॥ दत्तस्येति ॥ पारितोपिकतया येन केनापि दत्तस्योत्तमवस्तुनः स्वयमनुपभुज्यान्यस्मै दानं सुमहाफलमुच्यते । भरण इति । मरुतां देवानामपि । भरणे रक्षणे । अपिशब्दात् किमुतैतद्भरण इत्यर्थः । भरणेपि भवान् शक्तः फलानां महतामपीति च पाठः ॥ ३१—

अतोध्येयत्वाच्चत्वंपूज्य । यद्वाहृदिस्थित तेनस्वस्वरूपत्वमप्युक्त ॥ २६ ॥ **ति०** नारायण । नारस्यजीवसमूहस्यस्थान । तदेवाह—त्वयिसर्वमिति । सनातन पुरुष ब्रह्म ॥२९॥ **ति०** दिव्येनवपुषासनिवेशेनदिव्यं । अतएवस्वतेजसादीप्यमान । आभरणं वलयरूपं ॥ ननुक्षत्रियस्यब्राह्मणाद्द्रव्यग्रहणमनुचितं । तत्राह—मत्प्रियकुर्विति । मत्प्रियार्थमनुचितमपिकार्यमित्याशय । किंच राजत्वाद्रिक्तहस्ततयात्वद्दर्शनस्यममानुचिततयाएतद्ग्रहणेममप्रियंभवति । तवचदोषोनास्ति । भक्तदत्ताङ्गीकारेइवहविषोङ्गीकार इवचदोषाभावाच्चेत्याशय । **स०** यद्यपीदमाभरणंदिव्यं । तथापिदिव्येनस्वतेजसा स्वरूपतेजस्विना । तववपुषादीप्यमानंप्रतिगृह्णीष्व । ' सभूषणसर्वविभूषणाना " इतिसंग्रहोक्ते ॥ ३० ॥ **ति०** ननुतवकिंप्रियंतत्राह—दत्तस्येति । येनकेनापिदत्तस्यानुपभुज्यपुन स्वेष्टदेवादिभ्योदानेमहत्फलमुच्यते । ' लब्धावष्टगुणंपुण्यं ' इतिस्मरणात् । एवंचमहाफलहेतुत्वात्तुभ्यतद्दानंममप्रियमितिभाव ॥ ३१ ॥ **ति०** नन्वस्माएवतर्हिंदेयंतत्राह—भरणेहीति । आभरणस्यधारणेभवानेवशक्तोयोग्य । किंचमहतामपिफलानाब्रह्मलोकादीनादानेचत्वंशक्तइतिशेष । ननुमत्तोपिमहद्भ्यइन्द्रादिभ्योदीयतांतत्राह—त्वंहीति । तेत्वत्तोनमहान्तइतिभाव ॥ ३२ ॥ **स०** अविगर्हित ननिन्दित । लोकरीतिमनुकुर्वन्नाविष्कुर्वंश्चतस्यानन्यथार्थतामाह—क्षत्रियेणेति ॥ ३४ ॥ **स०** क्षत्रियस्यक्षत्रियात्प्रहणंनिन्दित । ततोपिब्राह्मणेभ्योनविहितंग्रहणमित्याह—ब्राह्मणेनेति ॥ ३५ ॥ **स०** ब्रह्मभूते ब्राह्मणप्रचुरे । अपार्थिवा राजवर्जिता । सुराणा तन्मात्रस्य । शतक्रतूराजासीत् ॥ ३७ ॥ **स०** देवदेवेशंब्रह्माण ॥ ३८ ॥ अस्मासु भूलोकगतासु ॥ ३९ ॥ यस्मैराज्ञे । ' नाविष्णु पृथिवीपति ' इत्यादे । चरेमहि चराम. ॥ ४० ॥

[ **पा०** ] १ च. तस्माद्दास्यामिविधिवत्. २ अयंश्लोक. च. छ. झ. ञ. पाठेषुदृश्यते. ३ च. छ. झ. ञ. प्रयच्छास्मासुलोकेश. ४ च. छ. झ. ञ. यस्मैपूजा.

प्रजानां वचनं श्रुत्वा निश्चयित्वाऽर्थमुत्तमम् ॥ ततो ब्रह्मा सुरश्रेष्ठो लोकपालान्सवासवान् ॥
समाहूयाब्रवीत्सर्वांस्तेजोभागान्प्रयच्छत ॥ ४१ ॥
ततो ददुर्लोकपालाः सर्वे भागान्स्वतेजसः ॥ अक्षुपच्च ततो ब्रह्मा यतो जातः क्षुपो नृपः ॥ ४२ ॥
तं ब्रह्मा लोकपालानां सहांशैः समयोजयत् ॥ ततो ददौ नृपं तासां प्रजानामीश्वरं क्षुपम् ॥ ४३ ॥
तत्रैन्द्रेण च भागेन महीमाज्ञापयन्नृपः ॥ वारुणेन तु भागेन वपुः पुष्यति राघव ॥ ४४ ॥
कौबेरेण तु भागेन वित्तमासां ददौ तदा ॥ यस्तु याम्योऽभवद्भागस्तेन शास्ति स्म स प्रजाः ॥४५॥
तत्रैन्द्रेण नरश्रेष्ठ भागेन रघुनन्दन ॥ प्रतिगृह्णीष्व भद्रं ते तारणार्थं मम प्रभो ॥ ४६ ॥
तस्य तद्वचनं श्रुत्वा ऋषेः परमधार्मिकम् ॥ तद्रामः प्रतिजग्राह मुनेराभरणं वरम् ॥ ४७ ॥
प्रतिगृह्य ततो रामस्तदाभरणमुत्तमम् ॥ आगमं तस्य दीप्तस्य प्रष्टुमेवोपचक्रमे ॥ ४८ ॥
अत्यद्भुतमिदं दिव्यं वपुषा युक्तमुत्तमम् ॥ कथं भगवता प्राप्तं कुतो वा केन वा हृतम् ॥ ४९ ॥
कुतूहलितया ब्रह्मन्पृच्छामि त्वां महायशः ॥ आश्चर्याणां बहूनां हि निधिः परमको भवान् ॥५०॥
एवं ब्रुवति काकुत्स्थे मुनिर्वाक्यमथाब्रवीत् ॥ शृणु राम यथावृत्तं पुरा त्रेतायुगे युगे ॥ ५१ ॥
रमणीयप्रदेशेऽस्मिन्वने यद्दृष्टवानहम् ॥ आश्चर्यं मे महाबाहो दानमाश्रित्य केवलम् ॥ ५२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

## सप्तसप्ततितमः सर्गः ॥ ७७ ॥

अगस्त्येनरामंप्रतिस्वस्यदिव्याभरणलाभप्रकारकथनायश्वेतराजोपाख्यानकथनारम्भः ॥ १ ॥

पुरा त्रेतायुगे राम ह्यरण्यं बहुविस्तरम् ॥ समन्ताद्योजनशतं निर्मृगं पक्षिवर्जितम् ॥ १ ॥
तस्मिन्निर्मानुषेऽरण्ये कुर्वाणस्तप उत्तमम् ॥ अहमाक्रमितुं सौम्य तदरण्यमुपागमम् ॥ २ ॥

---

४७॥ आगमं प्राप्तिमार्गं ॥४८॥ अत्यद्भुतमिति ॥ कुतो वा केन वा निमित्तेन केन पुरुषेण वा हृतमुपहृतम्। दत्तमिति यावत् ॥ ४९—५० ॥ त्रेतायुगे त्रेतायुगाख्ये ॥ ५१—५२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

पुरेत्यादि ॥ पुरा त्रेतायुगे पूर्वचतुर्युगवर्तित्रेतायुगे। बहुविस्तरं बहुविस्तारम्। पक्षिवर्जितमिति । अरण्यं अभूदिति शेष. ॥ १ ॥ तस्मिन्नरण्ये तदेकदेशे। तपः

---

स० तेजोभागान् नृपरूपसपादने भागान् अशान् ॥ ४१ ॥ स० अक्षुपत् क्षुतंकृतवान्। ततोजात क्षुप ॥ ४२ ॥ तक्षुपं लोकपालानासमाशैः तद्योग्याशैः। समयोजयत् मेलयामास। तत योजनानन्तरं। तासाप्रजाना। ईश्वरस्वामिनं तत्त्वेनक्षुपंददौ ॥ ४३ ॥ स० तत्तद्भागकार्यमीरयति—तत्रैन्द्रेणेति। महीमाज्ञापयन्नृपउच्यते। वपु पुष्यति पोषयति ॥ ४४ ॥ स० आसा प्रजाभ्य। याम्य यमीय ॥ ४५ ॥ ऐन्द्रेणभागेन। देवताधिपतित्वेनाहुत्यादिवदेवैतद्ग्रहणयोग्यत्वमनेनसूचयति ॥ मुख्यंनिमित्तमाह—तारणार्थमिति ॥ ४६ ॥ ति० इदंदिव्यअत्यद्भुतं अत्याश्चर्यमित्यर्थ। अद्भुतंयथाभवतितथा। वपुषा सविवेशविशेषेणयुक्त ॥ स० विज्ञोप्यज्ञवत्पृच्छति—कथमिति। कुत कस्माद्देशात्। केनसाधनेन ॥ ४९ ॥ इतिषट्सप्ततितमः सर्गः ॥ ७६ ॥

[पा०] १ च छ झ ञ. समाशैः. २ ञ वित्तपाभा. ३ ग. ङ. च. छ. ञ. मुनेस्तस्यमहात्मन. ४ च. छ. त्रेतायुगेगते ५ च. छ. द्वापरेसमनुप्राप्तेवने. ६ क. घ. ङ. च ज. झ. ञ. बभूवबहुविस्तर. ख. बभूवभुविविस्तर. ७ क. घ.—ट. तदारण्य.

तस्य रूपमरण्यस्य निर्देष्टुं न शशाक ह ॥ फलमूलैः सुखास्वादैर्बहुरूपैश्च पादपैः ॥ ३ ॥
तस्यारण्यस्य मध्ये तु सरो योजनमायतम् ॥ हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ॥ ४ ॥
पद्मोत्पलसमाकीर्णं समतिक्रान्तशैवलम् ॥ तदाश्चर्यमिवात्यर्थं सुखास्वादमनुत्तमम् ॥ ५ ॥
अरजस्कं तथाऽक्षोभ्यं श्रीमत्पक्षिगणायुतम् ॥ समीपे तस्य सरसो महदद्भुतमाश्रमम् ॥ ६ ॥
पुराणं पुण्यमत्यर्थं तपस्विजनवर्जितम् ॥ तत्राहमवसं रात्रिं नैदाघीं पुरुषर्षभ ॥ ७ ॥
प्रभाते काल्यमुत्थाय सरस्तदुपचक्रमे ॥ अथापश्यं शवं तत्र सुपुष्टमजरं क्वचित् ॥ ८ ॥
पङ्क्तिभेदेन पुष्टाङ्गं समाश्रितसरोवरम् ॥ तिष्ठन्तं परया लक्ष्म्या तस्मिंस्तोयाशये नृप ॥ ९ ॥
तमर्थं चिन्तयानोऽहं मुहूर्तं तत्र राघव ॥ उषितोस्मि सरस्तीरे किं न्विदं स्यादिति प्रभो ॥ १० ॥
अथापश्यं मुहूर्तेन दिव्यमद्भुतदर्शनम् ॥ विमानं परमोदारं हंसयुक्तं मनोजवम् ॥ ११ ॥
अत्यर्थं स्वर्गिणं तत्र विमाने रघुनन्दन ॥ उपास्तेऽप्सरसां वीर सहस्रं दिव्यभूषणम् ॥ १२ ॥
गायन्ति दिव्यगेयानि वादयन्ति तथाऽपराः ॥ क्ष्वेलयन्ति तथा चान्या नृत्यन्ति च तथाऽपराः ॥१३॥
अपराश्चन्द्ररश्म्याभैर्हेमदण्डैश्च चामरैः ॥ दोधूयुर्वदनं तस्य पुण्डरीकनिभेक्षणम् ॥ १४ ॥
ततः सिंहासनं त्यक्त्वा मेरुकूटमिवांशुमान् ॥ पश्यतो मे तदा राम विमानादवरुह्य च ॥
तं शवं भक्षयामास स स्वर्गी रघुनन्दन ॥ १५ ॥
तथा भुक्त्वा यथाकामं मांसं बहुसुपीवरम् ॥ अवतीर्य सरः स्वर्गी संस्प्रष्टुमुपचक्रमे ॥ १६ ॥
उपस्पृश्य यथान्यायं स स्वर्गी रघुपुङ्गव ॥ आरोढुमुपचक्राम विमानवरमुत्तमम् ॥ १७ ॥
तमहं देवसंकाशमारोहन्तमुदीक्ष्य वै ॥ अथाहमब्रवं वाक्यं स्वर्गिणं पुरुषर्षभ ॥ १८ ॥
को भवान्देवसंकाश आहारश्च विगर्हितः ॥ त्वयेदं भुज्यते सौम्य किमर्थं वक्तुमर्हसि ॥ १९ ॥
कस्य स्यादीदृशो भाव आहारो देवसंमतः ॥ आश्चर्यं वर्तते सौम्य श्रोतुमिच्छामि तत्त्वतः ॥ २० ॥

कुर्वाणोऽहं तदरण्यमाक्रमितुं आसमन्तात्पर्यटनं कृत्वा कार्त्स्न्येनावगन्तु । उपागमं उपगतवान् ॥ २ ॥ निर्देष्टु परिज्ञातु । न शशाक नाशक्नुवं । तस्य रूपमिति । सुखावहंरूपमित्यर्थः ॥ ३–४ ॥ सुखास्वादं । सुखावहप्राशनपानीयवदित्यर्थः ॥ ५ ॥ अरजस्कं निर्मलम् ॥ ६ ॥ नैदाघीं निदाघसंबन्धिनीम् ॥ ७ ॥ काले साधु काल्यं, प्रातःकालकर्तव्यं स्नानकर्म उद्दिश्य उत्थाय उपचक्रमे । अपरोक्षेपि लिडार्षः ॥ ८ ॥ लक्ष्म्या उपेतमिति शेषः ॥ ९–१५ ॥ संस्प्रष्टु शुद्धाचमनं कर्तुमित्यर्थः ॥ १६–१७ ॥ अहमित्यस्यक्रियाभेदाद्भेदः ॥ १८—१९ ॥ आहारः ईदृशो भावश्च देवसमतः । अतः आश्चर्यमेव वर्तते ।

स० बहुरूपै अनेकाकारै सुवर्णमयैर्वा । 'बहुरूपंचपुरटं' इतिकाठकभाष्याभिहिताभिधानात् । काननै अवान्तरै ॥ ३ ॥ ति० तमर्थंचिन्तयान किमिदंस्यादितिचिन्तयान । शव सन्नपिनिर्मलोलक्ष्मीयुक्तश्चेतिकिमिदमितिस्वदृष्टार्थविषयकचिन्ताकुर्वाणइत्यर्थ ॥ १० ॥ ति० अत्यर्थ अतिरूपवन्तं ॥ १२ ॥ ति० चन्द्ररश्म्याभै चामरैरितिशेष ॥ स० चन्द्ररश्म्याभैः तदाभकेशयुतै । दोधूयु । यङ्लुगन्तोयं ॥ १४ ॥ ति० पश्यतोमे समक्षमितिशेष ॥ स० तं मयादृष्टं ॥ १५ ॥ स० अहंदेवसकाशमितिपदमेक । अहदेवोरुद्र । तत्सकाशं । तेननाहमितिपुनरुक्तं । तमारोहन्तमुदीक्ष्यतमेवाहमब्रवमित्यन्वय. । अतस्तमितिचनाधिकं ॥१८॥ स० आहार शवरूप' । इदंशवकलेबर ॥१९॥ ति० हेदेवसमत देवतुल्य । ईदृशआहार ईदृशोभावश्चकस्यस्यात् नकस्यापि । अतोहेतोस्त्वयीदंद्वयं दृष्ट्वा आश्चर्य मेवर्तते । तस्मात्सर्वंतत्वत श्रोतुमिच्छामि ॥ स० अदेवसमत

[ पा० ] १ क. ङ.—ट. बहुरूपैश्चकाननै. २ क. जनसेवितं. ३ ङ.—ट. मरज क्वचित्. ४ ङ. च. छ. झ. ञ. ट. विष्ठितोस्मि. ५ घ.—ट. मुहूर्तात्तु. ६ क. घ.—छ. झ. ञ. मृदङ्गवीणापणवान्नृत्यन्तिचतथापरा.. ७ झ. ठ. हैमदण्डैर्महाधनैः. ८ ङ. च. छ. झ. ञ. पुण्डरीकनिभेक्षणा'. क. ख. घ..ट. पुण्डरीकदलेक्षणा , ९ क.—घ. अहंतदाऽब्रवंवाक्यं. ङ. विमान. १० ङ.—ट. तमेवपुरुषर्षभ. ११ झ.—ट. देवसमत.

नाहमौपयिकं मन्ये तव भक्ष्यमिदं शवम् ॥ २१ ॥

इत्येवमुक्तः स नरेन्द्र नाकी कौतूहलात्सूनृतया गिरा च ॥

श्रुत्वा च वाक्यं मम सर्वमेतत्सर्वं तथा चाकथयन्ममेति ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

## अष्टसप्ततितमः सर्गः ॥ ७८ ॥

अगस्त्येनरामप्रतिश्वेतराजोपाख्यानकथनपूर्वकस्वस्याभरणलाभप्रकारकथनम् ॥ १ ॥

श्रुत्वा तु भाषितं वाक्यं मम राम शुभाक्षरम् ॥ प्राञ्जलिः प्रत्युवाचेदं स स्वर्गी रघुनन्दन ॥ १ ॥
शृणु ब्रह्मन्पुरा वृत्तं ममैतत्सुखदुःखयोः ॥ अनतिक्रमणीयं हि यथा पृच्छसि मां द्विज ॥ २ ॥
पुरा वैदर्भको राजा पिता मम महायशाः ॥ सुदेव इति विख्यातस्त्रिषु लोकेषु वीर्यवान् ॥ ३ ॥
तस्य पुत्रद्वयं ब्रह्मन्द्वाभ्यां स्त्रीभ्यामजायत ॥ अहं श्वेत इति ख्यातो यवीयान्सुरथोऽभवत् ॥ ४ ॥
ततः पितरि स्वर्याते पौरा मामभ्यषेचयन् ॥ तत्राहं कृतवान्राज्यं धर्म्यं च सुसमाहितः ॥ ५ ॥
एवं वर्षसहस्राणि समातीतानि सुव्रत ॥ राज्यं कारयतो ब्रह्मन्प्रजा धर्मेण रक्षतः ॥ ६ ॥
सोहं निमित्ते कस्मिंश्चिद्विज्ञातायुर्द्विजोत्तम ॥ कालधर्मं हृदि न्यस्य ततो वनमुपागमम् ॥ ७ ॥
सोहं वनमिदं दुर्गं मृगपक्षिविवर्जितम् ॥ तपश्चर्तुं प्रविष्टोस्मि समीपे सरसः शुभे ॥ ८ ॥
भ्रातरं सुरथं राज्ये ह्यभिषिच्य महीपतिम् ॥ इदं सरः समासाद्य तपस्तप्तं मया चिरम् ॥ ९ ॥
सोहं वर्षसहस्राणि तपस्त्रीणि महावने ॥ तप्त्वा सुदुष्करं प्राप्तो ब्रह्मलोकमनुत्तमम् ॥ १० ॥
तस्य मे स्वर्गभूतस्य क्षुत्पिपासे द्विजोत्तम ॥ बाधेते परमोदार ततोहं व्यथितेन्द्रियः ॥
गत्वा त्रिभुवनश्रेष्ठं पितामहमुवाच ह ॥ ११ ॥
भगवन्ब्रह्मलोकोऽयं क्षुत्पिपासाविवर्जितः ॥ कस्यायं कर्मणः पाकः क्षुत्पिपासानुगो ह्यहम् ॥ १२ ॥

---

अतस्तत्सर्वं तत्त्वतः श्रोतुमिच्छामि ॥ २०—२२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने सप्तसप्ततितमः सर्गः ॥ ७७ ॥

सुखदुःखयोरिति देवत्वशवभुक्तरूपयोः कारणमिति शेषः ॥ २—४ ॥ धर्म्यं धर्मादनपेतं यथा भवति तथा ॥ ५—६ ॥ निमित्ते कस्मिंश्चिदिति । केनचिन्निमित्तेन लक्षणेन सामुद्रिकादिना । विज्ञातायुः निश्चितायुरवधिः । कालधर्मं हृदि न्यस्य । स्वस्य मरणकालं ज्ञात्वेत्यर्थः ॥ ७—१० ॥ स्वर्गभूतस्य स्वर्ग

---

राक्षसयोग्य ॥ २० ॥ औपयिक योग्यं ॥ २१ ॥ स० नरेन्द्रनाकी नाक्यभिन्नोराजा । ममसर्ववाक्यंश्रुत्वासूनृतयागिरामम कौतूहलादकथयत् । सर्वमत्पृष्टं ॥ २२ ॥ इतिसप्तसप्ततितम सर्ग. ॥ ७७ ॥

स० सुखदु खयोः दिव्यदेहशवाशननिमित्तकयो कारणमितिशेष. । अनतिक्रमणीयं अत्येतुमशक्यं एतत्कारणंयथापृच्छसितथाआनुपूर्व्येण । पुरावृत्तंवक्ष्यामि शृण्वित्यन्वय ॥ २ ॥ स० द्वाभ्यास्त्रीभ्या एकस्यामेकएकस्यामेकइतिपुत्रद्वयमजायत । तन्नामनीआह—अहमिति । अहंज्येष्ठ । सुरथइत्यपर यवीयान् ॥ ४ ॥ स० कारयत कुर्वतः ॥ ६ ॥ स० कस्मिंश्चिन्निमित्ते मरणसूचकचिह्ने । प्राप्तेसति ॥ ७ ॥ ति० त्रिभुवनश्रेष्ठ तृतीयेभुवने भूख पदापेक्षयातृतीयब्रह्मलोके । श्रेष्ठंहिरण्यगर्भमित्यर्थ. ।

[ पा० ] १ क—घ. च. छ. ज. दुरतिक्रमणीयंहि. २ क.—ट. समतीतानि. ३ झ. ञ. ट. तस्येमे. ४ ङ. च. छ. झ. ट. परमेवीर.

आहारः कश्च मे देव तन्मे ब्रूहि पितामह ॥ १३ ॥
पितामहस्तु मामाह तवाहारः सुदेवज ॥ स्वादूनि स्वानि मांसानि तानि भक्षय नित्यशः ॥ १४ ॥
स्वशरीरं त्वया पुष्टं कुर्वता तप उत्तमम् ॥ अनुप्तं रोहते श्वेत न कदाचिन्महामते ॥ १५ ॥
तृप्तिर्न तेऽस्ति सूक्ष्माऽपि वने सत्त्वनिषेविते ॥ पुरा तु भिक्षमाणाय भिक्षा वै यतये नृप ॥
नहि दत्ता त्वयेन्द्राभ यस्मादतिथयेऽपि वै ॥ १६ ॥
दत्तं न तेऽस्ति सूक्ष्मोपि तप एव निषेवसे ॥ तेन स्वर्गगतो वत्स बाध्यसे क्षुत्पिपासया ॥ १७ ॥
स त्वं सुपुष्टमाहारैः स्वशरीरमनुत्तमम् ॥ भक्षयित्वाऽमृतरसं तेन तृप्तिर्भविष्यति ॥ १८ ॥
यदा तु तद्वनं श्वेत अगस्त्यः सुमहानृषिः ॥ आगमिष्यति दुर्धर्षस्तदा कृच्छ्राद्विमोक्ष्यसे ॥ १९ ॥
स हि तारयितुं सौम्य शक्तः सुरगणानपि ॥ किं पुनस्त्वां महाबाहो क्षुत्पिपासावशं गतम् ॥२०॥
सोहं भगवतः श्रुत्वा देवदेवस्य निश्चयम् ॥ आहारं गर्हितं कुर्मि स्वशरीरं द्विजोत्तम ॥ २१ ॥
बहून्वर्षगणान्ब्रह्मन्भुज्यमानमिदं मया ॥ क्षयं नाभ्येति ब्रह्मर्षे तृप्तिश्चापि ममोत्तमा ॥ २२ ॥
तस्य मे कृच्छ्रभूतस्य कृच्छ्रादस्माद्विमोचय ॥ अन्येषां न गतिर्ह्यत्र कुम्भयोनिमृते द्विजम् ॥ २३ ॥
इदमाभरणं सौम्य तारणार्थं द्विजोत्तम ॥ प्रतिगृह्णीष्व भद्रं ते प्रसादं कर्तुमर्हसि ॥ २४ ॥
इदं तावत्सुवर्णं च धनं वस्त्राणि च द्विज ॥ भक्ष्यं भोज्यं च ब्रह्मर्षे ददात्याभरणानि च ॥ २५ ॥
सर्वान्कामान्प्रयच्छामि भोगांश्च मुनिपुङ्गव ॥ तारणे भगवन्मह्यं प्रसादं कर्तुमर्हसि ॥ २६ ॥
तस्याहं स्वर्गिणो वाक्यं श्रुत्वा दुःखसमन्वितम् ॥ तारणायोपजग्राह तदाभरणमुत्तमम् ॥ २७ ॥
मया प्रतिगृहीते तु तस्मिन्नाभरणे शुभे ॥ मानुषः पूर्वको देहो राजर्षेर्विननाश ह ॥ २८ ॥

---

प्राप्तस्य । स्वर्गोत्र ब्रह्मलोकः ॥११—१४॥ स्वशरीरं त्वया पुष्टमिति ॥ मुख्यं तपो न कृत स्वशरीरमेव केवलं त्वया पुष्टम् । अनुप्तमकृतावापं बीज न रोहते हि ॥ १५—१६ ॥ सूक्ष्मोपि । लिङ्गव्यत्ययः आर्षः । सूक्ष्ममपि अत्यल्पमपि । ते दत्तं दानं नास्ति देवपित्रतिथिषु । किन्तु तप एव केवलं निषेवसे निषेवितवानित्यर्थः । "मनसश्चेन्द्रियाणां च ह्येकाग्र्यं परमं तपः" इत्युक्तम् । दृढसमाधिरूपं तप एव कृतमित्यर्थः ॥ १७—२० ॥ कुर्मि करोमि ॥ २१—२२ ॥ कृच्छ्रभूतस्य कृच्छ्रं प्राप्तस्य । विमोचय मामिति शेषः ॥ २३—२७ ॥ तस्मिन् तारणनिमित्ते । विननाश

---

यद्वात्रिष्वपिभुवनेषुश्रेष्ठमित्यर्थं ॥ **शि०** पितामहमुवाच । अहमितिशेष । हर्षातिशयात्पारोक्ष्यं ॥ ११ ॥ **स०** स्वानि स्वसंबन्धीनि ॥ १४ ॥ **स०** स्वशरीरंपुष्टंकुर्वताउत्तमंतपस्तप्तं । नद्विजातिभोजनंकारितं । तेनत्वंतत्क्षुत्पिपासानुग । मयाभवत्स्वन्नमदत्तं तथापिममतदलाभ कुतइत्यतआह—अनुप्तमिति । अनुप्तंभूमौ । त्वयानदत्तमिति नदत्तमु+यमीश्वरेणेतिभावः ॥१५॥ **स०** तेतवदत्तंदानं अन्नादेर्नास्ति । तर्हिमहापदप्राप्ति कथमित्यतआह—सूक्ष्मइति । सूक्ष्म स्वर्गमात्रप्रद अन्नाद्यघटक कश्चन धर्मोवर्तते । सकिंरूपइत्यतआह—तपएवेति । यद्वासूक्ष्म. एकत्रदृष्टिरितित्वंतपएवनिषेवसे । तेननिमित्तेन । क्षुत्पिपासया क्षुधासहिताचसापिपासाचतया ॥ १७ ॥ **स०** सत्वंबाध्यसइतिपूर्वेणान्वेति । स्वशरीरंभक्षयित्वास्थितस्यवृत्ति क्षुदादिनिवृत्ति. । वृत्तिर्वर्तनंस्थितिरितियावत् । भविष्यति इतिवा ॥ १८ ॥ **स०** श्वेतअगस्त्यइत्यत्रसवर्णदीर्घाभावआर्षे । विवक्षाभावाद्वास-न्ध्यभाव. ॥ १९ ॥ **ति०** ननुकथमहमगस्त्यइतित्वयाऽवगतस्तत्राह—अन्येषामिति । कुभयोनिंद्विजमृतेभयात्अन्येषाअत्र निर्मानुषेगतिर्नास्ति । अतस्त्वमगस्त्यइतिनिर्णीतमितिभाव ॥ २३ ॥ **ति०** नन्वेतद्दानस्यानन्नदानत्वात्कथंपुनरेतद्दानेपिदु.-खमोक्षस्तत्राह—इदमिति । अस्यसर्वदत्वादेतद्दानंसर्वदानात्मकमितिभाव ॥ २५ ॥ **ति०** तस्माद्यदिदंप्रयच्छामितत्सर्वान्कामान्सर्वभोगाश्चप्रयच्छामीतिजानीहि । तारणे तारणनिमित्त ॥ २६ ॥ **स०** आभरणं माला । 'श्वेतदत्तातथामालामगस्त्यादापराघव' इत्युक्ते ॥ २७ ॥ **ति०** मयाप्रतिगृहीते । तत्सुकृतबलादितिशेषः ॥ २८ ॥

[ पा० ] १ ङ. च. छ. झ. ट. वृत्तिर्भविष्यति. २ क.—ञ. ददाम्याभरणानिच.

प्रनष्टे तु शरीरेऽसौ राजर्षिः परया मुदा ॥ तृप्तः प्रमुदितो राजा जगाम त्रिदिवं सुखम् ॥ २९ ॥
तेनेदं शक्रतुल्येन दिव्यमाभरणं मम ॥ तस्मिन्निमित्ते काकुत्स्थ दत्तमद्भुतदर्शनम् ॥ ३० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अष्टसप्ततितमः सर्गः ॥ ७८ ॥

---

## एकोनाशीतितमः सर्गः ॥ ७९ ॥

अगस्त्येनरामचोदनयातंप्रतिश्वेतराजतपोवनस्यनिर्जनत्वकारणकथनारभ ॥ १ ॥ मनुपुत्रेणेक्ष्वाकुणापित्राज्ञयायागाद्युपायै. पुत्रशतकोत्पादनं ॥ २ ॥ तत्रान्तिमपुत्रस्यभाविदण्डविज्ञानेनदण्डइतिनामकरणपूर्वकतत्प्रतिविन्ध्यशैवलमध्येराज्यकरणनियोजनम् ॥ ३ ॥ दण्डेनराज्ञाशुक्राचार्यस्यपौरोहित्येवरणपूर्वकंराज्यकरणम् ॥ ४ ॥

तदद्भुततमं वाक्यं श्रुत्वाऽगस्त्यस्य राघवः ॥ गौरवाद्विस्मयाच्चैव पुनः प्रष्टुं प्रचक्रमे ॥ १ ॥
भगवंस्तद्वनं घोरं तपस्तप्यति यत्र सः ॥ श्वेतो वैदर्भको राजा कथं स्यादमृगद्विजम् ॥ २ ॥
तद्वनं स कथं राजा शून्यं मनुजवर्जितम् ॥ तपश्चर्तुं प्रविष्टः स श्रोतुमिच्छामि तत्त्वतः ॥ ३ ॥
रामस्य वचनं श्रुत्वा कौतूहलसमन्वितम् ॥ वाक्यं परमतेजस्वी वक्तुमेवोपचक्रमे ॥ ४ ॥
पुरा कृतयुगे राम मनुर्दण्डधरः प्रभुः ॥ तस्य पुत्रो महानासीदिक्ष्वाकुः कुलनन्दनः ॥ ५ ॥
तं पुत्रं पूर्वकं राज्ये निक्षिप्य भुवि दुर्जयम् ॥ पृथिव्यां राजवंशानां भव कर्तेत्युवाच ह ॥ ६
तथेति च प्रतिज्ञातं पितुः पुत्रेण राघव ॥ ततः परमसंतुष्टो मनुः पुत्रमुवाच ह ॥ ७ ॥
प्रीतोस्मि परमोदार त्वं कर्तासि न संशयः ॥ दण्डेन च प्रजा रक्ष मा च दण्डमकारणे ॥ ८ ॥
अपराधिषु यो दण्डः पात्यते मानवेषु वै ॥ स दण्डो विधिवन्मुक्तः स्वर्गं नयति पार्थिवम् ॥ ९ ॥
तस्माद्दण्डे महाबाहो यत्नवान्भव पुत्रक ॥ धर्मो हि परमो लोके कुर्वतस्ते भविष्यति ॥ १० ॥
इति तं बहु संदिश्य मनुः पुत्रं समाधिना ॥ जगाम त्रिदिवं हृष्टो ब्रह्मलोकं सनातनम् ॥ ११ ॥
प्रयाते त्रिदिवं तस्मिन्निक्ष्वाकुरमितप्रभः ॥ जनयिष्ये कथं पुत्रानिति चिन्तापरोऽभवत् ॥ १२ ॥
कर्मभिर्बहुरूपैश्च तैस्तैर्मनुसुतः सुतान् ॥ जनयामास धर्मात्मा शतं देवसुतोपमान् ॥ १३ ॥
तेषामवरजस्तात सर्वेषां रघुनन्दन ॥ मूढश्चाकृतविद्यश्च न शुश्रूषति पूर्वजान् ॥ १४ ॥

---

ह पुनर्भक्षणाय नोपस्थितमित्यर्थः ॥ २८—३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने अष्टसप्ततितमः सर्गः ॥ ७८ ॥

तदित्यादि ॥ गौरवात् सर्वज्ञः सर्ववक्तेति संभावनया ॥ १ ॥ स यत्र तप्यति तद्वनं कथममृगद्विजम् ॥ २ ॥ कथं तादृशं तद्वनं तपश्चर्तुं चरितुं प्रविष्टः ॥ ३—४ ॥ दण्डधरो राजा प्रभुः वर्णाश्रमविभागतद्धर्मप्रवर्तनाधिकृतः ॥ ५—७ ॥ दण्डेन चेति । क्षत्रियसहजधर्मभूतेन । अकारणे दण्डं मा पातयेतिशेषः ॥ ८ ॥ ननु कथं परपीडावहो दण्डो युक्तः कर्तुमिति तत्राह—अपराधिष्वित्यादि ॥ विधिवद्यथाशास्त्र यथापराधं । मुक्तः प्रवर्तित इत्यर्थः ॥ ९—१० ॥ समाधिना योगेन ॥ ११—१२ ॥ बहुरूपैरिति । यज्ञदानतपोलक्षणैरित्यर्थः ॥ १३ ॥ पूर्वजाः ज्येष्ठाः

---

स० तस्मिन्निमित्ते स्वतारणकारणेन ॥ ३० ॥ इत्यष्टसप्ततितम सर्ग ॥ ७८ ॥

शि० विस्मयात् विस्मयंप्राप्य । अगस्त्यस्य गौरवात् गुरुत्वात् सर्वज्ञत्वादित्यर्थः । भूयःप्रष्टुंप्रचक्रमे ॥ १ ॥ ति० कुर्वतः दण्डमितिशेष. ॥ शि० कुर्वत यत्नमितिशेष' ॥ १० ॥ ति० समाधिना प्रणवानुसन्धानसहितचित्तैकाग्र्येण ॥ ११ ॥ स० शुश्रूषति शुश्रूषते सेवते ॥ १४ ॥

नाम तस्य च दण्डेति पिता चक्रेऽल्पमेधसः ॥ अवश्यं दण्डपतनं शरीरेऽस्य भविष्यति ॥ १५ ॥
अपश्यमानस्तं देशं घोरं पुत्रस्य राघव ॥ विन्ध्यशैवलयोर्मध्ये राज्यं प्रादादरिन्दम ॥ १६ ॥
स दण्डस्तत्र राजाऽभूद्रम्ये पर्वतरोधसि ॥ पुरं चाप्रतिमं राम न्यवेशयदनुत्तमम् ॥ १७ ॥
पुरस्य चाकरोन्नाम मधुमन्तमिति प्रभो ॥ पुरोहितं तूशनसं वरयामास सुव्रतम् ॥ १८ ॥
एवं स राजा तद्राज्यमकरोत्सपुरोहितः ॥ प्रहृष्टमनुजाकीर्णं देवराज्यं यथा वृषा ॥ १९ ॥
ततः स राजा मनुजेन्द्रपुत्रः सार्धं च तेनोशनसा तदानीम् ॥
चकार राज्यं सुमहन्महात्मा शक्रो दिवीवोशनसा समेतः ॥ २० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

---

## अशीतितमः सर्गः ॥ ८० ॥

कदाचनवसन्तेशुक्रासंनिधाने तदाश्रमंगतेनदण्डनाम्नाराज्ञाअरजानामिकायास्तत्कन्याया बलात्कारेणोपभोगः ॥ १ ॥

एतदाख्याय रामाय महर्षिः कुम्भसंभवः ॥ अस्यामेवापरं वाक्यं कथायामुपचक्रमे ॥ १ ॥
ततः स दण्डः काकुत्स्थ बहुवर्षगणायुतम् ॥ अकरोत्तत्र दान्तात्मा राज्यं निहतकण्टकम् ॥ २ ॥
अथ काले तु कस्मिंश्चिद्राजा भार्गवमाश्रमम् ॥ रमणीयमुपाक्रामच्चैत्रे मासि मनोहरे ॥ ३ ॥
तत्र भार्गवकन्यां स रूपेणाप्रतिमां भुवि ॥ विचरन्तीं वनोद्देशे दण्डोपश्यदनुत्तमाम् ॥ ४ ॥
स दृष्ट्वा तां सुदुर्मेधा अनङ्गशरपीडितः ॥ अभिगम्य सुसंविग्नां कन्यां वचनमब्रवीत् ॥ ५ ॥
कुतस्त्वमसि सुश्रोणि कस्य वाऽसि सुता शुभे ॥ पीडितोऽहमनङ्गेन गच्छामि त्वां शुभानने ॥ ६ ॥
तस्य चैवंब्रुवाणस्य मोहोन्मत्तस्य कामिनः ॥ भार्गवी प्रत्युवाचेदं वचः सानुनयं नृपम् ॥ ७ ॥
भार्गवस्य सुतां विद्धि देवस्याक्लिष्टकर्मणः ॥ अरजांनाम राजेन्द्र ज्येष्ठामाश्रमवासिनीम् ॥ ८ ॥

---

॥ १४ ॥ दण्ड इत्याख्याकरणं पितुः सर्वज्ञत्वात् अन्वर्थतावसायपूर्वकमित्याह—अवश्यमित्यादि ॥१५—॥ १६ ॥ पर्वतरोधसि पर्वततटप्रान्ते ॥ १७—२० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकोनाशीतितमः सर्गः ॥ ७९ ॥

एतदित्यादि ॥ अस्यामेवापरं वाक्यमिति । प्रोक्तदानकथायामेव संबद्धं अपरं तत्पृष्टोत्तरभूतं कथान्तरमित्यर्थः ॥ १—२ ॥ भार्गवः शुक्रः तस्यायमपि भार्गवः तं ॥ ३ ॥ मोहेन काममोहेन । उन्मत्तः उचितानुचितवचनकर्मविवेकरहितः ॥ ७—

---

ति० घोरदेशमपश्यमान. दण्डराज्ययोग्यघोरदेशमपश्यन्नित्यर्थ ॥ १६ ॥ स० अप्रतिम असदृश । अनुत्तम उत्तमरहित ॥ १७ ॥ ति० शक्रोत्रबलि ॥ स० समेत समेनइत । उशनसाशुक्रेणय सम.तेन दानवदेवगुरुत्वेनसाम्यं तेनबृहस्पतिनाइत युक्तइत्यर्थ । अन्यथाऽनानुरूप्यापत्ते । पुनरुक्तिश्चानेवंकरणेदुरुत्तरास्यात् । अशक्र शक्रभिन्न तत्सदृशोबलि । तत्पदस्थत्वात्शक्रो बलिर्वा । शक्र शक्तिमान्बलिरितिवा । 'शक्र शक्तेमहेन्द्रेच' इतिविश्व ॥ शि० राजाउशनसासार्धंराज्यंचकार । तत्रदृष्टान्त' दिविउशनसासमेत शक्रइव । अभूतोपमैषा ॥ २० ॥ इत्येकोनाशीतितम.सर्ग ॥ ७९ ॥

ति० दान्तात्मा जितेन्द्रिय ॥ २ ॥ स० भार्गव भार्गवोस्यास्तिस्वामित्वेन तमाश्रमं ॥ ३ ॥ स० तत्रवनोद्देशेइत्यन्वयः ॥ ४ ॥ स० सुसविग्न केयं किंवदति किंभवेदित्यन्तर्भीतियुत ॥ ५ ॥ स० कुत कारणादत्रासि । शि० कुत त्वमागतेति शेष ॥ ६ ॥ स० देवस्य त्वयागुरुत्वेनस्वीकारात्सुत्यस्य । ज्येष्ठा देवयानीत ॥ ८ ॥

[ पा० ] १ क. घ.—ट. देवराज्ञोयथादिवि. २ झ. ठ. सुसविग्नः. ३ क. ग.—ट. पृच्छामित्वां.

मा मां स्पृश बलाद्राजन्कन्या पितृवशा ह्यहम् ॥ गुरुः पिता मे राजेन्द्र त्वं च शिष्यो महात्मनः ॥
व्यसनं सुमहत्क्रुद्धः स ते दद्यान्महातपाः ॥ ९ ॥
यदि वाऽन्यन्मया कार्यं धर्मदृष्टेन सत्पथा ॥ वरयस्व नृपश्रेष्ठ पितरं मे महाद्युतिम् ॥ १० ॥
अन्यथा तु फलं तुभ्यं भवेद्धोराभिसंहितम् ॥ क्रोधेन हि पिता मेऽसौ त्रैलोक्यमपि निर्दहेत् ॥११॥
दास्यते चानवद्याङ्ग तव मां याचितः पिता ॥ १२ ॥
एवंब्रुवाणामरजां दण्डः कामवशं गतः ॥ प्रत्युवाच मदोन्मत्तः शिरस्याधाय चाञ्जलिम् ॥ १३ ॥
प्रसादं कुरु सुश्रोणि न कालं क्षेप्तुमर्हसि ॥ त्वत्कृते हि मम प्राणा विदीर्यन्ते वरानने ॥ १४ ॥
त्वां प्राप्य मे वधो वा स्याच्छापो वा यदि दारुणः ॥ भक्तं भजस्व मां भीरु भजमानं सुविह्वलम् ॥१५॥
एवमुक्त्वा तु तां कन्यां दोर्भ्यां गृह्य बलाद्बली ॥ विस्फुरन्तीं यथाकामं मैथुनायोपचक्रमे ॥१६॥
एतमर्थं महाघोरं दण्डः कृत्वा सुदारुणम् ॥ नगरं प्रययावाशु मधुमन्तमनुत्तमम् ॥ १७ ॥
अरजापि रुदन्ती सा आश्रमस्याविदूरतः ॥ प्रतीक्षन्ती सुसंत्रस्ता पितरं देवसन्निभम् ॥ १८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अशीतितमः सर्गः ॥ ८० ॥

---

## एकाशीतितमः सर्गः ॥ ८१ ॥

शिष्यमुखावगतदण्डराजकृतस्वसुताधर्षणवृत्तान्तेनशुक्रेण तत्प्रति तदीयदेशेनसह भस्मीभवनशापदानपूर्वकं निजतनयां प्रति तत्रैवाश्रमेतपश्चरणचोदना ॥ १ ॥ एवमगस्त्येन रामंप्रति श्वेतोपाख्यानकथनम् ॥ २ ॥

स मुहूर्तादुपश्रुत्य देवर्षिरमितप्रभः ॥ स्वमाश्रमं शिष्यवृतः क्षुधार्तः सन्न्यवर्तत ॥ १ ॥
सोपश्यदरजां दीनां रजसा समभिप्लुताम् ॥ ज्योत्स्नामिवारुणग्रस्तां प्रत्यूषे न विराजतीम् ॥ २ ॥
तस्य रोषः समभवत्क्षुधार्तस्य विशेषतः ॥ निर्दहन्निव लोकांस्त्रीञ्शिष्यांश्चैतदुवाच ह ॥ ३ ॥
पश्यध्वं विपरीतस्य दण्डस्याविजितात्मनः ॥ विपत्तिं घोरसंकाशां क्रुद्धामग्निशिखामिव ॥ ४ ॥

---

९ ॥ यदि वा अन्यत् कामभोगानुकूलम् ॥ १० ॥ घोराभिसहित महानर्थसंबद्धम् ॥ ११–१३ ॥ काल क्षेप्तु बिलम्ब कर्तुमित्यर्थः ॥ १४ ॥ त्वां प्राप्य मे यदि बधादिर्भवेत् । भवतु नामेति शेष. ॥ १५॥ विस्फुरन्तीं विलुठन्तीम् ॥ १६ ॥ प्रतीक्षन्ती पितरमास्त इति शेष. । प्रतीक्षन्ते स्म सत्रस्तेति पाठः ॥१८॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने अशीतितमः सर्गः ॥ ८० ॥

---

उपश्रुत्येति । शिष्यमुखाद्वृत्तान्तमिति शेषः ॥ १ ॥ प्रत्यूषे प्रातःकाले ॥२—३॥ विपरीतस्य विपरीतानुष्ठानस्य । विपत्ति विनाशं मत्क्रोधतो जायमानामिति शेष । अग्निशिखामिव स्थितां क्रुद्धामरजां । क्रुद्धादग्निशिखामिवेति पाठे क्रुद्धान्मत्तो जायमानामग्निशिखासदृशी विपत्ति विनाश पश्यध्वं ॥ ४ ॥ अस्य

---

स० पितामेतेगुरु. । एवचममज्येष्ठभ्रातृसमइत्यसूचि ॥ ९ ॥ स० यदिवाअन्यत्सुरतादिकंकार्यंतर्हिंधर्मदृष्टेन सत्पथा वेदविहितविवाहमार्गेण । समासान्तविधेरनित्यत्वान्नाकारप्रत्यय ॥ १० ॥ स० मदोन्मत्त सत्कार्यविषये । शिरस्याधायेत्यनेनस्वाभिप्रेतसाधनेऽङ्गस्मृतिमानितिसूच्यते ॥ १३ ॥ स० अनर्थं परत्रनिष्फल । महाघोर प्रजाना । सुदारुणं देशनैर्जन्यदत्वेनेतिविवेक. ॥ १७ ॥ स० सुसत्रस्ता ममामन पूर्वकेकर्मणिरोषपराभूत.पिताकिंकरिष्यतीतिभीता । ति० अरजापीतिआकारान्तनाम । पितरं प्रतीक्षतेस्म ॥ १८ ॥ इत्यशीतितम सर्ग ॥ ८० ॥

[ पा० ] १ ख.—ल. तमनर्थंमहा. २ ड. च. छ. झ. म. प्रतीक्षते. ३ ड. झ. ञ. ट. मिवग्रहग्रस्तां.

क्षयोऽस्य दुर्मतेः प्राप्तः सानुगस्य दुरात्मनः ॥ यः प्रदीप्तां हुताशस्य शिखां वै स्प्रष्टुमिच्छति ॥ ५ ॥
यस्मात्स कृतवान्पापमीदृशं घोरसंहितम् ॥ तस्मात्प्राप्स्यति दुर्मेधाः फलं पापस्य कर्मणः ॥ ६ ॥
सप्तरात्रेण राजाऽसौ सभृत्यबलवाहनः ॥ पापकर्मसमाचारो वधं प्राप्स्यति दुर्मतिः ॥ ७ ॥
समन्ताद्योजनशतं विषयं चास्य दुर्मतेः ॥ धक्ष्यते पांसुवर्षेण महता पाकशासनः ॥ ८ ॥
सर्वसत्त्वानि यानीह स्थावराणि चराणि च ॥ महता पांसुवर्षेण विलयं सर्वतोऽगमन् ॥ ९ ॥
दण्डस्य विषयो यावत्तावत्सर्वसमुच्छ्रयम् ॥ पांसुवर्षमिवालक्ष्यं सप्तरात्रं भविष्यति ॥ १० ॥
इत्युक्त्वा क्रोधताम्राक्षस्तदाश्रमनिवासिनम् ॥ जनं जनपदान्तेषु स्थीयतामिति चाब्रवीत् ॥ ११ ॥
श्रुत्वा तूशनसो वाक्यं सोऽश्रमावसथो जनः ॥ निष्क्रान्तो विषयात्तस्मात्स्थानं चक्रेऽथ बाह्यतः ॥१२॥
स तथोक्त्वा मुनिजनमरजामिदमब्रवीत् ॥ इहैव वस दुर्मेधे आश्रमे सुसमाहिता ॥ १३ ॥
इदं योजनपर्यन्तं सरः सुरुचिरप्रभम् ॥ अरजे विज्वरा भुङ्क्ष्व कालश्चात्र प्रतीक्ष्यताम् ॥ १४ ॥
त्वत्समीपे च ये सत्त्वा वासमेष्यन्ति तां निशाम् ॥ अवध्याः पांसुवर्षेण ते भविष्यन्ति नित्यदा ॥१५॥
श्रुत्वा नियोगं ब्रह्मर्षेः साऽरजा भार्गवी तदा ॥ तथेति पितरं प्राह भार्गवं भृशदुःखिता ॥
इत्युक्त्वा भार्गवो वासमन्यत्र समकारयत् ॥ १६ ॥
तच्च राज्यं नरेन्द्रस्य सभृत्यबलवाहनम् ॥ सप्ताहाद्भस्मसाद्भूतं यथोक्तं ब्रह्मवादिना ॥ १७ ॥
तस्यासौ दण्डविषयो विन्ध्यशैवलयोर्नृप ॥ शप्तो ब्रह्मर्षिणा तेन वैधर्म्ये सहिते कृते ॥ १८ ॥
ततः प्रभृति काकुत्स्थ दण्डकारण्यमुच्यते ॥ तपस्विनः स्थिता ह्यत्र जनस्थानमतोऽभवत् ॥ १९ ॥
एतत्ते सर्वमाख्यातं यन्मां पृच्छसि राघव ॥ सन्ध्यामुपासितुं वीर समयो ह्यतिवर्तते ॥ २० ॥

प्राप्तः क्षय इति योजना ॥ ५ ॥ शिखां वै स्प्रष्टुमिच्छतीत्युक्तान्यापदेशार्थं विशदयति—यस्मादित्यादि॥ ईदृशमिति। मत्पुत्रीधर्षणरूपमित्यर्थः॥६–७॥ धक्ष्यत इति। नाशयिष्यतीत्यर्थः ॥ ८ ॥ विलयमगमन् गमिष्यन्तीति यावत् ॥ ९ ॥ सर्वसमुच्छ्रयं चराचरप्राणिमात्रमित्यर्थः। उच्छ्रयत्यस्मादित्युच्छ्रयं। पांसुवर्षमिवालक्ष्यमिति। पांसुवर्षं प्रसिद्धप्रलयपांसुमहावर्षमिव प्राप्य सप्तरात्रं सप्तरात्रपर्यन्तमलक्ष्यं भविष्यतीति। विनष्टपुरपौरजानपदकं। भविष्यतीत्यर्थः ॥ १० ॥ तदाश्रमवासिनमिति। स्वाश्रमनिवासिनमित्यर्थः। जनपदान्तेषु दण्डजनपदसीमान्तदेशेष्वित्यर्थः ॥ ११ ॥ सोऽश्रमावसथ इति छान्दसः सन्धिः। एतावता कथं तदमृगद्विजमित्यस्योत्तरं निवृत्तं ॥ १२ ॥ निर्जनं वनं कथं तपसे प्रविष्ट इत्यस्योत्तरमाह—स तथेत्यादि ॥ तव समलत्वात् इहैव वसेति। वासप्रयोजनमाह—सुसमाहितेति। शोभनसमाधिमतीत्यर्थः। समाध्यनुष्ठानस्यापि निमित्तमाह—दुर्मेध इति। यस्माद्धर्षणसहिष्णुर्दुर्बुद्धिरसि, ततः तादृशमलमोचनार्थं समाधिमती सती वसेत्यर्थः ॥ १३ ॥ कथं वस्तुं शक्यं पांसुवर्षे इत्यत्राह—इदं योजनपर्यन्तमित्यादि ॥ १४ ॥ सत्त्वाः पक्ष्यादयः। एवं चोशनसोऽनुग्रहेण सरःप्रदेशस्य सुखावहत्वात्सुखवासलाभाच्चात्र तपसे प्रविष्ट इति भावः ॥ १५–१७ ॥ तस्यासौ। व्यत्ययात् षष्ठी। सोऽसावित्यर्थः। सहिते पूर्णधर्मपूर्णसौख्यसहित इत्यर्थः। कृते कृतयुगे ॥१८

स० यः मन्त्रमण्यादिरहितः ॥ ५ ॥ स० महतापांसुवर्षेणधक्ष्यते तत्कोपानलसहकृतत्वात्पांसूनांधक्षणशक्तताज्ञेया ॥ ८ ॥ शि० सप्तरात्रंपांसुवर्षं प्राप्येतिशेषः। अलक्ष्यंभविष्यति ॥१०॥ स० हेदुर्मेधे दुर्मेधः। दुर्मेधे नि(दु)र्यज्ञादिमत्याश्रमे इतिवा। असिचूबुद्धिपर्यायमेधाशब्दस्येतिज्ञायते। स्त्रीलिङ्गप्रजाशब्दसाहचर्यात्। यज्ञवाच्ययंपुंलिङ्गः। 'मेधःक्रतौस्त्रियांमेधामतौ'इतिविश्वः। एतत्पापपरिहारार्थंसमाहिता इहाश्रमेवस ॥ १३ ॥ ति० विन्ध्यशैवलयोःमध्ये इतिशेषः। सहिते पूर्णधर्मपूर्णसौख्यसहिते। कृते कृतयुगे। तेनराज्ञा वैधर्म्ये धर्मवैपरीत्येकृतेसति। योब्रह्मर्षिणाशप्तः सोऽसावित्यन्वयः ॥ १८ ॥

एते महर्षयः सर्वे पूर्णकुम्भाः समन्ततः ॥ कृतोदका नरव्याघ्र आदित्यं पर्युपासते ॥ २१ ॥
स तैर्ब्राह्मणमभ्यस्तं सहितैर्ब्रह्मवित्तमैः ॥ रविरस्तं गतो राम गच्छोदकमुपस्पृश ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

---

## द्वाशीतितमः सर्गः ॥ ८२ ॥

शम्बुकशूद्रवधानन्तरंरात्रावगस्त्याश्रमेस्थितवतारामेण प्रभातेतदभिवादनपूर्वकं पुष्पकारोहणेनपुनरयोध्यांप्रत्यागमनम् ॥ १ ॥

ऋषेर्वचनमाज्ञाय रामः सन्ध्यामुपासितुम् ॥ उपाक्रमत्सरः पुण्यमप्सरोगणसेवितम् ॥ १ ॥
तत्रोदकमुपस्पृश्य सन्ध्यामन्वास्य पश्चिमाम् ॥ आश्रमं प्राविशद्रामः कुम्भयोनेर्महात्मनः ॥ २ ॥
तस्यागस्त्यो बहुगुणं कन्दमूलं तथौषधिम् ॥ शाल्यादीनि पवित्राणि भोजनार्थमकल्पयत् ॥ ३ ॥
स भुक्तवान्नरश्रेष्ठस्तदन्नममृतोपमम् ॥ प्रीतश्च परितुष्टश्च तां रात्रिं समुपाविशत् ॥ ४ ॥
प्रभाते काल्यमुत्थाय कृत्वाऽऽह्निकमरिन्दमः ॥ ऋषिं समुपचक्राम गमनाय रघूत्तमः ॥ ५ ॥
अभिवाद्याब्रवीद्रामो महर्षिं कुम्भसंभवम् ॥ आपृच्छे स्वां पुरीं गन्तुं मामनुज्ञातुमर्हसि ॥ ६ ॥
धन्योस्म्यनुगृहीतोस्मि दर्शनेन महात्मनः ॥ द्रष्टुं चैवागमिष्यामि पावनार्थमिहात्मनः ॥ ७ ॥
तथा वदति काकुत्स्थे वाक्यमद्भुतदर्शनम् ॥ उवाच परमप्रीतो धर्मनेत्रस्तपोधनः ॥ ८ ॥
अत्यद्भुतमिदं वाक्यं तव राम शुभाक्षरम् ॥ पावनः सर्वभूतानां त्वमेव रघुनन्दन ॥ ९ ॥
मुहूर्तमपि राम त्वां ये च पश्यन्ति केचन ॥ पाविताः स्वर्गभूताश्च पूज्यास्ते सर्वदैवतैः ॥ १० ॥

---

—२० ॥ कृतोदकाः कृतस्नानादिकर्माण इत्यर्थः ॥ २१ ॥ स रविः ब्रह्मवित्तमैः तीर्थसमीपे सहितैः संगतैस्तैर्ऋषिभिरभ्यस्त ब्राह्मण ब्रह्ममन्त्रतत्प्रयोगाभ्यासलक्षणपूजां प्राप्येति शेषः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकाशीतितमः सर्गः ॥ ८१ ॥

---

कन्दमूलं कन्दरूपं मूलं कन्दमूलं । तथा ओषधिं दिव्यौषधिरूप । जरापलितघ्नमित्यर्थः । एवं बहुगुणप्रयोजनार्थं ददौ । भोजनार्थं तु शालिपवित्राणि पवित्रशाल्यन्नानीत्यर्थः ॥ ३–४ ॥ काल्यं प्रातःकालिकमाह्निक कृत्वा । गमनायेति । गमनानुज्ञार्थमित्यर्थः ॥ ५—६ ॥ आगमिष्यामीति । अतःपरमपि यदाऽऽकाङ्क्षा तदा आत्मनः पावनार्थमागमिष्यामीत्युक्तवानित्यर्थः ॥ ७ ॥ परमप्रीत इति । एव विनयवचनादिति शेषः । धर्मनेत्र इति । धर्मो नेत्रं ज्ञानसाधनं यस्य स तथा ॥ ८–९ ॥ स्वर्गभूताः स्वर्ग

---

**स०** पूर्णकुंभा पूर्णाणि कुंभा. ॥ २१ ॥ इत्येकाशीतितम सर्ग ॥ ८१ ॥

**स०** कन्दमूलं कन्दरूपंमूलमितिनागोजिभट्ट । कन्द सूरणादि 'कन्दस्तुसूरणेसस्यमूलेजलधरेपिच। इतिविश्व. । मूलं शिफा । 'मूलमाद्येशिफायास्यात्' इतिविश्व । औषधं आरोग्यदममृतवल्ल्यादि । शाल्यादीनि दिव्यतण्डुलादीनि ॥ ३ ॥ **स०** आपृच्छे 'आङिनुप्रच्छयो.' इत्यात्मनेपदता । स्वाश्रम स्वनगरीं । सीतालोकरीत्यात्यक्तवतोरामस्यविरक्तिवशात्स्वाश्रममित्युक्तिरितिमन्तव्यं ॥ ६ ॥ **स०** पावनार्थं लोकदृष्ट्यामम आन्तरङ्गिकतयातव पावनार्थमित्यर्थ ॥ ७ ॥ **स०** यद्वा धर्मनेत्र. धर्मकरणेनियामक ( प्रज्ञानेत्रशब्दवदयंशब्द । **ति०** तथावदति आत्मन.पावनार्थगमिष्यामीतिवदति ॥ ८ ॥ **ति०** अथागस्त्योरामस्यब्रह्मत्वहृदिकृत्वाह—पावन.सर्वभूतानामिति । सर्वजीवाना 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धि परमामता'इतिशास्त्रादित्याशय. । त्वमेवेत्यनेनसर्वपावनस्यभगवद्रूपत्वमेवोक्त । **स०** पावनार्थमित्युक्तस्यबाह्यार्थमसहमानोऽगस्त्यआह—पावनइति । 'पवित्राणापवित्रंय.' इतिमानादितिभावः ॥ ९ ॥ **ति०** ये त्वा पश्यन्ति चित्तेस्वतत्त्वब्रह्मतयापश्यन्तीत्यर्थ. । तवलीलावतारमूर्तिंविष्णुत्वेनचक्षुषाच

[ **पा०** ] १ ङ. झ. ञ. ट. अपाक्रामत्. २ झ. ठ. तथौषधं. ३ झ. ठ. स्वाश्रमं.

ये च त्वां घोरचक्षुर्भिः पश्यन्ति प्राणिनो भुवि ॥ हतास्ते यमदण्डेन सद्यो निरयगामिनः ॥११॥
ईदृशस्त्वं रघुश्रेष्ठ पावनः सर्वदेहिनाम् ॥ भुवि त्वां कथयन्तोपि सिद्धिमेष्यन्ति राघव ॥ १२ ॥
गच्छ चारिष्टमव्यग्रः पन्थानमकुतोभयम् ॥ प्रशाधि राज्यं धर्मेण गतिर्हि जगतो भवान् ॥ १३ ॥
एवमुक्तस्तु मुनिना प्राञ्जलिः प्रग्रहो नृपः ॥ अभ्यवादयत प्राज्ञस्तमृषिं पुण्यशालिनम् ॥ १४ ॥
अभिवाद्य मुनिश्रेष्ठं तांश्च सर्वांस्तपोधनान् ॥ अध्यारोहत्तदव्यग्रः पुष्पकं हेमभूषितम् ॥ १५ ॥
तं प्रयान्तं मुनिगणा ह्याशीर्वादैः समन्ततः ॥ अपूजयन्महेन्द्राभं सहस्राक्षमिवामराः ॥ १६ ॥
खस्थः स ददृशे रामः पुष्पके हेमभूषिते ॥ शशी मेघसमीपस्थो यथा जलधरागमे ॥ १७ ॥
ततोर्धदिवसे प्राप्ते पूज्यमानस्ततस्ततः ॥ अयोध्यां प्राप्य काकुत्स्थो मध्यकक्ष्यामवारुहत् ॥ १८ ॥
ततो विसृज्य रुचिरं पुष्पकं कामगामि तत् ॥ विसर्जयित्वा गच्छेति स्वस्ति तेऽस्त्विति च प्रभुः ॥१९॥
कक्ष्यान्तरविनिक्षिप्तं द्वाःस्थं रामोऽब्रवीद्वचः ॥ लक्ष्मणं भरतं चैव गत्वा तौ लघुविक्रमौ ॥
ममागमनमाख्याय शब्दापयत मा चिरम् ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

## त्र्यशीतितमः सर्गः ॥ ८३ ॥

रामेण भरतलक्ष्मणौप्रति राजसूयचिकीर्षानिवेदनम् ॥ १ ॥ भरतेन तंप्रति तस्यसर्वराजपराजयपूर्वकत्वोक्त्यापृथ्वीविनाशहेतुत्वकथनेन तत्करणस्यानौचित्यकथनम् ॥ २ ॥ रामेण तम्प्रति तद्वचनप्रशंसनपूर्वकं राजसूयनिवर्तनोक्तिः ॥ ३ ॥

तच्छ्रुत्वा भाषितं तस्य रामस्याक्लिष्टकर्मणः ॥ द्वाःस्थः कुमारावाहूय राघवाय न्यवेदयत् ॥ १ ॥

---

प्राप्ताः ॥ १०—११ ॥ सिद्धिं परमं तत्त्वं ब्रह्मभावं ॥ १२ ॥ अरिष्टं सुखं ॥ १३ ॥ प्रग्रहः उद्यतबाहुः ॥ १४–१७ ॥ मध्यकक्ष्यां प्राप्येति शेषः ॥१८–१९॥ विनिक्षिप्तं योजितमिति यावत् । शब्दापयतेति प्रुगार्षः । आत्मानं शब्दवन्तं कुर्वित्यर्थः । बहुवचनमार्षं ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

कृतमिति ॥ द्विजकार्यं यथा प्रतिज्ञातं तत्तथा

---

येपश्यन्तीत्यर्थ । तेपाविता त्वद्ध्यानदर्शनाभ्यामितिशेष । अतएव देहान्तेस्वर्गभूता परमपरवास्वर्गप्राप्ता । अतएव तेसर्वदैवतै'पूज्या । एवमनुकूलदृष्टे फलमुक्त । **स०** स्वर्गभूता सुखरूपिण 'तत्सुखस्य पदास्पद'इत्युक्ते स्वर्गस्येवसुखस्यापिस्वर्गशब्दवाच्यत्वसभवात् ॥ १० ॥ **ति०** अथप्रतिकूलदृष्टेस्तदाह—येचेति । प्राणिनइतिसामान्योक्त्यातप प्रभावेसत्यपित्वद्वेषमात्रेणनिरयगामितोक्ता । परतु तेसद्य तत्क्षणमेवनिरयगामिनइत्युक्त्याकालान्तरे तादृशरीत्यापित्वद्दर्शनमाहात्म्यात्तेस्वर्गमोक्षभाजइति सूचितं ॥ ११ ॥ **ति०** ईदृशसकलकल्याणगुण परमानन्दरूप सर्वदेहिनापावनोसि । अत कालान्तरेत्वांकथयन्त त्वच्चरितंकीर्तयन्तोपिसिद्धिं ब्रह्मतारूपा चित्तशुद्धिद्वाराएष्यन्ति प्राप्स्यन्ति । किंचईदृशस्त्वपावन इतरविलक्षणपावनत्वस्वभाव । ते त्वारागद्वेषकामभयान्यतमैरपिकथयन्तस्तेसिद्धि मोक्षं गमिष्यन्ति । **स०** हेरघुश्रेष्ठत्वमीदृश सर्वदेहिनापावन । दृष्टेदानीविमुच्यन्ते । पारोक्ष्येत्वांकथयन्त त्वच्चरितमुदाहरन्तोजना सिद्धिं मुक्तिं एष्यन्ति ॥ १२ ॥ **ति०** गति स्वर्गातिगदिसाधन ॥ १३ ॥ **ति०** विसृज्य स्वरहितंकृत्वा । विसर्जयित्वा कुबेरवहेत्यनुज्ञाय । **स०** अविसृज्य । कुबेरमितिशेष । अत्यक्त्वातिष्ठ । तेस्वस्त्यस्तु । गच्छेतिविसर्जयित्वेत्यन्वय । अतोनान्यतरवैयर्थ्यं नक्लिष्टकल्पनाच । पुष्पकशब्द.पुंस्यपि । तेनकामगामिनमितियुज्यते ॥ १९ ॥ **ति०** शब्दापयत दौवारिकेणाह्वयस्वेत्यर्थ । बहुवचनमार्षं । आह्वानंकारयेत्यर्थ । **स०** शब्दापयत प्रातिस्विकोक्तिरियमिति बहुवचनोपपत्ति. ॥ २० ॥ इतिद्व्यशीतितम.सर्ग ॥ ८२ ॥

**स०** कुमारौ लक्ष्मणभरतौ । द्वास्स्थ । तन्मध्येमुख्यइत्येकवचनमितिवाऽवसेयम् ॥ १ ॥

[ पा० ] १ ख. ग घ. चक्षुर्भिरीक्षन्तेप्राणिनो. २ ङ. च. झ. ञ. ट. सत्त्वशीलिन. ३ ङ. झ. ञ. ट. मध्यकक्ष्यामवातरत्. च. छ. विमानादवरोहत. ४ झ. ठ. कामगामिन.

दृष्ट्वा तु राघवः प्राप्तौ प्रियौ भरतलक्ष्मणौ ॥ परिष्वज्य तदा रामो वाक्यमेतदुवाच ह ॥ २ ॥
कृतं मया यथा तथ्यं द्विजकार्यमनुत्तमम् ॥ धर्मसेतुमतो भूयः कर्तुमिच्छामि राघवौ ॥ ३ ॥
अक्षय्यश्चाव्ययश्चैव धर्मसेतुर्मतो मम ॥ [1]धर्मप्रसाधकं ह्येतत्सर्वपापप्रणाशनम् ॥ ४ ॥
युवाभ्यामात्मभूताभ्यां राजसूयमनुत्तमम् ॥ सहितो यष्टुमिच्छामि तत्र धर्मो हि शाश्वतः ॥ ५ ॥
इष्ट्वा तु राजसूयेन मित्रः शत्रुनिबर्हणः ॥ सुहुतेन सुयज्ञेन वरुणत्वमुपागमत् ॥ ६ ॥
सोमश्च राजसूयेन इष्ट्वा धर्मेण धर्मवित् ॥ प्राप्तश्च सर्वलोकेषु कीर्तिस्थानं च शाश्वतम् ॥ ७ ॥
अस्मिन्नहनि यच्छ्रेयश्चिन्त्यतां तन्मया सह ॥ हितं चायतियुक्तं च प्रयतौ [2]कर्तुमर्हथः ॥ ८ ॥
श्रुत्वा तु राघवस्यैतद्वाक्यं वाक्यविशारदः ॥ भरतः प्राञ्जलिर्भूत्वा वाक्यमेतदुवाच ह ॥ ९ ॥
त्वयि धर्मः परः साधो त्वयि सर्वा वसुंधरा ॥ प्रतिष्ठिता महाबाहो यशश्चामितविक्रम ॥ १० ॥
महीपालाश्च सर्वे त्वां प्रजापतिमिवामराः ॥ निरीक्षन्ते महात्मानं लोकनाथं यथा वयम् ॥ ११ ॥
[3]प्रजाश्च पितृवद्राजन्पश्यन्ति त्वां महाबल ॥ पृथिव्या गतिभूतोसि प्राणिनामपि राघव ॥ १२ ॥
स त्वमेवंविधं यज्ञमाहर्तासि कथं नृप ॥ पृथिव्यां राजवंशानां विनाशो यत्र दृश्यते ॥ १३ ॥
पृथिव्यां ये च पुरुषा राजन्पौरुषमागताः ॥ सर्वेषां भविता तत्र [4]संक्षयः सर्वकोपजः ॥ १४ ॥
स त्वं पुरुषशार्दूल गुणै[5]रतुलविक्रम ॥ पृथिवीं नार्हसे हन्तुं वशे हि तव वर्तते ॥ १५ ॥
भरतस्य तु तद्वाक्यं श्रुत्वाऽमृतमयं तदा ॥ प्रहर्षमतुलं लेभे रामः सत्यपराक्रमः ॥ १६ ॥
उवाच च शुभं वाक्यं कैकेय्यानन्दवर्धनम् ॥ प्रीतोस्मि परितुष्टोस्मि तवाद्य वचनेऽनघ ॥ १७ ॥
इदं वचनमक्लीबं त्वया धर्मसमाहितम् ॥ व्याहृतं पुरुषव्याघ्र पृथिव्याः परिपालनम् ॥ १८ ॥
एष्यदस्मदभिप्रायाद्राजसूयात्क्रतूत्तमात् ॥ निवर्तयामि धर्मज्ञ तव सुव्याहृतेन च ॥ १९ ॥

तथ्यं कृतं । बालो जीवित इत्यर्थः । धर्मसेतुं राजधर्ममर्यादाभूतं राजसूयमित्यर्थ. ॥ ३ ॥ धर्मप्रसाधक धर्मवर्धकमित्यर्थः । धर्मप्रवचनमिति च पाठः ॥ ४ ॥ तत्र धर्मो हि शाश्वत इति । तत्र राजसूये । क्षत्रियस्यासाधारणः अक्षयकीर्तिहेतुर्धर्म इत्यर्थः ॥ ५—७ ॥ हितं । इह लोके सुखं आयतियुक्तं । उत्तरः काल आयतिः । उत्तरकाले च हितमित्यर्थः ॥ ८—९ ॥ सर्वा वसुंधरा प्रतिष्ठितेति । सार्वभौमत्वादिति भावः ॥ १०—११ ॥ पितृवत्पितरमिव ॥ १२—१४ ॥ तव वशे वर्तते तव स्वाधीने वर्तत इत्यर्थः ॥ १५—१८ ॥ एष्यद-

स० धर्मसेतुं राजाराजसूयेनयजेतेत्यादिबोधितराजमर्यादारूपकर्म । 'यदिह्यहंनवर्तेयजातुकर्मण्यतन्द्रित । ममवर्त्मानुवर्तन्तेमनुष्या पार्थसर्वश ' इत्युक्तेरीश्वरस्यापीतरप्रवृत्तयेकर्मानुष्ठानविहितमितिकर्तुमिच्छामीत्युक्ति । नत्वप्राप्तफललाभार्थमितिभाव । हेराघवौ ॥ ३ ॥ ति० अक्षय बहुकालानुभवयोग्यफलत्वात् । अव्यय सजातीयधर्मान्तरहेतुत्वात् । राजसूयानुष्ठानमेवंभूतमितिकिंवक्तव्यं यत्कीर्तनमपिविशिष्टफलमित्याह—एवधर्मप्रपचनचेति । ममममर्यादाभूतराजसूयधर्मसकीर्तनंचेत्यर्थ । 'यउचैनमेवं वेद' इतिश्रुते ॥ ४ ॥ स० आत्मभूताभ्या प्राणसमाभ्या । यष्टुं कर्तु । तत्र तस्मिन्कृते । शाश्वतोधर्म शाश्वतिकंपुण्यंभवति ॥ ५ ॥ स० मित्र. तत्पदयोग्य । वरुणत्वमुपागमत् ॥ ६ ॥ शि० पुत्रा पितृवत् त्वापश्यन्ति । महीपालादयइतिशेष ॥ १२ ॥ ति० राजसूयस्यसर्वराजविजयपूर्वसाधनीयत्वात्तत्रचास्मासुप्रवृत्तेषुपृथिव्यायेक्षत्रिया । पौरुषमागता' शौर्यप्राप्ता तेषासर्वेषातत्र राजसूयार्थविजये सर्वप्रकोपज. सक्षयोऽवश्यंभविता । एवविधंक्षत्रियनाशकंयज्ञंसर्वराजभि पितृवदुपास्यमान कथमाहर्तुमर्हसि । सर्वथैवानुचितंतवेत्यर्थ. ॥ १४ ॥ ति० वचने वचनरूपेनिमित्ते । अनघेतिसबुद्धि ॥ १७ ॥ ति० निवर्तयामिअभिप्रायमिति शेषः । तत्रहेतुस्तवसुव्याहृतं ॥ १९ ॥

[ पा० ] १ झ ठ. धर्मप्रवचनंचैवसर्वपाप. २ क. ग. ङ.—ट. वक्तुमर्हथ. ३ झ. ठ. पुत्राश्च. ४ च. छ. क्षयः सर्वान्तकोपम.. ५ ग. रमितविक्रम.

लोकपीडाकरं कर्म न कर्तव्यं विचक्षणैः ॥ बालानां तु शुभं वाक्यं ग्राह्यं लक्ष्मणपूर्वज ॥
तस्माच्छृणोमि ते वाक्यं साधुयुक्तं महामते ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

---

## चतुरशीतितमः सर्गः ॥ ८४ ॥

लक्ष्मणेन रामंप्रत्यश्वमेधस्य सर्वार्थसाधकत्वोक्त्या तत्ररुच्युत्पादनाय वृत्रवधाख्यानप्रस्तावः ॥ १ ॥ चिरंधर्मेणराज्यंकृतवतावृत्रेण राज्येपुत्राभिषेचनपूर्वकंवनेतपश्चरणम् ॥ २ ॥ तत्तपश्चरणसत्रस्तेनेन्द्रेण श्रीविष्णुमेत्य वृत्रवधप्रार्थना ॥ ३ ॥

तथोक्तवति रामे तु भरते च महात्मनि ॥ लक्ष्मणोथ शुभं वाक्यमुवाच रघुनन्दनम् ॥ १ ॥
अश्वमेधो महायज्ञः पावनः सर्वपाप्मनाम् ॥ पावनस्तव दुर्धर्षो रोचतां रघुनन्दन ॥ २ ॥
श्रूयते हि पुरावृत्तं वासवे सुमहात्मनि ॥ ब्रह्महत्यावृतः शक्रो हयमेधेन पावितः ॥ ३ ॥
पुरा किल महाबाहो देवासुरसमागमे ॥ वृत्रो नाम महानासीद्दैतेयो लोकसंमतः ॥ ४ ॥
विस्तीर्णो योजनशतमुच्छ्रितस्त्रिगुणं ततः ॥ अनुरागेण लोकांस्त्रीन्स्नेहात्पश्यति सर्वतः ॥ ५ ॥
धर्मज्ञश्च कृतज्ञश्च बुद्ध्या च परिनिष्ठितः ॥ शशास पृथिवीं स्फीतां धर्मेण सुसमाहितः ॥ ६ ॥
तस्मिन्प्रशासति तदा सर्वकामदुघा मही ॥ रसवन्ति प्रसूनानि मूलानि च फलानि च ॥ ७ ॥
अकृष्टपच्या पृथिवी सुसंपन्ना महात्मनः ॥ स राज्यं तादृशं भुङ्क्ते स्फीतमद्भुतदर्शनम् ॥ ८ ॥
तस्य बुद्धिः समुत्पन्ना तपः कुर्यामनुत्तमम् ॥ तपो हि परमं श्रेयः संमोहमितरत्सुखम् ॥ ९ ॥
स निक्षिप्य सुतं ज्येष्ठं पौरेषु मधुरेश्वरम् ॥ तप उग्रं समातिष्ठत्तापयन्सर्वदेवताः ॥ १० ॥
तपस्तप्यति वृत्रे तु वासवः परमार्तवत् ॥ विष्णुं समुपसंक्रम्य वाक्यमेतदुवाच ह ॥ ११ ॥
तपस्यता महाबाहो लोका वृत्रेण निर्जिताः ॥ बलवान्स हि धर्मात्मा नैनं शक्ष्यामि शासितुम् ॥१२॥
यद्यसौ तप आतिष्ठेद्भूय एवासुरेश्वरः ॥ यावल्लोका धरिष्यन्ति तावदस्य वशानुगाः ॥ १३ ॥

---

स्मदभिप्रायात् अस्मदभिप्रायमेष्यतः मामकचिकीर्षामागमिष्यत इत्यर्थः ॥१९—२०॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने त्र्यशीतितमः सर्गः ॥ ८३ ॥

---

रोचतामित्यादि । अनुष्ठातुमिति शेषः । "सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योश्वमेधेन यजते" इति श्रुतेः ॥ २ ॥ एवमश्वमेधस्य ब्रह्महत्यान्तसर्वपापशोधकत्वे पुरावृत्तकथन—श्रूयते हीत्यादि ॥३–४॥ ततस्त्रिगुणमिति । योजनशतत्रयमित्यर्थः । अनुरागेण स्वीयत्वाभिमानेन हेतुना, स्नेहात् ॥ ५—८ ॥ इतरत्सुखमिति । वैषयिकसुखमित्यर्थः ॥ ९ ॥ मधुरः सौम्यश्चासावीश्वरश्च मधुरेश्वरः त। मधुराया नगर्या ईश्वरं वा ॥ १० ॥ परमार्तवत् परमार्तः सन् ॥११—१२॥ भूय एव अतः परमपीत्यर्थः । भूतजा-

---

ति० तुरप्यर्थे । बालानामपियद्वाक्यंयुक्तं उचितंसाधु शुभावहंचतद्ग्राह्यमेव । हि यस्मात् तस्मात् तेवाक्यं ईदृशं शृणोमि । स० साधुयुक्तं अत्यन्तयोग्यं । साधूनामद्विधानायुक्तमितिवा ॥ २० ॥ इतित्र्यशीतितमः सर्गः ॥ ८३ ॥

ति० वासवे वासवविषये ॥ ३ ॥ देवासुरसमागमे देवासुरस्नेहकाले ॥ ४ ॥ स० दुह्.कप्घश्चेतिकामदुघा ॥ ७ ॥ शि० महात्मनः पृथिवी अकृष्टेस्वयमेवपच्यतेसा अतएव सुसपन्ना आसीदितिशेषः ॥ ८ ॥ ति० समोहं समोहकरं ॥ ९ ॥ शि० वशानुगा भविष्यन्तीतिशेषः ॥ १३ ॥

[ पा० ] १ च. छ. वासवस्यमहात्मनः. २ च. छ. झ. ञ. लोका सर्वेविनिर्जिताः.

तं चैनं परमोदारमुपेक्षसि महाबलम् ॥ क्षणं हि नभवेद्वृत्रः क्रुद्धे त्वयि सुरेश्वर ॥ १४ ॥
यदा हि प्रीतिसंयोगं त्वया विष्णो समागतः ॥ तदाप्रभृति लोकानां नाथत्वमुपलब्धवान् ॥१५॥
स त्वं प्रसादं देवानां कुरुष्व सुसमाहितः ॥ त्वत्कृतेन हि सर्वं स्यात्प्रशान्तमरुजं जगत् ॥ १६ ॥
इमे हि सर्वे विष्णो त्वां निरीक्षन्ते दिवौकसः ॥ वृत्रघातेन महता त्वेषां साह्यं कुरुष्व ह ॥ १७ ॥
त्वया हि नित्यशः साह्यं कृतमेषां महात्मनाम् ॥ असह्यमिदमन्येषामगतीनां गतिर्भवान् ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

## पञ्चाशीतितमः सर्गः ॥ ८५ ॥

विष्णुनादेवान्प्रति इन्द्रेतद्वज्रेचैकैकांशेनस्वप्रवेशनप्रतिज्ञानपूर्वकमिन्द्रप्रति वृत्रवधविधानम् ॥ १ ॥ वृत्रतपोवनंगतेषु देवेषु तदीयदुस्सहतेजोसहिष्णुतयाचिन्तागतेषु इन्द्रेण वज्रेणवृत्रशिरश्छेदनम् ॥ २ ॥ ततोब्रह्महत्यानुद्रुतेनेन्द्रेण पलायनम् ॥ ३ ॥ ब्रह्महत्याग्रस्तेन्द्रमोक्षणायदेवैर्विष्णुप्रार्थने तेनदेवान्प्रति तन्मोचनायेन्द्रेणाश्वमेधयाजनचोदना ॥ ४ ॥

लक्ष्मणस्य तु तद्वाक्यं श्रुत्वा शत्रुनिबर्हणः ॥ वृत्रघातमशेषेण कथयेत्याह सुव्रत ॥ १ ॥
राघवेणैवमुक्तस्तु सुमित्रानन्दवर्धनः ॥ भूय एव कथां दिव्यां कथयामास सुव्रतः ॥ २ ॥
सहस्राक्षवचः श्रुत्वा सर्वेषां च दिवौकसाम् ॥ विष्णुर्देवानुवाचेदं सर्वानिन्द्रपुरोगमान् ॥ ३ ॥
पूर्वं सौहृदबद्धोस्मि वृत्रस्य तु महात्मनः ॥ तेन युष्मत्प्रियार्थं हि नाहं हन्मि महासुरम् ॥ ४ ॥
अवश्यं करणीयं च भवतां सुखमुत्तमम् ॥ तस्मादुपायमाख्यास्ये येन वृत्रो निहन्यते ॥ ५ ॥
त्रिधाभूतं करिष्यामि ह्यात्मानं सुरसत्तमाः ॥ तेन वृत्रं सहस्राक्षो वधिष्यति न संशयः ॥ ६ ॥
एकांशो वासवं यातु द्वितीयो वज्रमेव तु ॥ तृतीयो भूतलं शक्रस्तदा वृत्रं वधिष्यति ॥ ७ ॥

---

तमपीति शेषः ॥ १३ ॥ क्षणमपि नभवेत् न जीवेदित्यर्थः ॥ १४ ॥ उपलब्धवान् वृत्र इति शेषः॥१५॥ स त्वमिति । रक्षणेनेति शेषः ॥ १६ ॥ वृत्रघातेन हेतुना साह्यं उपकारं कुरु । हशब्दः पादपूरकः॥१७॥ अन्येषामिदमसह्यं । अन्येषामसुराणां यद्यपि त्वत्साह्यमसह्यमथापि तत्कुरु । हि यस्माद्भवानेवागतीनां गतिः तस्मात् ॥ १८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने चतुरशीतितमः सर्गः ॥ ८४ ॥

सौहृदबद्धः भक्तिबद्धः । पूर्वमिति । युष्माभिस्तद्वधप्रार्थनात्पूर्वमित्यर्थः ॥ ४—५ ॥ त्रिधाभूतं त्रेधा विभक्तमित्यर्थः ॥ ६ ॥ तृतीयो भूतलं यात्विति । वृत्रदेहधारणशक्तिसिद्ध्यर्थं इन्द्रस्य वृत्रहननजब्रह्मह-

---

**ति०** त्वत्सन्तोषेणैवतस्यसौख्यमित्याह—यदाहीति । तदारभ्यैवेद तस्यमाहात्म्यमितिशेष ॥ १५ ॥ **स०** त्यजेदेकमितिनीत्या लोकारक्षणीयाइतिविज्ञापयति—सत्वमिति । त्वत्कृतेनरक्षणेन सर्वप्रशान्त प्रकर्षेणत्वन्निष्ठबुद्धि । अरुज अरोग । तस्यैवरोगरूपत्वात् । रुजाशब्दोऽयं ॥ १६ ॥ **स०** हा शोके । 'क्लेशेत्यागेगतौहास्यात्' इतिविश्व ॥ १७ ॥ **शि०** इदंदैत्यरूपंवस्तु अन्येषामसह्य । अत अगतीनामस्माकं गतिर्भवानेव ॥ १८ ॥ इतिचतुरशीतितम सर्ग ॥ ८४ ॥

**स०** सर्वज्ञायमयाशैशवेनकिञ्चिदुदञ्चितंनोदञ्चनीयमितिलज्जयोपरतंलक्ष्मणविदितवेद्योपिप्रेमविशेषेणश्रोतुश्रामोरामआह—वृत्रघातमिति ॥ १ ॥ **स०** प्रकृतोपयोगितयादिव्या ॥ २ ॥ **स०** सुहृदाभाव सौहार्द । "हृद्भगसिन्ध्वन्तेपूर्वपदस्यच" इत्युभयपदवृद्धि । क्वचित्सौहृदबद्धइतिदृश्यते । तत्राप्यच्छन्द पीडायाएवमेवसुपठ ॥ ४ ॥ **ति०** आत्मान स्वतेजोमूर्तिं ॥ ६ ॥ **स०** तृतीयाश. भूतलंयातु ब्रह्महत्यानिर्हरणानन्तरमिन्द्रागमनपर्यन्तंस्थिरास्थित्यै ॥ ७ ॥

[ पा० ] १ क. ग. घ ज. ट. कथयामासलक्ष्मण . २ ठ सौहार्दबद्धोस्मि. ३ ग.—ञ. माख्यास्येसहस्राक्षोवधिष्यति- क. ख. घ. माख्यास्येयेनवृत्रंवधिष्यथ. ४ ङ. च छ. झ. ञ त्रेधाभूत.

तथा ब्रुवति देवेशे देवा वाक्यमथाब्रुवन् ॥ एवमेतन्न सन्देहो यथा वदसि दैत्यहन् ॥ ८ ॥
भद्रं तेऽस्तु गमिष्यामो वृत्रासुरवधैषिणः ॥ भजस्व परमोदार वासवं स्वेन तेजसा ॥ ९ ॥
ततः सर्वे महात्मानः सहस्राक्षपुरोगमाः ॥ तदरण्यमुपाक्रामन्यत्र वृत्रो महासुरः ॥ १० ॥
तेऽपश्यंस्तेजसा भूतं तप्यन्तमसुरोत्तमम् ॥ पिबन्तमिव लोकांस्त्रीन्निर्दहन्तमिवाम्बरम् ॥ ११ ॥
दृष्ट्वैव चासुरश्रेष्ठं देवास्त्रासमुपागमन् ॥ कथमेनं वधिष्यामः कथं न स्यात्पराजयः ॥ १२ ॥
तेषां चिन्तयतां तत्र सहस्राक्षः पुरन्दरः ॥ वज्रं प्रगृह्य पाणिभ्यां प्राहिणोद्वृत्रमूर्धनि ॥ १३ ॥
कालाग्निनेव घोरेण तप्तेनैव महार्चिषा ॥ पतता वृत्रशिरसा जगत्त्रासमुपागमत् ॥ १४ ॥
असंभाव्यं वधं तस्य वृत्रस्य विबुधाधिपः ॥ चिन्तयानो जगामाशु लोकस्यान्तं महायशाः ॥१५॥
तमिन्द्रं ब्रह्महत्याशु गच्छन्तमनुगच्छति ॥ अपतच्चास्य गात्रेषु तमिन्द्रं दुःखमाविशत् ॥ १६ ॥
हतारयः प्रणष्टेन्द्रा देवाः साग्निपुरोगमाः ॥ विष्णुं त्रिभुवनेशानं मुहुर्मुहुरपूजयन् ॥ १७ ॥
त्वं गतिः परमेशान पूर्वजो जगतः पिता ॥ रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ॥ १८ ॥
हतश्चायं त्वया वृत्रो ब्रह्महत्या च वासवम् ॥ बाधते सुरशार्दूल मोक्षं तस्या विनिर्दिश ॥ १९ ॥
तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत् ॥ मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् ॥ २० ॥
पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः ॥ पुनरेष्यति देवानामिन्द्रत्वमकुतोभयम् ॥ २१ ॥
एवं संदिश्य तां वाणीं देवानाममृतोपमाम् ॥ जगाम विष्णुर्देवेशस्तूयमानस्त्रिविष्टपम् ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

---

त्याबाधानिवृत्तिर्यावद्वरारक्षणार्थं चेत्यर्थः ॥७–१० ॥ भूतं व्याप्त । पिबन्तमित्यादिक तेजोदुर्धर्षत्वपरं ११—१३ ॥ तप्तेन दीप्यमानेन । "तप संतापदीप्त्योः" इति धातु. । दीप्तेनेति च पाठ. । वज्रेण छेदनहेतुना पतता वृत्रशिरसा जगत्त्रासमुपागमत् ॥ १४ ॥ असभाव्यमनपराधिनस्तप्यतो वृत्रस्य वधमसभाव्यमनुचित कृतमिति चिन्तयानो विबुधाधिपः लोकस्यान्तमन्तप्रदेश लोकालोकात्परं तमःप्रदेशं जगाम । ब्रह्महत्याभिया पलायितोभूत् ॥ १५ ॥ तं पलायमानमिन्द्रं । ब्रह्महत्या, त्वष्ट्रा मुनिना वृत्रस्योत्पादितत्वात् । अस्य गात्रेष्वपतच्च । ब्रह्महत्येति शेषः। तमिन्द्र ब्रह्महत्याग्रस्तमिन्द्रमित्यर्थः ॥ १६––२२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने पञ्चाशीतितमः सर्गः ॥ ८५ ॥

---

**स०** तेसकाशात् नोस्मभ्यभद्रमस्तु । वासवमिन्द्रं तत्सबन्धिनवज्रभूमिचेतित्रितयभजस्व । तादृशसामर्थ्यत्वयिवर्ततइतिवक्तुं त थासबोधयन्ति—परमोदारेति ॥ ९ ॥ **ति०** पिबन्तमित्यादितपआधिक्यपर ॥ ११ ॥ **स०** पराजय. पराभव । कथनस्यात्। एनंकथवधिष्यामइतिचिन्तयतामित्युत्तरेणान्वय. । पाणिभ्या अन्तर्निविष्टविष्णवशपाणिरेक. एक'स्वपाणिरितिदक्षिणाभ्यापाणिभ्यामित्यर्थ । महतोवज्रस्यसभगवदशस्यवामास्पृश्यत्वात् । भवेद्भगवदंशाभावेबाहुर्बहुरप्यकिंचित्कर । तदनुग्रहेचैकएवालमितिव्याख्यानमिदंसमञ्जसमितिभाव । 'अयमेहस्तोभगवान्' इतिश्रुते ॥ १२—१३ ॥ **स०** जगत्प्रतिपतता शिरस निमित्ते नेन्द्रस्त्रासमुपागमत् । उत्तरग्रन्थस्वारस्यात् इन्द्रइत्यध्याहारमात्रक्षाम्यन्तुमहान्त ॥ १४ ॥ **स०** लोकस्यान्त मानससरोवरस्थनालीकनाल । भागवतोक्ते ॥ १५ ॥ **ति०** पूर्वज' जगत पिता । 'अहमस्मिप्रथमजाऋतस्य" इतिश्रुते । एवं कारणमूर्तिर्हिरण्यगर्भएव । सर्वभूतरक्षोद्देशेनविष्ण्वाकारत्वपालनशक्तिप्राधान्येनप्राप्त ॥ १८ ॥ **स०** तस्य वासवस्य । मोक्ष मोचन प्रकार ॥ १९ ॥ **ति०** मा औपासनाग्निहोत्राद्यश्वमेधान्ताशेषयज्ञयजनीयं विशिष्याश्वमेधस्यसाक्षाद्दैवतंमामेवशक्रोयजतां । 'इन्द्रायस्वा हा' इत्यादिमन्त्रैश्चतत्तद्देवतान्तर्याम्यहमेवतत्तत्पदैर्बोध्यइतिभाव ॥ **स०** यजता अश्वमेधादिभि पूजयतु ॥ २० ॥ इतिपञ्चाशीतितम सर्ग. ॥ ८५ ॥

[ पा० ] १ झ ठ तस्यविनिर्दिश

## षडशीतितमः सर्गः ॥ ८६ ॥

ब्रह्महत्यापीडितेइन्द्रेदिगन्तंगते संक्षुभितेचसकललोके देवैरिन्द्रान्वेषणपूर्वकं तेनाश्वमेधयाजनम् ॥ १ ॥ तेनेन्द्रंत्यक्तवत्याब्रह्महत्यया देवान्प्रति स्वस्वस्थानकल्पनप्रार्थने देवैस्तस्यानद्यादिस्थानचतुष्टयकल्पनम् ॥ २ ॥ एवं लक्ष्मणेन रामप्रत्यश्वमेधमहिमोक्तिः ॥ ३ ॥

तदा वृत्रवधं सर्वमखिलेन स लक्ष्मणः ॥ कथयित्वा नरश्रेष्ठः कथाशेषं प्रचक्रमे ॥ १ ॥
ततो हते महावीर्ये वृत्रे देवभयंकरे ॥ ब्रह्महत्यावृतः शक्रः संज्ञां लेभे न वृत्रहा ॥ २ ॥
सोन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः ॥ कालं तत्रावसत्कंचिद्वेष्टमान इवोरगः ॥ ३ ॥
अथ नष्टे सहस्राक्षे उद्विग्नमभवज्जगत् ॥ भूमिश्च ध्वस्तसंकाशा निस्स्नेहा शुष्ककानना ॥ ४ ॥
निःस्रोतसश्च ते सर्वे ह्रदाश्च सरितस्तथा ॥ संक्षोभश्चैव सत्त्वानामनावृष्टिकृतोऽभवत् ॥ ५ ॥
क्षीयमाणे तु लोकेऽस्मिन्त्संभ्रान्तमनसः सुराः ॥ यदुक्तं विष्णुना पूर्वं तं यज्ञं समुपानयन् ॥ ६ ॥
ततः सर्वे सुरगणाः सोपाध्यायाः सहर्षिभिः ॥ तं देशं समुपाजग्मुर्यत्रेन्द्रो भयमोहितः ॥ ७ ॥
ते तु दृष्ट्वा सहस्राक्षमावृतं ब्रह्महत्यया ॥ तं पुरस्कृत्य देवेशमश्वमेधमुपाक्रमन् ॥ ८ ॥
ततोश्वमेधः सुमहान्महेन्द्रस्य महात्मनः ॥ ववृधे ब्रह्महत्यायाः पावनार्थं नरेश्वर ॥ ९ ॥
ततो यज्ञे समाप्ते तु ब्रह्महत्या महात्मनः ॥ अभिगम्याब्रवीद्वाक्यं क्व मे स्थानं विधास्यथ ॥ १० ॥
ते तामूचुस्तदा देवास्तुष्टाः प्रीतिसमन्विताः ॥ चतुर्धा विभजात्मानमात्मनैव दुरासदे ॥ ११ ॥
देवानां भाषितं श्रुत्वा ब्रह्महत्या महात्मनाम् ॥ संनिधौ स्थानमन्यत्र वरयामास दुर्वसा ॥ १२ ॥
एकेनांशेन वत्स्यामि पूर्णोदासु नदीषु वै ॥ चतुरो वार्षिकान्मासान्दर्पघ्नी कामवारिणी ॥ १३ ॥
भूम्यामहं सर्वकालमेकेनांशेन दुर्वसा ॥ वसिष्यामि न सन्देहः सत्येनैतद्ब्रवीमि वः ॥ १४ ॥
योयमंशस्तृतीयो मे स्त्रीषु यौवनशालिषु ॥ त्रिरात्रं दर्पपूर्णासु वसिष्ये दर्पघातिनी ॥ १५ ॥
हन्तारो ब्राह्मणान्ये तु मृषापूर्वमदूषकान् ॥ तांश्चतुर्थेन भागेन संश्रयिष्ये सुरर्षभाः ॥ १६ ॥

कथाशेष वक्तुमिति शेष ॥ १ ॥ न संज्ञां लेभ इति । ग्रहग्रस्तवदप्रकाशोभूदित्यर्थः ॥ २ ॥ कंचित्कालमित्यन्वयः ॥ ३ ॥ नष्टे अदृष्टे । उद्विग्नमिति । अराजकत्वादिति शेषः । निस्स्नेहा अनार्द्रा ॥ ४ ॥ अनावृष्टिकृत इति । इन्द्राभावमूलानावृष्टिकृत इत्यर्थ. ॥ ५ ॥ समुपानयन् सपादयन्ति स्म ॥ ६—७ ॥ तं देवेशमिति । विष्णुमित्यर्थः ॥ ८—१० ॥ हे दुरासदे ब्रह्महत्ये इति शेष' ॥ ११ ॥ सन्निधौ देवानां सन्निधौ । संदधाविति पाठे चतुर्धा विभागं संपादितवतीत्यर्थः । अन्यत्र महेन्द्रादन्यत्र । दुर्वसा महेन्द्रे दुर्वसा ॥ १२ ॥ चतुर इति । "सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः" इति स्मरणात् । "पक्षा वै मासा." इति पक्षानुसारेण चतुष्ट्वात् । दर्पघ्नी । अपुण्यकृतामिति शेषः । कामवारिणी । स्नातुमिच्छतामिति शेषः । कामचारिणीति च पाठः ॥१३—१४॥ दर्पघातिनी । पुरुषसंभोगसुखहारिणी-

स० वेष्टमान सकुचत्स्वाङ्ग ॥ ३ ॥ ति० समुपानयन् आवेदयन् स्मृतवन्तइतियावत् ॥ ६ ॥ ति० तंदेवेशं विष्णुमिन्द्रवा ॥ ८ ॥ शि० दुर्वसा दुष्टवस्त्रयुक्ताब्रह्महत्या ॥ १२ ॥ ति० तत्रैववासेहेतु —कामचारिणीति । तेनगङ्गादिषुनवास इत्युक्तं ॥ १३ ॥ ति० भूम्यामूषररूपेणवास ॥ १४ ॥ शि० यौवनशालिषु यौवनशालिनीषु ॥ स० यौवनशालिषु पुरुषेषु । तदाधारतयाविद्यमानासुस्त्रीषु । तदपेक्षयातारुण्योपेतास्वितियावत् । एतेन यौवनशालिनीष्वितिभाव्यमितिशङ्कानिरास ॥ १५ ॥ ति० अदूषकान् ब्रह्मब्रह्मविद्याब्राह्मणब्रह्मलोकानामार्गान्तरावलबेनदूषणकरणरहितान् । उक्तपदार्थेषुदृढविश्वासान् । मृषापूर्वं मृषावादपूर्वं । येराजस्थानादौघातकुर्वन्ति धिक्कारादि कुर्वन्ति लोहितादि स्राव कुर्वन्ति कैमुतिकन्यायेनैवयेप्राणवियोगंकुर्वन्ति

[ पा० ] १ घ—ट मश्वमेधप्रचक्रिरे. २ झ ठ. सदधौस्थानमन्यत्र. ३ झ. ठ. कामचारिणी.

प्रत्यूचुस्तां ततो देवा यथा वदसि दुर्वसे ॥ तथा भवतु तत्सर्वं साधयस्व यदीप्सितम् ॥ १७ ॥
ततः प्रीत्यान्विता देवाः सहस्राक्षं ववन्दिरे ॥ विज्वरः स च पूतात्मा वासवः समपद्यत ॥ १८ ॥
प्रशान्तं च जगत्सर्वं सहस्राक्षे प्रतिष्ठिते ॥ यज्ञं चाद्भुतसंकाशं तदा शक्रोऽभ्यपूजयत् ॥ १९ ॥
ईदृशो ह्यश्वमेधस्य प्रभावो रघुनन्दन ॥ यजस्व सुमहाभाग हयमेधेन पार्थिव ॥ २० ॥

इति लक्ष्मणवाक्यमुत्तमं नृपतिरतीव मनोहरं महात्मा ॥
परितोषमवाप हृष्टचेता निशमय्येन्द्रसमानविक्रमौजाः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

---

## सप्ताशीतितमः सर्गः ॥ ८७ ॥

रामेणलक्ष्मणंप्रति स्वस्याप्यश्वमेधमहिमाऽवगत्यवगमनाय इलोपाख्यानकथनारंभः ॥ १ ॥ मृगयार्थंवनंगतेनइलनाम्ना राज्ञा पार्वतीपरितोषणाय सर्वानुचरैः सहनारीभूयविहरतोहरस्यविहारवनगमनम् ॥ २ ॥ तत्प्रभावात्परिजनैस्सहस्त्रीभूतेन तेनराज्ञा तपस्तोषितपार्वतीप्रसादात्पर्यायेणैकैकस्मिन्मासेस्त्रीत्वस्य पुनरेकैकस्मिन्मासे पुंस्त्वस्यचाधिगम ॥ ३ ॥

तच्छ्रुत्वा लक्ष्मणेनोक्तं वाक्यं वाक्यविशारदः ॥ प्रत्युवाच महातेजाः प्रहसन्राघवो वचः ॥ १ ॥
एवमेव नरश्रेष्ठ यथा वदसि लक्ष्मण ॥ वृत्रघातमशेषेण वाजिमेधफलं च यत् ॥ २ ॥
श्रूयते हि पुरा सौम्य कर्दमस्य प्रजापतेः ॥ पुत्रो बाह्लीश्वरः श्रीमानिलो नाम महायशाः ॥ ३ ॥
स राजा पृथिवीं सर्वां वशे कृत्वा सुधार्मिकः ॥ राज्यं चैव नरव्याघ्र पुत्रवत्पर्यपालयत् ॥ ४ ॥
सुरैश्च परमोदारैर्दैतेयैश्च महाधनैः ॥ नागराक्षसगन्धर्वैर्यक्षैश्च सुमहात्मभिः ॥
पूज्यते नित्यशः सौम्य भयार्तै रघुनन्दन ॥ ५ ॥
अबिभ्यंश्च त्रयो लोकाः सरोषस्य महात्मनः ॥ ६ ॥
स राजा तादृशो ह्यासीद्धर्मे वीर्ये च निष्ठितः ॥ बुद्ध्या च परमोदारो बाह्लिकेशो महायशाः ॥७॥
स प्रचक्रे महाबाहुर्मृगयां रुचिरे वने ॥ चैत्रे मनोरमे मासि सभृत्यबलवाहनः ॥ ८ ॥

---

ति भावः ॥ १५—२१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे उत्तरकाण्डव्याख्याने षडशीतितमः सर्गः ॥ ८६ ॥

---

अश्वमेधवैभवं स्वयमपि जानामीति प्रहासः ॥ १—२ ॥ अथ वृषध्वजप्रिय विष्णवाराधनरूपं हयमेधं श्लाघयितु राम उपक्रमते—श्रूयत इत्यादि ॥ बाह्लिर्देशविशेषः ॥ ३—४ ॥ भयार्तैरिति विशेषणं दैतेयादीनां ॥ ५ ॥ भयहेतुश्च तद्रोष इत्याह—अबि-

---

ताश्चतुर्थेनभागेनसश्रयिष्ये 'योलोहितकरद्यावत प्रस्कन्नपासून्सगृह्णात् । तावत्सवत्सरपितृलोकंनप्रजानात् । तस्माद्ब्राह्मणायनापगुरेन्ननिहन्यान्नलोहितकुर्यात्' इतिश्रुते ॥ १६ ॥ ति० यज्ञ विष्णुं ॥ १९ ॥ स० प्रसादोमाहात्म्यं ॥ २० ॥ स०हृष्टचेता. भरतभारतीत. । परितोषं यज्ञान्तरकरणविषयकसौमित्रिवचनतउदितहर्षोत्कर्ष ॥ २१ ॥ इतिषडशीतितमस्सर्ग ॥ ८६ ॥

ति० अथरामोपीलोपाख्यानेनाश्वमेधस्यराज्ञामशेषानर्थनिवृत्तिपूर्वकपरमेष्टसाधनत्वंदर्शयति—तदिति । अश्वमेधमाहात्म्यमजानानंप्रतीवलक्ष्मणस्तद्वैभवमुक्तवानितिभावेनहास ॥ स० प्रत्युवाच उत्तरत्वेन ॥ १ ॥ ति० वृत्रघातंवाजिमेधंफलंचयद्यथावदसितदेवमेवेत्यन्वय. ॥ स० अशेषेणेत्युभयान्वयि ॥ २ ॥ स० परमोदार परमोत्कृष्ट ॥ ७ ॥ स० मनोरमे

[ पा० ] १ झ. ठ. प्रसादो. २ क. ख. घ—ट. नामसुधार्मिक.. ३ क. ज शशासपृथिवी.

प्रजघ्ने च नृपोऽरण्ये मृगाञ्शतसहस्रशः ॥ हत्वैव तृप्तिर्नाभूच्च राज्ञस्तस्य महात्मनः ॥ ९ ॥
नानामृगाणामयुतं वध्यमानं महात्मना ॥ यत्र जातो महासेनस्तं देशमुपचक्रमे ॥ १० ॥
तस्मिन्प्रदेशे देवेशः शैलराजसुतां हरः ॥ रमयामास दुर्धर्षः सर्वैरनुचरैः सह ॥ ११ ॥
कृत्वा स्त्रीरूपमात्मानमुमेशो गोपतिध्वजः ॥ देव्याः प्रियचिकीर्षुः संस्तस्मिन्पर्वतनिर्झरे ॥ १२ ॥
[1]ये तु तत्र वनोद्देशे सत्त्वाः पुरुषवादिनः ॥ वृक्षाः पुरुषनामानस्तेऽभवन्स्त्रीजनास्तदा ॥ १३ ॥
यच्च किंचन तत्सर्वं नारीसंज्ञं बभूव ह ॥ एतस्मिन्नन्तरे राजा स इलः कर्दमात्मजः ॥
निघ्नन्मृगसहस्राणि तं देशमुपचक्रमे ॥ १४ ॥
स दृष्ट्वा स्त्रीकृतं सर्वं सव्यालमृगपक्षिकम् ॥ आत्मानं स्त्रीकृतं चैव सानुगं रघुनन्दन ॥ १५ ॥
तस्य दुःखं महच्चासीद्दृष्ट्वाऽऽत्मानं तथागतम् ॥ उमापतेश्च तत्कर्म ज्ञात्वा त्रासमुपागमत् ॥ १६ ॥
ततो देवं महात्मानं शितिकण्ठं कपर्दिनम् ॥ जगाम शरणं राजा सभृत्यबलवाहनः ॥ १७ ॥
ततः प्रहस्य वरदः सह देव्या महेश्वरः ॥ प्रजापतिसुतं वाक्यमुवाच वरदः स्वयम् ॥ १८ ॥
उत्तिष्ठोत्तिष्ठ राजर्षे कार्दमेय महाबल ॥ पुरुषत्वमृते सौम्य वरं वरय सुव्रत ॥ १९ ॥
ततः स राजा दुःखार्तः प्रत्याख्यातो महात्मना ॥ न[2] च जग्राह स्त्रीभूतो वरमन्यं सुरोत्तमात् ॥२०॥
ततः शोकेन महता शैलराजसुतां नृपः ॥ प्रणिपत्य ह्युमां देवीं सर्वेणैवान्तरात्मना ॥ २१ ॥
ईशे वराणां वरदे लोकानामसि भामिनी ॥ अमोघदर्शने देवि भज सौम्येन चक्षुषा ॥ २२ ॥
हृद्गतं तस्य राजर्षेर्विज्ञाय हरसन्निधौ ॥ प्रत्युवाच शुभं वाक्यं देवी रुद्रस्य संमता ॥ २३ ॥
अर्धस्य देवो वरदो वरार्धस्य तव ह्यहम् ॥ तस्मादर्धं गृहाण त्वं स्त्रीपुंसोर्यावदिच्छसि ॥ २४ ॥
तदद्भुततरं श्रुत्वा देव्या वरमनुत्तमम् ॥ संप्रहृष्टमना भूत्वा राजा वाक्यमथाब्रवीत् ॥ २५ ॥
यदि देवि प्रसन्ना मे रूपेणाप्रतिमा भुवि ॥ मासं स्त्रीत्वमुपासित्वा मासं स्यां पुरुषः पुनः ॥ २६ ॥
ईप्सितं तस्य विज्ञाय देवी सुरुचिरानना ॥ प्रत्युवाच शुभं वाक्यमेवमेव भविष्यति ॥ २७ ॥

---

भ्यन्निति । बिभियुरित्यर्थः ॥ ६—९ ॥ अयुतं अयुतसख्याकं । वध्यमानमभूदिति शेषः । यत्र जात इत्यादि । महासेन. स्कन्दः ॥ १०—१२ ॥ पुरुष इति वादो व्यपदेशो येषामिति पुरुषवादिनः । पुल्लिङ्गशब्दवाच्या ये पदार्था. सन्ति ॥ १३ ॥ अन्यच्च यच्च किंचन नपुसकलिङ्गवाच्यमस्ति तत्सर्वं नारीसंज्ञ स्त्रीलिङ्गशब्दवाच्यताहं स्त्रीवेष बभूव ॥१४॥ आत्मान च स्त्रीकृतं ॥ १५ ॥ तथागत तथावस्था प्राप्तमात्मानं दृष्ट्वा तच्चात्मनस्तथाप्राप्तिरूप कर्म तदिच्छावशात्प्राप्त ज्ञात्वा त्रासमुपागमत् ॥१६—१८॥ कार्दमेयेति शुभ्रादित्वाड्ढक् । पुरुषत्वं ऋते पुरुषत्वं विना ॥ १९॥ न च जग्राह स्त्रीभूत इति । गुरुवैपम्यमार्षं । अन्यद्वरं पुंस्त्ववरणव्यतिरिक्त वरं न जग्राह ॥ २०—२१ ॥ सौम्येन चक्षुषा अनुग्रहचक्षुषा । मा भज अनुगृहाण ॥२२—२३॥ स्त्रीपुसोरर्धस्य । समासाजन्तनिपाताभाव आर्षः । पुरुषत्वप्राप्तिरूपे वरे अर्धस्य देवो वरदो दाता । अर्धस्यैवाहं दात्री । अस्मात्त्व मत्तोर्धं गृहाण । यावदिच्छसि यदिच्छसि ॥ २४—२५ ॥ उपासित्वा

---

ऋतुमाहात्म्येन ॥ ८ ॥ **ति०** हत्वैव हत्वापीत्यर्थ ॥ ९ ॥ **स०** प्रजापतिसुतं कर्दमसुतं ॥ १८ ॥ **स०** कार्दमेय कर्दमस्यस्त्री कर्दमी । तस्याअपत्यं । स्त्रीभ्योढगितिढकिएयादेश ॥ १९ ॥ **स०** प्रत्याख्यात पुरुषत्वमृतइतिनिराकृत ॥ २० ॥ **ति०** सर्वेणैवान्तरात्मनामनोबुद्ध्यभिमानलक्षणेनसर्वेणान्त करणेनप्रणिपत्य । साष्टाङ्गप्रणिपत्येत्यर्थ ॥ २१ ॥ वराणामीशे । अतएव लोकानावरदेत्वंभामिनीअसि ॥ २२ ॥ **स०** अर्धस्यवरदइति । अर्धस्येत्यभेदेषष्ठीराहो शिरइतिवत् । अर्धाभिन्नवरद सदेवइत्यर्थः ॥ २४ ॥ **स०** विदिततदुदितभावइतिसप्रहृष्टमना ॥ २५ ॥ **स०** एकदैवार्धाङ्गस्यस्त्रीत्वमस्त्रीत्वमर्धाङ्गस्येत्यसभावितमितिमत्वा

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. यत्रयत्रवनोद्देशे. २ झ. ठ. स्त्रीभूतोसौनजग्राह.

राजन्पुरुषभूतस्त्वं स्त्रीभावं न स्मरिष्यसि ॥ स्त्रीभूतश्च परं मासं न स्मरिष्यसि पौरुषम् ॥ २८ ॥
एवं स राजा पुरुषो मासं भूत्वाऽथ कार्दमिः ॥ त्रैलोक्यसुन्दरी नारी मासमेकमिलाऽभवत् ॥२९॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

---

## अष्टाशीतितमः सर्गः ॥ ८८ ॥

स्त्रीभूतैर्निजपरिजनैस्सहवनान्तरेविहरमाणायाइलायाअवलोकनेन क्षुभितमनसातत्रसरसितपस्यताविधुसुतेनबुधेन तत्प-रिचरीणाकिंपुरुषनारीकरणपूर्वकं शैलतटप्रेषणम् ॥ १ ॥

तां [1]कथामिलसंबन्धां रामेण समुदीरिताम् ॥ लक्ष्मणो भरतश्चैव श्रुत्वा परमविस्मितौ ॥ १ ॥
तौ रामं प्राञ्जली भूत्वा तस्य राज्ञो महात्मनः ॥ विस्तरं तस्य भावस्य तदा पप्रच्छतुः पुनः ॥ २ ॥
कथं स राजा स्त्रीभूतो वर्तयामास दुर्गतिः ॥ पुरुषः स यदा भूतः कां वृत्तिं वर्तयत्यसौ ॥ ३ ॥
तयोस्तद्भाषितं श्रुत्वा कौतूहलसमन्वितम् ॥ कथयामास काकुत्स्थस्तस्य राज्ञो यथागतम् ॥ ४ ॥
तमेव प्रथमं मासं स्त्रीभूता लोकसुन्दरी ॥ ताभिः परिवृता स्त्रीभिर्ये च पूर्वपदानुगाः ॥ ५ ॥
तत्काननं विगाह्याशु विजह्रे लोकसुन्दरी ॥ द्रुमगुल्मलताकीर्णं पद्भ्यां पद्मदलेक्षणा ॥ ६ ॥
वाहनानि च सर्वाणि सं[2]त्यक्त्वा वै समन्ततः ॥ पर्वताभोगविवरे तस्मिन्रेमे इला तदा ॥ ७ ॥
अथ तस्मिन्वनोद्देशे पर्वतस्याविदूरतः ॥ सरः सुरुचिरप्रख्यं नानापक्षिगणैर्युतम् ॥ ८ ॥
ददर्श सा त्विला तस्मिन्बुधं सोमसुतं ततः ॥ ज्वलन्तं स्वेन वपुषा पूर्णसोममिवोदितम् ॥ ९ ॥
तपन्तं च तपस्तीव्रमम्भोमध्ये दुरासदम् ॥ यशस्करं कामकरं तारुण्ये पर्यवस्थितम् ॥ १० ॥

---

प्राप्य ॥ २६—२७ ॥ अनुग्रहान्तरमाह—राजन्नित्यादि ॥ २८ ॥ कार्दमिः । "अत इञ्" ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने सप्ताशीतितमः सर्गः ॥ ८७ ॥

---

प्राञ्जली इति द्विवचनं । तस्य भावस्येति । स्त्रीपुंसभावस्येत्यर्थः ॥ २ ॥ स्त्रीभूत अतएव दुर्गतिः कथं वर्तयामास । तत्कालमिति शेष ॥ ३—६ ॥ पर्वताना आभोगो विस्तारः ॥ ७ ॥ अविदूरतः यत्र स्त्रीत्वप्राप्तिस्तस्याविदूरत इत्यर्थ । अन्यदेशत्वात् बुधस्य स्त्रीत्वाप्राप्तिरिति भावः ॥ ८—१० ॥

---

व्यवस्थास्वयमेवाह—मासमिति ॥२६॥ स० प्रसन्ना सनतायाधिकमपिकिंचित्प्रयच्छतिदेवीतिवदति—स्त्रीभावमित्यादिना ॥२८॥ कार्दमि बाह्लादि ॥ स० अत्रपितु कर्दमेत्युक्ति स्वयंहरस्येच्छयाभामिनीभावोक्तिरिलस्यप्रयत्नेनैवपार्वत्यावरोक्तिर्व्यवस्थयेत्येवमाद्युक्तिश्च 'ततोमनु श्राद्धदेव ' इत्यारभ्यनवमेभागवते मातृबोधितहोतृव्यतिक्रमेणस्त्रियाजननं । अनन्तरंवसिष्ठतपस्सतुष्टविष्णुप्रसादतोयोषित पुरुषत्वाप्ति । तदनन्तरसतीसहितस्यहरस्यसमीपमुपयातवतामुनीनाप्रेषणानन्तरमुमासतुष्ट्यैवनप्रविष्टपुमात्रस्यस्त्रीत्वप्राप्तिशाप । तदुपरिसुद्युम्नगमनंस्त्रीत्वाप्ति । पुनर्गुरुतपसाहरेणैवव्यवस्थयापुस्त्वावाप्तिश्चेत्याद्युक्तिर्भारतेहरिवशे 'मनोर्वैवस्वतस्यासन् ' इत्यारभ्य मित्रावरुणांशेनह्यपत्योत्पत्ति पुनर्मित्रावरुणसनिधिगमनंतत्प्रेषितायाइलाया पुनर्वैवस्वतप्रत्यागमनमित्रावरुणयो 'आवयोस्त्वंमहाभागेख्यातिंकन्येतियास्यसि । मनोर्वंशकर पुत्रस्त्वमेवचभविष्यसि । सुद्युम्नइतिविख्यात ' इत्यादिवाक्यादेवपुंस्त्वावाप्त्युक्ति अन्यत्रागस्त्यकृतबालभारते 'बुधस्ततोऽभून्नवसुग्रहेषुरत्नेषुमुक्ताफलवन्मनोज्ञ । य कर्दमापत्यमिलाभिधानंपर्यग्रहीत्पञ्चशरायुधार्त. ' इत्यत्रोक्तिश्चकल्पभेदेनेत्यल्पमतिभिरभिधातुंयोग्यंनापरथागतिरितिसतोष्टव्य ॥ २९ ॥ इत्युत्तरेसप्ताशीतितम सर्ग ॥ ८७ ॥

स० ऐलसबन्धामिति । ऐलेतिस्वार्थेऽण् । इलासबन्धिनीकथा ॥ १ ॥ स० दुर्गति बहिर्गमनागमनानुपयुक्तस्त्रीभावात्

[पा०] १ झ. ठ. कथामैलसबन्धा. २ ग. ङ. च. छ. झ. ञ. ट. सत्यक्त्वा.

सा तं जलाशयं सर्वं क्षोभयामास विस्मिता ॥ सहगैः पूर्वपुरुषैः स्त्रीभूतै रघुनन्दन ॥ ११ ॥
बुधस्तु तां समीक्ष्यैव कामबाणवशं गतः ॥ नोपलेभे तदाऽऽत्मानं संचचाल तदाऽम्भसि ॥१२॥
इलां निरीक्षमाणस्तु त्रैलोक्याभ्यधिकां शुभाम् ॥ चिन्तां समभ्यतिक्रामत्का न्वियं देवताधिका १३
न देवीषु न नागीषु नासुरीष्वप्सरस्सु च ॥ दृष्टपूर्वा मया काचिद्रूपेणानेन शोभिता ॥ १४ ॥
सदृशीयं मम भवेद्यदि नान्यपरिग्रहः ॥ इति बुद्धिं समास्थाय जलात्कूलमुपागमत् ॥ १५ ॥
आश्रमं समुपागम्य ततस्ताः प्रमदोत्तमाः ॥ शब्दापयत धर्मात्मा ताश्चैनं च ववन्दिरे ॥ १६ ॥
स ताः पप्रच्छ धर्मात्मा कस्यैषा लोकसुन्दरी ॥ किमर्थमागता चैव सर्वमाख्यात मा चिरम् ॥१७॥
शुभं तु तस्य तद्वाक्यं मधुरं मधुराक्षरम् ॥ श्रुत्वा स्त्रियश्च ताः सर्वा ऊचुर्मधुरया गिरा ॥ १८ ॥
अस्माकमेषा सुश्रोणी प्रभुत्वे वर्तते सदा ॥ अपतिः काननान्तेषु सहास्माभिश्चरत्यसौ ॥ १९ ॥
तद्वाक्यमव्यक्तपदं तासां स्त्रीणां निशम्य च ॥ विद्यामावर्तिनीं पुण्यामावर्तयत स द्विजः ॥ २० ॥
सोऽर्थं विदित्वा सकलं तस्य राज्ञो यथागतम् ॥ सर्वा एव स्त्रियस्ताश्च बभाषे मुनिपुङ्गवः ॥ २१ ॥
अत्र किंपुरुषीभूत्वा शैलरोधसि वत्स्यथ ॥ आवासस्तु गिरावस्मिञ्शीघ्रमेव विधीयताम् ॥ २२ ॥
मूलपत्रफलैः सर्वा वर्तयिष्यथ नित्यदा ॥ स्त्रियः किंपुरुषान्नाम भर्तॄन्समुपलप्स्यथ ॥ २३ ॥
तां श्रुत्वा सोमपुत्रस्य वाचं किंपुरुषीकृताः ॥ उपासांचक्रिरे शैलं वध्वस्ता बहुलास्तदा ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अष्टाशीतितमः सर्गः ॥ ८८ ॥

---

क्षोभयामासेति । क्रीडयेति शेषः ॥ ११ ॥ आत्मान नोपलेभे । आत्मध्यान न प्राप्तवानित्यर्थः । कामपरवशचित्तोभूदिति भावः ॥१२॥ चिन्तां समभ्यतिक्रामत् । इलायामिति शेषः । इलाविषयकचिन्ता प्राप्त इत्यर्थ । तदेवाह—कान्वित्यादि ॥१३—१४॥ नान्यपरिग्रह अन्यपरिग्रहत्वरहिता ॥ १५ ॥ शब्दापयत । पुगार्षः ॥ १६—१८ ॥ अपतिः पतिरहिता ॥ १९ ॥ अव्यक्तपदं अस्पष्टाक्षरमित्यर्थः । आवर्तिनी आवर्तिन्याख्यां विद्यामावर्तयत आवर्तयति स्म । प्रकृतप्रयोजनार्थं । द्विजः क्षत्रियो बुधः ॥ २० ॥ स बुध. तस्य राज्ञः कार्दमेः सकलमर्थं वृत्तान्तं विदित्वा । योगमाहात्म्यादिति शेषः । ताः स्त्रिय. इलासहचरीः ॥२१॥ यूयं सर्वा. किंपुरुषीभूत्वा किंपुरुषाख्यदेवयोनिस्त्रियो भूत्वा । अत्रास्मिन् शैलस्य रोधसि वत्स्यथ । अतोऽस्मिन् गिरौ शीघ्रमेव आवासः उटजादिः विधीयतां ॥ २२ ॥ स्त्रियः किंपुरुषस्त्रियो यूयं । किंपुरुषान्नाम प्रसिद्धान् भर्तॄन् समुपलप्स्यथ । अन्विष्य प्राप्स्यथेत्यर्थः ॥२३॥ किंपुरुषीकृताः बुधस्य योगबलात्किंपुरुषस्त्रीकृता इत्यर्थः । शैलमुप शैलस्य समीप इत्यर्थः ॥२४॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने अष्टाशीतितमः सर्गः ॥ ८८ ॥

---

॥ ३ ॥ ति० मधुर सन्ध्यादिकृतश्रुतिकटुत्वरहित । मधुराक्षर टवर्गादिरहित ॥ १८ ॥ इत्यष्टाशीतितम सर्ग ॥ ८८ ॥

[ पा० ] १ क—घ. कामबाणनिपीडितः. २ ख. ग. ज. सत्यमाख्यात. ३ ज. चक्रिरेतस्मिन्वध्वस्ताबहुधातदा.

# एकोननवतितमः सर्गः ॥ ८९ ॥

बुधेन परिजनापगमानन्तरमेकाकिन्याइलाया· कलत्रीकरणेन तयासहविहरणम् ॥ १ ॥ मासान्तरेपुन· पुरुषभूतेनविस्मृतस्त्रीभावेनचइलेन बुधप्रति निजनगरगमनायाभ्यनुज्ञानयाचनम् ॥ २ ॥ बुधेनतंप्रति ससान्त्वनमावत्सरान्तंतत्रैववासविधानम् ॥ ३ ॥ बुधाद्गर्भधृतवत्याइलया पर्यायप्राप्तेनवमेमासि पुरूरवोनामकपुत्रप्रसवेन तस्यबुधहस्तएवप्रत्यर्पणम् ॥ ४ ॥

श्रुत्वा किंपुरुषोत्पत्तिं लक्ष्मणो भरतस्तदा ॥ आश्चर्यमिति चाब्रूतामुभौ रामं जनेश्वरम् ॥ १ ॥
अथ रामः कथामेतां भूय एव महायशाः ॥ कथयामास धर्मात्मा प्रजापतिसुतस्य वै ॥ २ ॥
सर्वास्ता विद्रुता दृष्ट्वा किन्नरीर्ऋषिसत्तमः ॥ उवाच रूपसंपन्नां तां स्त्रियं प्रहसन्निव ॥ ३ ॥
सोमस्याहं सुदयितः सुतः सुरुचिरानने ॥ भजस्व मां वरारोहे भक्त्या स्निग्धेन चक्षुषा ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा शून्ये स्वजनवर्जिता ॥ इला सुरुचिरप्रख्यं प्रत्युवाच महाग्रहम् ॥ ५ ॥
अहं कामचरी सौम्य तवास्मि वशवर्तिनी ॥ प्रशाधि मां सोमसुत यथेच्छसि तथा कुरु ॥ ६ ॥
तस्यास्तदद्भुतप्रख्यं श्रुत्वा हर्षमुपागतः ॥ स वै कामी सह तया रेमे चन्द्रमसः सुतः ॥ ७ ॥
बुधस्य माधवो मासस्तामिलां रुचिराननाम् ॥ गतो रमयतोत्यर्थं क्षणवत्तस्य कामिनः ॥ ८ ॥
अथ मासे तु संपूर्णे पूर्णेन्दुसदृशाननः ॥ प्रजापतिसुतः श्रीमाञ्शयने प्रत्यबुध्यत ॥ ९ ॥
सोपश्यत्सोमजं तत्र तपन्तं सलिलाशये ॥ ऊर्ध्वबाहुं निरालम्बं तं राजा प्रत्यभाषत ॥ १० ॥
भगवन्पर्वतं दुर्गं प्रविष्टोस्मि सहानुगः ॥ न तु पश्यामि तत्सैन्यं क्व नु ते मामका गताः ॥ ११ ॥
तच्छ्रुत्वा तस्य राजर्षेर्नष्टसंज्ञस्य भाषितम् ॥ प्रत्युवाच शुभं वाक्यं सान्त्वयन्परया गिरा ॥ १२ ॥
अश्मवर्षेण महता भृत्यास्ते विनिपातिताः ॥ त्वं चाश्रमपदे सुप्तो वातवर्षभयार्दितः ॥ १३ ॥
समाश्वसिहि भद्रं ते निर्भयो विगतज्वरः ॥ फलमूलाशनो वीर निवसेह यथासुखम् ॥ १४ ॥
स राजा तेन वाक्येन प्रत्याश्वस्तो महामतिः ॥ प्रत्युवाच ततो वाक्यं दीनो भृत्यक्षयाद्भृशम् ॥१५॥
त्यक्ष्याम्यहं स्वकं राज्यं नाहं भृत्यैर्विनाकृतः ॥ वर्तयेयं क्षणं ब्रह्मन्समनुज्ञातुमर्हसि ॥ १६ ॥
सुतो धर्मपरो ब्रह्मञ्ज्येष्ठो मम महायशाः ॥ शशबिन्दुरिति ख्यातः स मे राज्यं प्रपत्स्यते ॥१७॥

---

किंपुरुषोत्पत्ति किंपुरुषत्वेन तासां स्त्रीणामुत्पत्तिमित्यर्थः । अब्रूतां ॥१—२॥ सर्वासां इलाव्यतिरिक्तानां विद्रुतत्वात् हासः कामविकारमूल एव ॥ ३॥ भक्त्या अनुरागेण । स्निग्धं स्नेहयुक्त ॥४॥ महाग्रहो ग्रहदेवः ॥ ५ ॥ कामचरी स्वतत्रा ॥ ६—७ ॥ मासो गत इत्यन्वयः ॥ ८ ॥ प्रजापतिसुतः इलः ॥ ९—१० ॥ इलो विस्मृतस्वस्त्रीत्वादिवृत्तान्तः पृच्छति—भगवन्नित्यादि ॥ ११ ॥ नष्टसंज्ञस्येति । गौरीशापवशादिति शेषः ॥ १२ ॥ अश्मवर्षेणेत्यादि छद्मवचन गिरीशशापानुरोधार्थं ॥ १३—१४ ॥ तेन वाक्येनेति । इह यथासुखं निवसेति वाक्येनेत्यर्थ. ॥ १५ ॥ भृत्यैर्विनाकृतोप्यहं स्वक राज्यं न त्यक्ष्यामि त्यक्तुं न शक्नोमि । इह वसान इति शेषः। एतदेवाह—हे ब्रह्मन, क्षणमपि न वर्तयेय । नञ्‌ इहानुकर्षः । तस्मान्मां गमनाय समनुज्ञातुमर्हसि ॥ १६ ॥ उक्तवृत्तान्तमेव पुनरौत्कण्ठ्यप्रदर्शनायाह

---

**ति०** विहृता गतादृष्ट्वा । विद्रुताइतिपाठान्तरं । प्रहसन्नेवसर्वासास्वबुद्ध्यानिराकरणात्प्रहास ॥ ३ ॥ **स०** सुरुचिरप्रख्यं बहुशोभं ॥ ५ ॥ **स०** प्रत्यबुध्यत पुस्त्वमागतं ॥ ९ ॥ **स०** क्षणं त्वदाज्ञावासिकालपर्यन्तं । वर्तयेयं यथाकथंचिद्वर्तयेयं । अनन्तरसमनुज्ञातुमर्हसि । विनानञनुकर्षमन्वयोऽयमितिलाघवज्ञेयम् ॥ १६ ॥ **स०** पारंपर्यागतास्वमर्यादाकथयति—सुतइति । स मेभुक्तवत प्रवयस्कस्यसकाशादेवराज्यंप्रपत्स्यते । नस्वस्वातन्त्र्येणकरिष्यति । मद्वार्तावित्तिपर्यन्तमराजकप्रायंभवेदितिभावः ।

[ पा० ] १ झ. ठ. विहृतादृष्ट्वा. २ क—घ, च. छ. ज. ञ. शुभंवाक्य

न हि शक्ष्याम्यहं हित्वा भृत्यदारान्सुखान्वितान् ॥ प्रतिवक्तुं महातेजः किंचिदप्यशुभं वचः ॥१८॥
तथा ब्रुवति राजेन्द्रे बुधः परममद्भुतम् ॥ सान्त्वपूर्वमथोवाच वासस्त इह रोचताम् ॥ १९ ॥
न सन्तापस्त्वया कार्यः कार्दमेय महाबल ॥ संवत्सरोषितस्येह कारयिष्यामि ते हितम् ॥ २० ॥
तस्य तद्वचनं श्रुत्वा बुधस्याक्लिष्टकर्मणः ॥ वासाय विदधे बुद्धिं यदुक्तं ब्रह्मवादिना ॥ २१ ॥
मासं स स्त्री तथा भूत्वा रमयत्यनिशं शुभा ॥ मासं पुरुषभावेन धर्मबुद्धिं चकार सः ॥ २२ ॥
ततः सा नवमे मासि इला सोमसुतात्सुतम् ॥ जनयामास सुश्रोणी पुरूरवसमूर्जितम् ॥ २३ ॥
जातमात्रं तु सुश्रोणी पितृहस्ते न्यवेशयत् ॥ बुधस्य समवर्णाभमिला पुत्रं महाबलम् ॥ २४ ॥
बुधस्तु पुरुषीभूतं स वै संवत्सरान्तरम् ॥ कथाभी रमयामास धर्मयुक्ताभिरात्मवान् ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

---

## नवतितमः सर्गः ॥ ९० ॥

इलेराजनि पुनःपर्यायेणपुरुषत्वंगते बुधेन सवर्तादिपरमर्षिसमाह्वानपूर्वकं तैःसहमन्त्रणे तत्रकर्दमेनाश्वमेधेनपशुपतितोषणनिर्धारणम् ॥ १ ॥ अश्वमेधतुष्टेनपशुपतिना इलायसार्वकालिकपुंस्त्वप्राप्तिवरदानम् ॥ २ ॥ एवंरामेण भरतलक्ष्मणौप्रत्यश्वमेधमहिमानुवर्णनम् ॥ ३ ॥

तथोक्तवति रामे तु तस्य जन्म तदद्भुतम् ॥ उवाच लक्ष्मणो भूयो भरतश्च महायशाः ॥ १ ॥
इला सा सोमपुत्रस्य संवत्सरमथोषिता ॥ अकरोत्किं नरश्रेष्ठ तत्त्वं शंसितुमर्हसि ॥ २ ॥
तयोस्तद्वाक्यमाधुर्यं निशम्य परिपृच्छतोः ॥ रामः पुनरुवाचेमां प्रजापतिसुते कथाम् ॥ ३ ॥
पुरुषत्वं गते शूरे बुधः परमबुद्धिमान् ॥ संवर्तं परमोदारमाजुहाव महायशाः ॥ ४ ॥

---

—सुत इति ॥ प्रपत्स्यत इति ॥ मया गत्वा कृतादभिषेकादिति भावः ॥ १७ ॥ सुखान्वितानिति । देशस्थानिति शेषः । हित्वा न शक्ष्यामीति । इह स्थातुमिति शेषः । अशुभं वचः इह निवासलक्षणानिष्टवचनं वक्तुं नार्हसीति शेषः ॥ १८—२२ ॥ इला सोमसुतात्सुतं जनयामासेति । योजनगन्ध्यादिः पराशरादेर्व्यासादिमिव निषेकानन्तरमेवेति ज्ञेयं ॥ २३ ॥ जातमात्रं तत्क्षण एव । पितृसमाकारं पितृहस्ते उपनयनादिकृत्यार्थं न्यवेशयत् ॥२४–२५॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकोननवतितमः सर्गः ॥ ८९ ॥

---

तस्येति । पुरूरवस इत्यर्थः ॥ १ ॥ किमिति । संवत्सरात्परमिति शेषः । इलस्य पुरूरवसोपि पुत्रस्य सत्त्वाच्छशबिन्दोः पूर्वपुत्रस्य च सत्त्वात्पुरूर-

---

पुत्रस्यस्ववशवर्तितोपपादकं धर्मपरं महायशाइतिविशेषणद्वयं । नागोजिभट्टस्तु उक्तमेवराज्योत्कण्ठाप्रदर्शनायाह—सुतइति । ममराज्यप्रतिगमनाभावेइतिशेषइतिव्याचष्टे । तत्रैतद्विशेषणद्वयंनस्वरससलग्नमितिविन्दवोविदाकुर्वन्तु ॥ १७ ॥ **ति०** नवमे मासीति । नचैवंमध्येपुरुषत्वावस्थायागर्भदर्शनेनपूर्वावस्थास्मरणाभावरूपपार्वतीवरान्यथाभावापत्तिः । तद्वरबलादेवविद्यमानस्यापि गर्भस्यानेनाज्ञानमितिकल्पनेनादोषात् । एतदनुपपत्त्यैवबुधस्यसमागममारभ्यनवमेमासिसद्यएवगर्भग्रहणप्रसवावितितीर्थः ॥ **स०** नवमेमासि एकस्मिन्स्त्रीत्वमासेवृद्धिः । अपरस्मिन्नन्तर्धानं । अष्टादशमासेतदर्धनवमासीसपत्तिरितिभारतोक्तप्रकारेण न क्रमत इतिमन्तव्यं । अथवापार्वतीवरेणविद्यमानस्याप्यप्रतिभातंगर्भस्यान्तर्वृद्धिश्चसभवतइतियथावस्थितनवमेमासिसुतंजनयामास ॥२३॥ **ति०** संवत्सरान्तरं संवत्सरान्तरप्राप्त्यपेक्षितावशिष्टमासत्रयपर्यन्तं ॥ २५ ॥ इत्येकोननवतितमः सर्गः ॥ ८९ ॥

**ति०** प्रजापतिसुते तद्विषया ॥ ३ ॥

**[ पा० ]** १ च. छ. ञ. परमबुद्धिमान्. २ क. घ. च. छ. ञ. पुरुषीभूतंसमाश्वास्यनराधिपं.

च्यवनं भृगुपुत्रं च मुनिं चारिष्टनेमिनम् ॥ प्रमोदनं मोदकरं तथा दुर्वाससं मुनिम् ॥ ५ ॥
एतान्सर्वान्समानीय वाक्यज्ञस्तत्त्वदर्शिनः ॥ उवाच सर्वान्सुहृदो धैर्येण सुसमाहितान् ॥ ६ ॥
अयं राजा महाबाहुः कर्दमस्य इलः सुतः ॥ जानीतैनं यथाभूतं श्रेयो ह्यस्य विधीयताम् ॥ ७ ॥
तेषां संवदतामेव तमाश्रममुपागमत् ॥ कर्दमस्तु महातेजा द्विजैः सह महात्मभिः ॥ ८ ॥
पुलस्त्यश्च क्रतुश्चैव वषट्कारस्तथैव च ॥ ओङ्कारश्च महातेजास्तमाश्रममुपागमत् ॥ ९ ॥
ते सर्वे हृष्टमनसः परस्परसमागमे ॥ हितैषिणो बाह्लिपतेः पृथग्वाक्यान्यथाब्रुवन् ॥ १० ॥
कर्दमस्त्वब्रवीद्वाक्यं सुतार्थं परमं हितम् ॥ द्विजाः शृणुत मद्वाक्यं यच्छ्रेयः पार्थिवस्य हि ॥ ११ ॥
नान्यं पश्यामि भैषज्यमन्तरा वृषभध्वजम् ॥ नाश्वमेधात्परो यज्ञः प्रियश्चैव महात्मनः ॥
तस्माद्यजामहे सर्वे पार्थिवार्थे दुरासदम् ॥ १२ ॥
कर्दमेनैवमुक्तास्तु सर्व एव द्विजर्षभाः ॥ रोचयन्ति स्म तं यज्ञं रुद्रस्याराधनं प्रति ॥ १३ ॥
संवर्तस्य तु राजर्षेः शिष्यः परपुरंजयः ॥ मरुत्त इति विख्यातस्तं यज्ञं समुपाहरत् ॥ १४ ॥
ततो यज्ञो महानासीद्बुधाश्रमसमीपतः ॥ रुद्रश्च परमं तोषं जगाम सुमहायशाः ॥ १५ ॥
अथ यज्ञे समाप्ते तु प्रीतः परमया मुदा ॥ उमापतिर्द्विजान्सर्वानुवाच इलसन्निधौ ॥ १६ ॥
प्रीतोस्मि हयमेधेन भक्त्या च द्विजसत्तमाः ॥ अस्य बाह्लीपतेश्चैव किं करोमि प्रियं शुभम् ॥ १७ ॥
तथा वदति देवेशे द्विजास्ते सुसमाहिताः ॥ प्रसादयन्ति देवेशं यथा स्यात्पुरुषस्त्विला ॥ १८ ॥
ततः प्रीतो महादेवः पुरुषत्वं ददौ पुनः ॥ इलायै स महातेजा दत्त्वा चान्तरधीयत ॥ १९ ॥
निवृत्ते हयमेधे तु गतश्चादर्शनं हरः ॥ यथागतं द्विजाः सर्वे ह्यगच्छन्दीर्घदर्शिनः ॥ २० ॥
राजा तु बाह्लिमुत्सृज्य मध्यदेशे ह्यनुत्तमम् ॥ निवेशयामास पुरं प्रतिष्ठानं यशस्करम् ॥ २१ ॥

वसो राज्यप्राप्तिरभून्न वेति प्रश्नाशय. ॥ २—५ ॥ सुहृदः स्वसखीभूतान् ॥ ६ ॥ यथाभूतमिलस्य वृत्तान्त ॥ ७—११ ॥ वृषध्वज एव स्वकृतशापनिवर्तक. । तत्प्रीतिश्चाश्वमेधेन सर्वदेवताप्रीतिकरेणैवेति भाव: । नाश्वमेधात्पर इति । राज्ञां ब्रह्महत्यान्तसर्वपापनिवारक इति शेषः । प्रियश्चैव महात्मन इति । यद्यपि प्रजापतिदेवताकः प्रजापतिप्रीतिकरोश्वमेध. तथापि सर्वदेवताप्रीतिकरत्वादस्य रुद्रप्रीतिकरत्वमपि सिद्ध। वस्तुतस्तु "यज्ञो वै विष्णुः" इति श्रुतिवचनाद्यज्ञपुरुषाराधनमश्वमेधः । विष्णवाराधनमित्युपक्रमे लक्ष्मणोक्त्या विष्णवाराधनमेवाश्वमेधः । तदाराधनत्वेनैव हरस्यापि प्रियत्व । प्रकृतब्रह्महत्यावारकत्वेन तस्य प्रशसार्थं पुनरपि रामेण तद्विषयार्थवाद उक्तः । एतेन यत्केनचिदुक्तं लक्ष्मणेन विष्णवाराधनयज्ञे प्रस्तुते पुनः रामेण रुद्राराधनत्वप्रदर्शन विष्णवपेक्षया रुद्राधिक्यस्य प्रतिपादनार्थमिति, तद्दूरोत्सारित । ब्रह्महत्यावारकप्रदर्शनार्थत्वाद्रामोक्तस्य ॥ १२–१३ ॥ समुपाहरत् संभारजातमुपहृतवान् ॥ १४—२० ॥ बाह्लिमुत्सृज्येति । ज्येष्ठपुत्रशशबिन्द्वधिष्ठितमिति

ति० यथाभूतं ईश्वराज्ञयानुभवसिद्धस्त्रीपुंसरूपप्रकारद्वयंप्राप्तं एनं जानीत ॥ ७ ॥ ति० नन्वश्वमेधेनकथंवृषभध्वजसतोषोतआह—प्रियएवमहात्मन । यद्यपिप्रजापतिर्दैवत्यत्वात्प्रजापतिप्रीतिकर स । तथापि हिरण्यगर्भावस्थाविशेषस्यैवरुद्रत्वान्नदोष. ॥ स० महात्मनोब्रह्मणोविष्णोर्वाऽयंयज्ञ प्रियश्च । रुद्रस्यशापदातृत्वात्तद्द्वारा श्रीहरिप्रसादआसादनीयइतिवृषभध्वजमित्युक्तिर्नतुपरममुख्यतयेतिमन्तव्य ॥१२॥ स० रुद्रश्चेतिशब्दात्परममुख्यमुख्येशब्दवाच्यहरिहिरण्यगर्भहराणाप्रीतिंतरतमतोऽभिप्रैति ॥ १५ ॥ ति० देवेशंप्रसादयन्तिस्म । पुरुषत्वंविनान्यवरवृणीष्वेतिपूर्ववद्यथानवदेत्तथाविशिष्यप्रसन्नमकुर्वन्नित्यर्थं । तदेवोक्त—यथास्यादिति ॥ १८ ॥

[ पा० ] १ झ. ठ. प्रियएव. २ ग. ज. समुपागमत्. ३ क—ड. झ. ञ गतेचादर्शनंहरे.

शशबिन्दुस्तु राजर्षिर्बाह्लिं परपुरञ्जयः ॥ प्रतिष्ठाने इलो राजा प्रजापतिसुतो बली ॥ २२ ॥
स काले प्राप्तवाँल्लोकमिलो ब्राह्ममनुत्तमम् ॥ ऐलः पुरूरवा राजा प्रतिष्ठानमवाप्तवान् ॥ २३ ॥
ईदृशो ह्यश्वमेधस्य प्रभावः पुरुषर्षभौ ॥ स्त्रीभूतः पौरुषं लेभे यच्चान्यदपि दुर्लभम् ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे नवतितमः सर्गः ॥ ९० ॥

---

## एकनवतितमः सर्गः ॥ ९१ ॥

रामेण लक्ष्मणमुखाद्वसिष्ठाद्याह्वानेन तैः सहाश्वमेधकरणनिर्धारणपूर्वकं लक्ष्मणंप्रति यज्ञशालानिर्मापणसुग्रीवविभीषणाद्यानयनयागीयसामग्रीसंपादनादिचोदना ॥ १ ॥

एतदाख्याय काकुत्स्थो भ्रातृभ्याममितप्रभः ॥ लक्ष्मणं पुनरेवाह धर्मयुक्तमिदं वचः ॥ १ ॥
वसिष्ठं वामदेवं च जाबालिमथ काश्यपम् ॥ द्विजांश्च सर्वप्रवरानश्वमेधपुरस्कृतान् ॥ २ ॥
एतान्सर्वान्समानीय मन्त्रयित्वा च लक्ष्मण ॥ हयं लक्षणसंपन्नं विमोक्ष्यामि समाधिना ॥ ३ ॥
तद्वाक्यं राघवेणोक्तं श्रुत्वा त्वरितविक्रमः ॥ द्विजान्सर्वान्समाहूय दर्शयामास राघवम् ॥ ४ ॥
ते दृष्ट्वा देवसंकाशं कृतपादाभिवन्दनम् ॥ राघवं सुदुराधर्षमाशीर्भिः समपूजयन् ॥ ५ ॥
प्राञ्जलिः स तदा भूत्वा राघवो द्विजसत्तमान् ॥ आचचक्षेऽश्वमेधस्य ह्यभिप्रायं महायशाः ॥ ६ ॥
ते तु रामस्य तच्छ्रुत्वा नमस्कृत्वा वृषध्वजम् ॥ अश्वमेधं द्विजाः सर्वे पूजयन्ति स्म सर्वशः ॥ ७ ॥
स तेषां द्विजमुख्यानां वाक्यमद्भुतदर्शनम् ॥ अश्वमेधाश्रितं श्रुत्वा भृशं प्रीतोऽभवत्तदा ॥ ८ ॥

---

शेषः ॥ २१ ॥ बाह्लिमिति । अध्युवासेति शेषः ॥२२॥ काले शरीरावसानकाले । ब्राह्म ब्रह्मसंबन्धिन॥२३॥ यच्चान्यदिति । उक्तब्रह्मलोकादित्यर्थः ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने नवतितमः सर्गः ॥ ९० ॥

भ्रातृभ्यामिति चतुर्थी ॥ १ ॥ द्विजांश्च सर्वप्रवरानिति गुरुवैषम्यमार्षं । अश्वमेधपुरस्कृतानिति । अश्वमेधप्रयोगकुशलानित्यर्थः ॥ २ ॥ मन्त्रयित्वा विचार्य ॥ ३—५ ॥ अश्वमेधस्येति । अनुष्ठानविषयकमिति शेषः । उवाच धर्मसयुक्तमश्वमेधाश्रित वच इति च पाठः ॥ ६ ॥ वृषध्वज नमस्कृत्वेति । सोल्लुण्ठनं वचः इलवद्रुद्राराधन विहायेत्यर्थः । कर्दमकृतयागस्येवास्य रुद्रात्प्रयोजनगन्धाभावात् परदेवतामुद्दिश्याश्वमेध कर्तुमुद्युक्ता इति भावः । रुद्रस्तु सर्वयज्ञानर्हः शूद्राराध्यः । यज्ञमध्ये च तत्प्रसङ्गे अबुपस्पर्शनादिप्रायश्चित्तस्य प्रसिद्धत्वात् । "इम पशुं पशुपते ते अद्य बध्नाम्यग्ने" इत्यादिश्रुतिस्तु अग्नेरेव यज्ञान्वयप्रतिपादिका । कर्दमकृतयज्ञस्य नाराध्यो रुद्रः । किंतु स्वाभिमतदेवतारूपविष्णवाराधनत्वेन प्रीतो रुद्र इत्युच्यते । उपक्रमे तत्पूर्वसर्गेषु "यज्ञो वै विष्णुः" इत्युक्तरीत्या विष्णोराराध्यत्वसमर्थनात् । यद्वा विष्णुदत्तवरत्वाद्रुद्रस्य । विष्णुमपूजयन् । रामस्त्वश्वमेधं

---

स० स्त्रीपूर्व. पूर्वस्त्रीत्वेनजात । पौरुष पुरुषत्व । लेभे । नकेवलमेतावत् किंतुयच्चान्यदुर्लभंतदपिप्राप्तवानित्यर्थ ॥ २४ ॥ इतिनवतितम सर्ग ॥ ९० ॥

ति० समाधिना सावधानचित्ततयाहयंविमोक्ष्यामीतिलक्ष्मणमाहेतिपूर्वेणसबन्ध ॥ ३ ॥ ति० वृषध्वजं रुद्रं । त्रेताग्निरूप-

[ पा० ] १ झ. ठ. स्त्रीपूर्व . २ क. ख. घ च. छ कृतेपादाभिवन्दने. ३ क. च. घ—ट. उवाचधर्मसयुक्तमश्वमेधाश्रितंवचः.

विज्ञाय कर्म तत्तेषां रामो लक्ष्मणमब्रवीत् ॥ प्रेषयस्व द्रुतं दूतान्सुग्रीवाय महात्मने ॥ ९ ॥
यथा महद्भिर्हरिभिर्बहुभिश्च वनौकसाम् ॥ सार्धमागच्छ भद्रं ते ह्यनुभोक्तुं महोत्सवम् ॥ १० ॥
विभीषणश्च रक्षोभिः कामगैर्बहुभिर्वृतः ॥ अश्वमेधं महायज्ञमायात्वतुलविक्रमः ॥ ११ ॥
राजानश्च महाभागा ये मे प्रियचिकीर्षवः ॥ सानुगाः क्षिप्रमायान्तु यज्ञं द्रष्टुमनुत्तमम् ॥ १२ ॥
देशान्तरगता ये च द्विजा धर्मसमाहिताः ॥ आमन्त्रयस्व तान्सर्वानश्वमेधाय लक्ष्मण ॥ १३ ॥
ऋषयश्च महाबाहो आहूयन्तां तपोधनाः ॥ देशान्तरगताः सर्वे सदाराश्च द्विजातयः ॥
तथैव तालावचरास्तथैव नटनर्तकाः ॥ १४ ॥
यज्ञवाटश्च सुमहान्गोमत्या नैमिशे वने ॥ आज्ञाप्यतां महाबाहो तद्धि पुण्यमनुत्तमम् ॥ १५ ॥
शान्तयश्च महाबाहो प्रवर्त्यन्तां समन्ततः ॥ १६ ॥
शतशश्चापि धर्मज्ञाः क्रतुमुख्यमनुत्तमम् ॥ अनुभूय महायज्ञं नैमिशे रघुनन्दन ॥ १७ ॥
तुष्टः पुष्टश्च सर्वोसौ मानितश्च यथाविधि ॥ प्रीतिं यास्यति धर्मज्ञ शीघ्रमामन्त्र्यतां जनः ॥ १८ ॥
शतं वाहसहस्राणां तण्डुलानां वपुष्मताम् ॥ अयुतं तिलमुद्गानां प्रयात्वग्रे महाबल ॥ १९ ॥
चणकानां कुलत्थानां माषाणां लवणस्य च ॥ अतोनुरूपं स्नेहं च गन्धं संक्षिप्तमेव च ॥ २० ॥
सुवर्णकोट्यो बहुला हिरण्यस्य शतोत्तराः ॥ अग्रतो भरतः कृत्वा गच्छत्वग्रे समाधिना ॥ २१ ॥
अन्तरा पण्यवीथ्यश्च सर्वे च नटनर्तकाः ॥ सूदा नार्यश्च बहवो नित्यं यौवनशालिनः ॥ २२ ॥
भरतेन तु सार्धं ते यान्तु सैन्यानि चाग्रतः ॥ नैगमा बलवृद्धाश्च द्विजाश्च सुसमाहिताः ॥ २३ ॥
कर्मान्तिकान्वर्धकिनः कोशाध्यक्षांश्च नैगमान् ॥ मम मातृस्तथा सर्वाः कुमारान्तःपुराणि च ॥२४॥
काञ्चनीं मम पत्नीं च दीक्षायां ज्ञांश्च कर्मणि ॥ अग्रतो भरतः कृत्वा गच्छत्वग्रे महायशाः ॥२५॥

यथापूर्वमकरोत् ॥ ७—९ ॥ महद्भिर्हरिभिः हनुमदङ्गदादिभिः । बहुभिश्चेति । भ्रात्रभिप्रायेण अनुभोक्तुं द्रष्टुमित्यर्थः ॥ १०—१३ ॥ ताल गृहीत्वावचरन्तीति तालावचराः सूत्रधाराः ॥ १४ ॥ गोमत्या नद्यास्तीर इति शेषः ॥ १५—१६ ॥ धर्मज्ञाः शतशः अनेके नैमिशे महायज्ञमश्वमेधमनुभूयानुष्ठाय कृतार्था इति शेष. । यद्वा धर्मज्ञ इति पाठे अनुभूय दृष्ट्वा प्रीति यास्यतीत्युत्तरेणान्वयः ॥ १७ ॥ प्रतियास्यतीति च पाठः ॥ १८ ॥ वपुष्मतामिति । अखण्डानामित्यर्थः । शतं वाहसहस्राणीति । लक्षं बलीवर्दा इत्यर्थः॥१९॥ अतोनुरूपं उक्तब्राह्मणभोजनसविधानानुरूपं । स्नेहं घृततैलपयोदध्यादिकमित्यर्थः । सक्षिप्तमेव गन्धमिति । अघृष्टमेवेत्यर्थः ॥ २० ॥ हिरण्यस्य रजतस्येत्यर्थः । शतोत्तरा इति । कोट्य इत्यर्थः । समाधिना सावधानतया ॥ २१ ॥ अन्तरा मार्गमध्ये । तत्र चापेक्षिताः आपणवीथ्य. । तत्प्रवर्तका वणिजश्चेत्यर्थः ॥ २२—२३ ॥ कर्मान्तिकाः किङ्कराः । कुमारान्त.पुराणीति । भरतलक्ष्मणशत्रुघ्नपत्न्य इत्यर्थः ॥ २४ ॥ काञ्चनी मम पत्नीमिति । स्वर्णमयीं सीताप्रतिमामित्यर्थ. । पत्न्याश्च प्रतिनिधिसद्भावादिकं सर्व

त्वाद्रुद्रस्ययज्ञनिर्विघ्नार्थतन्नमस्कार ॥ ७ ॥ **ति०** तत्कर्मविज्ञाय तत्कर्मकरणाङ्गीकारविज्ञाय ॥ ९ ॥ **स०** शान्तय ग्रहादिसौमुख्यापादिका ॥ १६ ॥ **ति०** सर्वइति । 'दुन्दुभीन्समाघ्नन्ति 'वीणागाथिनौगायत ' इत्यादिकल्पसूत्रोक्तप्रयोगापेक्षिता । यौवनशालिनइति । 'पुमान्स्त्रिया ' इत्येकशेष ॥ २२ ॥ **स०** कर्मान्तिकान् कर्मकरान् । वर्धकिन तक्षण । नैगमान् मूलनगरेतरपुरगान् । कुमारान्त पुराणिच भरतादिपुत्रान्त पुराणि ॥ २४ ॥ **ति०** काञ्चनीं काञ्चनमयीं । दीक्षाया दीक्षानिमित्त । कर्मणि ज्ञान् कर्मविषयज्ञानवतऋषीन् । 'ज्ञोविद्वान्सोमजोपिच ' इत्यमर. । नचपत्न्याअपियजमानत्वाद्यज्ञस्वामित्वाच्चस्वामिनोयजमानस्यप्रतिनिधिप्रतिषेधात्कथंपत्न्या.प्रतिनिधि । 'स्वामिनोमेर्देवतायाश्चशब्दात्कर्मणश्चप्रतिनिधिर्निवृत्त ।'

[ पा० ] १ ख. शीघ्रमहद्भिर्हरिभिर्बलिभिश्चवनाश्रयै. २ ख. ग. घ त्वनुचरै.सह ३ ङ—ट यज्ञभूमिनिरीक्षका. ४ क. च. छ. ट. प्रतियास्यति.

उपकार्या महार्हाश्च पार्थिवानां महौजसाम् ॥ सानुगानां नरश्रेष्ठो व्यादिदेश महाबलः ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

---

## द्विनवतितमः सर्गः ॥ ९२ ॥

रामेणाश्वस्यक्षोणीप्रदक्षिणीकरणायलक्ष्मणप्रेरणपूर्वकमश्वमेधकरणारभः ॥ १ ॥

तत्सर्वमखिलेनाशु संस्थाप्य भरताग्रजः ॥ हयं लक्षणसंपन्नं कृष्णसारं मुमोच ह ॥ १ ॥
ऋत्विग्भिर्लक्ष्मणं सार्धमश्वतन्त्रे नियोज्य च ॥ ततोऽभ्यगच्छत्काकुत्स्थः सह सैन्येन नैमिशम् ॥२॥
यज्ञवाटं महाबाहुर्दृष्ट्वा परममद्भुतम् ॥ प्रहर्षमतुलं लेभे श्रीमानिति वचोऽब्रवीत् ॥ ३ ॥
नैमिशे वसतस्तस्य सर्व एव नराधिपाः ॥ आनिन्युरुपहारांश्च तान्रामः प्रत्यपूजयत् ॥ ४ ॥
उपकार्या महार्हाश्च पार्थिवानां महात्मनाम् ॥ सानुगानां नरश्रेष्ठो व्यादिदेश महामतिः ॥ ५ ॥
अन्नपानानि वस्त्राणि सानुगानां महात्मनाम् ॥ भरतः संददावाशु शत्रुघ्नसहितस्तदा ॥ ६ ॥
वानराश्च महात्मानः सुग्रीवसहितास्तदा ॥ विप्राणां प्रणताः सर्वे चक्रिरे परिवेषणम् ॥ ७ ॥
विभीषणश्च रक्षोभिर्बहुभिः स्रग्विभिर्वृतः ॥ ऋषीणामुग्रतपसां पूजां चक्रे महात्मनाम् ॥ ८ ॥

---

युद्धकाण्डे सप्रकारं निरूपितं, तत्रैव द्रष्टव्यं ॥ २५—॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकनवतितमः सर्गः ॥ ९१ ॥

---

कृष्णसारं कृष्णप्रधानं । प्रायशः कृष्णवर्णमित्यर्थः । कृष्णशारमिति च पाठः ॥ १ ॥ अश्वतन्त्र इति। "चतुश्शता रक्षन्ति यज्ञस्याघाताय तथा शतेन राजपुत्रैः सहाध्वर्युः पुरस्तात्प्रत्यङ् तिष्ठन् प्रोक्षति" इति श्रुतेः । अश्वरक्षादिसंबन्धयज्ञप्रयोगनिर्वर्तनार्थमित्यर्थः ॥ २—३ ॥ उपहाराः उपदाः ॥ ४—५ ॥ राजपूजामाह—अन्नेत्यादि ॥ राजसत्कारे भरतशत्रुघ्ननियोगः सुग्रीवादीनां विप्रपरिवेषणे विभीषणस्य ब्रह्मर्षिसत्कारे नियोग इत्याह—भरत इत्यादि ॥ ६—

---

इत्यापस्तम्बसूत्रात्स्वामिनोयजमानस्यपत्न्यावाइतिचेन्न । "यस्यभार्यान्यदेशस्थानेष्यतेगतिनाऽथवा । अशक्ताप्रतिकूलावातस्याप्रतिनिधिक्रिया" इत्येवंविधेविषयेप्रतिनिधेरनुमतत्वात् । 'अन्येकुशमयीपत्नीकृत्वातुगृहमेधिन । अग्निहोत्रमुपासन्तेयावज्जीवमनुव्रता । सौवर्णीवाषोडशपलैर्माषकैः षोडशैरपि ।' इतिस्मृतेश्च । 'मृतायामपिभार्यायावैदिकींनत्यजेद्विज । उपाधिनापितत्कर्मयावज्जीवंसमापयेत्' इतिविष्णुस्मृतेश्च । वस्तुतस्त्वेषासौवर्णीनप्रतिनिधि । देवताप्रतिमास्विवतत्त्वबुद्धिरेव । नतुसादृश्यबुद्धिरत्रेतिप्रतिनिधित्वाभावात् । किंतुभगवतऋषीणाचावाहनादिसामर्थ्येनघटनाकौशलेनचतत्त्वबुद्धेरेवोत्पादात् । पत्नीकर्मनिर्वाहकत्वचततएव । अतएव 'काञ्चनीममपत्नी' इतिसगच्छते । एतेनकाम्येष्वश्वमेधादिषुकथप्रतिनिधिरितिपरास्तमित्याहु ॥ **स०** काञ्चनीमिति । सीतातु 'रामस्यदृश्यासर्वेषामदृश्याजनकात्मजा' इत्युक्ते अमरविवक्षयारामेणसासन्निकृष्यते । पामरविवक्षयाविप्रकृष्यतइतितद्विवक्षयासमीपेप्रतिनिधिनिधापनमितिमन्तव्य ॥ २५ ॥ **ति०** उपकार्या वासस्थानानि ॥ २६ ॥ **स०** अन्नपानानिवस्त्राणिव्यादिदेशेत्यन्वय ॥ २७ ॥ **स०** प्रवरावानरा वानरप्रवरा । विप्राणापरिवेषणंचक्रु ॥ २८ ॥ **स०** उग्रतपसापूजाचक्रइत्यनेन तत्सभाजनचातुरीमान्विभीषणइतिद्योत्यते ॥ २९ ॥ इत्येकनवतितम सर्ग ॥ ९१ ॥

**ति०** तत्सर्वमिति । यागोपकरणसर्वमित्यर्थ । अखिलेन अन्यूनतयाजनेनवा । कृष्णसारं कृष्णसारमृगसमानवर्ण । यद्वा कृष्णवर्ण सर्वयज्ञपशुभ्य सारभूतचेत्यर्थ ॥ **स०** अखिलेन खिलभिन्नेनदृढेनवाहनादिना । कृष्णसार तथा तीव्रव्रजनेनतत्त्वोक्तिर्वा । कृष्णवर्णवंतसारश्रेष्ठवा । कृष्णंवर्णसरतिगच्छति कर्णेएकस्मिन्नितिसतथावा ॥ १ ॥

[ **पा०** ] १ क ख ग. ङ. झ. ञ. प्रस्थाप्य. २ क—घ. च छ. ज. आजग्मुस्सर्वराष्ट्रेभ्यस्तान्राम . ३ झ. अन्नपानादिवस्त्राणिसर्वोपकरणानिच । भरत सहशत्रुघ्नोनियुक्तोराजपूजने. ४ क. ग. ङ. झ. ञ. ट परिवेषणंचविप्राणाप्रयता सम्प्रचक्रिरे. ५ ङ. झ. ञ. ट. मुग्रतपसाकिंकर.समपद्यत.

एवं सुविहितो यज्ञो हयमेधोऽभ्यवर्तत ॥ लक्ष्मणेनाभिगुप्ता च हयचर्या प्रवर्तत ॥ ९ ॥
ईदृशं राजसिंहस्य यज्ञप्रवरमुत्तमम् ॥ नान्यः शब्दोऽभवत्तत्र हयमेधे महात्मनः ॥ १० ॥
छन्दतो देहि देहीति यावत्तुष्यन्ति याचकाः ॥ तावत्सर्वाणि दत्तानि क्रतुमध्ये महात्मनः ॥
विविधानि च गौडानि खाण्डवानि तथैव च ॥ ११ ॥
न निस्सृतं भवत्योष्ठाद्वचनं यावदर्थिनाम् ॥ तावद्वानररक्षोभिर्दत्तमेवाभ्यदृश्यत ॥ १२ ॥
न कश्चिन्मलिनस्तत्र दीनो वाऽप्यथ कर्शितः ॥ तस्मिन्यज्ञवरे राज्ञो हृष्टपुष्टजनावृते ॥ १३ ॥
ये च तत्र महात्मानो मुनयश्चिरजीविनः ॥ नास्मरंस्तादृशं यज्ञं नाप्यासीत्स कदाचन ॥ १४ ॥
यः कृत्यवान्सुवर्णेन सुवर्णं लभते स सः ॥ वित्तार्थी लभते वित्तं रत्नार्थी रत्नमेव च ॥ १५ ॥
रजतानां सुवर्णानामश्मनामथ वाससाम् ॥ अनिशं दीयमानानां राशिः समुपदृश्यते ॥ १६ ॥
न शक्रस्य धनेशस्य यमस्य वरुणस्य वा ॥ ईदृशो दृष्टपूर्वो न एवमूचुस्तपोधनाः ॥ १७ ॥
सर्वत्र वानरास्तस्थुः सर्वत्रैव च राक्षसाः ॥ वासोधनान्नमर्थिभ्यः पूर्णहस्ता ददुर्भृशम् ॥ १८ ॥
ईदृशो राजसिंहस्य यज्ञः सर्वगुणान्वितः ॥ संवत्सरमथो साग्रं वर्तते न च हीयते ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

---

॥ ८ ॥ हयचर्या अश्वमेधयागानुष्ठानं ॥ ९ ॥ याचकाः यावत्तुष्यन्ति तावद्देहि देहीति शब्दादन्यः शब्दो नाभवत् ॥ १० ॥ सर्वाणि दत्तानीत्यस्यैव प्रपञ्चन– विविधानीत्यादि । गौडानि गुडविकाररूपाणि ॥ ११ ॥ अर्थिनां मुखाद्देहीति वचनं यावन्न निस्सृत, तावद्दत्तमेवाभ्यदृश्यत ॥ १२—१३ ॥ चिरजीविनो मुनयः तादृश यज्ञ । इतः पूर्वं तादृशो नासीदित्याहुरिति शेषः ॥ १४—१६ ॥ उक्त एवार्थ आदरादभ्यस्यते—न शक्रस्येत्यादि ॥ १७–१८ ॥ सवत्सरं वर्तते न च हीयते । संवत्सरात्परमपीति शेषः । पुनः पुनरश्वमेध' प्रावर्ततेत्यर्थ. ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने द्विनवतितमः सर्गः ९२

---

**स०** राजसिंहस्य राजश्रेष्ठस्यईदृशउत्तमयज्ञप्रवरमुद्दिश्यैव शब्द महानययज्ञइतिस्तुतिरूपोऽभवत् । हयमेधेप्रवृत्तेसति । अन्य तदस्तुतिरूप न नाभवत् । 'यज्ञप्रवरमुत्तममभव'दितिव्याख्यन्नागोजिभट्ट किमभिप्रायेणैवमूचिवानितिविभावनीय ॥ १० ॥ **स०** यावत् यावता याचकास्तुष्यन्ति तावद्द्रव्यंविस्रब्ध अतिदानेस्वामीराम कुतएवंत्वयाकारीतिभर्त्सयेदितिशङ्काविकल । देहीतिबोधितेन तावत् तावन्ति सर्वाणिदत्तानि ॥ ११ ॥ **स०** दानौघसमलङ्कृत तादृशयज्ञंनास्मरन् एतत्समसवनानुभवाभावादेवस्मरणाभावइतिभाव । प्राक्कृतअन्यानुष्ठितं सवनं दानौघसमल दानानामोघेनसंघेनसमल सदोष । अपात्रेभ्योवाऽसमर्थे वाअदेयदित्सावेतिसामल्यंदानेष्वितिमन्तव्यं । अस्मरन्तथानुभवादितिभाव ॥ १४ ॥ **स०** सुवर्णाना शोभनवर्णोपेताना । हिरण्याना रजताना ॥ १६ ॥ इतिद्विनवतितम सर्ग ॥ ९२ ॥

[ पा० ] १ ङ—ठ. देहिविस्रब्धो. २ क ख. घ—छ झ. ञ. ट. यज्ञंदानौघसमलंकृतं ३ ङ—ठ हिरण्याना. ४ च. छ. वव्रृधेचमहीयते. क. घ. वव्रृधेनाभ्यहीयत.

## त्रिनवतितमः सर्गः ॥ ९३ ॥

रामाश्वमेधदर्शनाय कुशलवादिशिष्यगणेनसहसमागतवतावाल्मीकिना ऋषिवाटनिकटेपर्णशालानिर्मापणेनतत्रवासः ॥ १ ॥ तथा कुशलवौप्रति परेद्यु.प्रभातेयज्ञवाटनिकटादिषुश्रीरामायणगानचोदनपूर्वकं रामेणप्रश्ने आत्मनोर्वाल्मीकिशिष्यत्वकीर्तननियोजनम् ॥ २ ॥

वर्तमाने तथाभूते यज्ञे च परमाद्भुते ॥ सशिष्य आजगामाशु वाल्मीकिर्मुनिपुङ्गवः ॥ १ ॥
स दृष्ट्वा दिव्यसङ्काशं यज्ञमद्भुतदर्शनम् ॥ एकान्ते ऋषिवाटानां चकार उटजाञ्छुभान् ॥ २ ॥
शकटांश्च बहून्पूर्णान्फलमूलैश्च शोभनान् ॥ वाल्मीकिवाटे रुचिरे स्थापयन्नविदूरतः ॥ ३ ॥
आसीत्सुपूजितो राज्ञा मुनिभिश्च महात्मभिः ॥ वाल्मीकिः सुमहातेजा न्यवसत्परमात्मवान् ॥४॥
स शिष्यावब्रवीद्धृष्टौ युवां गत्वा समाहितौ ॥ कृत्स्नं रामायणं काव्यं गायेथां परया मुदा ॥ ५ ॥
ऋषिवाटेषु पुण्येषु ब्राह्मणावसथेषु च ॥ रथ्यासु राजमार्गेषु पार्थिवानां गृहेषु च ॥ ६ ॥
रामस्य भवनद्वारि यत्र कर्म प्रवर्तते ॥ ऋत्विजामग्रतश्चैव तत्र गेयं विशेषतः ॥ ७ ॥
इमानि च फलान्यत्र स्वादूनि विविधानि च ॥ जातानि पर्वताग्रेषु चास्वाद्यास्वाद्य गायताम् ॥८॥
न यास्यथः श्रमं वत्सौ भक्षयित्वा फलानि वै ॥ मूलानि च सुमृष्टानि नगराद्बहिरास्थथः ॥ ९ ॥
यदि शब्दापयेद्रामः श्रवणाय महीपतिः ॥ ऋषीणामुपविष्टानां ततो गेयं प्रवर्तताम् ॥ १० ॥
दिवसे विंशतिः सर्गा गेया मधुरया गिरा ॥ प्रमाणैर्बहुभिस्तत्र यथोद्दिष्टा मया पुरा ॥ ११ ॥
लोभश्चापि न कर्तव्यः स्वल्पोपि धनकाङ्क्षया ॥ किं धनेनाश्रमस्थानां फलमूलोपजीविनाम् ॥१२॥
यदि पृच्छेत्स काकुत्स्थो युवां कस्येति दारकौ ॥ आवां वाल्मीकिशिष्यौ स्वो ब्रूतमेवं नराधिपम् १३
इमास्तन्त्रीः सुमधुराः स्थानं वा पूर्वदर्शनम् ॥ मूर्च्छयित्वा सुमधुरं गायेथां विगतज्वरौ ॥ १४ ॥

तथाभूते प्रागुक्तप्रकारं प्रवृत्ते ॥ १ ॥ ऋषिवाटानामिति । समीप इति शेषः । उटजानिति बहुवचन बहुशिष्यत्वात् ॥ २ ॥ रुचिर इति । अभूदिति शेषः ॥ ३—६ ॥ यत्र कर्म चेति । अश्वमेधयाग इत्यर्थः ॥ ७ ॥ अत्रास्माक वाटे । विद्यमानान्यास्वाद्य । गायतामिति लोट्प्रथमपुरुषद्विवचनं । यदा यदा श्रमः तदा तदैव कुरुतं । भवन्താविति शेषः ॥ ८ ॥ नगराद्बहिरास्थथः । क्षत्रियकुलेष्विति शेषः । नगराद्बहिः उटज इत्यर्थः । आस्थथः अधितिष्ठतमिति यावत् । आसेश्छान्दस. श्यन् परस्मैपद च ॥ ९ ॥ शब्दापयेत् आह्वयेत् ॥ १० ॥ तत्र रामायणे । बहुभि. सर्गप्रमाणैर्यथा मया पुरा सर्गा उद्दिष्टाः तेषु सर्गेषु दिवसे दिवसे विंशतिसर्गा गेयाः ॥११–१२॥ आवां वाल्मीकिशिष्यौ स्व इत्येवं ब्रूत नामुकदारकाविति ॥ १३ ॥ इमास्तन्त्रीरिति । वीणाशिरा इत्यर्थः । अपूर्वदर्शनं अपूर्वस्वराणां दर्शनं यत्र तत्तथा तादृशं स्थान षड्जादिस्वरभेदसिद्ध्यै वीणादण्डोपरि कल्पितं शिराणा स्पर्शविशेषसिद्धिप्रयोजनस्थानपङ्क्तिः

**स०** सशिष्य कुशलवादिशिष्यसहित ॥ १ ॥ **स०** दिव्यात् दिविभवादपिसकाशतइतिसतथात । एकान्ते जनसकुलताविकलेस्थले । ऋषिसघात तेनसहागत ऋषिसघ ॥ २ ॥ **ति०** शकटान् अन्नादिपूर्णान् । फलमूलाश्चशोभनान् सर्वतोरुचिरे वाल्मीकिवाटेऽस्थापयन्नित्यर्थ । 'रुचिरोभूदि'तिशेषइतिकतकव्याख्यानुसारीपाठोमृग्य क्वचित् । 'शकटैर्बहुभि पूर्णै फलमूलैश्चशोभनै. । वाल्मीकिवाटोरुचिर शोभयन्निवसर्वत ' इतिपाठ सइत्यन्ये । **स०** शकटान् अग्निहोत्रपात्रादिसयुतान् । फलमूलान् फलमूलान्येषातइत्यर्शआद्यजन्त.शब्दइतिपुंल्लिङ्गतोपपत्ति । वाल्मीकिवाटे तदाश्रममार्गे ॥ ३ ॥ **ति०** शिष्यौ कुशलवौ । **स०** धृष्टौ धैर्यशालिनौ ॥ ५ ॥ **ति०** रथ्यासु उपमार्गेषु ॥ ६ ॥ **ति०** फलानिभुक्त्वानश्रमंयास्यथ । नापि रागात् कण्ठमाधुर्यात् परिहास्यथ । नगराद्बहिरास्थथ इतिपाठे रात्रिकालेइतिशेष. । उटजेष्वित्यर्थ. ॥ ९ ॥ **ति०** ऋषीणा अग्रेइतिशेष ॥ १० ॥

**[ पा० ]** १ झ. ठ. ऋषिसघातश्चकार. २ झ. ठ. फलमूलाश्च ३ क—घ. रुचिरेगोमत्याअविदूरत . ४ ड. झ. गायेता. ५ झ. ञ. ठ. नरागात्परिहास्यथ . ६ ड. च. छ. झ. यथायोगंप्रवर्तता.

आदिप्रभृति गेयं स्यान्न चावज्ञाय पार्थिवम् ॥ पिता हि सर्वभूतानां राजा भवति धर्मतः ॥ १५ ॥
तद्युवां हृष्टमनसौ श्वः प्रभाते समास्थितौ ॥ गायेथां मधुरं गेयं तन्त्रीलयसमन्वितम् ॥ १६ ॥
इति सन्दिश्य बहुशो मुनिः प्राचेतसस्तदा ॥ वाल्मीकिः परमोदारस्तूष्णीमासीन्महायशाः ॥ १७ ॥
सन्दिष्टौ मुनिना तेन तावुभौ मैथिलीसुतौ ॥ तथैव करवावेति निर्जग्मतुररिन्दमौ ॥ १८ ॥
तामद्भुतां तौ हृदये कुमारौ निवेश्य वाणीमृषिभाषितां तदा ॥
समुत्सुकौ तौ सममूषतुर्निशां यथाऽश्विनौ भार्गवनीतिसंहिताम् ॥ १९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

---

## चतुर्णवतितमः सर्गः ॥ ९४ ॥

प्रभातेनिर्वर्तिताह्निकाभ्यांकुशलवाभ्यां यज्ञवाटमेत्यमधुरतरस्वरेण श्रीरामायणगानोपक्रमः ॥ १ ॥ तदाकर्णनहृष्टेनरामेण यागावसानेसभायांसकलकलाकुशलनिखिलजनमेलनपूर्वकं कुशलवगीयमानरामायणश्रवणम् ॥ २ ॥ गानावसानेकुशलवाभ्या रामचोदनयातंप्रति आत्मनोर्वाल्मीकिशिष्यत्वनिवेदनपूर्वकं रामायणस्यतत्प्रणीतत्वनिवेदनेनसह तस्यमुनेर्यज्ञवाटनिकटसंनिधानस्यचनिवेदनम् ॥ ३ ॥

तौ रजन्यां प्रभातायां स्नातौ हुतहुताशनौ ॥ यथोक्तमृषिणा पूर्वं सर्वं तत्रोपगायताम् ॥ १ ॥
तां स शुश्राव काकुत्स्थः पूर्वाचार्यविनिर्मिताम् ॥ अपूर्वां पाठ्यजातिं च गेयेन समलंकृताम् ॥ २ ॥
प्रमाणैर्बहुभिर्युक्तां तन्त्रीलयसमन्विताम् ॥ बालाभ्यां राघवः श्रुत्वा कौतूहलपरोऽभवत् ॥ ३ ॥
अथ कर्मान्तरे राजा समाहूय महामुनीन् ॥ पार्थिवांश्च नरव्याघ्रः पण्डितान्नैगमांस्तथा ॥ ४ ॥
पौराणिकाञ्शब्दविदो ये च वृद्धा द्विजातयः ॥ स्वराणां लक्षणज्ञांश्च उत्सुकान्द्विजसत्तमान् ॥ ५ ॥
लक्षणज्ञांश्च गान्धर्वान्नैगमांश्च विशेषतः ॥ पादाक्षरसमासज्ञांश्छन्दस्सु परिनिष्ठितान् ॥ ६ ॥

---

स्थानमित्युच्यते। तद्वा मूर्च्छयित्वा तत्र वा नादव्याप्तिं कृत्वा ॥ १४ ॥ आदिप्रभृतीति सक्षेपमारभ्येत्यर्थः । पार्थिव न चावज्ञायेति । तत्समीपे स्थलान्तर इव लीलापरिहासादिक न कर्तव्यमित्यर्थः । तत्र हेतुः— पिता हि सर्वभूतानामिति ॥ १५—१८ ॥ भार्गवनीतिसंहितां अश्विनाविव तौ तां बाणीं हृदये निवेश्य। श्वो गातव्यां स्मृत्वेत्यर्थः । निशां निशायां । सममिति। ऋषिभिरित्यर्थः । सममूषतुरिति च पाठः । भार्गवनीतिसंस्कृतौ इति पाठान्तरे तु वाल्मीकिशिक्षिताविन्यर्थः ॥१९॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने त्रिनवतितम. सर्गः ॥ ९३ ॥

हुतहुताशनौ कृतसमिदाधानौ ॥ १ ॥ पूर्वेति । गायकाभ्यां पूर्वमाचार्येण निर्मितां अपूर्वां प्रागश्रुतां पाठ्यस्य गेयस्य जातिः षड्जादिः । गेयेन गानधर्मेण ॥ २ ॥ प्रमाणैः ध्वनिपरिच्छेदसाधनैः । कौतूहलपरः विस्मयवान् ॥ ३ ॥ कर्मान्तरे अश्वमेधस्य प्रयोगावसाने ॥ ४ ॥ स्वराणां षड्जादिस्वराणां । उत्सुकान् रामायणश्रवणोत्सुकानित्यर्थ. ॥५॥ गान्ध-

---

स० नावज्ञाय अवज्ञामकृत्वागेयं । कुतइत्यतोव्याजेनयुष्मत्पितेतिबोधयति—पिताहीति । अतस्तत्समीपेपादप्रसारणदन्तप्रदर्शनादिलीलाऽवज्ञारूपिणीनकार्येतिभाव ॥ १५ ॥ इतित्रिनवतितम सर्ग ॥ ९३ ॥

स० पूर्वाचार्योभरत गीतिसमनुशास्तिकर्ता । तद्विनिर्मिता । पूर्वाचार्या स्वमूलपुरुषादय. । तद्विषयेविनिर्मितामितिवा ॥ २ ॥ स० प्रमाणै स्वरारोहावरोहमर्यादासाधनै· ॥ ३ ॥ स० लक्षणज्ञान् सामुद्रिकलक्षणज्ञानिनः ॥ ६ ॥

[ पा० ] १ क. घ. भार्गवनीतिसंस्तुतौ. च. छ. भार्गवनीतिसंस्कृतौ. २ ख. ग. ज. पठ्यजातिंच. ३ च. छ. गान्धर्वान्भाषाज्ञाश्च.

कलामात्रविभागज्ञाञ्ज्यौतिषे च परं गतान् ॥ क्रियाकल्पविदश्चैव तथा काव्यविदो जनान् ॥ ७ ॥
भाषाज्ञानिङ्गितज्ञांश्च नैगमांश्चाप्यशेषतः ॥ हेतूपचारकुशलान्वचने चापि हैतुकान् ॥ ८ ॥
छन्दोविदः पुराणज्ञान्वैदिकान्द्विजसत्तमान् ॥ चित्रज्ञान्वृत्तसूत्रज्ञान्गीतनृत्यविशारदान् ॥ ९ ॥
शास्त्रज्ञान्नीतिनिपुणान्वेदान्तार्थप्रबोधकान् ॥ एतान्सर्वान्त्समानीय गातारौ समवेशयत् ॥ १० ॥
दृष्ट्वा मुनिगणाः सर्वे पार्थिवाश्च महौजसः ॥ पिबन्त इव चक्षुर्भ्यां राजानं गायकौ च तौ ॥ ११ ॥
ऊचुः परस्परं चेदं सर्व एव समन्ततः ॥ उभौ रामस्य सदृशौ बिम्बाद्बिम्बमिवोत्थितौ ॥ १२ ॥
जटिलौ यदि न स्यातां न वल्कलधरौ यदि ॥ विशेषं नाधिगच्छामो गायतो राघवस्य च ॥ १३ ॥
तेषां संवदतामेवं श्रोतॄणां हर्षवर्धनम् ॥ गेयं प्रचक्रतुस्तत्र तावुभौ मुनिदारकौ ॥ १४ ॥
ततः प्रवृत्तं मधुरं गान्धर्वमतिमानुषम् ॥ न च तृप्तिं ययुः सर्वे श्रोतारो गानसंपदा ॥ १५ ॥
प्रवृत्तमादितः पूर्वसर्गं नारददर्शितम् ॥ ततः प्रभृति सर्गांश्च यावद्विंशत्यगायताम् ॥ १६ ॥
ततोपराह्णसमये राघवः समभाषत ॥ श्रुत्वा विंशतिसर्गांस्तान्भ्रातरं भ्रातृवत्सलः ॥ १७ ॥
अष्टादशसहस्राणि सुवर्णस्य महात्मनोः ॥ प्रयच्छ शीघ्रं काकुत्स्थ यदन्यदभिकाङ्क्षितम् ॥
ददौ शीघ्रं स काकुत्स्थो बालयोर्वै पृथक्पृथक् ॥ १८ ॥
दीयमानं सुवर्णं तु नागृह्णीतां कुशीलवौ ॥ ऊचतुश्च महात्मानौ किमनेनेति विस्मितौ ॥ १९ ॥
वन्येन फलमूलेन निरतौ वनवासिनौ ॥ सुवर्णेन हिरण्येन किं करिष्यावहे वने ॥ २० ॥
तथा तयोः प्रब्रुवतोः कुतूहलसमन्विताः ॥ श्रोतारश्चैव रामश्च सर्व एव सुविस्मिताः ॥ २१ ॥
तस्य चैवागमं रामः काव्यस्य श्रोतुमुत्सुकः ॥ पप्रच्छ तौ महातेजास्तावुभौ मुनिदारकौ ॥ २२ ॥
किंप्रमाणमिदं काव्यं का प्रतिष्ठा महात्मनः ॥ कर्ता काव्यस्य महतः क चासौ मुनिपुङ्गवः ॥ २३ ॥
पृच्छन्तं राघवं वाक्यमूचतुर्मुनिदारकौ ॥ २४ ॥
वाल्मीकिर्भगवान्कर्ता संप्राप्तो यज्ञसंविधम् ॥ येनेदं चरितं तुभ्यमशेषं संप्रदर्शितम् ॥ २५ ॥

---

र्वान् गान्धर्वशास्त्रज्ञान्। पादाक्षरसमासज्ञान् पादाक्षराणां गुरुलघुसामान्यज्ञान्। छन्दस्सु वेदेषु ॥ ६ ॥ कलामात्रविभागज्ञान् कलाः स्वरा. तेषा मात्राः एकद्वित्रिलक्षणाः तेषां विभागज्ञान्। परं पारङ्गतान्। क्रियाकल्पविदः क्रियाकल्पः क्रियाप्रयोगप्रतिपादकं कल्पसूत्रं तद्विदस्तज्ज्ञान्। काव्यविदः काव्यलक्षणलक्ष्यविद इत्यर्थः। काव्यविदो जनानिति च पाठः ॥ ७ ॥ भाषाज्ञान् अष्टादशभाषास्वरूपज्ञान्। इङ्गितज्ञान् अभिप्रायविदः। नैगमान्वणिजः। पूर्वत्र पौरानित्यर्थः। वचने चापि केवलव्यवहारेपि हेतूपचारकुशलान् युक्तिप्रयोगसमर्थान्। हैतुकान् तार्किकान् ॥ ८ ॥ वृत्तज्ञान् वृत्तशास्त्रज्ञान्। चित्रज्ञान् चक्रबन्धादिसहितचित्रकाव्यरचनानिपुणान् ॥ ९ ॥ शास्त्रज्ञान् व्याकरणादिशास्त्रज्ञान्। समवेशयत्। सभामध्ये इति शेषः ॥ १०—१५ ॥ प्रवृत्तमिति तत्र गेयेन नारददर्शितपूर्वसर्गमादितः प्रवृत्तम् ॥ १६—१८ ॥ कुशीलवौ विस्मितौ सकृदेव बहुप्रदानतः विस्मयवन्तौ किमनेनेत्येवोचतुश्च ॥ १९ ॥ तदेव स्पष्टीकरोति—वन्येनेत्यादि ॥ निरतौ निरताहारौ ॥ २०—२१ ॥ आगमं प्राप्तिं ॥ २२ ॥ किंप्रमाणमिदमित्यादि ॥ का प्रतिष्ठा कियत्पर्यन्तमित्याशयः। काव्यस्य कः कर्तेत्यनुकर्षः। मुनिपुङ्गव इति। आस्त इति शेषः ॥ २३—२४ ॥ येन कृतमिदमशेषं चरितं काव्य तुभ्य सप्रदर्शित सोस्य काव्यस्य कर्ता भगवान्

---

ति० आगमं कुशलवयोस्तत्प्राप्तिकारणं। तौतावितिवीप्सा ॥ २२ ॥

[ पा० ] १ ङ. च. छ. झ. ट. कुशलान्हैतुकाश्चबहुश्रुतान्. २ ख. गायन्तौतौनिवेशितौ. क. घ. गायन्तौसमचोदयत्.

सन्निबद्धं हि श्लोकानां चतुर्विंशत्सहस्रकम् ॥ उपाख्यानशतं चैव भार्गवेण तपस्विना ॥ २६ ॥
आदिप्रभृति वै राजन्पञ्च सर्गशतानि च ॥ काण्डानि षट् कृतानीह सोत्तराणि महात्मना ॥
कृतानि गुरुणाऽस्माकमृषिणा चरितं तव ॥ २७ ॥
प्रतिष्ठाऽऽजीवितं यावत्तावत्सर्वस्य वर्तते ॥ २८ ॥
यदि बुद्धिः कृता राजञ्श्रवणाय महारथ ॥ कर्मान्तरे क्षणीभूतस्तच्छृणुष्व सहानुजः ॥ २९ ॥
बाढमित्यब्रवीद्रामस्तौ चानुज्ञाप्य राघवम् ॥ प्रहृष्टौ जग्मतुः स्थानं यत्रास्ते मुनिपुङ्गवः ॥ ३० ॥
रामोपि मुनिभिः सार्धं पार्थिवैश्च महात्मभिः ॥ श्रुत्वा तद्गीतिमाधुर्यं कर्मशालामुपागमत् ॥ ३१ ॥

शुश्राव तत्ताललयोपपन्नं सर्गान्वितं स स्वरशब्दयुक्तम् ॥
तन्त्रीलयव्यञ्जनयोगयुक्तं कुशीलवाभ्यां परिगीयमानम् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

## पञ्चनवतितमः सर्गः ॥ ९५ ॥

बहुकालं सभामध्ये कुशलवगीतरामायण श्रुतवतारामेण रामायणवचनादेव कुशलवयो सीतासुतत्वविज्ञानम् ॥ १ ॥ तथा प्रत्ययोत्पादनेन लोकापवादापनोदनपूर्वक निजशुद्धिप्रख्यापनाय शपथकरणे सीताभावावगमाय वाल्मीकिंप्रति दूतप्रेषणम् ॥ २ ॥ दूतमुखाच्छपथकरणे सीताङ्गीकरणश्रवणहृष्टेनरामेण सकलसभास्तारान्प्रति परेद्यु. प्रभाते प्रवर्तिष्यमाणसीताशपथदर्शनप्रार्थनापूर्वकं तेषां विसर्जनम् ॥ ३ ॥

रामो बहून्यहान्येवं तद्गीतं [1]परमं शुभम् ॥ शुश्राव मुनिभिः सार्धं पार्थिवैः सह वानरैः ॥ १ ॥
तस्मिन्गीते तु विज्ञाय सीतापुत्रौ कुशीलवौ ॥ तस्याः परिषदो मध्ये रामो वचनमब्रवीत् ॥
दूताञ्शुद्धसमाचारानाहूयात्ममनीषया ॥ २ ॥

---

वाल्मीकिः । यज्ञसंविध । बिन्दुश्छान्दसः । यज्ञवाटसविधदेशं प्राप्तः ॥ २५ ॥ चतुर्विंशतिसाहस्रमित्यादिकमग्रे स्पष्टीकरिष्यामः । चतुर्विंशतिसाहस्रं श्लोकानां सन्निबन्धनमिति च पाठः । उपाख्यानशत इत्युपाख्यानानन्तं । भार्गवेण भृगुवंश्येन । वाल्मीकेरेव भार्गवत्वं प्राचेतसत्व चाविरुद्धमिति दर्शित "तपस्स्वाध्यायनिरतं" इति श्लोकव्याख्याने ॥२६॥ पञ्च सर्गशतानीति षट्काण्डाभिप्रायेण । चकारादुत्तरकाण्डसर्गसंख्यासमुच्चयः ॥ २७ ॥ आजीवितमिति पदं । यावत् काव्यनायकस्य जीवितं तावत्तस्य यत् शुभाशुभ तस्य सर्वस्यात्र प्रतिष्ठानिबन्धनमस्ति ॥ २८ ॥ हे राजन्यदि तस्य सर्वस्य श्रवणाय बुद्धिः कृता तदा कर्मान्तरे क्षणीभूतः सुखीभूतः शृणु ॥ २९—३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने चतुर्णवतितमः सर्गः ॥ ९४ ॥

---

गीते तु गीत एव । नतु ततः पूर्वं कस्यचिन्मुखा-

---

ति० यानिसोत्तराणिषट्काण्डानीहकृतानि । तत्सर्गसख्यापञ्चशतानीत्युपलभ्यमानसर्गसख्याधिक्यंतुकेषाचिदेकैकस्यद्विसर्गत्वकरणेनलेखकप्रमादात्पञ्चसर्गशतानीतिषट्काण्डसख्या । चकारादुत्तरकाण्डसर्गसख्यासमुच्चयइतिकश्चित् ॥ २७ ॥ स० कर्मशाला यज्ञवाटं ॥ ३१ ॥ स० तालळय घृतकास्यताललय. । तन्त्रीलय तन्त्रिकालय. । कुशीलवाभ्यापरिगीयमानंशुश्राव ॥ ३२ ॥ इतिचतुर्नवतितम सर्ग ॥ ९४ ॥

स० तद्गीत समस्तंव्यस्तंच ॥ १ ॥ स० तस्मिन्गीते तन्मुखगीतेरामायणरूपे । सीताऽसूतैतौसुतावितिविज्ञाय लोकलोचन-

[ पा० ] १ क. ख..ग. परमाद्भुतं.

मद्वचो ब्रूत गच्छध्वमितो भगवतोऽन्तिकम् ॥ ३ ॥
यदि शुद्धसमाचारा यदि वा वीतकल्मषा ॥ करोत्विहात्मनः शुद्धिमनुमान्य महामुनिम् ॥ ४ ॥
छन्दं मुनेश्च विज्ञाय सीतायाश्च मनोगतम् ॥ प्रत्ययं दातुकामायास्ततः शंसत मे लघु ॥ ५ ॥
श्वः प्रभाते तु शपथं मैथिली जनकात्मजा ॥ करोतु परिषन्मध्ये शोधनार्थं ममैव च ॥ ६ ॥
श्रुत्वा तु राघवस्यैतद्वचः परममद्भुतम् ॥ दूताः संप्रययुर्वाटं यत्रास्ते मुनिपुङ्गवः ॥ ७ ॥
ते प्रणम्य महात्मानं ज्वलन्तममितप्रभम् ॥ ऊचुस्ते रामवाक्यानि मृदूनि मधुराणि च ॥ ८ ॥
तेषां तद्भाहृतं श्रुत्वा रामस्य च मनोगतम् ॥ विज्ञाय सुमहातेजा मुनिर्वाक्यमथाब्रवीत् ॥ ९ ॥
एवं भवतु भद्रं वो यथा वदति राघवः ॥ तथा करिष्यते सीता दैवतं हि पतिः स्त्रियाः ॥ १० ॥
तथोक्ता मुनिना सर्वे रामदूता महौजसम् ॥ प्रत्येत्य राघवं क्षिप्रं मुनिवाक्यं बभाषिरे ॥ ११ ॥
ततः प्रहृष्टः काकुत्स्थः श्रुत्वा वाक्यं महात्मनः ॥ ऋषींस्तत्र समेतांश्च राज्ञश्चैवाभ्यभाषत ॥ १२ ॥
भगवन्तः सशिष्या वै सानुगाश्च नराधिपाः ॥ पश्यन्तु सीताशपथं यश्चैवान्योपि काङ्क्षते ॥ १३ ॥
तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ॥ सर्वेषामृषिमुख्यानां साधुवादो महानभूत् ॥ १४ ॥
राजानश्च महात्मानं प्रशंसन्ति स राघवम् ॥ उपपन्नं नरश्रेष्ठ त्वय्येव भुवि नान्यतः ॥ १५ ॥
एवं विनिश्चयं कृत्वा श्वोभूत इति राघवः ॥ विसर्जयामास तदा सर्वांस्ताञ्शत्रुसूदनः ॥ १६ ॥

इति संप्रविचार्य राजसिंहः श्वोभूते शपथस्य निश्चयं वै ॥
विससर्ज मुनीन्नृपांश्च सर्वान्स महात्मा महतो महानुभावः ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

---

दित्यर्थः ॥ २—३ ॥ महामुनिमनुमान्य महामुनेरनुमतिं कृत्वेत्यर्थः ॥४॥ छन्दं अभिप्राय ॥ ५–१० ॥ तथोक्ताइति सीता तथैव करिष्यतीत्युक्ता इत्यर्थः ॥ ११—१२ ॥ यश्चैवान्योपीति । यश्च पापी पापजल्पः प्राकृतः सोपीत्यर्थः ॥ १३—१७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने पञ्चनवतितमः सर्गः ॥ ९५ ॥

---

मपेक्ष्यज्ञात्वा । इयमेवोपज्ञारामस्येतिभाव । शुद्धसमाचारान्दूतान् । एतेन महातपस्विसमीपसमापतनयोग्यतासूचयति । आत्ममनीषया स्वधिया । अपरप्रेरणयेतिभाव । भगवतोवाल्मीके । अन्तिकगत्वामद्वचोब्रूत । अन्तिकइतिपाठे गच्छध्वंभगवतोन्तिकेमद्वचोब्रूतेत्यन्वय ॥ २ ॥ ३ ॥ स० यदिशुद्धसमाचारासीताप्रागेव । अथवा वीतकल्मपातपसा । परसदननिवासागतगतपातकावा । महामुनिं वाल्मीकि । अनुमान्य समतंकृत्वा । आत्मन शुद्धिं निष्कल्मषत्वप्रथा । करोतु । आत्मनोममनस शुद्धिं अडोलायमानता करोत्वितिवा ॥ ४ ॥ स० यद्यप्यवद्यगन्धविधुरेतिचतुराननादिपुरतोऽशरीरगिरोदीरितत्वान्नसंशय । तथाप्यन्यथाकथकदुर्जनाननबन्धार्थस्वस्यतत्सौन्दर्यलुब्धताकलङ्कापकर्षणार्थंचपुन शपथ कर्तव्यइत्याह—श्व.प्रभातइति । ममनस्शोधनार्थपरिषन्मध्येशपथंकरोतु ॥६॥ ति० मृदूनि अपरुषाणि । मधुराणिमधुराक्षराणि ॥८॥ स० ह्रियतोऽयंपति स्त्रियादैवत तत. सीतातथा करिष्यते करिष्यति ॥ १० ॥ ति० यश्चान्योपिसीतायादोषारोपकर्ता योपिशपथमाकाङ्क्षते सोपिपश्यत्वित्यर्थः ॥१३॥ स० साध्वितिवाद साधुवाद ॥ १४ ॥ स० नान्यत. नान्यस्मिन् ॥ १५ ॥ इतिपञ्चनवतितम'सर्ग ॥ ९५ ॥

[ पा० ] १ क. ख. ग. यथातुष्यति. २ क. ख. ग ङ—ट. महात्मान .

## षण्णवतितमः सर्गः ॥ ९६ ॥

परेद्युः प्रभाते रामाह्वापनेन सभांप्रविष्टेचातुर्वर्ण्ये सीतयासह समागतेन वाल्मीकिना रामंप्रति शपथकरणेन सीताया निर्दोषत्वोद्घोषपूर्वकं कुशलवयो सीतारामसुतत्वोत्कीर्तनेनसह सीताया. शपथकरणेऽभ्यनुज्ञानप्रार्थनम् ॥ १ ॥

तस्यां रजन्यां व्युष्टायां यज्ञवाटगतो नृपः ॥ ऋषीन्सर्वान्महातेजाः शब्दापयति राघवः ॥ १ ॥
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ॥ विश्वामित्रो दीर्घतपा दुर्वासाश्च महातपाः ॥ २ ॥
पुलस्त्योपि तथा शक्तिर्भार्गवश्चैव वामनः ॥ मार्कण्डेयश्च दीर्घायुर्मौद्गल्यश्च महायशाः ॥ ३ ॥
गर्गश्च च्यवनश्चैव शतानन्दश्च धर्मवित् ॥ भरद्वाजश्च तेजस्वी ह्यग्निपुत्रश्च सुप्रभः ॥ ४ ॥
नारदः पर्वतश्चैव गौतमश्च महायशाः ॥ कात्यायनः सुयज्ञश्च ह्यगस्त्यस्तपसांनिधिः ॥ ५ ॥
एते चान्ये च बहवो मुनयः संशितव्रताः ॥ कौतूहलसमाविष्टाः सर्व एव समागताः ॥ ६ ॥
राक्षसाश्च महावीर्या वानराश्च महाबलाः ॥ सर्व एव समाजग्मुर्महात्मानः कुतूहलात् ॥ ७ ॥
क्षत्रिया ये च शूद्राश्च वैश्याश्चैव सहस्रशः ॥ नानादेशगताश्चैव ब्राह्मणाः संशितव्रताः ॥ ८ ॥
ज्ञाननिष्ठाः कर्मनिष्ठा योगनिष्ठास्तथाऽपरे ॥ सीताशपथवीक्षार्थं सर्व एव समागताः ॥ ९ ॥
तदा समागतं सर्वमश्मभूतमिवाचलम् ॥ श्रुत्वा मुनिवरस्तूर्णं ससीतः समुपागमत् ॥ १० ॥
तमृषिं पृष्ठतः सीता त्वन्वगच्छदवाङ्मुखी ॥ कृताञ्जलिर्बाष्पगला कृत्वा रामं मनोगतम् ॥ ११ ॥
दृष्ट्वा श्रुतिमिवायान्तीं ब्रह्माणमनुगामिनीम् ॥ वाल्मीकेः पृष्ठतः सीतां साधुवादो महानभूत् ॥१२॥
ततो हलहलाशब्दः सर्वेषामेवमाबभौ ॥ दुःखजन्मविशालेन शोकेनाकुलितात्मनाम् ॥ १३ ॥
साधु रामेति केचित्तु साधु सीतेति चापरे ॥ उभावेव च तत्रान्ये प्रेक्षकाः संप्रचुक्रुशुः ॥ १४ ॥
ततो मध्ये जनौघस्य प्रविश्य मुनिपुङ्गवः ॥ सीतासहायो वाल्मीकिरिति होवाच राघवम् ॥ १५ ॥
इयं दाशरथे सीता सुव्रता धर्मचारिणी ॥ अपवादैः परित्यक्ता ममाश्रमसमीपतः ॥ १६ ॥
लोकापवादभीतस्य तव राम महाव्रत ॥ प्रत्ययं दास्यते सीता तदनुज्ञातुमर्हसि ॥ १७ ॥
इमौ तु जानकीपुत्रावुभौ च यमजातकौ ॥ सुतौ तवैव दुर्धर्षौ सत्यमेतद्ब्रवीमि ते ॥ १८ ॥
प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन ॥ न स्मराम्यनृतं वाक्यमिमौ तु तव पुत्रकौ ॥ १९ ॥
बहुवर्षसहस्राणि तपश्चर्या मया कृता ॥ नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ॥ २० ॥
मनसा कर्मणा वाचा भूतपूर्वं न किल्बिषम् ॥ तस्याः फलमुपाश्नीयामपापा यदि मैथिली ॥२१॥

---

शब्दापयति आह्वयति स्म । यडभाव आर्षः ॥ १—१२ ॥ दुःखजन्मविशालेन दुःखोत्पत्त्या विस्तीर्णेन ॥ १३—१७ ॥ यमजातकौ यमलतयोत्पन्नौ ॥ १८ ॥ यथाहं प्रचेतसो दशम' औरसः पुत्रः तथैव तवेमौ पुत्रौ । अनृतं वाक्यं अहं मनसा न स्मरामि । कथन तु दूरत एवेति भाव' ॥१९—२०॥ तस्याः फलमिति । यथेयमपापा एवं तपश्चर्यायाः फलं उपाश्नीयां । यथा तपसः फलभोगः निश्चितस्त-

---

**ति॰** अश्मभूतमिवाचल पर्वतवन्निश्चल । कौतुकदर्शनार्थमितिश्रुत्वा ॥ ९ ॥ **स॰** आकुलितात्मना चलचित्ताना । 'आकुलात्मना क्षुब्धचित्तानामितिनागोजिभट्ट । तन्न मन्थनदण्डएववाच्येइडभावोन्यत्रक्षुभितइत्युक्ते । नचक्षुब्धोराजेत्यादिवदिदं आगमशास्त्रस्यानित्यत्वाद्वा क्षुब्धइवक्षुब्ध पत्नीवपत्नीवृषलस्येत्यादिवदुपचारादुपपद्यतइतिवाच्यं । तेचप्राञ्चोमाननीयाङ्गति तेषामस्यचमहान्व्यत्यासइतिनैवंप्रयोज्यं ॥ १३ ॥ **ति॰** मनआदिनाममकिल्बिषं नभूतपूर्वं मयाकिंचिदपिनकृतमित्यर्थ ।

**[ पा॰ ]** १ क. ख. अगस्त्यश्चतथा २ क—घ. ज. राजानश्चनरव्याघ्रा सर्वएव ३ ग. ङ. च. छ. झ. ञ. अपवादात्परित्यक्ता.

अहं पञ्चसु भूतेषु मनष्षष्ठेषु राघव ॥ विचिन्त्य सीतां शुद्धेति जग्राह वननिर्झरे ॥ २२ ॥
इयं शुद्धसमाचारा अपापा पतिदेवता ॥ लोकापवादभीतस्य प्रत्ययं तव दास्यति ॥ २३ ॥
तस्मादियं नरवरात्मज शुद्धभावा दिव्येन दृष्टिविषयेण तदा प्रविष्टा ॥
लोकापवादकलुषीकृतचेतसा या त्यक्ता त्वया प्रियतमा विदिताऽपि शुद्धा ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

---

## सप्तनवतितमः सर्गः ॥ ९७ ॥

वाल्मीकिना सीताया· शुद्धत्वंबोधितेनरामेण तम्प्रति पूर्वमेवशपथकरणेन तच्छुद्धत्वंज्ञातवतापिस्वेन लोकापवादभयात्तत्परित्यागनिवेदनेन क्षमापणं ॥ १ ॥ तथा तम्प्रति कुशलवयो स्वपुत्रत्वाङ्गीकरणपूर्वक लोकसमक्षंशुद्धिप्रसिद्धौ स्वस्य सीतायां प्रीतिजननिवेदनम् ॥ २ ॥ श्रीरामभावविज्ञानेन सीताशपथदर्शनार्थं चतुर्मुखपुरस्करणेन समागतेष्विन्द्रादिषु तान्प्रति रामेण जनापवादपरिहारेसत्येव वैदेह्यांस्वस्यप्रीतिसमुदयनिवेदनम् ॥ ३ ॥ तत· प्रादुर्भूतेनदिव्यगन्धवतावायुनाऽऽह्लादितानासर्वजनानापुरत सीतया त्रिवार रामादन्यस्यमनसाप्यचिन्तनेभूमिदेव्यास्वस्यविवरवितरणरूपशपथकरणम् ॥ ४ ॥ ततो भूतलात्प्रादुर्भूतेदिव्यसिंहासने सीतायाउपवेशनपूर्वक रसातलप्रविष्टायाभूमिदेव्या सीतायाउपरिपुष्पवृष्टिप्रादुर्भाव· ॥ ५ ॥ ततोदेवर्ष्यादिषु सीतासौशील्यंप्रतिसाधुवादपूर्वकसतुष्टेषु सर्वैरपिमुहूर्तंमोहाधिगमः ॥ ६ ॥

वाल्मीकिनैवमुक्तस्तु राघवः प्रत्यभाषत ॥ प्राञ्जलिर्जगतो मध्ये दृष्ट्वा तां वरवर्णिनीम् ॥ १ ॥
एवमेतन्महाभाग यथा वदसि धर्मवित् ॥ प्रत्ययस्तु मम ब्रह्मंस्तव वाक्यैरकल्मषैः ॥ २ ॥
प्रत्ययस्तु पुरा वृत्तो वैदेह्याः सुरसन्निधौ ॥ शपथस्तु कृतस्तत्र तेन वेश्म प्रवेशिता ॥
लोकापवादो बलवान्येन त्यक्ता हि मैथिली ॥ ३ ॥
सेयं लोकभयाद्ब्रह्मन्नपापेत्यभिजानता ॥ परित्यक्ता मया सीता तद्भवान्क्षन्तुमर्हति ॥ ४ ॥
जानामि चेमौ पुत्रौ मे यमजातौ कुशीलवौ ॥ शुद्धायां जगतो मध्ये मैथिल्यां प्रीतिरस्तु मे ॥५॥
अभिप्रायं तु विज्ञाय रामस्य सुरसत्तमाः ॥ सीतायाः शपथे तस्मिन्महेन्द्राद्या महौजसः ॥ ६ ॥
पितामहं पुरस्कृत्य सर्व एव समागताः ॥ ७ ॥
आदित्या वसवो रुद्रा ह्यश्विनौ समरुद्गणाः ॥ गन्धर्वाप्सरसश्चैव सर्व एव समागताः ॥ ८ ॥

---

श्चेयमपापेत्यर्थः । तस्याः फलमुपाश्नीयामपापा यदि मैथिलीति च पाठः । तस्य किल्बिषानाचरणस्येत्यर्थ. ॥ २१ ॥ पञ्चसु भूतेष्विति । श्रोत्रादिपञ्चेन्द्रियेष्वित्यर्थः ॥ २२—२४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने षण्णवतितमः सर्ग ॥ ९६ ॥

यथा वदसीति । प्रत्यय दास्यतीत्येवमासनेत्यर्थः । एतदेवमेव कर्तव्यमित्यर्थः । एवंकरणं च न मम विश्वासार्थमित्याह—प्रत्ययो हीति ॥ जात एवेति शेषः । तव वाक्यैरिति । बहुवर्षेत्यादिना प्रागुक्तशपथवाक्यैरित्यर्थः ॥ २—५ ॥ सीतायाः शपथ इति ।

---

यद्यप्यपापामैथिली । तदातस्यकिल्बिपानाचरणस्यफलमश्नामि अश्नीया । अनेनसकल्पपूर्वनिषिद्धत्यागोपिवर्मायेतिसूचितम् ॥ २१ ॥ **ति०** दिव्येनदृष्टिविषयेण दिव्यज्ञानेन । तवशुद्धाविदितापित्वयालोकापवादभीतेनत्यक्तेत्यन्वय ॥ २४ ॥ इतिषण्णवतितम सर्ग ॥ ९६ ॥

**स०** जगत· समक्षंकृतशपथेनशुद्धायामैथिल्याममप्रीतिरस्तु । अनेन तत्कृतैनो नप्रतिलक्ष्य लावण्यतारुण्यव्यामोहितोरामो

साध्याश्च विश्वेदेवाश्च सर्वे च परमर्षयः ॥ नागाः सुपर्णाः सिद्धाश्च ते सर्वे हृष्टमानसाः ॥
सीताशपथसंभ्रान्ताः सर्व एव समागताः ॥ ९ ॥
दृष्ट्वा देवानृषींश्चैव राघवः पुनरब्रवीत् ॥ प्रत्ययो मे सुरश्रेष्ठा ऋषिवाक्यैरकल्मषैः ॥ १० ॥
शुद्धायां जगतो मध्ये वैदेह्यां प्रीतिरस्तु मे ॥ ११ ॥
ततो वायुः शुभः पुण्यो दिव्यगन्धो मनोरमः ॥ तज्जनौघं सुरश्रेष्ठो ह्लादयामास सर्वतः ॥ १२ ॥
तदद्भुतमिवाचिन्त्यं निरैक्षन्त समागताः ॥ मानवाः सर्वराष्ट्रेभ्यः पूर्वं कृतयुगे यथा ॥ १३ ॥
सर्वान्समागतान्दृष्ट्वा सीता काषायवासिनी ॥ अब्रवीत्प्राञ्जलिर्वाक्यमधोदृष्टिरवाङ्मुखी ॥ १४ ॥
यथाऽहं राघवादन्यं मनसाऽपि न चिन्तये ॥ तथा मे माधवी देवी विवरं दातुमर्हति ॥ १५ ॥
मनसा कर्मणा वाचा यथा रामं समर्चये ॥ तथा मे माधवी देवी विवरं दातुमर्हति ॥ १६ ॥
यथैतत्सत्यमुक्तं मे वेद्मि रामात्परं न च ॥ तथा मे माधवी देवी विवरं दातुमर्हति ॥ १७ ॥
तथा शपन्त्यां वैदेह्यां प्रादुरासीत्तदद्भुतम् ॥ भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् ॥ १८ ॥
ध्रियमाणं शिरोभिस्तु नागैरमितविक्रमैः ॥ दिव्यं दिव्येन वपुषा दिव्यरत्नविभूषितैः ॥ १९ ॥
तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम् ॥ स्वागतेनाभिनन्द्यैनामासने चोपवेशयत् ॥ २० ॥
तामासनगतां दृष्ट्वा प्रविशन्तीं रसातलम् ॥ पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत् ॥ २१ ॥
साधुकारश्च सुमहान्देवानां सहसोत्थितः ॥ साधु साध्विति वै सीते यस्यास्ते शीलमीदृशम् ॥२२॥
एवं बहुविधा वाचो ह्यन्तरिक्षगताः सुराः ॥ व्याजह्रुर्हृष्टमनसो दृष्ट्वा सीताप्रवेशनम् ॥ २३ ॥

---

शपथप्रसङ्ग इत्यर्थः ॥ ६—१२ ॥ अचिन्त्यं अचिन्त्यहेतुक वायुस्वरूपं यथा पूर्वं कृतयुगे पश्यन्ति स्म तथा तदानीं सर्वे मानवाः निरीक्षन्ते स्म ॥१३–१६॥ रामात्परमन्य पुरुष न वेद्मीति यथोक्तमेतत्सत्यं चेत् । माधवी माधवपत्नी भूमिः ॥१७॥ तथा शपन्त्या त्रिः शपन्त्यां । तत्सिंहासनं ॥ १८ ॥ नागैः शिरोभिः ध्रियमाणमदृश्यतेति शेषः ॥१९–२३॥ विस्मयात् आश्चर्याभिज्ञावेदनव्यवहारान्नोपरेमिरे नोपरता बभूवुः

---

रामाजग्राहेत्याग्रहग्रहगृहीतदुरात्मजनवचनभाजनतानममस्यादितिसूच्यते ॥५॥ **ति०** सीताशपथेतद्दर्शनेसंभ्रान्ता आदृताइत्यर्थ । **स०** सभ्रान्ता सादरा पुन किमयमारंभइतिभ्रान्तस्वान्तावा ॥ ९ ॥ **ति०** शुभपुण्यशब्दौशैत्यमान्द्योपलक्षणौ । दिव्यगन्ध सनिहितसर्वदेवशरीरवर्तिदिव्यचन्दनमाल्यगन्ध । सुरश्रेष्ठ सर्वपुण्यपापसाक्षी ॥ १२ ॥ **ति०** तत सीताचतुर्दशभुवनस्थजनानेकत्रमिलितान्दृष्ट्वाऽपवादपरिहारायशपथव्याजेनस्वपदप्रवेष्टुकामाह—सर्वानिति । काषायवासिनी तपस्युचितवासोधारिणी पातिव्रत्योचिताधोदृष्टिविवरयाचनायमहीनिरीक्षणार्थंच । अतएवावाङ्मुखी ॥ १४ ॥ **ति०** यथाहंराघवादन्यंमनसापिनचिन्तये नचिन्तयामीतिसत्यं तथासत्येनचिरकालवियोगेपिपातिव्रत्यपरिपालनक्लेशखिन्नायास्तज्जनितपरमदु खसमाप्तयेपुनरपिभुवंप्रवेष्टुंमाधवीदेवीमाधवपत्नीभूदेवी विवररन्ध्रंदातुमर्हति । एवमग्रेपिव्याख्येयं ॥ १५ ॥ **ति०** अयंस्वपदप्रवेशोयोगः सीतायाभृगुप्रार्थनयोपेन्द्रावतारेमानुषेलोकेऽङ्गीकृतपत्नीवियोगस्यप्रागुक्तास्मदीत्याङ्गीकृततदर्थवाल्मीकिशापस्यचरामस्याभिप्रायज्ञानादेववाल्मीक्याश्रमगमनवदितिनरामप्रतिकूलाचरणप्रसक्ति सीतायाइतिबोध्यम् । अनन्तरंरामस्यभूमिनाशपर्यन्तंकोपोदयस्तुमनुष्यावतारनटनमात्रमित्यदोष ॥ १७ ॥ **ति०** शपन्त्या एवंत्रि शपन्त्या । तत् अनिर्वाच्यं । अद्भुतंप्रादुरासीत् । कितदद्भुतंतत्राह—भूतलादुत्थितनागै तक्षकादिभि शिरोभिर्ध्रियमाणंसिहासनमदृश्यतेतिशेष । दिव्येनवपुषामानुषरचनाविशेषेणोपलक्षितं । दिव्यरत्नविभूषितै अनेकैरित्यर्थ । पाद्मेतु—नानारत्नमयंपीठंपृष्ठेकृत्वाखगेश्वर । रसातलादाविरभूद्विस्मयं जनयन्नृणाम् । तस्मिन्पीठेमहादेवीहस्ताभ्यागृह्यमैथिलीम् । स्वागतेनाभिनन्द्यैमासनिवेश्यतिरोदधे । साचदिव्याप्सरोभिस्तुपूज्यमानासनातनी । वैनतेयंसमारुह्यअर्चिरादिपथाद्रमा । दासीगणै पूर्वभवै सवृताजगदीश्वरी । सप्राप्तापरमंधामयोगिगम्यंसनातनम् । रसातलप्रविष्टांतांदृष्ट्वासर्वेप्रचुक्रुशु ।” इत्युक्तं । नागैर्ध्रियमाणंप्रादुर्भूतदृष्ट्वादिव्येनवपुषागरुडोजग्राहेतिशेषोबोध्य । रसातलंप्रविशन्तीमित्यस्यादृश्यायाजायमानायामित्यर्थ ॥ १८ ॥ **ति०** दिव्या स्वर्गभवा । अत.परंभगवतोप्यागमनंशीघ्रमिति

[ पा० ] १ क. ख. गं. ङ—ढ. तंजमौघं.

यज्ञवाटगताश्चापि मुनयः सर्व एव ते ॥ राजानश्च नरव्याघ्रा विस्मयान्नोपरेमिरे ॥ २४ ॥
अन्तरिक्षे च भूमौ च सर्वे स्थावरजङ्गमाः ॥ दानवाश्च महाकायाः पाताले पन्नगाधिपाः ॥ २५ ॥
केचिद्विनेदुः संहृष्टाः केचिद्ध्यानपरायणाः ॥ केचिद्रामं निरीक्षन्ते केचित्सीतामचेतनाः ॥ २६ ॥
सीताप्रवेशनं दृष्ट्वा तेषामासीत्समागमः ॥ तन्मुहूर्तमिवात्यर्थं समं संमोहितं जगत् ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

---

## अष्टनवतितमः सर्गः ॥ ९८ ॥

सीतायारसातलप्रवेशानन्तरदूयमानमानसेनरामेण चिररोदनपूर्वकंभूदेवींप्रतिसक्रोधसीताया पुनरानयनाभावेतस्याभ-स्मीकरणप्रतिज्ञानम् ॥ १ ॥ चतुर्मुखेनरामपतितस्यविष्णुत्वस्मारणपूर्वकसीताया सुखेननागलोकगमननिवेदनपूर्वकपुन स्वर्गेत-त्संगमस्यभविष्यत्वकथनम् ॥ २ ॥ चतुर्मुखेनसभामध्येरामप्रतिएतत्काव्यस्यकाव्योत्तमत्वस्यवाल्मीकिकृतत्वस्यचनिवेदनेन लक्ष्मणादिवर्जतेनैवोत्तरकथाश्रवणचोदनपूर्वकंदेवै सहत्रिदिवगमनम् ॥ ३ ॥ ततोरामेणवाल्मीकिप्रतिपरेद्युरुत्तरकथाप्रव-र्तनचोदनपूर्वकंजनविसर्जनेनकुशलवाभ्यासहपर्णशालाप्रवेश ॥ ४ ॥

रसातलं प्रविष्टायां वैदेह्यां सर्ववानराः ॥ चुक्रुशुः साधुसाध्वीति मुनयो रामसन्निधौ ॥ १ ॥
दण्डकाष्ठमवष्टभ्य बाष्पव्याकुलितेक्षणः ॥ अवाक्छिरा दीनमना रामो ह्यासीत्सुदुःखितः ॥ २ ॥
स रुदित्वा चिरं कालं बहुशो बाष्पमुत्सृजन् ॥ क्रोधशोकसमाविष्टो रामो वचनमब्रवीत् ॥ ३ ॥
अभूतपूर्वं शोकं मे मनः स्प्रष्टुमिवेच्छति ॥ पश्यतो मे यथा नष्टा सीता श्रीरिव रूपिणी ॥ ४ ॥
साऽदर्शनं पुरा सीता लङ्कापारे महोदधेः ॥ ततश्चापि मयानीता किं पुनर्वसुधातलात् ॥ ५ ॥
वसुधे देवि भवति सीता निर्यात्यतां मम ॥ दर्शयिष्यामि वा रोषं यथा मामवगच्छसि ॥ ६ ॥

---

॥ २४ ॥ संहृष्टा इति । सीतायाः अयशो गतमिति संहृष्टाः । अचेतना. विसंज्ञाः ॥ २५—२६ ॥ तेषां मुन्यादीनां । समागमः हर्षसबन्धः। यद्वेवमतः समोहितमिव संमोहितमेवाभूत् ॥२७॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने सप्तनवतितमः सर्गः ॥ ९७ ॥

दण्डरूपं काष्ठं दण्डकाष्ठं ॥ २—३ ॥ मनः-शोकमिव मन'शोकमेव स्प्रष्टुमिति । पश्यतो मेद्य सा नष्टेति । मामप्यनादृत्य ॥ ४ ॥ नीता प्रापितव-

---

सतोपेणपुष्पवृष्टि ॥ २१ ॥ **स०** स्थावराणामभिमानिद्वाराप्रहर्षे ॥ २५ ॥ **स०** ध्यानपरायणा अहोविडंबनमिति ॥ **ति०** अचेतस विसञ्ज्ञा ॥ २६ ॥ **स०** सीताप्रवेशनंदृष्ट्वास्थितानातेषामुनिप्रमुखाना । समागम । हर्षादेरितिशेष । आसीत् यस्मिन्मुहूर्तेतंप्राप्यसमंजगत्सर्वविश्वंसमोहितमत्यर्थमभवत् । मैथिलीमेलनाभावेपुनरियानायास.कुत सपादनीयोऽयोध्याध्यक्षे-णेतिचेन्न । जानकीविषयजनापवादापनुत्त्यैइत्यवेहि । पुनरेवह्रिचपूर्वस्ततोपिलोकगमनंकामिन्याविहितमितिताप्राक्प्रेषयितुमिय लीलेति ॥ २७ ॥ इतिसप्तनवतितमस्सर्ग ॥ ९७ ॥

**ति०** अथरामस्यसीतान्तर्धानजक्रोधंभगवास्तत्त्वबोधनेनशमयति—रसातलमिति । साधुसाध्वीतिदीर्घआर्षं ॥ **स०** हेसाध्वि साधु इतिमनसातासबोध्यचुक्रुशु ॥ १ ॥ **ति०** दण्डकाष्ठ दीक्षितेनसोमक्रयपर्यन्तंधारणीयमौदुंबरदण्डमवष्टभ्येत्यर्थ । एत-दवष्टभ शोकग्लानिवशात् ॥ २ ॥ **स०** बहुश पूर्णसुखोपिबाष्पमुत्सृजन् । अनेन लोकानुकरणार्थमिदमितिसूच्यते ॥ ३ ॥ **ति०** पूर्वरावणेनअसन्निधौसीतानष्टा नाशमदर्शनंप्रापिता । सप्रतितुपश्यतोमे पश्यन्तंमामनादृत्यरूपिणीश्रीरिवसीता नष्टा अदर्शनंप्रापिता । यथा यतः । अतोमेमन अभूतपूर्वंशोकस्प्रष्टुमिवेच्छति ॥ ४ ॥ यथामामवगच्छसि मद्बलवराहावतारादौ

[ पा० ] १ ड च. छ. झ ञ. ट. मचेतस., २ ख. ग. सर्व. ३ ख. ग. घ. च. छ. ट. अभूतपूर्वःशोकोमे.

कामं श्वश्रूर्ममैव त्वं त्वत्सकाशाद्धि मैथिली ॥ कर्षता हलहस्तेन जनकेनोद्धृता पुरा ॥ ७ ॥
तस्मान्निर्यात्यतां सीता विवरं वा प्रयच्छ मे ॥ पाताले नाकपृष्ठे वा वसेयं सहितस्तया ॥ ८ ॥
आनय त्वं हि तां सीतां मत्तोऽहं मैथिलीकृते ॥ न मे दास्यसि चेत्सीतां यथारूपां महीतले ॥९॥
सपर्वतवनां कृत्स्नां विधमिष्यामि ते स्थितिम् ॥ नाशयिष्याम्यहं भूमिं सर्वमापो भवन्त्विह ॥१०॥
एवंब्रुवाणे काकुत्स्थे क्रोधशोकसमन्विते ॥ ब्रह्मा सुरगणैः सार्धमुवाच रघुनन्दनम् ॥ ११ ॥
राम राम न सन्तापं कर्तुमर्हसि सुव्रत ॥ स्मर त्वं पूर्वकं भावं मन्त्रं चामित्रकर्शन ॥ १२ ॥
न खलु त्वां महाबाहो स्मारयेयमनुत्तमम् ॥ इमं मुहूर्तं दुर्धर्ष स्मर त्वं जन्म वैष्णवम् ॥ १३ ॥
सीता हि विमला साध्वी तव पूर्वपरायणा ॥ नागलोकं सुखं प्रायात्त्वदाश्रयतपोबलात् ॥ १४ ॥
स्वर्गे ते सङ्गमो भूयो भविष्यति न संशयः ॥ अस्यांस्तु परिषन्मध्ये यद्ब्रवीमि निबोध तत् ॥१५॥
एतदेव हि काव्यं ते काव्यानामुत्तमं श्रुतम् ॥ सर्वं विस्तरतो राम व्याख्यास्यति न संशयः ॥१६॥
जन्मप्रभृति ते वीर सुखदुःखोपसेवनम् ॥ भविष्यत्युत्तरं चेह सर्वं वाल्मीकिना कृतम् ॥ १७ ॥

---

तीत्यर्थः । सा अदर्शमिति पदच्छेदः ॥ ५—८ ॥ मत्तः प्राप्तमोह इत्यर्थः । महीतल इति । प्रविष्टामिति शेषः ॥ ९—११ ॥ स्मर त्व पूर्वक भाव पूर्वक स्वभाव विष्णुत्वमित्यर्थः । मन्त्र देवैः सहावताराय कृत विचारं ॥ १२ ॥ त्वामह न स्मारयेय । सर्वज्ञत्वादितिभावः । पूर्वकं भावमित्युक्तं विशिनष्टि—इममिति ॥ १३ ॥ तव पूर्वपरायणा तव पूर्वभावप्रवणा। तव प्रकृतिप्राप्तिसमुत्सुकेत्यर्थः ॥ १४—१५ ॥ एतत्काव्यमेवोत्तमं श्रुतं तत्सर्वं ज्ञापनीयं । विस्तरतो व्याख्यास्यति ज्ञापयिष्यति ॥ १६ ॥ तदेवाह—जन्मप्रभृतीत्यादि ॥ भविष्यत्युत्तरं चेति । सीतोपसंहारादुत्तरं च यत्ते चरितं भविष्यति तत्सर्वमपि मदनुग्रहात् त्रिकालज्ञेन वाल्मीकिना कृत कृतनिबन्धनं इह काव्ये । भविष्यत्युत्तरं चेति च पाठः ॥ १७ ॥

---

त्वमेवजानासीत्यर्थ ॥ ६ ॥ स० प्राकूलोकप्रवाद मम पत्नीमाता त्वमिति । सइदानीदानाज्ञानक्याममसाक्षिगोचरश्चरितव्य इत्याह—काममिति । फालहस्तेन भूशोधकफालहस्तेन ॥ ७ ॥ स० यन्निमित्तमहंमत्तोविभ्रान्त तासीतामानय । महीतलेप्रविष्टाययारूपा मेमह्यंनदास्यसिचेत् मद्दासीनासीत्यावृत्त्यान्वय ॥ ९ ॥ स० तवदासीनचेत्किंकरोषीतितत्राह—सपर्वतवनामिति । आपोभवन्तु जललीनाकरिष्यामीतिभाव ॥ १० ॥ ति० ननुकथमिदानीसतापापगमइतिचेत्तस्यस्वतत्त्वाज्ञाननटनादिमूलकत्वात् । स्वतत्वस्मरणनटनमेवकुर्वित्याह—स्मरेति । भावं वैष्णवमित्यर्थः । 'आत्मानंचेद्विजानीयादयमस्मीतिपूरुष । किमिच्छन्कस्य कामायशरीरमनुसज्वरेत्' इतिश्रुते । मन्त्रं देवै सहावतारसमयेकृतं । मानुषभावमूलरावणवधाश्वमेधयागान्तसर्वकृत्यानानिर्वृत्तत्वेनेदानींतत्त्वावरणनाटनेनफलाभावइतिभाव ॥ १२ ॥ ननुकिमात्वंस्मारयसीत्यत्राह—नेति । विस्मृततत्त्वमिवस्मरणं कुर्वितिनप्रार्थयामि किंत्विमंमुहूर्तं अस्मिन्काले हेदुर्धर्ष वैष्णवमात्मानंइहजन्मप्राप्तवन्तस्मर ध्यानेनपश्येत्यर्थ । एतावत्पर्यन्तं कार्यनिर्वाहायमनुष्योऽहमितिध्यानेनतथाभावंनाटितवानपि इदानीतत्त्यजेत्यर्थ । तंखलुत्वा इतिपाठे अनुत्तमं समाभ्यधिकरहितं । ब्रह्मस्वरूपंतंउपनिषत्प्रसिद्धंस्मारयेयंस्मरणायप्रार्थये । किंस्मर्तव्यत्वेनप्रार्थयसीत्यत्राह—इममिति । पूर्ववदेवार्थ । भृङ्गकीटन्यायेनतद्ध्यानतद्भावनाटनमितिभाव । भगवतोरामस्यतथानाटनाद्ब्रह्मापिस्मारयेयमित्यादिप्रयुक्तवानितिध्येयम् ॥ नत्वेतावताभगवतोवस्तुतस्तद्भावप्राप्तिरितिध्येयं ॥१३॥ ति० मामाश्रितासीताएवगतेत्यपिनशोक कार्यइत्याह—सीतेति । विमला स्वत एवसर्वावद्यशून्या । वस्तुतस्तस्यास्त्वदभिन्नत्वादितिभाव । तवपूर्वपरायणा तवप्रकृतिप्राप्तिसमुत्सुका । त्वदाश्रय त्वदाश्रयणं । तद्रूपतपोबलात् । नागलोकगमनव्याजेननागलोकं विष्णुलोकं । सुखप्रायात् । तप पूर्वपरायणेतिपाठे पूर्ववेदवतीदेहेऽनुष्ठिततपश्शेषानुष्ठानपरायणेत्यर्थइतिकतक । तदनुष्ठानंरावणवधादिरूपमेवेतिभाति ॥ १४ ॥ ति० अस्या सगमश्च तेभूय स्वर्गे परस्वर्गे ब्रह्मलोके । भविष्यतिनान्यत्र । परिषदितिलुप्तषष्ठ्यन्तं ॥ स० अस्या सीताया स्वर्गे नित्यसुखरूपेवैकुण्ठे सगमो भविष्यति । परिषन्मध्ये सदोमध्ये । अनेन नैकदेशान्वयभयतो लुप्तषष्ठ्यन्ततोररीकारकारणकआयासोनागोजिभट्टपक्षइवेतिज्ञेयम् ॥ १५ ॥ स० सुखस्य स्वाभाविकस्य । दु खस्य जनमोहनार्थप्रदर्शितस्य । भविष्यदुत्तर भविष्यत सीतादर्शनात् उत्तरं त्वया करिष्यमाणं क्रियाजातमितिसर्ववाल्मीकिनाअतीतानागतावगतिमता कृतं निबद्ध ॥ १७ ॥

[पा०] १ ङ. च. छ. झ. ञ. ट. फालहस्तेन. २ क. घ—छ. झ. दुर्वर्ष. ३ क. अस्मिंस्तु. ४ क. च. छ. व्याख्यास्यामि.

आदिकाव्यमिदं राम त्वयि सर्वं प्रतिष्ठितम् ॥ न ह्यन्योऽर्हति काव्यानां यशोभाग्राघवादृते ॥१८॥
श्रुतं ते पूर्वमेतद्धि मया सर्वं सुरैः सह ॥ दिव्यमद्भुतरूपं च सत्यवाक्यमनावृतम् ॥ १९ ॥
स त्वं पुरुषशार्दूल धर्मेण सुसमाहितः ॥ शेषं भविष्यं काकुत्स्थ काव्यं रामायणं शृणु ॥ २० ॥
उत्तरं नाम काव्यस्य शेषमत्र महायशः ॥ तच्छृणुष्व महातेज ऋषिभिः सार्धमुत्तमम् ॥ २१ ॥
न खल्वन्येन काकुत्स्थ श्रोतव्यमिदमुत्तमम् ॥ परमं ऋषिणा वीर त्वयैव रघुनन्दन ॥ २२ ॥
एतावदुक्त्वा वचनं ब्रह्मा त्रिभुवनेश्वरः ॥ जगाम त्रिदिवं देवो देवैः सह सबान्धवैः ॥ २३ ॥
ये च तत्र महात्मान ऋषयो ब्राह्मलौकिकाः ॥ ब्रह्मणा समनुज्ञाता न्यवर्तन्त महौजसः ॥
उत्तरं श्रोतुमनसो भविष्यं यच्च राघवे ॥ २४ ॥
ततो रामः शुभां वाणीं देवदेवेन भाषिताम् ॥ श्रुत्वा परमतेजस्वी वाल्मीकिमिदमब्रवीत् ॥ २५ ॥
भगवञ्श्रोतुमनस ऋषयो ब्राह्मलौकिकाः ॥ भविष्यदुत्तरं यन्मे श्वोभूते संप्रवर्तताम् ॥ २६ ॥
एवं विनिश्चयं कृत्वा संप्रगृह्य कुशीलवौ ॥ तं जनौघं विसृज्याथ पर्णशालामुपागमत् ॥
तामेव शोचतः सीतां सा व्यतीयाय शर्वरी ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अष्टनवतितमः सर्गः ॥ ९८ ॥

---

## एकोनशततमः सर्गः ॥ ९९ ॥

प्रभाते रामचोदनयाकुशलवाभ्यांसभायांब्रह्मर्ष्यादिपुरतउत्तरकथागानम् ॥ १ ॥ सीताऽदर्शनविषण्णेनरामेण सर्वपार्थिवविसर्जनेनविप्रेभ्योवित्तवितरणेनच यज्ञसमापनपूर्वकं पुत्रद्वयेनसहायोध्याप्रवेशः ॥ २ ॥ श्रीरामे काञ्चनमय्याजानकीप्रतिकृत्याऽश्वमेधादिभिर्यजनपूर्वकं धर्मेणराज्यप्रशासतिसतिदुर्भिक्षादीनादूरतोपसरणम् ॥ ३ ॥ चिरकालात्परराममात्रादिषुकालधर्मंगतेषु तेन तदुद्देशेनब्राह्मणेभ्योद्रव्यादिवितरणम् ॥ ४ ॥

रजन्यां तु प्रभातायां समानीय महामुनीन् ॥ गीयतामविशङ्काभ्यां रामः पुत्रावुवाच ह ॥ १ ॥

---

त्वयि त्वच्चरितविषये । राघवादृतेन्यः काव्यप्रकाशितयशोभाक् कश्चिदपि काव्यनायकतां नार्हति । अतएवाद्यापि सर्वे कवयो रामचरितमेव प्रायेणाश्रयन्ते ॥ १८ ॥ अनावृतं अज्ञानावरणरहितं ॥ १९ ॥ भविष्यं भविष्यद्विषयं ॥ २० ॥ उत्तरं नामेति उत्तरकाण्डाख्यकाव्य शेषभूत ॥ २१ ॥ परमार्षिणा परमराजर्षिणा ॥ २२—२३ ॥ ये च तत्रेति । यज्ञसदसीत्यर्थः । ब्राह्मलौकिकाः ब्रह्मलोकार्हाः ॥ २४—२६ ॥ पर्णशालामुपागमदिति । यज्ञावसान एव सीतान्तर्धानात् ततः परं दीक्षाराहित्येन स्थलान्तरस्य सुगमत्वात् पुत्राभ्यां सह वाल्मीकिपर्णशालामेव रामः प्राप्तवानित्यर्थः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने अष्टनवतितमः सर्गः ॥ ९८ ॥

---

गीयतामित्युवाच । अविशङ्काभ्यां मत्पुत्रत्वविषय-

---

स० काव्यानां वर्णनीयगुणानामगणेयत्वविवक्षयैवबहुवचनं ॥ १८ ॥ अस्यकाव्यस्यमहत्त्वंसर्वमहतामयैवपरिग्रहादित्याह—श्रुतमिति । ते एतत् त्वत्सबन्धीदंकाव्यं । स्वस्यश्रोतव्यत्वेहेतु —सत्यवाक्यमिति । तत्रापिहेतुरनावृतमिति । अविद्यामूलप्रलापरहितं । अतएवदिव्यं । पूर्वश्रुतंकाव्यरूपिण्यादेव्यामुखादेवेतिशेष ॥ १९ ॥ ति० ऋषिभिर्ब्रह्मलोकस्थै ऋषिभि ॥ २१ ॥ ति० अतिरहस्यत्वाच्चनायमंश सर्वैं श्रोतव्यइत्याह—नेति । परमऋषिणा परमराजर्षिणात्वयैवश्रोतव्योनान्येनलक्ष्मणादिनेत्यर्थ. । एवंभगवत.परमादरः काव्यस्यस्वावतारविषयत्वादितिबोध्यम् ॥ २४ ॥ इत्यष्टनवतितम.सर्गः ॥ ९८ ॥

स० अविशङ्काभ्यां विदिततत्पुत्रकलाभ्या । कथंगातव्यमितिशङ्काशून्याभ्या । भविष्यन्त्यांकथाया इष्टदुरिष्टचरितस्यसत्त्वा-

[ पा० ] १ क—घ. सवासवैः. २ क. ग—ट. देवदेवस्य.

ततः समुपविष्टेषु ब्रह्मर्षिषु महात्मसु ॥ भविष्यदुत्तरं काव्यं जगतुस्तौ कुशीलवौ ॥ २ ॥
प्रविष्टायां तु सीतायां भूतलं सत्यसंपदा ॥ तस्यावसाने यज्ञस्य रामः परमदुर्मनाः ॥ ३ ॥
अपश्यमानो वैदेहीं मेने शून्यमिदं जगत् ॥ शोकेन परमायस्तो न शान्तिं मनसागमत् ॥ ४ ॥
विसृज्य पार्थिवान्सर्वानृक्षवानरराक्षसान् ॥ जनौघं विप्रमुख्यानां वित्तपूर्वं विसृज्य च ॥ ५ ॥
एवं समाप्य यज्ञं तु विधिवत्स तु राघवः ॥ ततो विसृज्य तान्सर्वान्रामो राजीवलोचनः ॥ ६ ॥
हृदि कृत्वा तदा सीतामयोध्यां प्रविवेश ह ॥ इष्टयज्ञो नरपतिः पुत्रद्वयसमन्वितः ॥ ७ ॥
न सीतायाः परां भार्यां वव्रे स रघुनन्दनः ॥ यज्ञे यज्ञे च पत्न्यर्थं जानकी काञ्चनी भवत् ॥ ८ ॥
दश वर्षसहस्राणि वाजिमेधानथाकरोत् ॥ वाजपेयान्दशगुणांस्तथा बहुसुवर्णकान् ॥ ९ ॥
अग्निष्टोमातिरात्राभ्यां गोसवैश्च महाधनैः ॥ ईजे क्रतुभिरन्यैश्च स श्रीमानाप्तदक्षिणैः ॥ १० ॥
एवं स कालः सुमहान्राज्यस्थस्य महात्मनः ॥ धर्मे प्रयतमानस्य व्यतीयाद्राघवस्य तु ॥ ११ ॥
अनुरञ्जन्ति राजानमहन्यहनि राघवम् ॥ ऋक्षवानररक्षांसि स्थिता रामस्य शासने ॥ १२ ॥
काले वर्षति पर्जन्यः सुभिक्षं विमला दिशः ॥ हृष्टपुष्टजनाकीर्णं पुरं जनपदास्तथा ॥ १३ ॥
नाकाले म्रियते कश्चिन्न व्याधिः प्राणिनां तथा ॥ नाऽनर्थो विद्यते कश्चिद्रामे राज्यं प्रशासति ॥ १४ ॥
अथ दीर्घस्य कालस्य राममाता यशस्विनी ॥ पुत्रपौत्रैः परिवृता कालधर्ममुपागमत् ॥ १५ ॥
अन्वियाय सुमित्रा च कैकेयी च यशस्विनी ॥ धर्मं कृत्वा बहुविधं त्रिदिवे पर्यवस्थिता ॥ १६ ॥
सर्वाः प्रमुदिताः स्वर्गे राज्ञा दशरथेन च ॥ समागता महाभागाः सर्वधर्मं च लेभिरे ॥ १७ ॥
तासां रामो महादानं काले काले प्रयच्छति ॥ मातॄणामविशेषेण ब्राह्मणेषु तपस्विषु ॥ १८ ॥
पित्र्याणि ब्रह्मरत्नानि यज्ञान्परमदुस्तरान् ॥ चकार रामो धर्मात्मा पितॄन्देवान्विवर्धयन् ॥ १९ ॥

---

शङ्कारहिताभ्यां । मातृवियोगदुःखरहिताभ्यां वा ॥ १–२ ॥ सत्यसंपदा सत्यवैभवेन । तस्यावसाने यज्ञस्येति । सीतानिर्याणासन्नपूर्वकालइत्यर्थः ॥ ३–४ ॥ वित्तपूर्वं वित्तदानपूर्वमित्यर्थः ॥ ५—७ ॥ न सीताया इत्यनेन रामस्य एकदारव्रतं सीताप्रतिनिधिनैव यज्ञनिर्वर्तनं च दर्शितं ॥ ८ ॥ दश वर्षसहस्राणीत्यनेन प्रथमयज्ञ एव सीताया भूप्रवेश इत्युक्तं । बहुसुवर्णकान् बहुसुवर्णकथागान् ॥ ९ ॥ गोसवैः गोसवाख्ययागैः । अश्वमेधसंक्षेपैरिति संक्षेपवचनमेतत्परं वेदितव्यं (?) शतशब्दस्य बहुसंख्यावचनत्वात् । गोशतैश्चेति पाठः ॥ १०—१२ ॥ सुभिक्षमिति । अभवदिति शेषः ॥ १३—१६ ॥ सर्वधर्मं चेति । सर्वधर्मसाध्यभोगमित्यर्थः ॥ १७—१८ ॥ पित्र्याणि पितृकर्मापेक्षितानि । ब्रह्मरत्नानि ब्राह्मणदेयवस्तूनि । प्रयच्छति

---

त्कथंस्वामिसमीपेतत्कथनमितिशङ्कारहिताभ्यामितिवा ॥ १ ॥ **स०** अपश्यमान अपश्यन् ॥ ४ ॥ यज्ञेयज्ञे प्रतियज्ञं । भवत् अभवत् ॥ **स०** इयतायासेनकिं किमपरामायताक्षीपाणिगृहीतीनातनोद्राघवइत्यतआह—नेति । सीताया सकाशात् । अवतारावसरएवालोच्यकमलैतद्रूपिणीजाता नजातान्यातद्रूपिणीतिस्वस्वीकारायोग्यत्वेनवा 'अशोकमूलमासाद्यदर्शयामासजानकीम् । नित्याविायोगिनींदेवीरामोमन्ददशामपि—तत्याजेवसजानकीम्—रामान्तिकेस्थितादेवीनमन्दै समदृश्यत । रूपान्तरेणकैलासगतानित्यावियोगिनी । नित्यंपश्यन्निजादेवीपूर्णसतोषसभृत । रामोनदृश्यतेदेवीत्यभूत्सङ्कटवानिव ' इत्युक्ते' प्रदर्शितसीताविरहोरहोविदेहजासहितएवेतिवाऽन्यकामिन्यासक्तिर्नेतिमन्तव्यम् । तर्हिक्रतुकृति कथमित्युक्तेव्यवहितत्वादुक्तमेवैकाश्वमेधपर्यवसायित्वेतिभ्रमभ्रंशनाययज्ञेयज्ञइतिवीप्सोक्त्याविवृणोति—यज्ञेयज्ञइति ॥ ८ ॥ **ति०** दशवर्षसहस्राणीतियागकालमर्यादेयं । नतुसीतावियोगानन्तरतावान्यागकालइतिकतक । तत्रसीतावियोगानन्तरंतावतोयागकालत्वेकिंबाधकमितिचिन्त्यं । नतुभूमौसीतागमनोत्तरमितिवक्तुंयुक्तम् ॥ ९ ॥ **ति०** स्थिता स्थितानि ॥ **स०** हिरिवार्थ. । यथाऋक्षवानररक्षासिराममन्वरञ्जयंस्तथारामस्यशासनेस्थिताराजान अहन्यहनि प्रतिदिनं । अनुरञ्जंति अनुरञ्जयन्ति ॥ १२ ॥ **ति०** पौत्राः कुशलवाद्याः ॥ १५ ॥ **ति०** अन्वि-

[ पा० ] १ ख. ग. तेषुतत्रमहात्मसु. २ झ—ठ. राजानोह्यहन्यहनि. ३ क—घ. च. छ. ज. बहुरत्नानि.

एवं वर्षसहस्राणि बहून्यथ ययुः सुखम् ॥ यज्ञै बहुविधं धर्मं वर्धयानस्य सर्वदा ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकोनशततमः सर्गः ॥ ९९ ॥

---

## शततमः सर्गः ॥ १०० ॥

कदाचनयुधाजिच्चोदनयागार्ग्यमहर्षिणा राममेत्य सिंधुनद्याउभयकूलस्थितगन्धर्वदेशस्य स्ववशीकरणचोदनरूपतत्संदेशनिवेदनं ॥ १ ॥ रामाज्ञया स्वपुत्रसहितेनभरतेन सेनयासह युधाजित्समीपगमनम् ॥ २ ॥

कस्यचित्त्वथ कालस्य युधाजित्केकयो नृपः ॥ स्वगुरुं प्रेषयामास राघवाय महात्मने ॥
गार्ग्यमङ्गिरसः पुत्रं ब्रह्मर्षिममितप्रभम् ॥ १ ॥
दश चाश्वसहस्राणि प्रीतिदानमनुत्तमम् ॥ २ ॥
कम्बलानि च रत्नानि चित्रवस्त्रमथोत्तमम् ॥ रामाय प्रददौ राजा शुभान्याभरणानि च ॥ ३ ॥
श्रुत्वा तु राघवो धीमान्ब्रह्मर्षिं गार्ग्यमागतम् ॥ मातुलस्याश्वपतिनः प्रहितं तन्महद्धनम् ॥ ४ ॥
प्रत्युद्गम्य च काकुत्स्थः क्रोशमात्रं सहानुजः ॥ गार्ग्यं संपूजयामास यथा शक्रो बृहस्पतिम् ॥५॥
तथा संपूज्य तमृषिं तद्धनं प्रतिगृह्य च ॥ पृष्ट्वा प्रतिपदं सर्वं कुशलं मातुलस्य च ॥
उपविष्टं महाभागं रामः प्रष्टुं प्रचक्रमे ॥ ६ ॥
किमाह मातुलो वाक्यं यदर्थं भगवन्निह ॥ प्राप्तो वाक्यविदां श्रेष्ठः साक्षादिव बृहस्पतिः ॥ ७ ॥
रामस्य भाषितं श्रुत्वा महर्षिः कार्यविस्तरम् ॥ वक्तुमद्भुतसङ्काशं राघवायोपचक्रमे ॥ ८ ॥
मातुलस्ते महाबाहो वाक्यमाह नरर्षभ ॥ युधाजित्प्रीतिसंयुक्तं श्रूयतां यदि रोचते ॥ ९ ॥
अयं गन्धर्वविषयः फलमूलोपशोभितः ॥ सिन्धोरुभयतः पार्श्वे देशः परमशोभनः ॥ १० ॥
तं च रक्षन्ति गन्धर्वाः सायुधा युद्धकोविदाः ॥ शैलूषस्य सुता वीर त्रिकोट्यो वै महाबलाः ॥११॥
तान्विनिर्जित्य काकुत्स्थ गन्धर्वनगरं शुभम् ॥ निवेशय महाबाहो स्वपुरे सुसमाहिते ॥ १२ ॥

---

स्येत्यनुकर्षः । पितॄन् देवान् विवर्धयन् यज्ञांश्चकारेति । पिण्डपितृयज्ञानित्यर्थः ॥ १९ ॥ वर्धयानस्य वर्धमानस्येत्यर्थः ॥२०॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकोनशततम. सर्गः ॥ ९९ ॥

अश्वपतिनः अश्वपतेः ॥ ४—५ ॥ प्रतिपदमिति । प्रत्येक कुशलं पृष्ट्वेत्यर्थः ॥ ६—९ ॥ सिन्धोः सिन्धुनद्याः । अय देशः अस्मद्देशसमीप इत्यर्थः ॥ १० ॥ शैलूषः गन्धर्वराज ॥ ११ ॥ स्वपुरे चेति । तद्देश

---

याय तस्या. अनु पश्चात् इयाय । कालधर्ममितिशेष । बहुविधं नानाप्रकारं ॥ १६ ॥ ति० यत्तु ' एवप्रशासतस्तस्यराघवस्य महेश्वरि । अत्ययाद्दशसाहस्रंरममाणस्यसीतया । ' इतिपाद्मेउक्तं तत्रसीतयाभूमौस्थितयास्थितस्यरममाणस्य । राज्यकुर्वतइत्यर्थ.। साहस्रमितिस्वार्थेऽण् । अत्ययाद्वर्षसाहस्रइतिपाठेसहस्राणासमूह साहस्रं । सहस्रसमूहइत्यर्थकतयादशसहस्रेत्यर्थकमेव । आयु. तस्यैकादशसहस्रवर्षाणि ॥ स० वर्षसहस्राणि ' एवंत्रयोदशसहस्रसमा. ' इत्याद्युक्तप्रकारेणज्ञेयानि । ननुपाद्मे—एवंप्रशासतस्तस्यराघवस्यमहेश्वरि । अत्ययाद्दशसाहस्रंरममाणस्यसीतया ' इत्युक्ते कथंत्रयोदशेत्युक्तिरितिचेत् मुख्यासख्यादशपर्यन्तमिति तथोक्ति । मानान्तरोक्तसख्याग्रहेणाविरोधोपपत्ते । अत्ययाद्वर्षसाहस्रमितिपाठंवृत्वासहस्राणासमूहइत्यर्थकतयादशसहस्रेत्यर्थकमेवेतिनागोजिभट्ट । तत्रअचित्तेत्यत्रसूत्रेअचित्त सइतितच्चित्तैर्मन्तव्यं ॥ २० ॥ इत्येकोनशततम सर्ग ॥ ९९ ॥

स० युधाजित् भरतमातुल ॥ १ ॥ स० पतमुत्पतनं । अश्वे पतमस्यास्तीतितत्पती । तस्याश्वपतिन ॥ ४ ॥ स० प्रतिपदं प्रतिपृच्छास्पदंजनं ॥ ६ ॥ स० सिन्धोर्नदस्य ॥ १० ॥

[पा०] १ ग. यज्ञैर्बहुविधैश्चापिवर्तयामासनित्यश.. २ क. ख. घ. वर्धयामासनित्यदा. ३ च. छ. दृष्ट्वाचप्रीतिमतुलांकुशलं.

अन्यस्य न गतिस्तत्र देशः परमशोभनः ॥ रोचतां ते महाबाहो नाहं त्वामहितं वदे ॥ १३ ॥
तच्छ्रुत्वा राघवः प्रीतो महर्षेर्मातुलस्य च ॥ उवाच बाढमित्येव भरतं चान्ववैक्षत ॥ १४ ॥
सोब्रवीद्राघवः प्रीतः साञ्जलिप्रग्रहो द्विजम् ॥ इमौ कुमारौ तं देशं ब्रह्मर्षे विचरिष्यतः ॥ १५ ॥
भरतस्यात्मजौ वीरौ तक्षः पुष्कल एव च ॥ मातुलेन सुगुप्तौ तु धर्मेण सुसमाहितौ ॥ १६ ॥
भरतं चाग्रतः कृत्वा कुमारौ सबलानुगौ ॥ निहत्य गन्धर्वसुतान्द्वे पुरे विभजिष्यतः ॥ १७ ॥
निवेश्य ते पुरवरे आत्मजौ सन्निवेश्य च ॥ आगमिष्यति मे भूयः सकाशमतिधार्मिकः ॥ १८ ॥
ब्रह्मर्षिमेवमुक्त्वा तु भरतं सबलानुगम् ॥ आज्ञापयामास तदा कुमारौ चाभ्यषेचयत् ॥ १९ ॥
नक्षत्रेण च सौम्येन पुरस्कृत्याङ्गिरःसुतम् ॥ भरतः सह सैन्येन कुमाराभ्यां विनिर्ययौ ॥ २० ॥
सा सेना शक्रयुक्तेव नगरान्निर्ययावथ ॥ राघवानुगता दूरं दुराधर्षा सुरैरपि ॥ २१ ॥
मांसादानि च सत्त्वानि रक्षांसि सुमहान्ति च ॥ अनुजग्मुर्हि भरतं रुधिरस्य पिपासया ॥ २२ ॥
भूतग्रामाश्च बहवो मांसभक्षाः सुदारुणाः ॥ गन्धर्वपुत्रमांसानि भोक्तुकामाः सहस्रशः ॥ २३ ॥
सिंहव्याघ्रवराहाणां खेचराणां च पक्षिणाम् ॥ बहूनि वै सहस्राणि सेनाया ययुरग्रतः ॥ २४ ॥
अध्यर्धमासमुषिता पथि सेना निरामया ॥ हृष्टपुष्टजनाकीर्णा केकयं समुपागमत् ॥ २५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे शततमः सर्गः ॥ १०० ॥

---

## एकोत्तरशततमः सर्गः ॥ १०१ ॥

भरतेन युधाजितासह गन्धर्वदेशगमनेनतद्धननपूर्वकं तक्षशिलापुष्कलावताख्यनगरयो क्रमेणतक्षपुष्कलयोरभिषेककरणेनरामसमीपमेत्य गन्धर्ववधनिवेदनम् ॥ १ ॥

श्रुत्वा सेनापतिं प्राप्तं भरतं केकयाधिपः ॥ युधाजिद्गार्ग्यसहितं परां प्रीतिमुपागमत् ॥ १ ॥
स निर्ययौ जनौघेन महता केकयाधिपः ॥ त्वरमाणोभिचक्राम गन्धर्वान्कामरूपिणः ॥ २ ॥

---

इति शेषः ॥ १२ ॥ अन्यस्य त्वद्व्यतिरिक्तस्य । तत्र देशे गतिः प्राप्तिप्रसङ्ग एव नास्तीत्यर्थः । तत्साधने फलमुक्तं—देशः परमशोभन इति ॥ १३ ॥ भरतं चान्ववैक्षतेति । पर्यालोचनार्थमित्यर्थः ॥ १४–२०॥ शक्रयुक्तेव इन्द्रयुक्ता देवसेनेव । नगरान्निर्ययौ दूरमिति । एकद्विवासरपर्यन्तमित्यर्थः ॥ २१–२३ ॥ सेनाया अग्रतो ययुरिति । पिशिताशनादीनामग्रतो यानं सुशकुनं । अभिमुखतः आगमनमेवापशकुनं ॥ २४ ॥ केकयं युधाजितमित्यर्थः ॥२५॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने शततमः सर्गः ॥१००॥

सेनापतिं प्राप्तं युद्धसन्नाहं श्रुत्वा ॥ १—२ ॥

---

स० वदे वदामि ॥ १३ ॥ स० साञ्जलिप्रग्रह अञ्जलिसहितबाहुरू ॥१५॥ ति० तक्षइत्यकारान्त । मातुलेन भरतमातुलेन युधाजिता ॥ १६ ॥ ति० पुरवरे निवेश्यनिर्माय आत्मजौसनिवेश्य । तयो पुरयोरितिशेष । अतिधार्मिकोभरत ॥ स० अतिधार्मिक अनेनतद्देशमानोरम्यात्किरामेणकिमयोध्ययेतिदुर्धियंनतनुयादनुजइतिसूचयति ॥ १८ ॥ ति० अङ्गिरस्सुतं गार्ग्यं ॥ २० ॥ स० राघवानुगता रामेणदूरप्रेषणप्रेमनैर्भर्येणदूरमनुगता ॥ २१ ॥ स० रुधिरस्य गान्धर्वस्य ॥ २२ ॥ इतिशततम सर्ग ॥ १०० ॥

स० निर्ययौ ग्रामाद्बहि । अभिचक्राम गतवान् ॥ २ ॥

[ पा० ] १ क. सुतान्शत्रूंन्वैविभजिष्यत . ग. सुतान्पुराणिविभजिष्यतः. २ क. सुरासुरै . ३ ख. घ—ट. गन्धर्वान्केकयाधिप.. क. गन्धर्वान्देवरूपिण .

भरतश्च युधाजिच्च समेतौ लघुविक्रमैः ॥ गन्धर्वनगरं प्राप्तौ सबलौ सपदानुगौ ॥ ३ ॥
श्रुत्वा तु भरतं प्राप्तं गन्धर्वास्ते समागताः ॥ योद्धुकामा महावीर्या व्यनदंस्ते समन्ततः ॥ ४ ॥
ततः समभवद्युद्धं तुमुलं रोमहर्षणम् ॥ सप्तरात्रं महाभीमं न चान्यतरयोर्जयः ॥ ५ ॥
खङ्गशक्तिधनुर्ग्राहा नद्यः शोणितसंस्रवाः ॥ नृकलेबरवाहिन्यः प्रवृत्ताः सर्वतो दिशम् ॥ ६ ॥
ततो रामानुजः क्रुद्धः कालस्यास्त्रं सुदारुणम् ॥ संवर्तं नाम भरतो गन्धर्वेष्वभ्यचोदयत् ॥ ७ ॥
ते बद्धाः कालपाशेन संवर्तेन विदारिताः ॥ क्षणेनाभिहतास्तेन तिस्रः कोट्यो महात्मनाम् ॥ ८ ॥
तं घातं घोरसङ्काशं न स्मरन्ति दिवौकसः ॥ निमेषान्तरमात्रेण तादृशानां महात्मनाम् ॥ ९ ॥
हतेषु तेषु सर्वेषु भरतः केकयीसुतः ॥ निवेशयामास तदा समृद्धे द्वे पुरोत्तमे ॥ १० ॥
तक्षं तक्षशिलायां तु पुष्कलं पुष्कलावते ॥ गन्धर्वदेशे रुचिरे गान्धारविषये च सः ॥ ११ ॥
धनरत्नौघसंपूर्णे काननैरुपशोभिते ॥ अन्योन्यसंघर्षकृते स्पर्धया गुणविस्तरैः ॥ १२ ॥
उभे सुरुचिरप्रख्ये व्यवहारैरकिल्बिषैः ॥ उद्यानयानसंपूर्णे सुविभक्तान्तरापणे ॥ १३ ॥
उभे पुरवरे रम्ये विस्तरैरुपशोभिते ॥ गृहमुख्यैः सुरुचिरैर्विमानसमवर्णिभिः ॥ १४ ॥
शोभिते शोभनीयैश्च देवायतनविस्तरैः ॥ तालैस्तमालैस्तिलकैर्बकुलैरुपशोभिते ॥ १५ ॥
निवेश्य पञ्चभिर्वर्षैर्भरतो राघवानुजः ॥ पुनरायान्महाबाहुरयोध्यां केकयीसुतः ॥ १६ ॥
सोऽभिवाद्य महात्मानं साक्षाद्धर्ममिवापरम् ॥ राघवं भरतः श्रीमान्ब्रह्माणमिव वासवः ॥ १७ ॥
शशंस च यथावृत्तं गन्धर्ववधमुत्तमम् ॥ निवेशनं च देशस्य श्रुत्वा प्रीतोऽस्य राघवः ॥ १८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे एकोत्तरशततमः सर्गः ॥ १०१ ॥

---

सबलौ चतुरङ्गबलसहितौ । सपदानुगौ शूद्रवैश्याद्यनुचरसहितौ ॥ ३ ॥ व्यनदन् गर्जन्ति स्म ॥४–५॥ खङ्गेति। खङ्गादिरूपा ग्राहा यासु ताः। संस्रवः प्रवाहः। नृकलेवराणि नद्याः काष्ठानि वहन्तीति तथा ॥ ६ ॥ संवर्तनामेति । प्रलयकालाभ्याख्यमित्यर्थः ॥ ७–८ ॥ तं घातं दिवौकस. न स्मरन्तीति । त्रिकोटिगन्धर्वघातोऽसंभाव्य इत्येव स्मृत्वा स्थितवन्त इत्यर्थः ॥९॥ द्वे पुरेति । तक्षशिलापुष्कलावताख्ये ॥ १०–१२ ॥ अकिल्बिषैः धर्मन्यायोपेतैर्व्यवहारैः क्रयविक्रयादिव्यापारैः ॥ १३ ॥ विमानसमवर्णिभि' देवायतनवद्विस्तारैः । गृहमुख्यैरभित उपशोभिते । विमानैर्बहुभिर्वृत इति च पाठः ॥ १४—१८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकोत्तरशततमः सर्गः ॥ १०१ ॥

---

स० सबलौ सचतुरङ्गौ सबाहुबलौवा ॥ ३ ॥ स० अन्यतरयो राघवगान्धर्वयोर्मध्येएकस्येत्यन्यतरयो ॥ ५ ॥ स० द्वेपुरोत्तमे रामाज्ञाप्रकारेणद्वयो पुत्रयो ॥ १० ॥ स० तयोरभिधेयेनैवतयोरभिधेयमभिधत्ते—तक्षमिति ॥ ११ ॥ स० गुणविस्तरै कारणै अन्योन्यंसघर्षकृते अहंमहीयोऽहंमहीयइतिस्पर्धाकृते । गुणविस्तरै स्पर्धयाउभेब्रह्मसभेइववा । तत्रत्यलोकस्पर्धाविवक्षयापुरस्पर्धाभिधानमितिज्ञेयं ॥ १२ ॥ स० विस्तरै वीनापक्षिणापारावतादीनास्तरआस्तरणयत्रतानिविस्तराणितै । सनीडै गृहमुख्यै । विस्तरै अनुक्तपदार्थविस्तरैरितिनागोजिभट्ट । विमानै सप्तभूमप्रासादै ॥ १५ ॥ स० पञ्चभिर्वर्षै । तावन्तिदिनानिपुरनिर्माणेलग्नानि ॥ १६ ॥ स० ब्रह्माणवासवइवाभिवाद्यशशंसेत्यन्वय ॥ १७ ॥ स० अस्यभरतस्योपरि ॥ ति० स्वस्याथथावृत्तंगन्धर्ववधंदेशस्यनिवेशनंचशशंस । अस्यभरतस्यवाक्यंश्रुत्वा राघवोराम प्रीतोबभूव ॥ १८ ॥ इत्येकोत्तरशततम.सर्ग ॥ १०१ ॥

[ पा० ] १ क. ग. च. छ. ज. ञ. लघुविक्रमौ. २ ङ. च. छ झ. ञ. ट. विमानैर्बहुभिर्वृते. ३ ख. ग. सोऽभिगम्य.

# द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

भरतवाक्यश्रवणहृष्टेनरामेण सौमित्रिंप्रति तत्पुत्रयोरङ्गदचन्द्रकेत्वोर्निवासायदेशान्वेषणचोदने भरतेनरामंप्रति कारुपथदेशस्थयोरङ्गदीयचन्द्रकान्ताख्यपुरयोर्वासार्हत्वकथनम् ॥ १ ॥ रामेणाङ्गदीयचन्द्रकान्ताख्यपुरयो क्रमेणाङ्गदचन्द्रकेत्वोरभिषेककरणपूर्वकंप्रस्थापने तदनुगताभ्यांसौमित्रिभरताभ्यां तत्रसंवत्सरमधिवासेन पुनरयोध्यांप्रत्यागमनम् ॥ २ ॥

तच्छ्रुत्वा हर्षमापेदे राघवो भ्रातृभिः सह ॥ वाक्यं चाद्भुतसंकाशं तदा प्रोवाच लक्ष्मणम् ॥ १ ॥
इमौ कुमारौ सौमित्रे तव धर्मविशारदौ ॥ अङ्गदश्चन्द्रकेतुश्च राज्यार्थे दृढविक्रमौ ॥ २ ॥
इमौ राज्येऽभिषेक्ष्यामि देशः साधु विधीयताम् ॥ रमणीयो ह्यसंबाधो रमेतां यत्र धन्विनौ ॥ ३ ॥
न राज्ञो यत्र पीडा स्यान्नाश्रमाणां विनाशनम् ॥ स देशो दृश्यतां सौम्य नापराध्यामहे यथा ॥४॥
तथोक्तवति रामे तु भरतः प्रत्युवाच ह ॥ अयं कारुपथो देशो रमणीयो निरामयः ॥ ५ ॥
निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः ॥ चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम् ॥ ६ ॥
तद्वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः ॥ तं च कृत्वा वशे देशमङ्गदस्य न्यवेशयत् ॥ ७ ॥
अङ्गदीया पुरी रम्या ह्यङ्गदस्य निवेशिता ॥ रमणीया सुगुप्ता च रामेणाक्लिष्टकर्मणा ॥ ८ ॥
चन्द्रकेतोस्तु मल्लस्य मल्लभूम्यां निवेशिता ॥ चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा ॥९॥
ततो रामः परां प्रीतिं लक्ष्मणो भरतस्तथा ॥ ययुर्युद्धे दुराधर्षा अभिषेकं च चक्रिरे ॥ १० ॥
अभिषिच्य कुमारौ स प्रस्थापयति राघवः ॥ अङ्गदं पश्चिमां भूमिं चन्द्रकेतुमुदङ्मुखम् ॥ ११ ॥
अङ्गदं चापि सौमित्रिर्लक्ष्मणोऽनुजगाम ह ॥ चन्द्रकेतोस्तु भरतः पार्ष्णिग्राहो बभूव ह ॥ १२ ॥
लक्ष्मणस्त्वङ्गदीयायां संवत्सरमथोषितः ॥ पुत्रे स्थिते दुराधर्षे ह्ययोध्यां पुनरागमत् ॥ १३ ॥
भरतोपि तथैवोष्य संवत्सरमतोधिकम् ॥ अयोध्यां पुनरागम्य रामपादावुपास्त सः ॥ १४ ॥
उभौ सौमित्रिभरतौ रामपादावनुव्रतौ ॥ कालं गतमपि स्नेहान्न जज्ञातेऽतिधार्मिकौ ॥ १५ ॥
एवं वर्षसहस्राणि दश तेषां ययुस्तदा ॥ धर्मे प्रयतमानानां पौरकार्येषु नित्यदा ॥ १६ ॥
विहृत्य कालं परिपूर्णमानसाः श्रिया वृता धर्मपुरे सुसंस्थिताः ॥

राज्यार्थे राज्यरक्षाविषये ॥ २—३ ॥ नापराध्यामहे । कस्यापि भूतस्येतिशेषः ॥ ४ ॥ कारुपथः कारुपथाख्यः पाश्चात्यदेशविशेषः ॥ ५ ॥ तत्र देशे अङ्गदस्य पुरं अङ्गदीयाख्य निवेश्यतां चन्द्रकेतोः चन्द्रकान्ताख्यं ॥ ६—८ ॥ मल्लस्य श्रेष्ठस्य । मल्लभूम्यां मल्लदेशे उत्तरे ॥ ९—१३ ॥ भरतोपि तथैवोष्येति । चन्द्रकेतुसमीप इति शेषः ॥ १४ ॥ न जज्ञाते जानातेर्लिट्द्विवचन । नावगतवन्तौ । संधिः छान्दस. ॥ १५—१६ ॥ धर्मसाधनं पुरं धर्मपुरं तस्मिन् ॥ १७ ॥ इति श्रीगोविन्दराजविरचिते

ति० भ्रातृभिरितिबहुवचनंद्वित्वेआर्षं ॥ स० भ्रातृभिर्भ्रातॄनितिजातौबहुवचन ॥ बहुवचनमाद्यर्थइतिवा । भ्रातृभ्याभ्रात्रादिभि । भ्रातरौभ्रात्रादीनित्यर्थं । भ्रातृपुत्रयोरपिभ्रातृत्वेनविवक्षणाद्वैवमुक्ति ॥ १ ॥ स० विधीयता मनसाऽऽलोच्यनिर्धार्यतां ॥ ३ ॥ स० राज्ञा अस्मदनुरोधिना । नापराध्यामहे भूतघातेन ॥ ४ ॥ ति० तत्रदेशेऽङ्गदस्यपुरीरामेणनिर्मिता । लक्ष्मणद्वारेतिशेष ॥ स० रामेणसुगुप्ता अन्तरायातान्तरायपरिहारेण ॥ ८ ॥ स० मल्लस्यचन्द्रकेतो बलीयसश्चन्द्रकेतुनाम्न. । 'मल्लोमत्स्यभेदेबलीयसि' इतिविश्व ॥ ९ ॥ ति० युद्धेदुराधर्षारामादयोऽभिषेकंचक्रिरे । अङ्गदचन्द्रकेत्वोरितिशेष ॥ १० ॥ ति० दशसहस्राणि आयुस्त्वेकादशसहस्राणीतिस्पष्टमेव ॥ १६ ॥ ति० धर्मपुरे धर्मसाधने । पुरे अयोध्यायां । "अयोध्यामथुरामायाकाशीकाञ्चीअवन्तिका । पुरीद्वारवतीचैवसप्तैतामोक्षदायिकाः ।" इतिस्मृते. ॥ स० येप्रागहुतास्तेऽपि अहुताश्चते

[ पा० ] १ क—ट. भ्रातॄन्प्रोवाचराघव'. २ क—ट. राज्ञ ३ क. घ—छ. झ. ञ. ट. प्रस्थाप्यसुसमाहितौ. ४ क. च. छ. धर्मपथेपरेस्थिताः.

त्रयः समिद्धा इव दीप्ततेजसो महाध्वरे साधु हुतास्त्रयोऽग्नयः ॥ १७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

---

## त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

कदाचनतापसरूपिणारुद्रेण राममेत्य रहस्यवृत्तान्तकथनायस्वागमनस्यनिवेदने रामेण तच्चोदनयामन्त्रणसमये तच्छ्रोतुस्तयोर्निरीक्षमाणस्यच स्वेनहननप्रतिज्ञाकरणेन सौमित्रेर्द्वाररक्षकत्वेनस्थापनपूर्वकं तम्प्रतिरहस्यकथनचोदना ॥ १ ॥

कस्य चित्त्वथ कालस्य रामे धर्मपथे स्थिते ॥ कालस्तापसरूपेण राजद्वारमुपागमत् ॥ १ ॥
सोऽब्रवील्लक्ष्मणं वाक्यं धृतिमन्तं यशस्विनम् ॥ मां निवेदय रामाय संप्राप्तं कार्यगौरवात् ॥ २ ॥
दूतोस्म्यतिबलस्याहं महर्षेरमितौजसः ॥ रामं दिदृक्षुरायातः कार्येण हि महाबल ॥ ३ ॥
तस्य तद्वचनं श्रुत्वा सौमित्रिस्त्वरयान्वितः ॥ न्यवेदयत रामाय तापसं तं समागतम् ॥ ४ ॥
जयस्व राम धर्मेण उभौ लोकौ महाद्युते ॥ दूतस्त्वां द्रष्टुमायातस्तपसा भास्करप्रभः ॥ ५ ॥
तद्वाक्यं लक्ष्मणेनोक्तं श्रुत्वा राम उवाच ह ॥ प्रवेश्यतां मुनिस्तात महौजास्तस्य वाक्यधृत् ॥ ६ ॥
सौमित्रिस्तु तथेत्युक्त्वा प्रावेशयत तं मुनिम् ॥ ज्वलन्तमिव तेजोभिः प्रदहन्तमिवांशुभिः ॥ ७ ॥
सोभिगम्य रघुश्रेष्ठं दीप्यमानं स्वतेजसा ॥ ऋषिर्मधुरया वाचा वर्धस्वेत्याह राघवम् ॥ ८ ॥
तस्मै रामो महातेजाः पूजामर्घ्यपुरोगमाम् ॥ ददौ कुशलमव्यग्रं प्रष्टुमेवोपचक्रमे ॥ ९ ॥
पृष्टश्च कुशलं तेन रामेण वदतां वरः ॥ आसने काञ्चने दिव्ये निषसाद महायशाः ॥ १० ॥
तमुवाच ततो रामः स्वागतं ते महामुने ॥ प्रापयस्व च वाक्यानि यतो दूतस्त्वमागतः ॥ ११ ॥
चोदितो राजसिंहेन मुनिर्वाक्यमभाषत ॥ द्वन्द्वमेतत्प्रवक्तव्यं हितं वै यद्यपेक्षसे ॥ १२ ॥

---

श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

---

कालस्य कस्यचित् गमनानन्तरमिति शेषः ॥१–२॥ महर्षेरिति । ब्रह्मण इत्यर्थः ॥ ३–५॥ तस्य वाक्यस्य धृदिति रामवाक्यधारीति सौमित्रिविशेषणं ॥६–१०॥ वाक्यानि संदेशवाक्यानि । प्रापयस्व निवेदय । तत्र हेतुः—यतो दूत इत्यादि ॥ ११ ॥ मुनिवाक्य प्रागुक्तमहर्षिसंदिष्टवाक्यं । द्वन्द्वमेतदिति । "द्वन्द्वं रहस्य" इत्यादि द्वन्द्वशब्दस्य रहस्यार्थे द्विवचननिपातः । रहस्यमेतत्प्रवक्तव्यमित्यर्थः । द्वन्द्वे हि तत्प्रवक्तव्यमिति च पाठः । तदेव विशिनष्टि—न चैषामित्यादि ॥ एषां

---

अग्नयश्च तेतथा । आहिताग्न्यादि । तेत्रय आहवनीयादयोऽनन्तरमध्वरेसमिद्धाहुतिदीप्ततेजसोयथातथात्रयोरामलक्ष्मणभरता. सन्स्थिता. । इत्थंचयोजनायासमिद्धाहुतिदीप्ततेजसस्त्रयोहुताग्नयइतिपदयोरपौनरुक्त्येनव्याकरणाचातुरीनागोजिभट्टादिवन्नास्मा‐कमितिमन्तव्यं ॥ १७ ॥ इतिद्व्युत्तरशततम सर्ग ॥ १०२ ॥

स० कालोरुद्र· विधिनिदेशात्तापसरूपेणराजद्वारमुपागमत् ॥ १ ॥ स० अमितौजस अतिबलस्यमहर्षेः । रहस्यप्रमेयंरामेतरेभ्योनकथनीयमित्याच्छायोक्तिरियमितिज्ञेयं ॥ ३ ॥ ति० उभौलोकौजयस्वेत्युक्त्यापरलोकप्रवेशकालसूचनं ॥ स० स्वराजधर्मेण स्वंचराजाच स्वराजानौ । तयोर्धर्मस्तेन । स्वधर्मेणयज्ञादिनापरलोकं । राजधर्मेणशौर्यादिना इमंलोकं इत्युभौजय । स्वपूर्वराजधर्मेणेतिवा ॥ ५ ॥ ति० तेजोभि अंशुभिरित्येतेपदे शरीरकान्तिकिरणप्रतिपादकेइतिनपुनरुक्ति· ॥ स० तेजोभि. प्रदहन्तंवह्निवत् । अंशुभिर्ज्वलन्तंसूर्यवत् ॥ ७ ॥ ति० हितवैयद्यवेक्षसे देवानामितिशेष । देवगोप्यगोपनेहिदेवानाहितंभवतीतिभाव· ॥ स० द्वन्द्वे रहस्ये । 'षट्कर्णोभिद्यतेमन्त्र' इत्युक्ते । यदिदेवेभ्यःस्वस्मैचहितमवेक्षसेतर्हिगोप्यत्वेनयुक्तोक्तिरेकान्त-

[ पा० ] १ झ. ठ. समिद्धाहुतिदीप्ततेजसोहुताग्नय साधुमहाध्वरेत्रयः. २ झ. ठ. धर्मपरे. ३ झ. ठ. जयस्वराजधर्मेण. ४ ङ. च. छ. झ. ञ. द्वन्द्वेह्येतत्प्रवक्तव्यं. ५ झ. ठ. यद्यवेक्षसे.

यः शृणोति निरीक्षेद्वा स वध्यो भविता तव ॥ भवेद्वै मुनिमुख्यस्य वचनं यद्यपेक्षसे ॥ १३ ॥
स तथेति प्रतिज्ञाय रामो लक्ष्मणमब्रवीत् ॥ द्वारि तिष्ठ महाबाहो प्रतिहारं विसर्जय ॥ १४ ॥
स मे वध्यः खलु भवेत्कथाद्वन्द्वं समीरितम् ॥ ऋषेर्मम च सौमित्रे पश्येद्वा शृणुयाच्च यः ॥ १५ ॥
ततो निक्षिप्य काकुत्स्थो लक्ष्मणं द्वारि संग्रहम् ॥ तमुवाच मुने वाक्यं कथयस्वेति राघवः ॥१६॥
यत्ते मनीषितं वाक्यं येन वाऽसि समाहितः ॥ कथयस्वाविशङ्कस्त्वं ममापि हृदि वर्तते ॥ १७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

---

## चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

रुद्रेण रामप्रति तस्यजगत्सृष्ट्यादिकर्तृत्वगुणवर्णनपूर्वकं रामावतारप्रयोजनभूतरावणवधस्यनिर्वृत्तत्वोक्तिपूर्वकस्वावासप्रतिनिवर्तनप्रार्थनारूपचतुर्मुखसंदेशनिवेदने तेनतदभ्युपगम ॥ १ ॥

शृणु राजन्महासत्त्व यदर्थमहमागतः ॥ पितामहेन देवेन प्रेषितोस्मि महाबल ॥ १ ॥
तवाहं[2] पूर्वसद्भावे पुत्रः परपुरंजय ॥ मायासंभावितो वीर कालः सर्वसमाहरः ॥ २ ॥

---

त्वत्समीपवर्तिलोकानामित्यर्थः ॥ १२ ॥ अस्मद्वचनं निरीक्षेत् मन्त्रयितारौ स तव वध्यः। कथमेवमतिक्रूरसंकेत इत्यत्राह—भवेदिति। तस्य मुनिमुख्यस्य वचनमित्थं संकेतपूर्वकं वदेति चोदितवानित्यर्थः॥ यद्यपेक्षस इति। तथा संकेतपरिपालनमिति शेषः ॥ १३ ॥ प्रतिहारं विसर्जय अन्यतोपसारय ॥ १४॥ किमर्थमित्यत आह—स म इत्यादि॥ हे सौमित्रे ऋषेर्मम च कथाद्वन्द्व कथारहस्य। वाचं द्वन्द्वमिति च पाठः। यः शृणुयात् ॥ १५ ॥ सग्रहं रक्षितारं ॥ १६ ॥ समाहितः। ममापि हृदि वर्तत इति। एवंविधं रहस्यं तन्मयापि श्रोतव्यमित्यर्थ.। अहमपि जानामीत्यर्थः॥ १७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

येन संदेशः कृतः स पितामह एवेत्याह—पितामहेनेति ॥ १ ॥ अहं च न तापसः किंतु काल इत्याह—तवाहमित्यादि ॥ पूर्वसद्भावे पूर्वजन्मनि अह तव पुत्र.। सर्वसमाहरः कालरुद्र इति यावत्। परपुरंजयः त्रिपुरसंहारकः। तवाह पूर्वके भावे पुत्रः परपुरंजय इति च पाठः। केवलं यमस्य पूर्वभावादुत्थितत्वाभावात् मायासभावितः मायया उत्पादितः(?)

---

इतिभाव ॥ १२ ॥ ति० सग्रह सम्यगुक्तार्थग्रहणवन्तं ॥ १६ ॥ इतित्र्युत्तरशततम सर्ग ॥ १०३ ॥

स० महासत्व बहुलबल ॥ १ ॥ ति० तत्प्रेषितदूतोप्यहत्वत्सबन्ध्येवेत्याह—तवाहंपूर्वकेभावइति । पूर्वावस्थायांहिरण्यगर्भोत्पत्तिसमयेहिरण्यगर्भावस्थायावा । कथमहपुत्रस्तत्राह—मायासभावित. माययासकल्पेनसभावित उत्पादित । सर्वसमाहर॰ सर्ववस्तुसहारकर्तेतितीर्थः । कतकस्तु—' तवाहंपूर्वसद्भावे'इतिपाठ । पूर्वसृष्टे॰प्राक्सद्भावे ' सदेवसौम्येदमग्रआसीत् ' इतिश्रुतेः । सत्तारूपब्रह्मभावेकरिष्यमाणाखिलससारस्यसृष्टिस्थितिसहारनिग्रहानुग्रहलक्षणपञ्चकृत्यनिर्वाहक.कालाख्य. क्षणधारारूपोनाडीदिनपक्षादिविभागनिर्वाहक पुत्रोमायासभावित त्वदीयमायापरिणामइत्यर्थ.। शेषप्राग्वत्। यद्यपिरामोहिरण्यगर्भांशविष्णोरेवावतार.। तथापितस्यस्वस्वरूपाशेनावृतज्ञानत्वाद्वामदेववदेवंव्यपदेशेनदोषइत्याह । यत्तुकतकेनसद्भावशब्देनहिरण्यगर्भउक्त॰ तत्तुच्छमितिस्पष्टमेवाद्वैतविद्याविदाम्॥ स० दूतइत्येवन। किंतुत्वत्पुत्र स । अहंतुपौत्रइत्याह—तवेति। पूर्वकेभावे अतीतजातौ। मायासंभावित रमायामुत्पादितोविरिंचिपदवाच्यस्तवपुत्र । परपुरं तदपरोदेहोऽह । तत्पुत्रोऽहं । अत पौत्रस्तवेतिभाव । स्वव्यापारमप्यावेदयति । सर्वसमाहर॰ सर्वसहर्ता । नामाह—कालइति । तवमायासभावित इच्छयापद्मोत्पन्नो यस्तस्याहंपूर्वकेभावे अहंकारतत्वेकार्योन्मुखे पुत्रोजातोऽहं । पूर्ववदुर्वरित । ' महत्तत्वादहंकारंससर्जशिवविग्रहम् ।' इत्यादे । ' पुत्रस्तवेशकमलप्रभवस्तथाऽहंपौत्रस्तुपौत्रकवचोयदपिह्ययोग्यम् । सभावयन्तिगुणिन ' इत्याद्युक्तेश्च । ' मात्वंपूर्वमजीजनः ' इत्युक्तिस्वारस्या-

[ पा० ] १ झ. ठः यद्यवेक्षसे. २ झ. ठ. पूर्वकेभावे.

पितामहश्च भगवानाह लोकपतिः प्रभुः ॥ समयस्ते कृतः सौम्य स्वॉल्लोकान्परिरक्षितुम् ॥ ३ ॥
संक्षिप्य हि पुरा लोकान्मायया स्वयमेव हि ॥ महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः ॥ ४ ॥
भोगवन्तं ततो नागमनन्तमुदकेशयम् ॥ मायया जनयित्वा त्वं द्वौ च सत्त्वौ महाबलौ ॥ ५ ॥
मधुं च कैटभं चैव ययोरस्थिचयैर्वृता ॥ इयं पर्वतसंबाधा मेदिनी चाभवन्मही ॥ ६ ॥
पद्मे दिव्येऽर्कसंकाशे नाभ्यामुत्पाद्य मामपि ॥ प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम् ॥ ७ ॥
सोहं संन्यस्तभारो हि त्वामुपासे[1] जगत्पतिम् ॥ रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान् ॥ ८ ॥

॥ २ ॥ पितामहवाक्यमाह—पितामहश्चेत्यादि ॥ स्वान् ब्रह्मलोकादीन् । परिरक्षितु ते समयः । स्वलोक प्राप्तुं समय इत्यर्थः । लोकान्त्संपरिरक्षितुमिति च पाठः ॥ ३ ॥ न केवलं त्व रक्षकः किंतु संहर्ता स्रष्टा चेत्याह—संक्षिप्येत्यादि ॥ लोकान् चराचरात्मकाः प्रजाः । मायया विचित्रशक्त्या । जनयित्वा । त्व महाकालाग्निरूपः । सत्त्वौ प्राणिनौ । अजीजन इत्यनुषङ्गः ॥ ४—५ ॥ कौ तावित्यत आह—मधु च कैटभ चैवेति ॥ तत्र मधुः जलोत्पन्नमकारादिवत् मेदःप्रधानः । कैटभस्तु कमठशुक्त्यादिवत् अस्थिप्रधानः । तत्सृष्टिप्रयोजनमाह—ययोरित्यादि । ययोरस्थिचयैर्वृता इय मही पर्वतसंबाधा सती मेदिनी तन्मेदोयुक्ता । पृषोदरादित्वात्सकारलोपः । अस्थिचयैः शिलापर्वतस्थितिहेतुभूता मेदोमयत्वाद्वृक्षलताद्युत्पत्तिहेतुर्मृदुप्रदेशाश्चाभूदित्यर्थः ॥ ६ ॥ मां त्वं पूर्वमजीजन इत्येतद्विवृणोति—पद्म इत्यादि ॥ नाभ्यां वर्तमाने पद्मे नाभिकमले मामुत्पाद्य मयि प्राजापत्य प्रजापतित्वं निवेशितं । मम प्रजापतित्वं दत्तवानसीत्यर्थः ॥७॥ त्वयि संन्यस्तभारः अह त्वामुपासे निरन्तरं चिन्तयामि । भूतेषु मत्सृष्टेषु रक्षां विधत्स्व॥८॥

दर्थविशेषलाभेनकिंचिच्छेषादिकसोढव्य ॥ २ ॥ **ति०** एवस्वस्वरूपमुक्त्वातत्सदेशमाह—पितामहश्चेति । चतुर्मुखाज्जातानाप्रजापतीनालोकपितृत्वाच्चतुर्मुख पितामह । सलोकाना भूरादीनापति पालयिता । सयदाहतद्वदामीतिशेष । तदेवाह—समयस्ते इति । ‘ भवन्तुविगतज्वरा ’ इत्यन्तोब्रह्मसदेश । लोकान् देवमनुष्यादीन्रावणादितोरक्षितुंय समय कृत ‘ दशवर्षसहस्राणि दशवर्षशतानिच ॥ वत्स्यामिमानुषेलोकेपालयन्पृथिवीमिमाम् ’ इत्येवंरूपकालविषय कृत सपरिपूर्णइतिशेष ॥ ३ ॥ **ति०** अथतत्वतोज्ञातसत्स्वरूपस्यममकथमानुषदेहपरिग्रहइत्यत्रसप्रयोजनंतत्प्रक्रियामाह—सक्षिप्येति । पुराजगत्सृष्टे पूर्वकाले मायया सर्वसंहारसमर्थस्वशक्त्यासक्षिप्य उपसहृत्य । एतेनाप्रयासेनसकलसहारकर्तृत्वंब्रह्मलक्षणमुक्तं । स्वयमेवेत्यनेनास्यसहारस्यनरुद्रादिद्वारकत्वं । तेषामपिसहार्यकोटिनिविष्टत्वादितिदर्शित । एवंसहारंकृत्वामहदहंकारपञ्चतन्मात्रादिसृष्टिद्वारेणैवंतासृष्टिंकृत्वातद्रूपे महार्णवेशयान इत्यनेनैवोदकशायित्वेलब्धेपुनरप्स्विति तदापृथिवीतत्वाद्यभावप्रदर्शनार्थं । मापूर्वमजीजन । ‘योब्रह्माणंविदधातिपूर्वं’ इतिश्रुते हिरण्यगर्भसृष्टिद्वाराब्रह्माण्डसृष्टौक्रियमाणायातदण्डान्ममोद्भवइत्यर्थ ॥ **स०** पुरा सृष्टिकालात्पूर्वमायया स्वसामर्थ्येनलोकान्स्वयमेवसक्षिप्य सहृत्य । स्वयमेवेत्यनेनस्वाभाविकत्वंशक्तेर्द्योतयति । महार्णवेजलमये । जाते । तत्राप्सु उदकेशयान । पूर्वंप्रथमत. । माअजीजन । अर्णवेशयानइतिवचनादेवोदकशायित्वेसिद्धेपुनरप्स्वितिवचनंवटेगावइतिवत्सामीपिकाधिकरणसमीभ्रमभ्रंशार्थं । महार्णवइतिचेतरनीरत्वसदेहनिबर्हणार्थमितिचमन्तव्य । ‘योब्रह्माणंविदधातिपूर्वं’ इत्यादिश्रुते । अनेन ‘अन्त.समुद्रेमनसाचरन्तंब्रह्मान्वविन्दद्दशहोतारमर्णे ’ इतिश्रुत्यनुक्ततताज्ञेयैतस्य ॥ ४ ॥ **स०** उक्तसामान्यतोविशेषतोभाषते—भोगवन्तमिति । मतुबर्थोमहत्त्वं । महादेहं । अनन्त नामत । नागं जातित । मायया इच्छया । सत्वौ । गत । स. त्वौ अन्यौ । असुरावित्यर्थ· । इतिवा । ‘ ब्रह्मात्वोवदतिजातविद्यायज्ञस्यमात्राविमिमीतउत्व ’ इत्यादिश्रुते । ‘ त्वत्त्वावन्यपर्यायौ ’ इतिकौमुद्या । जनयित्वा । कौतावितितत्राह—मधुमिति । हत्वातयोरितिशेष । अस्थापर्वतसकाशत्वेनतदाख्यपर्वतसघसहिता ॥ **ति०** तदुत्पत्तिप्रकारमाह—भोगवन्तमिति । तत परसृष्टयेस्रष्टव्यभूधरणक्षमंभोगवन्तं प्रशस्तभोगं । अनन्ताख्यंनागं उदकेशयंमाययाजनयित्वातत्रचनिर्माय स्थापयित्वातदुदकेशयनवास्त्वमभू । अथकर्दमप्रायभूविग्रहस्थैर्यायमहाबलौद्वौसत्वौप्राणिनौ अजीजन· ॥ ५—६ ॥ **स०** नाभ्या नाभिप्रदेशे । अर्कसकाशे सवितृसमे । पद्मे कमले । ‘ अजस्यनाभावध्येकमर्पितं यस्मिन्विश्वानिभुवनानितस्थु ’ ‘ अजस्यनाभावितियस्यनाभेरभूच्छुते पुष्करलोकसारम् । तस्मैनमोव्यस्तसमस्तविश्वविभूतये विष्णवेलोककर्त्रे—यन्नाभिपद्मादहमाविरास ’ इत्यादिश्रुतिस्मृतयोऽत्रभवन्ति । स्वोत्पादितेसाक्षाल्लक्ष्मीरूपे मामप्युत्पाद्य प्राजापत्यं प्रजापतिविहितंसृष्ट्यादिरूपंकर्मसर्वंएतदादिकंमयिनिवेशितं । त्वमिमांधुरमुद्वहेतिस्थापितं । प्रजापतिनास्वेनैवकर्तव्यंकर्मप्राजापत्यंकर्म । ज्येष्ठतनुजत्वान्मयिनिवेशितमितिवा । ‘ प्रजानांपालनाद्विष्णु प्रजापतिरितीरित ’ इत्यादे ॥७॥ **ति०** तत सोहंत्वया

[ पा० ] १ ङ. ठ. त्वामुपस्य.

ततस्त्वमपि दुर्धर्षात्तस्माद्भावात्सनातनात् ॥ रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ॥ ९ ॥
अदित्यां वीर्यवान्पुत्रो भ्रातॄणां वीर्यवर्धनः ॥ समुत्पन्नेषु कृत्येषु तेषां साह्याय कल्पसे ॥ १० ॥
स त्वं वित्रास्यमानासु प्रजासु जगतां वर ॥ रावणस्य वधाकाङ्क्षी मानुषेषु मनोदधाः ॥ ११ ॥
दश वर्षसहस्राणि दश वर्षशतानि च ॥ कृत्वा वासस्य नियतिं स्वयमेवात्मना पुरा ॥ १२ ॥
स त्वं मनोमयः पुत्रः पूर्णायुर्मानुषेष्विह ॥ कालोऽयं ते नरश्रेष्ठ समीपमुपवर्तितुम् ॥ १३ ॥
यदि भूयो महाराज प्रजा इच्छस्युपासितुम् ॥ वस वा वीर भद्रं त एवमाह पितामहः ॥ १४ ॥
अथवा विजिगीषा ते सुरलोकाय राघव ॥ सनाथा विष्णुना देवा भवन्तु विगतज्वराः ॥ १५ ॥
श्रुत्वा पितामहेनोक्तं वाक्यं कालसमीरितम् ॥ राघवः प्रहसन्वाक्यं सर्वसंहारमब्रवीत् ॥ १६ ॥
श्रुत्वा मे देवदेवस्य वाक्यं परममद्भुतम् ॥ प्रीतिर्हि महती जाता तवागमनसंभवा ॥ १७ ॥
त्रयाणामपि लोकानां कार्यार्थं मम संभवः ॥ भद्रं तेऽस्तु गमिष्यामि यत एवाहमागतः ॥ १८ ॥

ततः मत्कृतभारसमर्पणेन दुर्धर्षात् दुर्ज्ञेयात् सनातनान्नित्यात् भावात् परवासुदेवस्वभावात्सर्वभूतानां रक्षार्थं विष्णुत्वमुपजग्मिवान् प्राप्तवान् । रक्षां विधास्यन्भूतानामिति च पाठः । यद्वा सनातनात्तस्मात् वासुदेवविग्रहात् । अदित्यां विष्णुत्वमुपजग्मिवानित्यर्थः । परवासुदेवस्त्वं प्रथमं ब्रह्मरुद्रमध्ये आदिविष्णुतयावतीर्णोसीत्यर्थः ॥९॥ अथ तस्मादुपेन्द्रावतारमाह—अदित्यामिति ॥ भ्रातॄणां इन्द्रादीनां । वीर्यवर्धनः सन् लोकस्य कृत्येषु रक्षणकार्येषूत्पन्नेषु साह्याय तत्संपादनयोग्यत्वाय । कल्पसे ततोलोकसंरक्षणार्थमुपेन्द्रोऽभूरित्यर्थः ॥१०॥ एवं महाविष्णुरूपादुपेन्द्रावतारमुक्त्वा पुरस्ताद्रामावतारमाह—स त्वमिति ॥ हे जगतां वर प्रजासु वित्रास्यमानासु सतीषु रावणस्य वधाकाङ्क्षी सन् । स त्वमुज्जास्यमानासु प्रजासु जगतो वरेति च पाठः । आत्मना स्वातन्त्र्येण स्वयमेव । पुरा दश वर्षसहस्राणि दश वर्षशतानि च वासस्य नियतिं वासस्य नियमं । कृत्वा । वासस्य नियममिति च पाठः । मानुषेषु मनोदधा इति श्लोकद्वयमेकान्वयं ॥ ११—१२ ॥ स त्वमुपेन्द्रो भूत्वा यतमानस्त्वं मनोमयः पुत्रः इच्छाकृतदशरथपुत्रभावः । स त्वं पूर्णायुरसि संकल्पितकालस्य निवृत्तत्वादिति भावः । अतो मत्समीपमुपवर्तितुं प्राप्तुमयं कालः समयः॥१३॥ उपासितुं रक्षितुं । तव स्वतन्त्रत्वादिति भावः ॥१४॥ भूलोकं विहाय स्वर्गलोकाय विजिगीषा चेत्तदा विष्णुना पुनर्विष्णुत्वं प्राप्तेन त्वया देवाः सनाथाः सन्तो विगतज्वराः भवन्तु । भवदागमनमेव समस्तदेवसुखकरं स्यादिति भावः ॥ १५ ॥ प्रहसन्निति । स्वयमेवोद्युक्तस्य पितामहोक्त्या प्रहासः । सर्वसंहारं रुद्रं ॥ १६ ॥ तवागमनसंभवा प्रीतिर्महती जायत इति योज्यं ॥ १७ ॥ एवं पितामहसन्देशं श्रुत्वा

संन्यस्तभारः संन्यस्तसृष्टिभारः । स्वकार्यंसृष्टिलक्षणंसंपाद्य तद्रक्षणमपश्यञ्जगत्पतिंत्वामुपास्य यतोभवान्ममतेजस्करः सृष्टिसमर्थज्ञानक्रियाशक्तिमयतेजःप्रदोऽभूः । अतस्त्वमेवभूतेषुरक्षांविधत्स्वेतिप्रार्थितवानितिशेषः ॥ **स०** इतिययाचे विरिञ्चइतिशेषः ॥ **शि०** अहंत्वामुपास्यवर्तेइतिशेषः ॥ ८ ॥ **ति०** ततोहेतोः रक्षणस्यसर्वशक्त्यौख्येवनिवेशितत्वहेतोः । दुर्धर्षात्तस्माद्भावात् । ‘ ब्रह्मैवभूतानांज्येष्ठं । तेनकोर्हतिस्पर्धितुं । ’ इतिदुर्धर्षत्वस्वभावात् । सनातनात् सकलसंसारमूलकारणत्वेनकालापरिच्छेद्यात् । त्रिगुणमहत्तत्वाख्यहैरण्यगर्भभावात्सत्त्वप्राधान्येनविष्णुत्वंप्राप्तवान् ॥ **स०** सनातनात् पुराणपुरुषात् । वेदादिस्वावेदकनादसहितात् । प्रपञ्चितश्चायंप्रकारोगीतातात्पर्येसनातनपदव्याख्यावसरे । विष्णुत्वं तन्नामकत्वं ॥ ९ ॥ **ति०** स त्वं मानुषेषुमनोमयः स्वसंकल्पमयः । स्वसंकल्पादेवकस्यचित्पुत्रोजातः । सचतत्रपूर्णायुः । त्वत्संकल्पितायुषःपूर्णत्वमित्यर्थः । यद्वा श्रीमदादिगुरोः तुरीयब्रह्मणः । ‘ यस्यभासासर्वमिदंविभाति ’ इत्यादिश्रुतिसिद्धस्यसंकल्पमयोज्येष्ठपुत्रःहिरण्यगर्भः । कार्यब्रह्मरूपः तदभिन्नस्वभूतब्रह्मण्यनावृतज्ञानःस्वसंकल्पादेवमानुषेष्वपिकस्यचित्पुत्रः । तत्रापिपूर्णायुर्जातः । यदेवमतः हेनरवरश्रेष्ठ अयंकालस्तेसमीपमुपगत्योपवर्तितुंविज्ञापयितुंप्रेषितइतिशेषः ॥ १३ ॥ **ति०** अथवा अथचेत् । स्वकृतनियमभङ्गीकृत्यसुरलोकायविजिगीषा सुरलोकंपालयितुंयदीच्छा तदा उपेन्द्ररूपेणविष्णुनादेवाःसनाथाःविगतज्वराभवन्तुइत्येवंपितामहआहेत्यन्वयः ॥ १५ ॥ **ति०** एवंसंदेशानुमोदनंकृत्वाप्रतिसंदेशमाह—त्रयाणामिति । त्रयाणां भूर्भुवस्स्वर्लोकानां । कार्यार्थं प्रयोजनार्थं । ममस्वेच्छामूलः

[ **पा०** ] १ ङ. च. छ. झ. ञ. ट. रक्षांविधास्यन्भूतानां. २ ङ. झ. त्वमुज्जास्यमानासु. ३ क—ज. ञ. ट. कालोनरवरश्रेष्ठ.

हृद्गतो ह्यसि संप्राप्तो न मे तत्र विचारणा ॥ मया हि सर्वकृत्येषु देवानां वशवर्तिना ॥
स्थातव्यं सर्वसंहार यथा ह्याह पितामहः ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

## पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

रामरुद्रसंवादसमये रामदर्शनार्थंदुर्वाससः समागमे शापदानभीत्यारामेतदागमननिवेदनम् ॥ १ ॥ रुद्रविसर्जनपूर्वकं स्वदर्शनार्थमागतं रामंप्रति दुर्वाससा बुभुक्षापरिहारायअन्नयाचने तेनतस्मै तत्कालसिद्धान्नदानम् ॥ २ ॥ प्रतिगतेचदुर्वाससि रामेणरुद्रचोदनया स्वकृतप्रतिज्ञास्मरणेन दुःखाधिगमः ॥ ३ ॥

तथा तयोः संवदतोर्दुर्वासा भगवानृषिः ॥ रामस्य दर्शनाकाङ्क्षी राजद्वारमुपागमत् ॥ १ ॥
सोभिगम्य तु सौमित्रिमुवाच ऋषिसत्तमः ॥ रामं दर्शय मे शीघ्रं पुरा मेऽर्थोतिवर्तते ॥ २ ॥
मुनेस्तु भाषितं श्रुत्वा लक्ष्मणः परवीरहा ॥ अभिवाद्य महात्मानं वाक्यमेतदुवाच ह ॥ ३ ॥
किं कार्यं ब्रूहि भगवन्को वाऽर्थः किं करोम्यहम् ॥ व्यग्रो हि राघवो ब्रह्मन्मुहूर्तं प्रतिपाल्यताम् ॥४॥
तच्छ्रुत्वा ऋषिशार्दूलः क्रोधेन कलुषीकृतः ॥ उवाच लक्ष्मणं वाक्यं निर्दहन्निव चक्षुषा ॥ ५ ॥
अस्मिन्क्षणे मां सौमित्रे रामाय प्रतिवेदय ॥ अस्मिन्क्षणे मां सौमित्रे न निवेदयसे यदि ॥ ६ ॥

---

प्रतिसन्देशमाह—त्रयाणामित्यादि ॥ यत एवाहमागतः तदेव स्थान गमिष्यामि ॥ १८ ॥ हृद्गतो मम सम्प्राप्तः । मम हृदि यद्वर्तते तदेव पितामहेन प्रेषितमित्यर्थः । अत्र गमने विषये मे विचारणा नास्ति । ब्रह्मयाच्ञयैव ममात्रावतरणमित्याह—मया हीति । देवानां वशवर्तिना भक्तपरतन्त्रेण मया पितामहो देवेष्वन्यतमः यथाह तथा मया सर्वकृत्येषु स्थितिगमनादिषु स्थातव्यं । तन्नातिक्रमणीयमित्यर्थः । अनेन ब्रह्मणः स्तुत्यत्वकथनात्परतत्त्वशङ्का निवृत्ता ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीमद्रामयणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

---

पुरा मेर्थोतिवर्तत इति । यावन्मे प्रयोजनमतिक्रामति ततः पूर्वमेव राम शीघ्र दर्शयेत्यर्थः ॥२-३॥ किं कार्य किं कर्तव्यं को वार्थः कि प्रयोजनं अहमस्मिन् काले कि करोमि । वर्तमानसामीप्ये भविष्यति लट् । कि करिष्ये ॥ ४—५ ॥ मां राघवाय निवे-

---

संभवइतिमयाप्यवगम्यते । यद्वा तत्तद्वेपधार्यपिनट· तत्तद्वेषानुरूपंव्यवहरन्नप्यात्मानंजानात्येव । तद्वत्सोहंयतोयस्माल्लोकात् इहागत तमेवगमिष्यामि ॥ स० यतोयस्मात् अहमागत तंलोकंप्रत्येवगमिष्यामि । यतोयदशात् । आगत अवतीर्ण तंगमिष्यामीतिवा । 'पूर्णमदः पूर्णमिदंपूर्णात्पूर्णमुदच्यते । पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते' इत्यादे ॥ १८ ॥ ति० हेसहाररूप काल त्वमेहृद्गतएवप्राप्तोसि । अतस्तत्रगमनेविचारणानास्ति । 'हृद्गतोह्यस्तिसप्राप्त ' इतिपाठेयोभावोममहृद्गत शुद्धब्रह्मात्मक प्राप्तव्यत्वेन । समेप्राप्तएवास्ति । तत्रमेनविचारणा । ननुतर्हितदेवप्राप्यता किमनेनोपेन्द्रादिलोकगमनेनतत्राह—मयाहीति । वशवर्तिना मद्विधेयानासर्वकृत्येषुस्थातव्य । अतोयथापितामहआह तथाकरिष्यामीतिशेष । वशवर्तिनेतितृतीयान्तपाठे देवाना सर्वकृत्येषुपितामहस्यवशवर्तिनास्थातव्यमित्यर्थ । प्रजारक्षणोद्देश्यकतप कालिकमद्वरप्रदानादितिभाव ॥ १९ ॥ इतिचतुरधिकशततम सर्ग ॥ १०४ ॥

स० संवदतो हरिहरयोः ॥ १ ॥ ति० कस्तवसंकटकालस्तत्राह—व्यग्रोहीति ॥ स० किंकार्यमित्याद्यन्यतमेनालंभावे त्रितयोपादानंसमयविलंबार्थलक्ष्मणचातुरीमूलकमितिमन्तव्यम् ॥ ४ ॥ स० स्वभावकोपनस्यपुरतएतच्चातुरीनाभूत्फलपर्यवसायिनीत्याह—तदिति ॥ ५ ॥ स० राघवंप्रतिवेदय बुध्यर्थकत्वाद्द्विकर्मता । ज्ञापय कीदृशं मा आदौविषयंदेशप्राप्तं । अनन्तरपुर । तदनन्तरत्वाप्राप्तं । अत्यावश्यककार्याभावेइयानायासःकुतोभवेत् । मयानादर्शिदाशरथिश्चेन्मनोरथस्तवकइत्यतोवक्ति—रामायेति । रामायशपिष्ये । नञानिर्दिष्टमनित्यमितिलिपत्लुप्वप्शबित्यनिट्कस्यापिशपेरिट् । "श्लाघन्हुङ्—" इत्यादिनाचतुर्थी ।

[ पा० ] १ ठ. राघवंप्रतिवेदय.

विषयं त्वां पुरं चैव शपिष्ये राघवं तथा ॥ भरतं चैव सौमित्रे युष्माकं या च सन्ततिः ॥ ७ ॥
न हि शक्ष्याम्यहं भूयो मन्युं धारयितुं हृदि ॥ तच्छ्रुत्वा घोरसङ्काशं वाक्यं तस्य महात्मनः ॥
चिन्तयामास मनसा तस्य वाक्यस्य निश्चयम् ॥ ८ ॥
एकस्य मरणं मेऽस्तु मा भूत्सर्वविनाशनम् ॥ इति बुद्ध्या विनिश्चित्य राघवाय न्यवेदयत् ॥ ९ ॥
लक्ष्मणस्य वचः श्रुत्वा रामः कालं विसृज्य च ॥ निःसृत्य त्वरितं राजा अत्रेः पुत्रं ददर्श ह ॥१०॥
सोभिवाद्य महात्मानं ज्वलन्तमिव तेजसा ॥ किं कार्यमिति काकुत्स्थः कृताञ्जलिरभाषत ॥ ११ ॥
तद्वाक्यं राघवेणोक्तं श्रुत्वा मुनिवरः प्रभुम् ॥ प्रत्याह रामं दुर्वासाः श्रूयतां धर्मवत्सल ॥ १२ ॥
अद्य वर्षसहस्रस्य समाप्तिस्तपसो मम ॥ सोहं भोजनमिच्छामि यथासिद्धं तवानघ ॥ १३ ॥
तच्छ्रुत्वा वचनं राजा राघवः प्रीतमानसः ॥ भोजनं मुनिमुख्याय यथासिद्धमुपाहरत् ॥ १४ ॥
स तु भुक्त्वा मुनिश्रेष्ठस्तदन्नममृतोपमम् ॥ साधु रामेति संभाष्य स्वमाश्रममुपागमत् ॥ १५ ॥
तस्मिन्गते मुनिवरे स्वाश्रमं लक्ष्मणाग्रजः ॥ संस्मृत्य कालवाक्यानि ततो दुःखमुपागमत् ॥ १६ ॥
दुःखेन च सुसंतप्तः स्मृत्वा तद्घोरदर्शनम् ॥ अवाङ्मुखो दीनमना व्याहर्तुं न शशाक ह ॥ १७ ॥
ततो बुद्ध्या विनिश्चित्य कालवाक्यानि राघवः ॥ नैतदस्तीति निश्चित्य तूष्णीमासीन्महायशाः ॥१८॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

---

द्येति । न निवेदयसि यदि तर्हि शपिष्य इति ॥६—१२॥ वर्षसहस्रस्येति । अनशननियमोपगृहीतवर्षसहस्रस्येत्यर्थः । यथासिद्धं यथोपपन्नं ॥ १३ ॥ राघवः प्रीतमानस इति । मुनिकोपः परिहृत इति प्राप्तसंतोष इत्यर्थः ॥ १४—१७ ॥ ततोऽनन्तरं कालवाक्यानि बुद्ध्वा विनिश्चित्य सभ्रातृपुत्रभृत्यवर्गस्य मम सर्वोपसंहारकालः प्राप्तः उचित एवेति निश्चित्य सामान्यतो नैतदस्तीति एतन्मम भ्रातृभृत्यादिपरिकरजातं सर्वमपि नास्तीति चोक्त्वा तूष्णीमासीत् । लक्ष्मणस्यापराध नोद्भावितवानित्यर्थः ॥१८॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

---

रामायप्रतिवेदय । यदिनप्रतिवेदयेस्तर्हिविषयादिकंशपइत्यर्थइतियथाक्रमंव्याकुर्वन्नागोजिभट्टस्त्यक्ततत्ससारइतिपाणिनीयप्रवीणैर्बहुमाननीय ॥ ६ ॥ ति० एकस्यमरणंमेऽस्तु । द्वन्द्वमध्येपुरुषान्तरसदर्शकत्वेयथाप्रतिज्ञंममवधस्यप्राप्तत्वादितिभाव ॥ स० सर्वविनाशं रामनाशएवसर्वनाशइतिभाव. । विनिश्चित्य निर्धार्य । अत्रलक्ष्मणस्यसन्निधिगमन रामस्यतापसागतिविज्ञापनं । पाद्मेच—'तस्यशापभयाच्छीघ्रंराघवायन्यवेदयत् । तत्रैवान्तर्दधेकालोराघवोपिविनिर्गत' ' इतिश्रूयते । श्रीमदाचार्यैस्तु ' इतिमत्वाददौमार्गंसतुदुर्वाससेतदा ' इतिप्रोक्तं । तत्कथमितिचेत् रामायणपाद्मवचसामसावलिस्येन ' यद्यत्रप्रविशेत्कश्चिद्धन्मित्वा ' इत्यादिवादानुकूल्याच्चमार्गंददावित्यस्यरामदर्शनोपायंददावित्यर्थोपपत्ते । अन्यथा " यद्यत्रप्रविशेत्कश्चित्समेवध्योभविष्यति " इतिस्फुटमुक्तेर्दुर्वाससोपिपरासूकरणप्रसगात् । कल्पभेदेनलक्ष्मणगमनपरमितरद्वाक्यं वाक्यंचाचार्याणाकल्पान्तरविवक्षयेति महामार्गेणाविरोधोपपत्तिर्वाऽनुसन्धेया ॥ ९ ॥ स० वर्षसहस्रस्य । अनशननियमगृहीतव्रतविशेषसमाप्तिसकल्पितस्य । यथासिद्धं नप्राक् नेत.परंसाध्यं किंतुसाद्यस्कं । " सिद्धंनदेयमुतसाध्यं " इतिश्रीमदुक्ते. ॥ १३ ॥ स० तत्क्षणेयथासिद्ध तदुक्तरीत्यासिद्ध । उपाहरत् स्वहस्ततः । " अस्यवाक्समयजातमुरुस्वहस्तात् । अन्नंचतुर्गुणमदादमृतोपमानंरामस्तदाप्यबुभुजेऽथमुनिसुतुष्ट " इतिश्रीमदुक्ते ॥ १४ ॥ स० कालवाक्यानि द्वन्द्वेकश्चिदविपश्चिदायातश्चेत्पश्चिमादशायापनीयइत्यादीनि । अत्यन्तबन्धुनोत्कटसकटनिविष्टेनान्त.प्रविष्टंविनामारणंनस्थेयं नचमारणविहितमितिदु खमुपागमत् । य.कश्चिद्यथाघोरदर्शनंकिञ्चित्प्रच्युदश्चितंविचिन्त्ययथादु खेनसतप्तोभवतितथा । कालवाक्यानि स्वलोकगमनविषयाणि । सस्मृत्य । तत तदनन्तरं । अदु.खं सुखं । उपागमत् । तत् घोरदर्शनंभ्रातृमारणरूपंस्मृत्वादु खेनचसतप्तोऽभूदितिवाऽर्थ. ॥ १६ ॥ इतिपञ्चोत्तरशततम.सर्ग. १०५॥

[ पा० ] १ च. छ. राजाहर्षेणमहतावृत.. क. ग. घ. राजाहर्षेणमहतान्वित ,

## षडुत्तरशततमः सर्गः ॥ १०६ ॥

सौमित्रिणा रामंप्रति स्वहननेनस्वप्रतिज्ञापालनकरणनिवेदने तेनतंप्रति त्यागस्यवधप्रतिनिधित्वकथनेन तत्त्यागः ॥ १ ॥ सौमित्रिणा स्वगृहाप्रवेशेनैवसरयूनद्यामवगाहनेन स्वर्गगमनम् ॥ २ ॥

अवाङ्मुखमथो दीनं दृष्ट्वा सोममिवाप्लुतम् ॥ राघवं लक्ष्मणो वाक्यं हृष्टो मधुरमब्रवीत् ॥ १ ॥
न संतापं महाबाहो मदर्थं कर्तुमर्हसि ॥ पूर्वनिर्माणबद्धा हि कालस्य गतिरीदृशी ॥ २ ॥
जहि मां सौम्य विस्रब्धं प्रतिज्ञां परिपालय ॥ हीनप्रतिज्ञाः काकुत्स्थ प्रयान्ति नरकं नराः ॥ ३ ॥
यदि प्रीतिर्महाराज यद्यनुग्राह्यता मयि ॥ जहि मां निर्विशङ्कस्त्वं धर्मं वर्धय राघव ॥ ४ ॥
लक्ष्मणेन तथोक्तस्तु रामः प्रचलितेन्द्रियः ॥ मन्त्रिणः समुपानीय तथैव च पुरोधसम् ॥ ५ ॥
अब्रवीच्च तदा वृत्तं तेषां मध्ये स राघवः ॥ दुर्वासोभिगमं चैव प्रतिज्ञां तापसस्य च ॥ ६ ॥
तच्छ्रुत्वा मन्त्रिणः सर्वे सोपाध्यायाः समासत ॥ वसिष्ठस्तु महातेजा वाक्यमेतदुवाच ह ॥ ७ ॥
दृष्टमेतन्महाबाहो क्षयं ते रोमहर्षणम् ॥ लक्ष्मणेन वियोगश्च तव राम महायशः ॥ ८ ॥
त्यजैनं बलवान्कालो मा प्रतिज्ञां वृथा कृथाः ॥ विनष्टायां प्रतिज्ञायां धर्मोपि च लयं व्रजेत् ॥९॥
ततो धर्मे विनष्टे तु त्रैलोक्यं सचराचरम् ॥ सदेवर्षिगणं सर्वं विनश्येत्तु न संशयः ॥ १० ॥
स त्वं पुरुषशार्दूल त्रैलोक्यस्याभिपालनात् ॥ लक्ष्मणेन विना चाद्य जगत्स्वस्थं कुरुष्व ह ॥ ११ ॥
तेषां तत्समवेतानां वाक्यं धर्मार्थसंहितम् ॥ श्रुत्वा परिषदो मध्ये रामो लक्ष्मणमब्रवीत् ॥ १२ ॥
विसर्जये त्वां सौमित्रे मा भूद्धर्मविपर्ययः ॥ त्यागो वधो वा विहितः साधूनां तूभयं समम् ॥१३॥
रामेण भाषिते वाक्ये बाष्पव्याकुलितेन्द्रियः ॥ लक्ष्मणस्त्वरितं प्रायात्स्वगृहं न विवेश ह ॥ १४ ॥
स गत्वा सरयूतीरमुपस्पृश्य कृताञ्जलिः ॥ निगृह्य सर्वस्रोतांसि निश्वासं न मुमोच ह ॥ १५ ॥
अनिश्वसन्तं युक्तं तं सशक्राः साप्सरोगणाः ॥ देवाः सर्षिगणाः सर्वे पुष्पैरभ्यकिरंस्तदा ॥ १६ ॥

---

आप्लुत राहुग्रस्तं । हृष्ट इति । सुमन्त्रवाक्यतः पूर्वमेव रामेण स्वपरित्यागस्यावगतत्वादविषाद इत्यर्थः ॥ १ ॥ तदेव दर्शयति—पूर्वेत्यादि । पूर्वनिर्माणेन प्राग्भावीयकर्मणा बद्धा कल्पिता प्रथा । ईदृशीति । "संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्" इत्युपदिष्टन्यायवतीत्यर्थः ॥ २—४ ॥ प्रचलितेन्द्रियः त्यक्तावाङ्मुखमौनतया प्रवृत्तवागादीन्द्रियः॥५–१०॥ अभिपालनात् । हेतौ पञ्चमी । अभिपालनार्थमित्यर्थः ॥ ११—१३ ॥ रामेण भाषित इत्युक्तरीत्येति शेषः ॥ १४ ॥ सर्वस्रोतांसि सर्वेन्द्रियाणि ॥ १५ ॥ युक्त

---

**स०** तवातिप्रेमधामत्वान्मोघाभवतुप्रतिज्ञेत्यतोविज्ञापयति—हीनप्रतिज्ञाइति ॥ ३ ॥ **स०** यदिमहाराजतवप्रीतिर्मयि यदिचानुग्राह्यता तर्हिनिर्विशंकंमाजहि । धर्मं प्रतिज्ञापालनायातंवर्धय । लोकेस्वानुजमपिकृतप्रतिज्ञापरिपालनकृतेऽवधीद्रामइति कीर्तिमुपार्जयेतिभावः ॥ ४ ॥ **ति०** समासत तूष्णीस्थिता ॥ ७ ॥ **ति०** दृष्टमेतत्क्षयं क्षयएषदृष्ट ॥ मयातपोबलेनेतिशेषः । माद्रष्टुमागतेनत्वत्पित्राद्दृष्टस्यमदाश्रमस्थदुर्वाससोमुखाच्चेति ॥ ८ ॥ **ति०** त्यजेत्यादिना " प्रतिज्ञापालनधर्मं क्षत्रियस्यविशेषत " इतिसूचितं ॥ ९ ॥ **ति०** लक्ष्मणेनविनाचाद्य लक्ष्मणत्यागपूर्वकमद्यावस्थानेनेत्यर्थ ॥ ११ ॥ **ति०** इष्टस्यत्यागोवावधोवा । तदुभयंसाधूनासममेवेतित्वाविसर्जये । वधप्रतिज्ञापालनायेतिभाव ॥ १३ ॥ **ति०** बाष्पव्याकुलितेन्द्रिय रामवियोगासहिष्णुतया । नतुस्वशरीरहानिभयेनेतिभाव । तदेवाह—स्वगृहंनविवेशहेति । प्रायात् सरयूतीरमितिशेष ॥ १४ ॥

[ पा० ] १ ग. घ. ज. पूर्वापुराणसिद्धाहि. क छ. सर्वसहारबद्धाहि २ क—घ. ज. सोपाध्याया समागमन् ३ ख. ग. घ. च, छ. ज. लक्ष्मणस्यवधेनाद्य. क, त्यागेनलक्ष्मणस्याद्य.

अदृश्यं सर्वमनुजैः सशरीरं महाबलम् ॥ प्रगृह्य लक्ष्मणं शक्रस्त्रिदिवं संविवेश ह ॥ १७ ॥
ततो विष्णोश्चतुर्भागमागतं सुरसत्तमाः ॥ हृष्टा प्रमुदिताः सर्वेऽपूजयन्समहर्षयः ॥ १८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे षडुत्तरशततमः सर्गः ॥ १०६ ॥

---

## सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

परिषदोमध्येऽद्यभरत राज्येभिषिच्याहंवनगच्छामीतिश्रीरामवचनम् ॥ १ ॥ तच्छ्रवणेन भरतेन राज्यगर्हणपूर्वकं कोशलेषुकुश उत्तरकोसलेषुलवमभिषिच्यतामितिकथनम् ॥ २ ॥ ततोवसिष्ठवचनात्तथाकुशलवयोरभिषेक. ॥ ३ ॥ तत शत्रुघ्नप्रति श्रीरामेणदूतप्रेषणम् ॥ ४ ॥

विसृज्य लक्ष्मणं रामो दुःखशोकसमन्वितः ॥ पुरोधसं मन्त्रिणश्च नैगमांश्चेदमब्रवीत् ॥ १ ॥
अद्य राज्येऽभिषेक्ष्यामि भरतं धर्मवत्सलम् ॥ अयोध्यायाः पतिं वीरं ततो यास्याम्यहं वनम् ॥२॥
प्रवेशयत संभारान्मा भूत्कालस्य पर्ययः ॥ अद्यैवाहं गमिष्यामि लक्ष्मणेन गतां गतिम् ॥ ३ ॥
तच्छ्रुत्वा राघवेणोक्तं सर्वाः प्रकृतयो भृशम् ॥ मूर्धभिः प्रणता भूमौ गतसत्त्वा इवाभवन् ॥ ४ ॥
भरतश्च विसंज्ञोऽभूच्छ्रुत्वा रामस्य भाषितम् ॥ राज्यं विगर्हयामास राघवं चेदमब्रवीत् ॥ ५ ॥
सत्येनाहं शपे राजन्स्वर्गलोके न चैव हि ॥ न कामये यथा राज्यं त्वां विना रघुनन्दन ॥ ६ ॥

---

योगयुक्तं अभ्यकिरन् ॥ १६ ॥ अदृश्यं यथा तथा ॥ १७ ॥ चतुर्थो भागश्चतुर्भागः । शेषसुपर्णविष्वक्सेनविष्णुरूपेण चतुर्विभागो विष्णुस्तत्र शेषरूपश्चतुर्थांशो लक्ष्मणः । सुपर्णभूतो भरत. । विष्वक्सेनरूपः शत्रुघ्न इति रहस्यार्थः । अतएव पुराणान्तरेषु शेषावतारो लक्ष्मण इति प्रसिद्धिः । अनन्तगरुडविष्वक्सेनविष्णुरूपेणात्मानं चतुर्धा व्यूह्य वर्तते सर्वेश्वर इति ज्ञेयम् ॥ १८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने षडुत्तरशततमः सर्गः ॥ १०६ ॥

---

भरतमयोध्याधिपतिमभिषेक्ष्यामीति मनोरथं करोमि । ततो वनं यास्यामि । महाप्रस्थानविधिनेति शेषः ॥ २ ॥ सभारानिति । भरताभिषेककार्थानित्यर्थ. ॥ ३ ॥ सर्वा. प्रकृतयः सुमन्त्रादय' ॥ ४—५ ॥ स्वर्गलोके न चेत्यादि । हे रघुनन्दन त्वां विना प्राप्ये स्वर्गलोके न च कामये । सुखभोगमिति शेषः । तथा त्वां विना यथा राज्यं

---

ति० अदृश्य योगबलादन्तर्धानमुपगतं । यद्वा दृश्ययथातथासशरीरलक्ष्मणप्रगृह्यशक्रस्त्रिदिवसविवेश । अनेनमनुष्यशरीरसस्थानमेवदेवशरीरसस्थानप्राप्त । नतुपूर्वशरीरपरित्याग शरीरान्तरपरिग्रहश्चेतिसूचित । एतेन जन्मापितथैवेतिचसूचितम् ॥ स० सर्वमनुजैरदृश्यंयथाभवतितथासशरीरंरामानुग्रहेणैतद्ध्यानपाटवेनतदेवशरीरसहस्रफणावलिमण्डितमभूत् । तत्सहितंलक्ष्मणप्रगृह्यत्रिदिवप्रविवेश मार्गतया । “ संत्यज्यमानुषभावपूर्वभावंस्वकययौ ” इत्येवपाद्मोक्ते । श्रीमन्तश्च ‘ आसीच्छेषमहाफणी ’ इत्याद्येवाहु ॥ १७ ॥ ति० चतुर्भाग चतुर्थभाग । अत्रकतक —शेषसुपर्णविष्वक्सेनै शेषशायीविष्णु स्वमूर्त्याचतुर्भागवान् । तत्रशेषाशोलक्ष्मण । गरुडाशोभरत । विष्वक्सेनाश शत्रुघ्नइति । इदपाद्मविरुद्धं । तत्रहिभरतशत्रुघ्नौशङ्खचक्राशावित्युक्तमितिप्राग्दर्शितं । गरुडस्यस्वरूपेणैवरामसविधेआगमनमुक्तंयुद्धकाण्डे । तेनविरुद्धच ॥ स० चतुर्भागं चतुर्थभागं लक्ष्मणाविष्टसंकर्षणरूपं । चक्रशङ्खरूपौप्रद्युम्नानिरुद्धाविष्टौभरतशत्रुघ्नौ । यथोक्तपाद्मे—‘तस्मात्तवजनिष्येऽहमाविभज्यचतुर्विधम् । जनिष्येऽहसपर्यङ्क सपत्नीक.सहायुध । अन्येद्यु पाञ्चजन्यात्माकैकेय्याभरतोऽभवत् । तदन्येद्यु सुमित्रायामनन्तात्माचलक्ष्मण । सुदर्शनात्माशत्रुघ्नोद्वौजातौयुगपत्प्रिये । उभौभरतशत्रुघ्नौशङ्खचक्रौबभूवतु ’ इत्यादि । शेषसुपर्णविष्वक्सेनैरितिव्याकुर्वन्कतकः संपाद्यैतदविरोधइतिबोध्यम् । हृष्टा सरोमपुलककुलका । प्रमुदिता सतुष्टा ॥ १८ ॥ इतिषडुत्तरशततम.सर्ग ॥ १०६ ॥

[ पा० ] १ क. ङ. च. छ. झ. ञ. ट. हृष्टा.प्रमुदिताः. २ घ—ट. वचनंचेदमब्रवीत्.

इमौ कुशलवौ राजन्नभिषिञ्च नराधिप ॥ कोसलेषु कुशं वीरमुत्तरेषु तथा लवम् ॥ ७ ॥
शत्रुघ्नस्य तु गच्छन्तु दूतास्त्वरितविक्रमाः ॥ इदं गमनमस्माकं स्वर्गायाख्यान्तु मा चिरम् ॥ ८ ॥
तच्छ्रुत्वा भरतेनोक्तं दृष्ट्वा चापि ह्यधोमुखान् ॥ पौरान्दुःखेन संतप्तान्वसिष्ठो वाक्यमब्रवीत् ॥९॥
वत्स राम इमाः पश्य धरणीं प्रकृतीर्गताः ॥ ज्ञात्वैषामीप्सितं कार्यं मा चैषां विप्रियं कृथाः ॥१०॥
वसिष्ठस्य तु वाक्येन उत्थाप्य प्रकृतीजनम् ॥ किं करोमीति काकुत्स्थः सर्वां वचनमब्रवीत् ॥११॥
ततः सर्वाः प्रकृतयो रामं वचनमब्रुवन् ॥ गच्छन्तमनुगच्छामो यत्र राम गमिष्यसि ॥ १२ ॥
पौरेषु यदि ते प्रीतिर्यदि स्नेहो ह्यनुत्तमः ॥ सपुत्रदाराः काकुत्स्थ समागच्छाम सत्पथम् ॥ १३ ॥
तपोवनं वा दुर्गं वा नदीमम्भोनिधिं तथा ॥ वयं ते यदि न त्याज्याः सर्वान्नो नय ईश्वर ॥ १४ ॥
एषा नः परमा प्रीतिरेष नः परमो वरः ॥ हृद्गता नः सदा प्रीतिस्तवानुगमने नृप ॥ १५ ॥
पौराणां दृढभक्तिं च बाढमित्येव सोऽब्रवीत् ॥ स्वकृतान्तं चान्ववेक्ष्य तस्मिन्नहनि राघवः ॥
[ सुतौ प्रस्थापयामास धर्मिष्ठौ धर्मवत्सलौ ] ॥ १६ ॥
कोसलेषु कुशं वीरमुत्तरेषु तथा लवम् ॥ अभिषिच्य महात्मानावुभौ रामः कुशीलवौ ॥ १७ ॥
अभिषिक्तौ सुतावङ्के प्रतिष्ठाप्य पुरे ततः ॥ [ पुनः समीक्ष्य सीताया राघवः स्मरणं गतः ] ॥
परिष्वज्य महाबाहुर्मूर्ध्न्युपाघ्राय चासकृत् ॥ १८ ॥
रथानां तु सहस्राणि नागानामयुतानि च ॥ दशायुतानि चाश्वानामेकैकस्य धनं ददौ ॥ १९ ॥
बहुरत्नौ बहुधनौ हृष्टपुष्टजनावृतौ ॥ स्वे पुरे प्रेषयामास भ्रातरौ तु कुशीलवौ ॥ २० ॥

---

त्वदाज्ञया यथानुक्रमप्राप्तमयोध्याराज्यं न च कामये । हे राजन् इममर्थं सत्येन शपे ॥ ६ ॥ एवं भरत उक्त्वाऽनन्तरं कुशलवावभिषिञ्चेत्याह—इमौ कुशलवावित्यादि ॥ उत्तरेष्विति । उत्तरकोसलेष्वित्यर्थः ॥ ७ ॥ इदं अस्माकं प्रवर्तमानं स्वर्गाय गमनवृत्तान्तं शत्रुघ्नस्याख्यातुं दूता गच्छन्तु गत्वा चाख्यान्तु । मा चिरं विलम्बो मा भूत् । इदं गमनमस्माकं शीघ्रमाख्यान्तु मा चिरमिति च पाठः ॥ ८—१० ॥ प्रकृतीजनं । छान्दसो दीर्घः ॥ ११—१२ ॥ सत्पथं ब्रह्मलोकमार्गं । त्वया गम्यमानमिति शेषः ॥ १३ ॥ वयं चेति । न त्याज्या अतः सर्वान्नय । तत्र हेतुः—ईश्वरेति ॥ १४—१५ ॥ कृतान्तं च कर्तव्यतासिद्धान्तं च ॥ १६ ॥ सुतावभिषिच्य प्रस्थापयामास ॥ १७ ॥ पुरे अयोध्यायां स्वसमीपे कोसलद्वयराज्यार्थमभिषिक्तौ अङ्के प्रतिष्ठाप्य मूर्ध्न्युपाघ्राय परिष्वज्य रथादिकं ददौ । रथानां त्वित्यादि ॥ पुनर्दीयमान राजौपवाह्यदिव्यरथादिविषयं अभिषिच्येत्युक्ता-

---

स० कुशीलवौ गायकौ । कुशलवप्रतिनामनीवा ॥ ७ ॥ स० इदं अस्माकंगमनं आख्यातुंगच्छन्तु । आअचिरं अतिशीघ्र । 'आख्यातुमाचिरमित्यत्रतुमोऽनुस्वारलोपआर्ष' इतिव्याकुर्वन्नागोजिभट्ट माचिरमितिलोकप्रवादाप्रतिभातपदविच्छेदोबभ्रामेतिमन्तव्यं ॥ ८ ॥ ति० एषामीप्सितंज्ञात्वा यत्कार्यं यत्करणार्हं तत्कर्तव्य ॥ स० हेवत्स राम । धरणींगता दण्डवत्पतिता । प्रकृतीरिमा. इमान्पौरान्पश्य । एषा इमाश्चइमेचइमे तेषा । "पुमान्स्त्रिया" इत्येकशेष । एवमुत्तरत्रापि । अनेनप्रकृतीरिति प्रकृतत्वादासामितिवक्तव्यमितिसंदेहोऽवस्कन्द्यते ॥ १० ॥ स० अभिषिच्यस्थापयामास । 'कुशानत्याकुशंधीरंश्रावन्त्यास्थापयल्लवम् ।' इतिपाद्मोक्ते कोसलेष्वेवकुशावतीउत्तरेष्वेवश्रावन्तीचेतिज्ञेयम् । नच'तै साकमेवचलवंयुवराजमीश' इतिश्रीमदुक्ति कथमितिवाच्यं । तद्राज्यंस्वाधीनंकृत्वाएकंतत्रप्रस्थाप्याग्रजविरहासहिष्णुतयातन्नियोगवर्तिनोयौवराज्यकरणंसूपपादमितिकात्रकथन्ता

[ पा० ] १ झ. ठ कुशीलवौ. २ झ ठ शीघ्रमाख्यातुमाचिर. ३ क ग. ड—ट. सर्वान्वचनमब्रवीत्. ४ क. ग. घ. एवंविनिश्चयंकृत्वातस्मिन्नहनि. ५ इदमर्धं क. घ. ज. पाठेषुदृश्यते. ६ इदमर्धं क. ख. घ. ज. पाठेषुदृश्यते.

अभिषिच्य सुतौ वीरौ प्रतिष्ठाप्य पुरे तदा ॥ दूतान्संप्रेषयामास शत्रुघ्नाय महात्मने ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

---

## अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

दूतमुखात्परलोकगमनोद्यमादिरामवृत्तान्तमवगतवताशत्रुघ्नेन पुत्रद्वयस्यराज्यद्वयेऽभिषेचनपूर्वकमयोध्यामेत्यरामंप्रति सप्रणामस्वस्यानुगमनाभ्यनुज्ञानप्रार्थने रामेणतदनुज्ञानम् ॥ १ ॥ सुग्रीवेणाङ्गदस्यराज्येऽभिषेचनपूर्वकमृक्षवानरादिभिः सहाभिवादनपूर्वकंरामंप्रतिसानुचरस्यस्वस्यतदनुगमनाङ्गीकरणप्रार्थनेतेनतदङ्गीकरणम् ॥ २ ॥ रामेण हनुमद्विभीषणौप्रति धरण्यामाचन्द्रार्कावस्थानचोदनपूर्वकमैन्दद्विविदजाम्बवतामेदिन्याचिरावस्थानचोदना ॥ ३ ॥

ते दूता रामवाक्येन चोदिता लघुविक्रमाः ॥ प्रजग्मुर्मधुरां शीघ्रं चक्रुर्वासं च नाध्वनि ॥ १ ॥
ते तु त्रिभिरहोरात्रैः संप्राप्य मधुरामथ ॥ शत्रुघ्नाय यथातत्वमाचख्युः सर्वमेव तत् ॥ २ ॥
लक्ष्मणस्य परित्यागं प्रतिज्ञां राघवस्य च ॥ पुत्रयोरभिषेकं च पौरानुगमनं तथा ॥ ३ ॥
कुशस्य नगरी रम्या विन्ध्यपर्वतरोधसि ॥ कुशावतीति नाम्ना सा कृता रामेण धीमता ॥
श्रावस्तीति पुरी रम्या श्राविता च लवस्य च ॥ ४ ॥
अयोध्यां विजनां कृत्वा राघवो भरतस्तथा ॥ स्वर्गस्य गमनोद्योगं कृतवन्तौ महारथौ ॥ ५ ॥
एवं सर्वं निवेद्याशु शत्रुघ्नाय महात्मने ॥ विरेमुस्ते ततो दूतास्त्वर राजेति चाब्रुवन् ॥ ६ ॥
तच्छ्रुत्वा घोरसंकाशं कुलक्षयमुपस्थितम् ॥ प्रकृतीस्तु समानीय काञ्चनं च पुरोधसम् ॥ ७ ॥
तेषां सर्वं यथावृत्तमब्रवीद्रघुनन्दनः ॥ आत्मनश्च विपर्यासं भविष्यं भ्रातृभिः सह ॥ ८ ॥
ततः पुत्रद्वयं वीरः सोऽभ्यषिञ्चन्नराधिपः ॥ सुबाहुर्मधुरां लेभे शत्रुघाती च वैदिशम् ॥ ९ ॥
द्विधा कृत्वा तु तां सेनां माधुरीं पुत्रयोर्द्वयोः ॥ धनं च युक्तं कृत्वा वै स्थापयामास पार्थिवः ॥१०॥
सुबाहुं मधुरायां च वैदिशे शत्रुघातिनम् ॥ ययौ स्थाप्य तदाऽयोध्यां रथेनैकेन राघवः ॥ ११ ॥
स ददर्श महात्मानं ज्वलन्तमिव पावकम् ॥ सूक्ष्मक्षौमाम्बरधरं मुनिभिः सार्धमक्षयैः ॥ १२ ॥

---

र्थे ॥ १८—२१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने सप्तोत्तरशततमः सर्ग. ॥ १०७ ॥

---

राघवस्य प्रतिज्ञामिति । कालपुरुषं प्रति ब्रह्मलोकागमनप्रतिज्ञामित्यर्थः । पौरानुगमन पौरानुगमनानुमति ॥ ३ ॥ कुशस्य कुशावती पुरी लवस्य श्रावस्तीति श्रावितेत्यन्वयः ॥ ४—५॥ त्वर गमनाय त्वरितो भव । राजेति । राजन्नित्यर्थः ॥६॥ काञ्चनं काञ्चनाख्यं ॥७॥ विपर्यासं देहवियोग ॥८–९॥ धनं युक्त च कृत्वेति । यथोचित यथाशास्त्र विभाग कृत्वे-

---

॥ १७ ॥ स० शत्रुघ्नाय इमावार्तावक्तुं ॥ २१ ॥ इतिसप्ताधिकशततम सर्ग ॥ १०७ ॥

स० तत. अयोध्यातोनिर्गमनानन्तर । अथ शत्रुघ्नदर्शनानन्तर ॥ २ ॥ स० श्राविता प्रसिद्धिंप्रापिता ॥ ४ ॥ विजना सर्वजनानामनुगमनमनस्कत्वाद्विजनाकृत्वेतिसंभवति ॥ ५ ॥ यथावृत्तमब्रवीत् लक्ष्मणत्यागस्यनिर्हेतुकत्वशङ्काव्यावृत्त्यर्थमितिभाव. ॥ स० भ्रातृभि. गतेनसहत्रिभि । ति० भविष्यं भविष्यन्त ॥ ८ ॥ स० तन्नामनीआह—सुबाहुरिति । वैदिशं तन्नामकग्रामं । ननुपाद्मे—'शत्रुघ्नोपिसुतौस्थाप्यमधुरायामथागमत् ' इत्युक्तेरित्युक्ति कथमितिचेत्—वैदिशस्यापिमधुरावस्तनपत्तनतयामधुरायामित्युक्ति पाद्मइतिसमाधिरवधेय । माधुरी पूर्वंमधुरानगरगा ॥ ११ ॥ ति० मुनिभि सार्धं आसीनमितिशेष ॥ १२ ॥

[ पा० ] १ झ. ठ ततस्त्रिभि २ च छ च्यवनंचपुरोधस ३ क. ग. घ च. छ. धनधान्यसमायुक्तौस्थापयामासपार्थिवौ. ४ क. ख. घ. ज़. ततोविसृज्यराजानवैदिशे. ५ क—घ. ज. जगामत्वरितोऽयोध्या.

सोभिवाद्य ततो रामं प्राञ्जलिः प्रयतेन्द्रियः ॥ उवाच वाक्यं धर्मज्ञं धर्ममेवानुचिन्तयन् ॥ १३ ॥
कृत्वाऽभिषेकं सुतयोर्युक्तं राघवनन्दन ॥ तवानुगमने राजन्विद्धि मां कृतनिश्चयम् ॥ १४ ॥
न चान्यदपि [1]वक्तव्यमतो वीर न शासनम् ॥ [ [2]त्यक्तुं नार्हसि मां वीर भक्तिमन्तं विशेषतः ॥ ]
[3]विलोक्यमानमिच्छामि त्वद्विधेन विशेषतः ॥ १५ ॥
तस्य तां बुद्धिमक्लीबां विज्ञाय रघुनन्दनः ॥ बाढमित्येव शत्रुघ्नं रामो वाक्यमुवाच ह ॥ १६ ॥
[4]तस्य वाक्यस्य वाक्यान्ते वानराः कामरूपिणः ॥ ऋक्षराक्षससङ्घाश्च समापेतुरनेकशः ॥ १७ ॥
सुग्रीवं ते पुरस्कृत्य सर्व एव समागताः ॥ ते रामं द्रष्टुमनसः स्वर्गायाभिमुखं स्थितम् ॥ १८ ॥
देवपुत्रा ऋषिसुता गन्धर्वाणां सुतास्तथा ॥ [5]रामक्षयं विदित्वा ते सर्व एव समागताः ॥ १९ ॥
ते राममभिवाद्योचुः [6]सर्वे वानरराक्षसाः ॥ तवानुगमने राजन्[7]संप्राप्ताः कृतनिश्चयाः ॥ २० ॥
यदि राम विनाऽस्माभिर्गच्छेस्त्वं पुरुषोत्तम ॥ यमदण्डमिवोद्यम्य त्वया स्म विनिपातिताः ॥२१॥
तैरेवमुक्तः काकुत्स्थो बाढमित्यब्रवीत्स्मयन् ॥ २२ ॥
एतस्मिन्नन्तरे रामं सुग्रीवोपि महाबलः ॥ प्रणम्य विधिवद्वीरं विज्ञापयितुमुद्यतः ॥ २३ ॥
अभिषिच्याङ्गदं वीरमागतोस्मि नरेश्वर ॥ तवानुगमने राजन्विद्धि मां कृतनिश्चयम् ॥ २४ ॥
तस्य तद्वचनं श्रुत्वा रामो रमयतांवरः ॥ वानरेन्द्रमथोवाच मैत्रं तस्यानुचिन्तयन् ॥ २५ ॥
सखे शृणुष्व सुग्रीव न त्वयाहं विनाकृतः ॥ गच्छेयं देवलोकं वा ~~परमं वा पदं महत्~~ ॥ २६ ॥
विभीषणम[8]थोवाच राक्षसेन्द्रं महायशाः ॥ यावत्प्रजा धरिष्यन्ति तावत्त्वं वै विभीषण ॥
राक्षसेन्द्र महावीर्य लङ्कास्थस्त्वं धरिष्यसि ॥ २७ ॥
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥ यावच्च मत्कथा लोके तावद्राज्यं तवास्त्विह ॥ २८ ॥
शासितस्त्वं सखित्वेन कार्यं ते मम शासनम् ॥ प्रजाः संरक्ष धर्मेण नोत्तरं वक्तुमर्हसि ॥ २९ ॥
किंचान्यद्वक्तुमिच्छामि राक्षसेन्द्र महामते ॥ ३० ॥

---

त्यर्थ.॥१०—१४॥ अन्यन्न वक्तव्यमिति । मास्त्विति न वक्तव्यमित्यर्थः। विलोक्यमानमित्यादि । त्वद्विधेन परमानुग्रहसमर्थेन । विलोक्यमानं अनुगृह्यमाणमेव सपादयितुमात्मानमिच्छामि ॥ १५—२० ॥ यमदण्डमुद्यम्येव त्वया विनिपातिताःस्म । हताःस्मेत्यर्थः ॥ २१—२६ ॥ एवं तेषामनुगमनार्थवचनं श्रुत्वा व्यवस्थामाह—विभीषणमित्यादि ॥ विभीषणस्य ब्रह्मणा अमरत्वप्रदानप्रदर्शनात् स्नेहेनैवावस्थानं शा-

---

स० प्रयतेन्द्रिय सरामव्यापारानुकूल्यप्रवर्तनेन्द्रिय ॥ १३ ॥ स० सुतयो सुबाहुशत्रुघातिनो ॥ १४ ॥ ति० 'विहन्यमानमिच्छामिमद्विधेनविशेषत ' इतिपाठेहेवीर तवशासनमद्विधेनविहन्यमानंनेच्छामीतिसबन्ध ॥ १५ ॥ स० वाक्यान्ते वचनावसाने । वाक्यस्यवाक्यान्तइतिपाठे वाक्यमस्यास्तीतिवाक्योवक्तारामस्तस्यवाक्यान्तइत्यर्थः । यत्तुनागोजिभट्टेन वाक्यान्ते उच्चारणान्तेइत्युक्तं। 'तिङ्सुबन्तचयोवाक्य' मित्यमरसुधायां ' वचेर्ण्यत्चजोरितिकुत्वंशब्दसंज्ञाया अन्यत्रतुवाच्य' इत्युक्तेरुच्चारणार्थकत्वेक्रियार्थकत्वादशब्दसंज्ञार्थकत्वाद्दुर्निरूपरूपमित्ययुक्तं । लक्षणयेतिनविचक्षणेनोक्त । नयुक्तंचगत्यन्तरस्यसुमिलस्यसंभवे ॥ १७ ॥ ति० समागता. मिलिता ॥ २० ॥ ति० शासित. आज्ञप्त ॥ स० सखित्वेननिमित्तेनशासित शिक्षित । तेत्वयाममशासनंकार्यं । उत्तरं मद्वचनप्रतिकूलमुत्तर ॥ २९ ॥ ति० अत्रस्थानेपाठेविशेष—' तावद्रमस्वराज्यस्थ.काले

[ पा० ] १ ख. ग. वक्तव्यंतववीर. च. छ ज. वक्तव्यंदुस्तरतवशासनं. २ इदमर्धं क. घ. ज. पाठेषुदृश्यते. ३ ख. ङ. च. छ. झ. ट. विहन्यमानमिच्छामिमद्विधेनविशेषत . ४ क. तस्यरामस्य. च. छ. तस्यवीरस्य. ५ क. रामाभिप्रायमाज्ञाय सर्वेएव. ६ क. सर्वेप्राञ्जलय.स्थिता . ७ क—घ. ज. न्संप्राप्ता.स्समहायश.. झ. ठ. न्सप्राप्ताःस्ससमागताः. ८ क—घ. च. छ. ज. मथोवाचमधुरंश्लक्ष्णयागिरा.

आराधय जगन्नाथमिक्ष्वाकुकुलदैवतम् ॥ आराधनीयमनिशं सर्वैर्देवैः सवासवैः ॥ ३१ ॥
तथेति प्रतिजग्राह रामवाक्यं विभीषणः ॥ राजा राक्षसमुख्यानां राघवाज्ञामनुस्मरन् ॥ ३२ ॥
तमेवमुक्त्वा काकुत्स्थो हनूमन्तमथाब्रवीत् ॥ जीविते कृतबुद्धिस्त्वं मा प्रतिज्ञां विलोपय ॥ ३३ ॥
मत्कथाः प्रचरिष्यन्ति यावल्लोके हरीश्वर ॥ तावद्रमस्व सुप्रीतो मद्वाक्यमनुपालयन् ॥ ३४ ॥
एवमुक्तस्तु हनुमान्राघवेण महात्मना ॥ वाक्यं विज्ञापयामास परं हर्षमवाप्य च ॥ ३५ ॥
यावत्तव कथा लोके विचरिष्यति पावनी ॥ तावत्स्थास्यामि मेदिन्यां तवाज्ञामनुपालयन् ॥ ३६ ॥
जाम्बवन्तं तथोक्त्वा तु वृद्धं ब्रह्मसुतं तथा ॥ मैन्दं च द्विविदं चैव पञ्च जाम्बवता सह ॥
यावत्कलिश्च संप्राप्तस्तावज्जीवत सर्वदा ॥ ३७ ॥
तानेवमुक्त्वा काकुत्स्थः सर्वांस्तानृक्षवानरान् ॥ उवाच बाढं गच्छध्वं मया सार्धं यथेप्सितम् ॥३८॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

---

स्ति—यावत्प्रजा इति । धरिष्यसीति । देहमिति शेषः ॥ २७—३२ ॥ अथ हनुमतोपि अमरत्वं प्रति ब्रह्मदत्तवरत्वात् यावद्रामकथाप्रचारः भूलोके तावत् सञ्जीवनस्य प्रार्थितत्वात् तथा रामेणानुज्ञातत्वाच्च तस्य च स्थापनं । जीवित इत्यादि । जीविते जीवितावस्थाने कृतबुद्धिः कृतनिश्चयः सन् प्रतिज्ञां त्वत्कृतां मा विलोपय । मा प्रतिज्ञां वृथा कृथा इति च पाठः ॥ ३३ ॥ उक्त एवार्थः स्पष्टीक्रियते—मत्कथा इति ॥ ३४—३६ ॥ जाम्बवन्तमिति ॥ जाम्बवतोपि ब्रह्मपुत्रत्वात् ब्रह्मणैव दत्तवरत्वाच्च स्थापनं । मैन्दद्विविदयोरपि पित्रोरश्विनोरनुग्रहादमृतप्राशित्वाच्च स्थापनं । विभीषणादयोमराः पञ्च ते यूयं यावत्कलिः यावत्प्रलयः । तावज्जीवत । कलौ प्रलये सम्प्राप्ते सति देहं त्यजतेति शेषः ॥ ३७ ॥ सर्वांस्तानिति । पञ्चामरव्यतिरिक्तानित्यर्थः ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

---

ममपदव्रज । इत्युक्त्वाप्रददौतस्मैस्वविश्लेषासहिष्णवे । श्रीरङ्गशायिनंस्वार्चामिक्ष्वाकुकुलदैवतम् । रङ्गंविमानमादायलङ्काप्रायाद्विभीषण ।' इति । तदाह—किंचेति । इदसार्वश्लोकद्वयंप्रक्षिप्तमित्यन्ये ॥ ३० ॥ **स०** मद्वाक्यं इदानीमुक्त ॥ ३४ ॥ **स०** जाबवदादीनारामेणसहगमनाभावे 'उत्पत्त्यर्थंजाबवत्या' 'असुरावेशतस्तौतुनराममनुजग्मतु' इत्याद्याचार्योक्तंनिमित्तमनुसन्धेयम् ॥ जाबवन्तमैन्दद्विविदंचोक्त्वाकालनिष्कर्षपूर्वमुक्तंहनुमद्विभीषणाभ्यासहाह—पञ्चजाबवतेति । कार्ष्णेऽवतारेमैन्दद्विविदजाबवतानाश । हनुमद्विभीषणयोस्तुप्रलयकालेइतिप्रामाणिकोविवेक. । 'कल्पान्तमस्यनिशिचरपतित्वपूर्वमायु प्रदाय' इत्यादे. ॥ ३७ ॥ इत्यष्टोत्तरशततम.सर्ग ॥ १०८ ॥

[ पा० ] १ ङ. च. झ. ट प्रतिज्ञावृथाकृथा.. २ क—घ. ज. तावत्त्वंधारयप्राणान्प्रतिज्ञामनुपालय. ३ ङ. छ. झ. ञ. ट, मवापच, ४ ङ. छ—ट, यथोदित

# नवोत्तरशततमः सर्गः ॥ १०९ ॥

प्रभातेश्रीरामेण वसिष्ठेनमाहाप्रास्थानिकविधिविधापनपूर्वकविमलसूक्ष्माम्बरधारिणा कुशपाणिना श्रीभूदेवीविभूषितपार्श्वयुगेन पुरुषवेषधारिभिर्वेदायुधाद्यभिमानिदेवै. ऋष्यादिभिश्चानुगम्यमानेनचसता नियमात्पादचारेण निजपरमपदजिगमिषयानिजगृहान्निर्गमनम् ॥ १ ॥ रामस्यमहाप्रस्थानसमयेसस्त्रीबालवृद्धै. सकलजनै. खगमृगनगतृणादिप्राणिगणैरपि परमपदजिगमिषयाहर्षात्तदनुसरणम् ॥ २ ॥

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः ॥ रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् ॥ १ ॥
अग्निहोत्रं व्रजत्व[1]ग्रे दीप्यमानं सह द्विजैः ॥ वाजपेयातपत्रं च शोभमानं म[2]हापथे ॥ २ ॥
ततो वसिष्ठस्तेजस्वी सर्वं निरवशेषतः ॥ चकार विधिवद्धर्मं [3]महाप्रास्थानिकं विधिम् ॥ ३ ॥
ततः [4]सूक्ष्माम्बरधरो [5]ब्रह्ममावर्तयन्परम् ॥ कुशान्गृहीत्वा पाणिभ्यां [6]प्रसज्य प्रययावथ ॥ ४ ॥
अव्याहरन्क्वचित्[7]किंचिन्निश्चेष्टो निस्सुखः पथि ॥ निर्जगाम गृहात्तस्मा[8]द्दीप्यमान इवांशुमान् ॥ ५ ॥
रामस्य दक्षिणे पार्श्वे [9]सपद्मा श्रीरुपाश्रिता ॥ [10]सव्ये तु ह्रीर्महादेवी व्यवसायस्तथाऽग्रतः ॥ ६ ॥
शरा नानाविधाश्चापि [11]धनुरायतमुत्तमम् ॥ [12]तथाऽऽयुधानि ते सर्वे ययुः पुरुषविग्रहाः ॥ ७ ॥
वेदा ब्राह्मणरूपेण [13]गायत्री सर्वरक्षिणी ॥ ओङ्कारोथ वषट्कारः सर्वे राममनुव्रताः ॥ ८ ॥
ऋषयश्च महात्मानः सर्व एव [14]महीसुराः ॥ [15]अन्वगच्छन्महात्मानं स्वर्गद्वारमपावृतम् ॥ ९ ॥

वाजपेयातपत्र चेति। तस्य धर्मानुष्ठानबलप्राप्तत्वाद्राजचिह्नस्य संन्यस्तत्वाच्च सीतायाः पत्न्याः स्थितत्वादग्नेरपि स्थितिरिति पूर्वमेवोक्त ॥ २ ॥ महाप्रस्थानमर्हतीति महाप्रास्थानिकं ॥ ३ ॥ परं ब्रह्ममावर्तयन्निति। अकारान्तत्वमार्षं । देवमन्त्रमित्यर्थः । प्रसज्य गृहीत्वेति । अङ्गुलीविवरप्रसक्त कृत्वेत्यर्थः ॥ ४ ॥ निश्चेष्टः किंचित्पदार्थदर्शनश्रवणस्पर्शनादिविषयकेन्द्रियचेष्टारहित इत्यर्थः । निःसुखः पथि पादुकादिसुखमुपेक्ष्य शर्कराकण्टकबाधां सोढुमुद्युक्तः। निर्जगामेत्यर्थः ॥ ५ ॥ सपद्मा पद्महस्ता ॥६—९॥

**ति०** महाप्रस्थानंनामपरलोकगमनायसकल्पपूर्वकप्रस्थान । तदर्हतिमहाप्रास्थानिकविधिमुद्दिश्ययोधर्मं कर्तव्यस्तधर्मविधिवच्चकार ॥ ३ ॥ **ति०** प्रययौ वक्ष्यमाणलक्षणमहाप्रस्थानविधिनेतिशेष ॥ **स०** ब्रह्म प्रणवं । प्रामादिकंपाठमेकतमेपुस्तके स्थितं ' ब्रह्ममावर्तयन्परं ' इतिधृत्वा अकारान्तत्वमार्षमितिव्याकुर्वतोनागोजिभट्टस्यद्वित्रपुस्तकालाभइतिज्ञापयन्ति पञ्चषाण्यतथापाठानिपुस्तकानीतिमन्तव्यम् ॥ ४ ॥ **स०** अव्याहरन् असभाष्यानसभाषयन् । निश्चेष्ट विषयाभिलाषजनितव्यापाररहित । निस्सुख तत्साधनपादुकादिरहितः ॥ ५ ॥ **ति०** पद्मा पद्महस्ता । श्रीर्लक्ष्मी महीदेवी । ' ह्रीश्चतेलक्ष्मीश्चपत्न्यौ ' इतिश्रुते । श्रुतौह्रीर्मही । व्यवसायोव्यवसायशक्ति सहारशक्ति ॥ **स०** श्रीः सपद्रूपिणी । पद्मा रमा ॥ ६ ॥ तथासहारशक्तिसहकारिणामपिमूर्ततयोपासकत्वमाह—शराइति । एवंरौद्रशक्तिसेवादर्शिता ॥ **स०** आयुधा उक्तेभ्योऽन्ये । पुरुषविग्रहा । इयमुग्रशक्ति । यद्यपि 'आयुधंतुप्रहरणं' इतिनिबन्धामरोनपुंसकमायुधशब्दं । तथापि पुंनपुसकाधिकारेलिङ्गानुशासनेआयुधशब्दस्य 'औषधायुध—' इत्यादिग्रहणात्पुंल्लिङ्गताप्यवगन्तव्या ॥७॥ **ति०** अथहैरण्यगर्भशक्तिसेवादर्शयति—वेदाइति । गायत्रीसर्वरक्षिणीसर्ववेदतन्मूलयज्ञयज्ञाधिकृताशेषजगद्रक्षिका । तस्याअपिमूलमोकारोप्यनुगत । अनेन सर्वज्ञानयोगोदर्शित. ॥ **स०** वषट्कार सोपिकर्मयोगः । इत्येतेसर्वे अनुव्रता । ' वर्णात्कार ' इतियद्यप्यस्ति श्रौत्योक्त्यातन्त्रमेकवचनमितिवा छान्दसत्वेनवा युज्यते ॥ ८ ॥ **ति०** स्वर्गद्वारमपावृतं । परस्वर्गस्यब्रह्मलोकस्यद्वार अपावृतं अनावृतं । रामेणसहोपेन्द्रलोकगमनद्वारा रामेणसहागतानासर्व-

**[ पा० ]** १ ख. ज त्वग्रेसप्रज्वलितपावकं. क. ग त्वग्रेसर्पिर्ज्वलितपावकं. २ ख. ज. महाधनं. ३ च. छ महाप्रस्थानकाश्रयं. ४ क. ज. क्षौमाबरधरो. ५ ज. ब्रह्मचावर्तयन् ६ ङ. च छ. झ ञ. ट. सरयूंप्रययावथ. ७ च. छ किंचिन्निश्शब्दंसुमुखीपथि. ८ घ दीप्यमानोयथाऽनल. क. च. छ. ञ. ट. दीप्यमानोयथाऽशुमान् ९ ख. ग. घ. ज. पद्माश्रीस्सुसमाहिता. ङ. च छ. झ ञ. पद्माश्री समुपाश्रिता. १० ग ङ. च. छ झ ट सव्येपिचमहादेवी. ११ ख. ग. घ. ज. रायतविग्रहं. झ. रायत्तमुत्तमं. १२ ख. ग. घ. ज. अनुव्रजन्तिकाकुत्स्थंसर्वेपुरुष. ङ. झ. ञ. ट. तथायुधाश्चतेसर्वे. १३ क. ग. घ. च. छ. ज. सावित्रीसर्व. १४ क—घ. महींगता , १५ क—घ. अन्वगच्छन्तकाकुत्स्थं.

तं यान्तमनुगच्छन्ति ह्यन्तःपुरचराः स्त्रियः ॥ सवृद्धबालदासीकाः सवर्षवरकिङ्कराः ॥ १० ॥
सान्तःपुरश्च भरतः शत्रुघ्नसहितो ययौ ॥ रामं गतिमुपागम्य साग्निहोत्रमनुव्रतः ॥ ११ ॥
ते च सर्वे महात्मानः साग्निहोत्राः समागताः ॥ सपुत्रदाराः काकुत्स्थमनुजग्मुर्महामतिम् ॥ १२ ॥
मन्त्रिणो भृत्यवर्गाश्च सपुत्रपशुबान्धवाः ॥ सर्वे सहानुगा राममन्वगच्छन्प्रहृष्टवत् ॥ १३ ॥
ततः सर्वाः प्रकृतयो हृष्टपुष्टजनावृताः ॥ गच्छन्तमन्वगच्छंस्तं राघवं गुणरञ्जिताः ॥ १४ ॥
ततः सस्त्रीपुमांसस्ते सपक्षिपशुवाहनाः ॥ राघवस्यानुगाः सर्वे हृष्टा विगतकल्मषाः ॥ १५ ॥
स्नाताः प्रमुदिताः सर्वे हृष्टाः पुष्टाश्च वानराः ॥ दृढं किलकिलाशब्दैः सर्वं राममनुव्रतम् ॥ १६ ॥
न तत्र कश्चिद्दीनो वा व्रीडितो वाऽपि दुःखितः ॥ हृष्टं प्रमुदितं सर्वं बभूव परमाद्भुतम् ॥ १७ ॥
द्रष्टुकामोथ निर्यान्तं रामं जानपदो जनः ॥ यः प्राप्तः सोपि दृष्ट्वैव स्वर्गायानुगतो मुदा ॥ १८ ॥
ऋक्षवानररक्षांसि जनाश्च पुरवासिनः ॥ आगच्छन्परया भक्त्या पृष्ठतः सुसमाहिताः ॥ १९ ॥
यानि भूतानि नगरेप्यन्तर्धानगतानि च ॥ राघवं तान्यनुययुः स्वर्गाय समुपस्थितम् ॥ २० ॥
यानि पश्यन्ति काकुत्स्थं स्थावराणि चराणि च ॥ सर्वाणि रामगमने ह्यनुजग्मुर्हितान्यपि ॥ २१ ॥
नोच्छ्वसत्तदयोध्यायां सुसूक्ष्ममपि दृश्यते ॥ तिर्यग्योनिगताश्चापि सर्वे राममनुव्रताः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे नवोत्तरशततमः सर्गः ॥ १०९ ॥

---

नपुंसका वर्षवराः ॥ १०—१२ ॥ प्रहृष्टवत् देहविसर्जनसमये समीपावस्थानजःप्रहर्ष. ॥१३–१५॥ किलकिलाशब्दैरिति । उपलक्षितमिति शेषः । सर्वमिति । वानरबलमिति शेषः ॥१६॥ व्रीडित इति । भगवदपराधादिना । पूर्वक्तेनेतिशेषः ॥१७–१९॥ स्वर्गाय ब्रह्मलोकगमनाय ॥ २०—२१ ॥ उच्छ्वसत्

जन्तूनाब्रह्मलोकस्यैवप्राप्तेरितिबोध्यं । अतएव बहुश प्रागुक्तं । ' रामोराज्यमुपासित्वाब्रह्मलोकंगमिष्यति ' इति रामस्थितिलोकस्यैव ब्रह्मलोकत्वाच्च ॥ स० स्वर्गद्वारं सातानिकादिवैकुण्ठपर्यन्त । तत्तद्योग्यतामनुसृत्यगति । अतएवमुक्ति ॥ ९ ॥ स० स्त्रिय अन्त पुरचरा अन्त पुरचर्यं । पचादिरयं । तेनाकारान्तता । अन्त पुरचरा पुरुषा विश्वस्तावृद्धावा ॥ १० ॥ स० गति मुख्यप्राप्यं ॥ ११ ॥ स० सर्वे तदन्ये । प्रहृष्टवत् प्रहृष्टा । स्वार्थेवति । यत्तुनागोजिभट्टेन ' देहविसर्जनेसमीपावस्थानलाभज प्रहर्ष । पुत्रैस्तुतन्नलब्धमितिप्रहृष्टवदितिव्याख्यात । सर्वसगविभङ्गपूर्वकंमहातोषेणगच्छतास्वच्छहृदयानापोतचिन्तया किंचित्संकुचितता मुदि नवक्तुमुचितेतितन्नोचितम् ॥ इदानीमेवाशेषतोषाविर्भावाभावाद्वा प्रहृष्टवदित्युक्ति ॥ १३ ॥ स० गुणरञ्जिता तद्गुणरञ्जिता ॥ १४ ॥ ति० दृढ दृढानुगमननिश्चय ॥ १६ ॥ ति० दीन दीनाकृति । व्रीडित गतेरामेकथमहंतिष्ठामीतिलज्जावशान्नरामानुगमनं । किंतुसतोषेणैवेत्यर्थ । समुदित मिलितंसर्वपरमाद्भुतं परलोकगमनायैवविधहर्षयुक्तमित्यत्याश्चर्यकरमभूदित्यर्थ ॥ स० दीन आकारत. । व्रीडित । वस्तुतस्तु ममवस्तुमिच्छा । निर्गतेरामेकथमवस्थानमितिलज्जावर्जित. । मन पूर्वकमेवगमनमनेनाभिप्रैति ॥ १७ ॥ स० योजानपदोजन प्राप्त सोपिनिर्यान्तंरामंदृष्ट्वैवानुगत. । स्वगृहगतसुतादिमुखावलोकनादिकंसूचयत्येवकारेण । स्वर्गायैवानुगत । सकल्पकालेऽसत्वान्मध्येमार्गमागतानानमुक्तिभाक्त्वंकिमित्यत आह—अजनइति । सोपिजन पुनर्जन्मतन्महिमतोनाप्नोदितिभाव । अतोनजनपुनर्वचनशङ्का ॥ १८ ॥ ति० अन्तर्धानगतानि भूतप्रेतपिशाचादीनि भद्रकाल्यादीनिच ॥२०॥ ति० स्थावराणीति । स्थावराणामनुगमनंभगवतोरामस्यसदयावलोकनेनतदानीं ज्ञानक्रियाशक्त्युद्भवादुपपद्यते ॥ २१ ॥ इतिनवाधिकशततम सर्ग. ॥ १०९ ॥

[ पा० ] १ क—घ. ततोविप्रामहात्मान'. २ ज मन्वगच्छन्महीपतिं. क. ग. घ. मन्वगच्छन्महामतिं. ३ क. ग. घ. ज. सपुत्रास्सहबान्धवाः. ख. सभृत्या सहबान्धवा . ४ ख. ज. अनुजग्मु.प्रयान्तंहिराघवं. ङ. च झ ञ. ट. गच्छन्तमनुगच्छन्तिराघवं. ५ ङ. झ हृष्टपुत्राश्चवानरा ६ च सर्वेराममनुव्रताः. ७ ज दीनोभूद्बालिशोवापि. च.-दीनोभूत्क्लीबोनापिदु खितः. ८ झ. ठ. समुदितं. ९ क—घ. ज निर्याणंराज्ञोजानपदो. १० क. ख. ग. ज. सप्राप्त . ११ क. ख. ज. सत्वानिस्वर्गगमने. १२ क. नचसक्तमयोध्यायां. च. नासीत्सत्वमयोध्याया.

## दशोत्तरशततमः सर्गः ॥ ११० ॥

श्रीरामेण सकलजनैः सहस्वलोकगमनाय सरयूगमनम् ॥१॥ तथा तत्रागतचतुर्मुखप्रार्थनया वैष्णवतेजःप्रवेशनम् ॥२॥ तथा स्वान्वागतानांजनाना चतुर्मुखद्वारा सांतानिकलोकप्रापणम् ॥ ३ ॥ वानरादिभिश्चसह सरय्वामेवगर्हिनेनस्वलोकगमनम् ॥ ४ ॥

अध्यर्धयोजनं गत्वा नदीं पश्चान्मुखाश्रिताम् ॥ सरयूं पुण्यसलिलां ददर्श रघुनन्दनः ॥ १ ॥
तां नदीमाकुलावर्तां सर्वत्रानुसरन्नृपः ॥ आगतः सप्रजो रामस्तं देशं रघुनन्दनः ॥ २ ॥
अथ तस्मिन्मुहूर्ते तु ब्रह्मा लोकपितामहः ॥ सर्वैः परिवृतो देवैर्ऋषिभिश्च महात्मभिः ॥ ३ ॥
आययौ यत्र काकुत्स्थः स्वर्गाय समुपस्थितः ॥ विमानशतकोटीभिर्दिव्याभिरभिसंवृतः ॥ ४ ॥
दिव्यतेजोवृतं व्योम ज्योतिर्भूतमनुत्तमम् ॥ स्वयंप्रभैः स्वतेजोभिः स्वर्गिभिः पुण्यकर्मभिः ॥ ५ ॥
पुण्या वाता ववुश्चैव गन्धवन्तः सुखप्रदाः ॥ पपात पुष्पवृष्टिश्च देवैर्मुक्ता महौघवत् ॥ ६ ॥
तस्मिंस्तूर्यशतैः कीर्णे गन्धर्वाप्सरसंकुले ॥ सरयूसलिलं रामः पद्भ्यां समुपचक्रमे ॥ ७ ॥
ततः पितामहो वाणिमन्तरिक्षादभाषत ॥ आगच्छ विष्णो भद्रं ते दिष्ट्या प्राप्तोसि राघव ॥ ८ ॥
भ्रातृभिः सह देवाभैः प्रविशस्व स्विकां तनुम् ॥ यामिच्छसि महाबाहो तां तनुं प्रविश स्विकाम् ॥
वैष्णवीं तां महातेजस्तद्वाऽऽकाशं सनातनम् ॥ ९ ॥
त्वं हि लोकगतिर्देव न त्वां केचित्प्रजानते ॥ ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम् ॥

सप्राणमित्यर्थः । सुसूक्ष्ममपि न दृश्यते । अननुयातमितिशेषः ॥ १२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने नवोत्तरशततमः सर्गः ॥ १०९ ॥

---

अर्धाधिक योजनमध्यर्धयोजनं । पश्चान्मुखाश्रितां पश्चान्मुखेन स्वेनाश्रिता ॥ १—४ ॥ स्वयप्रभैः स्नेह विना स्वयमेव प्रकाशमानैः ॥ ५ ॥ महौघवत् महासमृद्धार्था ॥ ६ ॥ गन्धर्वाप्सरसंकुले गन्धर्वाप्सरःसकुले । पद्भ्यां समुपचक्रमे गन्तुमिति शेषः ॥ ७ ॥ अन्तरिक्षादभ्याशमागत्याभाषतेत्यर्थः ॥ ८ ॥ स्विकां तनुमिति । त्व विष्णुतनु लक्ष्मणः शेषतनुं भरतो गरुडतनुं शत्रुघ्नो विष्वक्सेनतनुमित्यर्थ. । तद्वाऽऽकाशं सनातन । "ऋचो अक्षरे परमे व्योमन्" इति श्रुत्युक्तपरमाकाश विष्णववतारकुलस्थानं वैकुण्ठ वा प्रविशेत्यर्थः ॥ ९ ॥ अनन्तरोक्तपक्षं विवृणोति—त्वं

तंदेशं स्वर्गप्रापकदेशं ॥ २ ॥ **ति०** तस्मिन्मुहूर्तेलोकपितामहोब्रह्माआययावित्युत्तरेणान्वय । रामपरिकरस्ययथोचितलोकप्रापणार्थमितिशेष. ॥ ३ ॥ **ति०** स्वर्गाय स्वर्गगन्तुं ॥ ४ ॥ **ति०** प्रथमतोदिव्यतेजसाव्याप्तंव्योम । स्वयप्रभै स्वयमेवप्रकाशान्तरनैरपेक्ष्येणप्रकाशमानै स्वर्गिभि स्वतेजोभि किरणै अनुत्तम अतिशयेनज्योतिर्भूतंज्योतिर्मयमभूदित्यर्थ ॥५॥ **ति०** अन्तरिक्षात्समीपमागत्यअभाषतेत्यर्थ । हेविष्णो लोकानुग्रहायगृहीतविष्णुशरीर ब्रह्मन्राघवदिष्ट्याप्राप्तोसि । मायागृहीतदु खमयनटनयोग्यमनुष्यशरीरविसर्जनकालंप्राप्तोसि । तेभद्रमस्तु कल्याणमस्तु । अद्यागच्छ । यतोलोकान्मनुष्यलोकंगतस्तलोकमित्यर्थ ॥ **स०** दिष्ट्याभुवंप्राप्तोसिनोदृग्विषय । ' अध्यर्धयोजनंगत्वानदींपश्चान्मुख.स्थित । सरयूंपुण्यसलिलाप्रविवेशसहानुग । अब्रवीद्राघवंब्रह्माप्रविष्टंसरयूजलम् । आगच्छविष्णोभद्रंतेपरंधामसमाश्रय । ' इतिपाद्मोक्ते । तेसकाशाद्भद्रनोस्त्वितिवा ॥ ८ ॥ **ति०** तदर्थंच देवाभै देवस्यतवसदृशैर्भ्रातृभि सह स्विकातनुं स्वतनुवदत्यन्तप्रियंलोकप्रविश । अत्रभ्रातृभिरितिबहुवचनेनलक्ष्मणस्यापितदानींतत्रागमनसूचयतीतितीर्थ । कतकस्तुयद्यपिशत्रुघ्नएकएवगच्छति । तथापिपुरोगतस्यसहगच्छत पश्चादागमिष्यतश्च भ्रातुस्तत्रप्रवेश सामान्येनाद्यतनप्रवेशइत्युच्यतेइतिनविरोधइतिव्याचख्यौ । भरतानुगमनंभगवद्देहविसर्जनदर्शनपर्यन्तमितिचपूर्वसर्गे ' सान्त पुरश्चभरत शत्रुघ्नसहितोययौ ' इतिपद्येव्याख्यातिस्मच । तत्रभरतस्यपश्चाद्गमनेमूलमन्वेष्टव्यम् । पूजायाबहुवचनमित्यन्ये । ननुमदीयतनूनामनेकत्वात्कचित्प्रविशेत्युच्यतेतत्राह—यामिति ॥ **स०** भ्रातृभि प्राग्गतलक्ष्मणेनसह । ' सान्त.पुरश्चभरत'शत्रुघ्नसहितोययौ ' इतिपद्यस्यापिसरयूप्रवेशकालेभरतादिमेलनमर्थइतिनतद्विसवाद । स्विकातनुं प्रविश विश । स्व स्वतन्त्र । ' स्वातन्त्र्यात्स्वइतिप्रोक्त ' इतिस्मृते । स्वका सुखरूपिणी ॥ ९ ॥ **ति०** तदेवविशदयति—वैष्णवीमिति ।

**[ पा० ]** १ च. छ. न. ट. देवैर्भूषितैश्च. २ क. वृष्टिश्चवायुमुक्तामहात्मनि.

त्वामचिन्त्यं महद्भूतमक्षयं सर्वसंग्रहम् ॥ १० ॥
यामिच्छसि महातेजस्तां तनुं प्रविश स्वयम् ॥ ११ ॥
पितामहवचः श्रुत्वा विनिश्चित्य महामतिः ॥ विवेश वैष्णवं तेजः सशरीरः सहानुजः ॥ १२ ॥
ततो विष्णुमयं देवं पूजयन्ति स्म देवताः ॥ साध्या मरुद्गणाश्चैव सेन्द्राः साग्निपुरोगमाः ॥ १३ ॥
ये च दिव्या ऋषिगणा गन्धर्वाप्सरसश्च याः ॥ सुपर्णनागयक्षाश्च दैत्यदानवराक्षसाः ॥ १४ ॥
सर्वं पुष्टं प्रमुदितं सुसंपूर्णमनोरथम् ॥ साधु साध्विति तैर्देवैस्त्रिदिवं गतकल्मषम् ॥ १५ ॥
अथ विष्णुर्महातेजाः पितामहमुवाच ह ॥ एषां लोकं जनौघानां दातुमर्हसि सुव्रत ॥ १६ ॥
इमे हि सर्वे स्नेहान्मामनुयाता मनस्विनः ॥ भक्ता हि भजितव्याश्च त्यक्तात्मानश्च मत्कृते ॥१७॥
तच्छ्रुत्वा विष्णुवचनं ब्रह्मा लोकगुरुः प्रभुः ॥ लोकान्सान्तानिकान्नाम यास्यन्तीमे समागताः ॥१८॥
यच्च तिर्यग्गतं किंचित्त्वामेवमनुचिन्तयत् ॥ प्राणांस्त्यक्ष्यति भक्त्या वै तत्सन्ताने निवत्स्यति ॥१९॥

हीत्यादिना ॥ मायां लक्ष्मी । पूर्वपरिग्रहां अनादितया परिगृह्यमाणां । नित्यानपायिनीमित्यर्थः । सर्वसंग्रह सर्वानुग्राहक । अक्षय चाजरं तथेति च पाठः ॥ १०—१५ ॥ विष्णु. विष्णुत्व प्राप्त. रामः । लोक दातुमर्हसि । आतिवाहिकतया दातुमर्हसीत्यर्थ.॥१६॥ कथ ब्रह्मविद्यारहितानामेषां ब्रह्मलोकप्राप्तिरित्यत्राह—इमे हीति ॥ भक्ताः भक्तिमन्त. मत्कृते त्यक्तात्मानश्च ॥ १७ ॥ सान्तानिकान् सान्तानिकाख्यान् लोकान् सप्राप्ताः सन्त. यास्यन्ति । त्वल्लोकमिति शेष.॥१८॥ न केवलमेत एव इतः परमपि ये रामभक्तास्तेपि

हेमहातेज वैष्णवी औपेन्द्री । यतोमनुष्यदेहस्तावाप्रविश । यद्वाकाशसनातन । यद्वा सनातनमाकाश । शुद्धब्रह्मरूपवाप्रविश । तद्रूपेणवातिष्ठेत्यर्थ । आकाशशब्दोहिब्रह्मणितत्रतत्रश्रुतिषुप्रसिद्ध । कतकस्तु—'वैष्णवींतांमहातेज स्वातनुप्रविशस्वयम्' ॥ इतिपाङ्क्त पाठ । यामिच्छसीत्येतत्प्राक्तनमर्धंचप्रामादिकमित्याह । अग्रेचपितामहवचइतिश्लोकइति । तत्स्वरस । तीर्थस्तु यद्वाकाशंसनातनमितिव्याख्यायात परंब्रह्मास्तौति—त्वंहीति । लोकगति. लोकानास्वर्गादिकगमयिता । लोकैर्गम्यश्चत्वमेवेत्यर्थ. । त्वाकेचित्अतिशयिततपस्सपन्नाअपिनप्रजानते ॥ स० तर्हिकर्हिचिदपित्वत्तोवित्ताधिकारोनाधिकरोतिकमपिकिमित्यतआह—ऋतइति । मायाविशालाक्षी लक्ष्मी । तवपूर्वपरिग्रहा पूर्वपरिग्रहोमदीयेतिस्वीकरणंयस्या साता । विशालाक्षीं स्वपरसाधारण्येन बहुविषयापूर्वपरिग्रहामायाज्ञानशक्तिमिच्छाशक्तिंवाऋते । परिग्रहमितिपाठ स्वरस । भार्यामितितदर्थ । त्वामचिन्त्यं इयानितिससीमत्वेनचिन्तयितुमशक्यं । महद्भूतंलोकप्रवेशकं । अक्षयमनन्तं । अजर षडूर्मिरहितं । केपिमायामृतेनजानतइत्यन्वय. ॥ ति० तर्हिकिमज्ञेयएवसर्वथा नेत्याह—ऋतइति । मायाज्ञानशक्तिरूपाविनाऽन्येनजानन्तीत्यर्थ । विशालाक्षीमित्यनेन तस्या. सर्वविषयतासूचिता । पूर्वपरिग्रहा । तेनसहजत्वंसूचितं । श्रवणमनननिदिध्यासनादिनाईदृशीज्ञानशक्तिर्येषाप्रादुर्भवतितएवत्वां जानन्तीतितात्पर्यम् । तत्रतादृशज्ञानविषयंस्वरूपमाह—त्वामिति । अचिन्त्यं देशत परिच्छेदशून्यं । अतएवमहद्भूतंप्राप्तं । अविशेषात्सर्ववस्तुभिरितिशेष । तेनवस्तुपरिच्छेदशून्यं । अक्षयं कालपरिच्छेदशून्यं । अजरं अविकारिणं ॥ १० ॥ ति० एवस्तुत्वाप्रकृतविज्ञापयति—यामिति ॥ ११ ॥ ति० अयस्वसालोक्यकाङ्क्षिणोजनान्सन्तानापरपर्यायस्वलोकंप्रापय्यक्रमेण परमंपदंनेतुकाम दयालुर्भगवान्स्वतोप्यस्मानुत्तमंलोकंप्रापितवानितितत्तोषायौपेन्द्रंलोकमेवगच्छतिस्मेत्याह—पितामहेति । महामति.सर्वज्ञोभगवान्विनिश्चित्यप्रागुक्तंनिश्चयंकृत्वासशरीरोवैष्णवंतेजोयज्ञज्वालावत्तेजोमयमौपेन्द्रंविवेश । अनेन तेजोमयएव देहोमाययामनुष्यदेहादिभिर्मनुष्यदेहत्वेनगृहीतइतिध्वनितं । तेज प्रवेशे जलेजलवद्विवेकेनाग्रहात्सहानुजइत्यनेनानुजशरीराणामपितथैवतेजोमयत्वंसूचित । सशरीरशब्दबोधितस्वसाहचर्येणतेषामपिसशरीरप्रवेशबोधनात् ॥ स० सशरीर तस्यापिज्ञानानन्दाद्यात्मकत्वात् । सहानुज । अनेन तेषामपिनशरीरविसर्जनमितिध्वन्यते । शरीरपरित्यागस्यात्रैवपाद्मादावप्यनुक्तेश्च । इतरविषयेशरीरत्यागस्यवक्ष्यमाणत्वाच्च । पूर्णमेवावशिष्यतेइत्यादेरेकीभाव. ॥ १२ ॥ ति० त्वय्यत्रागतेसर्वमिदत्रिदिवस्थजनजातंपुष्टंप्रमुदित । सुसपूर्णमनोरथंगतकल्मषंचजातमितितैर्देवै साधुसाध्वितिभाषितं ॥ १५ ॥ स० विष्णु स्वान्तर्निगूहितरघुनायककाय । एषा एन्य ॥१६॥ स०किमर्थमत्यर्थमेतदनुजिघृक्षातवेत्यतआह—इमेहीति । मामनुयाता । तत्रनिमित्तंस्नेहोभक्ति ॥ १७ ॥ ति० लोकगुरु सर्वजगत्कर्ता । वेदादिसर्वविद्योपदेष्टाच । प्रभु नित्यनैमित्तिकविहितनिषिद्धकर्मणाफलप्रापणेसमर्थ ॥ १८ ॥ ति० ननुकथंब्रह्मविद्भ्योब्रह्मलोकोवानरप्राप्यस्तत्राह—यच्चेति । तिर्यग्गतमपियत्किंचिद्यत्रक्वापिपदार्थे

[ पा० ] १ क—घ. ज विष्णुगतं.

सर्वैर्ब्रह्मगुणैर्युक्ते ब्रह्मलोकादनन्तरे ॥ २० ॥
वानराश्च स्विकां योनिमृक्षाश्चैव तथा ययुः ॥ येभ्यो विनिःसृताः सर्वे सुरेभ्यः सुरसंभवाः॥२१॥
तेषु प्रविविशे चैव सुग्रीवः सूर्यमण्डलम् ॥ पश्यतां सर्वदेवानां स्वान्पितॄन्प्रतिपेदिरे ॥ २२ ॥
तथोक्तवति देवेशे गोप्रतारमुपागताः ॥ भेजिरे सरयूं सर्वे हर्षपूर्णाश्रुविक्लबाः ॥ २३ ॥
अवगाह्य जलं यो यः प्राणी ह्यासीत्प्रहृष्टवत् ॥ मानुषं देहमुत्सृज्य विमानं सोध्यरोहत ॥ २४ ॥
तिर्यग्योनिगतानां च शतानि सरयूजलम् ॥ संप्राप्य त्रिदिवं जग्मुः प्रभासुरवपूंषि च ॥
दिव्या दिव्येन वपुषा देवा दीप्ता इवाभवन् ॥ २५ ॥
गत्वा तु सरयूतोयं स्थावराणि चराणि च ॥ प्राप्य तत्तोयविक्लेदं देवलोकमुपागमन् ॥ २६ ॥
तस्मिन्नपि समापन्ना ऋक्षवानरराक्षसाः ॥ तेऽपि स्वर्गं प्रविविशुर्देहान्निक्षिप्य चाम्भसि ॥ २७ ॥
ततः समागतान्सर्वान्स्थाप्य लोकगुरुर्दिवि ॥ जगाम त्रिदशैः सार्धं सदा हृष्टैर्दिवं महत् ॥ २८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकाण्डे दशोत्तरशततमः सर्गः ॥ ११० ॥

---

विष्णुलोक प्राप्नुवन्तीत्याह—यत्रेति ॥ ब्रह्मलोकादनन्तरे अव्यवहितोपरिदेशस्थे सर्वैर्गुणैर्युक्ते । "एषु सर्वतः प्रतिष्ठित्वनुत्तमेषूत्तमेषु" इति श्रुतेः। सर्वगुणैर्नित्ययुक्ते सान्तानिके निवत्स्यतीत्यनुकर्षः ॥ १९ ॥ ॥ २० ॥ वानराणां तु आधिकारिकदेवांशत्वात्तत्तद्देवशरीरप्रवेश एवेत्याह—वानराश्चेत्यादिना ॥ २१—२२॥ गोप्रतारं गोप्रताराख्य तीर्थं । हर्षपूर्णाश्रुविक्लबाः आनन्दाश्रुपूर्णतया विक्लबदृष्टयः ॥ २३—२५ ॥ तत्तोयविक्लेद तत्तोयसेचन ॥ २६—२७ ॥ दिवं परमाकाश वैकुण्ठं । त्रिदशैर्नित्यसूरिभिः सदा हृष्टै-

---

त्वामेवविष्णुमितिचिन्तयन्यत्किंचित्पदार्थंविष्णुत्वेनभावयत्त्वयिविष्णौभक्त्यायुक्तप्राणास्त्यक्ष्यति ततसन्तानकनामकलोकेषुवत्स्यति । किंपुनर्वक्तव्ययएतेत्वदनुरागेणत्वदनुगमनपूर्वप्राणास्त्यजन्ति तेसन्तानकेषुवत्स्यन्तीति ॥ १९ ॥ ति० ननुकोसौसन्तानकलोकस्तत्राह—सर्वैरिति । सर्वैर्ब्रह्मगुणै सत्यसकल्पत्वादिब्रह्मगुणैर्युक्ते । ब्रह्मलोकादनन्तरे ततसमीपस्थे । अनेनतत्रस्थितानामपि क्रमेण ब्रह्मलोकप्राप्त्याब्रह्मणासहमुक्ति सूचिता ॥ २० ॥ ति० एवंसामान्यतोवानराणासान्तानिकलोकप्राप्तिमुपदिश्यदेवार्थंशानासुग्रीवादीनातत्तद्देवादिस्वरूपप्राप्तिमाह—वानराश्चेति । वानरा सुग्रीवादय । ऋक्षा जाबवदतिरिक्ता । स्विकास्वीया योनिंदेवयोनिंस्वस्वदेवरूपययु ॥ स० समेषामेषांवानराणानराणाचसान्तानिकावाप्ति किमित्यतउक्तापवादवक्ति—वानराश्चेति ॥ २१ ॥ ति० उक्तमेवार्थ स्पष्टयति—येभ्यइति । सुरेभ्यइत्युपलक्षण । येभ्योदेवर्ष्यादिभ्य येविनिस्सृतास्तेसुरसभवा· स्वपितॄन्प्रतिपेदिरे । तेषुमध्येसुग्रीव सूर्यमण्डलंप्रविवेश । अत्रययु प्रतिपेदिरेइतिनिर्देशोभविष्यदर्थे । ' अवतीर्यसमीकृत्य स्वांशान्स्वीकुर्वतेपुन ।' इति शास्त्रात् । उक्तार्थमुपसहरति—तथेति । देवेशेपितामहेतथोक्तवतिआगच्छप्रविशस्विकातनुमित्युक्तवतीत्यर्थ । गोप्रतार गोप्रताराख्यतीर्थसारवमुपागता सन्त । सर्वेहर्षपूर्णाश्रुविक्लबा आनन्दजाश्रुपूर्णतयाविक्लबवीक्षणा सरयूं भेजिरे । अथयोय प्राणीतदासरयूजलमवगाह्यहृष्टवत् हृष्ट आसीत् समानुषंदेहमुत्सृज्यविमानमध्यारोहत । तिर्यग्योनिगतानांशतान्यनेकानिसरयूजलंतदवगाह्यप्राप्यप्रभासुराणिवपूंषियेषातादृशानिभूत्वात्रिदिवंजग्मु । दिव्या दिव्यवपुष·सन्त दिव्येन वपुषादीप्ता देवाइवाभवन् ॥ २१—२५ ॥ ति० देवलोकमुपागमन् कल्पवृक्षकामगव्यादिस्वरूपंप्राप्नुवन्तीत्यर्थ ॥ २६ ॥ स० देहान् प्राचीनान् ॥ २७ ॥ स० दिवि स्थाप्य प्रस्थाप्य । यथामर्यादं त्रिदिवं स्वलोकं । ' अथरामस्तुतच्छ्रुत्वाशङ्खचक्रगदाधर· । दधानोऽभयमुद्राचदक्षिणेनकरेणस । पीताबरधर स्रग्वीआरूढविनतासुत । नागराजधृतच्छत्र कन्यकाधृतचामर । शृण्वानोलोकशब्दंतुविष्वक्सेनस्यवेत्रिण । अन्तरिक्षेस्थित श्रीमान्श्रियाभूम्यासमाश्रित । अनुगानानयामाससर्वान्निरवशेषत । द्रुवाहृताक्ष्यैस्तान्सर्वान्विग्रहान्तरमास्थित ' इतिपाद्मोक्तापिकथा उक्तरीत्याऽविरोधेनानुसधेया ॥ २८ ॥ इतिदशाधिकशततम· सर्ग· ॥ ११० ॥

[ पा० ] १ क—घ. सुरादिभ्य सुसंभवा. २ क—घ. ज. ऋषिभ्योनागयक्षेभ्यस्तांस्तानेवप्रपेदिरे ३ ङ. च. झ. ञ. ट. तथाब्रुवति. ४ क—घ. ज. तिर्यग्योनिगताश्चापिसप्राप्ताःसरयूजलं

## एकादशोत्तरशततमः सर्गः ॥ १११ ॥

वाल्मीकिना श्रीरामायणस्य वेदसमत्वोक्तिपूर्वकं तत्पठनादे. फलनिरूपणम् ॥ १ ॥

एतावदेतदाख्यानं सोत्तरं ब्रह्मपूजितम् ॥ रामायणमिति ख्यातं मुख्यं वाल्मीकिना कृतम् ॥ १ ॥
ततः प्रतिष्ठितो विष्णुः स्वर्गलोके यथापुरम् ॥ येन व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ २ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ नित्यं शृण्वन्ति संतुष्टा दिव्यं रामायणं दिवि ॥ ३ ॥
इदमाख्यानमायुष्यं सौभाग्यं पापनाशनम् ॥ रामायणं वेदसमं श्राद्धेषु श्रावयेद्बुधः ॥
[ गायत्र्याश्च स्वरूपं तद्रामायणमनुत्तमम् ॥ ४ ॥ ]
अपुत्रो लभते पुत्रमधनो लभते धनम् ॥ सर्वपापैः प्रमुच्येत पादमप्यस्य यः पठेत् ॥ ५ ॥
पापान्यपि च यः कुर्यादहन्यहनि मानवः ॥ पठत्येकमपि श्लोकं पापात्स परिमुच्यते ॥ ६ ॥
वाचकाय च दातव्यं वस्त्रं धेनुं हिरण्यकम् ॥ वाचके परितुष्टे तु तुष्टाः स्युः सर्वदेवताः ॥ ७ ॥
एतदाख्यानमायुष्यं पठन्रामायणं नरः ॥ सपुत्रपौत्रो लोकेस्मिन्प्रेत्य चेह महीयते ॥ ८ ॥
[ रामायणं गोविसर्गे मध्याह्ने वा समाहितः ॥ सायाह्ने वाऽपराह्ने च वाचयन्नावसीदति ॥ ९ ॥ ]
अयोध्याऽपि पुरी रम्या शून्या वर्षगणान्बहून् ॥ ऋषभं प्राप्य राजानं निवासमुपयास्यति ॥ १० ॥

---

रिति विशेषणात् । हृष्टैः प्रमुदितो देवैर्जगाम त्रिदिवं महदिति च पाठ. ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने दशोत्तरशततमः सर्गः ॥ ११० ॥

---

अस्य काव्यस्य अपवर्गान्तसाधकतया कथाशेषानुवादपूर्वकं पठनश्रवणादिषु फलमुपदिश्यते—एतावदित्यादि ॥ सोत्तरं उत्तरकाण्डसहितं । मुख्य सर्वाख्यानेभ्यः प्रशस्तमेतदाख्यानं । एतावदेव समर्याद एतावच्छ्लोकसर्गकाण्डसख्याकमेव । न न्यूनं नाधिक ॥ १ ॥ ततः स्वभक्तजनस्य स्वर्लोकप्रापणानन्तरं विष्णुः स्वर्गलोके परमस्वर्गे वैकुण्ठे यथापुरं यथापूर्व प्रतिष्ठित' । स्वर्गशब्दस्य लोकपरत्वभ्रमव्यावृत्त्यर्थं विष्णु विशिनष्टि—येनेति ॥२॥ इद च रामायणं न केवलं मनुष्याणा भोग्य किंतु देवतानामपि भोग्यमेवेत्याह—तत इति ॥ तत' ब्रह्मस्थानपूजितत्वादे. ॥ ३ ॥ इदमाख्यान रामायणरूप आयुष्य आयुर्वर्धनं सौभाग्य सौभाग्यवर्धन श्राद्धे च श्रावयेत् । अक्षय्यपितृतृप्त्यर्थमिति शेषः ॥ ४—७ ॥ लोकेस्मिन् महीयत इत्यनुकर्ष. ॥ ८ ॥ निवास सुजनाश्रयत्वं ॥९॥ सहोत्तरमिति । अभिषेकानन्तरवृत्तान्तः । सीताभूप्रवेशानन्तरभाविवृत्तान्तस्तु सभविष्यमित्युच्यते । कृतवान् प्रचेतस इति । तद्रामायणं ब्रह्माप्यन्वमन्यत । अपिः प्राधान्ये । अन्वमन्यत अङ्गीकृतवान् ।

---

**स०** ब्रह्मपूजितं स्वकारितत्वात् स्वपूज्यदेवचरितभरितत्वाच्च ॥ १ ॥ **स०** नपरिच्छेदोहरेरितित्रिराह—येनेति । इदत्रैलोक्यंसचराचरसर्वंव्याप्तमितिसबन्ध ॥ २ ॥ **ति०** वेदसमं वेदवद्ब्रह्मविषयत्वेपिपौरुषेयत्वेनवेदत किंचिन्न्यूनमित्यर्थ ॥ **स०** मध्यमादीनधिकारिणोत्रप्रवर्तयितुंफलमभिलपति—इदमिति । आयुष्यं नित्यायुष्यं मोक्षस्तत्साधनं । सौभाग्य तदुत्तेजकं । वेदसम "वेदवेद्येपरेपुंसिजातेदशरथात्मजे । वेद प्राचेतसादासीत्साक्षाद्रामायणाभिध" इतिपाद्मोक्ते ॥ ४ ॥ **स०** अस्येत्यावर्त्यते । अस्य रामायणस्य । अस्य तदन्तर्गतस्यश्लोकस्य । पाद चतुर्थांश ॥ ५ ॥ **स०** प्रागुक्तादधमस्यपारायणविधिंसपरिहार्योक्तिमाह—पापानीति । पापात् पापेभ्य ॥ ६ ॥ **स०** अयाचकायापिवाचकायकुतोदेयमित्यतआह—वाचकइति ॥ ७ ॥ **ति०** प्रेत्य मरणोत्तरमपि । इहच चात्परलोके । इहलोकेचमहीयते । इहलोकेपूजाचकीर्त्यविच्छेदात् ॥ ८ ॥ **ति०** तत परमयोध्याकेनरूपेणस्थितेतिशङ्कानिवृत्तयेभविष्यद्वृत्तान्तमाह—अयोध्यापीति । रम्या अयोध्यापुर्यपिबहून्वर्षगणान्शून्यासती कालान्तरे ऋषभंराजानमवाप्य निवास जनाश्रयत्वंउपयास्यति । अत्रकतक —"एवंचायोध्याविषयेऽभिषिक्तेनभरतेनायोध्यादेशोनन्दिग्रामेस्थित्वैवरक्षितइतिद्रष्टव्यमिति । तन्नमानंचिन्त्यं । 'सत्येनचशपेराजन्स्वर्गलाभेनचैवहि । नकामयेयथाराज्यंत्वाविनारघुनन्दन ।'

**[ पा० ]** १ क—ट. सहृष्टा काव्यंरामायणं. २ इदमर्ध ज. पाठेदृश्यते. ३ क. ख. ङ—ट. पादमप्यस्य ४ क ग. ज. कृत्वाअहन्यहनि. ५ अयंश्लोक. ङ. झ. ञ. पाठेषुदृश्यते

एतदाख्यानमायुष्यं सभविष्यं सहोत्तरम् ॥ कृतवान्प्रचेतसः पुत्रस्तद्ब्रह्माप्यन्वमन्यत ॥ ११ ॥
अश्वमेधसहस्रस्य वाजपेयायुतस्य च ॥ लभते श्रवणादेव सर्गस्यैकस्य मानवः ॥ १२ ॥
प्रयागादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ॥ नैमिशादीन्यरण्यानि कुरुक्षेत्रादिकान्यपि ॥
गतानि तेन लोकेऽस्मिन्येन रामायणं श्रुतम् ॥ १३ ॥
हेमभारं कुरुक्षेत्रे ग्रस्ते भानौ प्रयच्छति ॥ यश्च रामायणं लोके शृणोति सदृशावुभौ ॥ १४ ॥
सम्यक्छ्रद्धासमायुक्तः शृणुते राघवीं कथाम् ॥ सर्वपापात्प्रमुच्येत विष्णुलोकं स गच्छति ॥१५॥
आदिकाव्यमिदं त्वार्षं पुरा वाल्मीकिना कृतम् ॥ यः शृणोति सदा भक्त्या स गच्छेद्वैष्णवीं तनुम् ॥१६॥
पुत्रदाराश्च वर्धन्ते संपदः सन्ततिस्तथा ॥ सत्यमेतद्विदित्वा तु श्रोतव्यं नियतात्मभिः ॥
गायत्र्याश्च स्वरूपं तद्रामायणमनुत्तमम् ॥ १७ ॥
अपुत्रो लभते पुत्रमधनो लभते धनम् ॥ सर्वपापैः प्रमुच्येत पदमप्यस्य यः पठेत् ॥ १८ ॥
यः पठेच्छृणुयान्नित्यं चरितं राघवस्य ह ॥ भक्त्या निष्कल्मषो भूत्वा दीर्घमायुरवाप्नुयात् ॥ १९ ॥
चिन्तयेद्राघवं नित्यं श्रेयः प्राप्तुं य इच्छति ॥ श्रावयेदिदमाख्यानं ब्राह्मणेभ्यो दिने दिने ॥ २० ॥
यस्त्विदं रघुनाथस्य चरितं सकलं पठेत् ॥ सोऽसुक्षये विष्णुलोकं गच्छत्येव न संशयः ॥ २१ ॥
पिता पितामहस्तस्य तथैव प्रपितामहः ॥ तत्पिता तत्पिता चैव विष्णुं यान्ति न संशयः ॥ २२ ॥
चतुर्वर्गप्रदं नित्यं चरितं राघवस्य तु ॥ तस्माद्यत्नवता नित्यं श्रोतव्यं परमं सदा ॥ २३ ॥
शृण्वन्रामायणं भक्त्या यः पादं पदमेव वा ॥ स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ २४ ॥
एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ॥ प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशत्सहस्रिकायां संहितायामुत्तरकाण्डे एकादशोत्तरशततमः सर्गः ॥ १११ ॥

**इति उत्तरकाण्डः समाप्तः ॥ ७ ॥**

---

सदा पठतिस्मेत्यर्थः । अत्र यकारो गायत्र्यक्षरं तेन गायत्री विवरणं रामायणमिति सूचितम् ॥ १०—२५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमुकुटाख्याने उत्तरकाण्डव्याख्याने एकादशोत्तरशततमः सर्गः ॥ १११ ॥

---

इतिपूर्वभरतोक्त्याविरुद्धच । तथा—' भरतश्चापिशत्रुघ्नस्तयोर्दाराउभेशुभे ॥ राघवस्यानुगमनेनिश्चितार्था.समाययु । राघवस्तुचतुर्बाहुरभूत्तस्यकराब्जयो । उभौभरतशत्रुघ्नौशङ्खचक्रौबभूवतु ' इतिपाद्मविरुद्धंचेत्यन्ये ॥१०॥ ति० सभविष्य भगवद्याना-नन्तरंभगवदयोध्यावृत्तान्तकथनसहित । सहोत्तर एतावदेतदाख्यानं ' इत्यत प्राक्तनोत्तरकाण्डसहित । प्रचेतस पुत्रोवाल्मीकिः एतद्रामायणाख्यानंकृतवान् । प्रचेतस पुत्रइत्यक्षराधिक्यमार्षं । तद्ब्रह्माहिरण्यगर्भोप्यन्वमन्यत । सत्यशब्दतयावेदोपबृंहणतया सर्वार्थसाधकतयाचाङ्गीकृतवानितिसर्वेष्टसिद्धि ॥ ११ ॥ इत्येकादशोत्तरशततम सर्ग ॥ १११ ॥

श्रीसीतारामचन्द्राय नम. ॥

---

इदं उत्तरकाण्डं कुम्भघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८३५ सन १९१४.